प्राचीनभारतस्य वैद्यकीयशिक्षणे महत्त्वभूतं पात्रं वहति अनुवैद्यशास्त्रं गर्भस्थशिशुशास्त्रं च । एतेषां शास्त्राणां मूलाचार्याः सन्ति कश्यपः, वसिष्ठः, अत्रिः, भृगुश्च । एतेषां शिक्षणनीतेः सङ्ग्रहः कृतः वर्तते षष्ठे शतके वाग्भटेन 'अष्टाङ्गसङ्ग्रह'ग्रन्थे । एतस्य ग्रन्थस्य सुपरिष्कृता अवृत्तिः सप्तमे शतके द्वितीयवाग्भटेन कृतः दृश्यते । एतस्य ग्रन्थस्य नाम अस्ति 'अष्टाङ्गहृदयम्' इति ।

अध्यायः १

रागादि-रोगान् सततानुषक्तान् अ-शेष-काय-प्रसृतान् अ-शेषान् ।
औत्सुक्य-मोहा-रति-दाञ् जघान यो ऽ-पूर्व-वैद्याय नमो ऽस्तु तस्मै ॥ १ ॥

आयुः-कामयमानेन धर्मार्थ-सुख-साधनम् ।
आयुर्-वेदोपदेशेषु विधेयः परम् आदरः ॥ २ ॥

ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिम् अजिग्रहत् ।
सो ऽश्विनौ तौ सहस्राक्षं सो ऽत्रि-पुत्रादिकान् मुनीन् ॥ ३ ॥

ते ऽग्निवेशादिकांस् ते तु पृथक् तन्त्राणि तेनिरे ।
तेभ्यो ऽति-विप्रकीर्णेभ्यः प्रायः सार-तरोच्चयः ॥ ४ ॥

क्रियते ऽष्टाङ्ग-हृदयं नाति-संक्षेप-विस्तरम् ।
काय-बाल-ग्रहोर्ध्वाङ्ग-शल्य-दंष्ट्रा-जरा-वृषान् ॥ ५ ॥

१.५bv नाति-संक्षिप्त-विस्तृतम् अष्टाव् अङ्गानि तस्याहुश् चिकित्सा येषु संश्रिता ।
वायुः पित्तं कफश् चेति त्रयो दोषाः समासतः ॥ ६ ॥

विकृता-विकृता देहं घ्नन्ति ते वर्तयन्ति च ।
ते व्यापिनो ऽपि हृन्-नाभ्योर् अधो-मध्योर्ध्व-संश्रयाः ॥ ७ ॥

१.७bv घ्नन्ति ते वर्धयन्ति च वयो-ऽहो-रात्रि-भुक्तानां ते ऽन्त-मध्यादि-गाः क्रमात् ।
तैर् भवेद् विषमस् तीक्ष्णो मन्दश् चाग्निः समैः समः ॥ ८ ॥

कोष्ठः क्रूरो मृदुर् मध्यो मध्यः स्यात् तैः समैर् अपि ।
शुक्रार्तव-स्थैर् जन्मादौ विषेणेव विष-क्रिमेः ॥ ९ ॥

तैश् च तिस्रः प्रकृतयो हीन-मध्योत्तमाः पृथक् ।
सम-धातुः समस्तासु श्रेष्ठा निन्द्या द्वि-दोष-जाः ॥ १० ॥

१.१०cv सम-धातुः समैस् तासु तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश् चलो ऽनिलः ।
पित्तं स-स्नेह-तीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥ ११ ॥

स्निग्धः शीतो गुरुर् मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।
संसर्गः संनिपातश् च तद्-द्वि-त्रि-क्षय-कोपतः ॥ १२ ॥

रसासृङ्-मांस-मेदो-ऽस्थि-मज्ज-शुक्राणि धातवः ।
सप्त दूष्या मला मूत्र-शकृत्-स्वेदादयो ऽपि च ॥ १३ ॥

वृद्धिः समानैः सर्वेषां विपरीतैर् विपर्ययः ।
रसाः स्वादव्-अम्ल-लवण-तिक्तोषण-कषायकाः ॥ १४ ॥

षड् द्रव्यम् आश्रितास् ते च यथा-पूर्वं बलावहाः ।
तत्राद्या मारुतं घ्नन्ति त्रयस् तिक्तादयः कफम् ॥ १५ ॥

कषाय-तिक्त-मधुराः पित्तम् अन्ये तु कुर्वते ।
शमनं कोपनं स्वस्थ-हितं द्रव्यम् इति त्रि-धा ॥ १६ ॥

उष्ण-शीत-गुणोत्कर्षात् तत्र वीर्यं द्वि-धा स्मृतम् ।
त्रि-धा विपाको द्रव्यस्य स्वादव्-अम्ल-कटुकात्मकः ॥ १७ ॥

गुरु-मन्द-हिम-स्निग्ध-श्लक्ष्ण-सान्द्र-मृदु-स्थिराः ।
गुणाः स-सूक्ष्म-विशदा विंशतिः स-विपर्ययाः ॥ १८ ॥

कालार्थ-कर्मणां योगो हीन-मिथ्याति-मात्रकः ।
सम्यग्-योगश् च विज्ञेयो रोगारोग्यैक-कारणम् ॥ १९ ॥

रोगस् तु दोष-वैषम्यं दोष-साम्यम् अ-रोग-ता ।
निजागन्तु-विभागेन तत्र रोगा द्वि-धा स्मृताः ॥ २० ॥

तेषां काय-मनो-भेदाद् अधिष्ठानम् अपि द्वि-धा ।
रजस् तमश् च मनसो द्वौ च दोषाव् उदाहृतौ ॥ २१ ॥

१.२१dv ऽत्र द्वौ दोषाव् उदाहृतौ दर्शन-स्पर्शन-प्रश्नैः परीक्षेत च रोगिणम् ।
रोगं निदान-प्राग्-रूप-लक्षणोपशयाप्तिभिः ॥ २२ ॥

१.२२bv संपरीक्षेत रोगिणम् १.२२bv परीक्षेताथ रोगिणम् भूमि-देह-प्रभेदेन देशम् आहुर् इह द्वि-धा ।
जाङ्गलं वात-भूयिष्ठम् अनूपं तु कफोल्बणम् ॥ २३ ॥

साधारणं सम-मलं त्रि-धा भू-देशम् आदिशेत् ।
क्षणादिर् व्याध्य्-अवस्था च कालो भेषज-योग-कृत् ॥ २४ ॥

शोधनं शमनं चेति समासाद् औषधं द्वि-धा ।
शरीर-जानां दोषाणां क्रमेण परमौषधम् ॥ २५ ॥

वस्तिर् विरेको वमनं तथा तैलं घृतं मधु ।
धी-धैर्यात्मादि-विज्ञानं मनो-दोषौषधं परम् ॥ २६ ॥

भिषग् द्रव्याण्य् उपस्थाता रोगी पाद-चतुष्टयम् ।
चिकित्सितस्य निर्दिष्टं प्रत्य्-एकं तच् चतुर्-गुणम् ॥ २७ ॥

दक्षस् तीर्थात्त-शास्त्रार्थो दृष्ट-कर्मा शुचिर् भिषक् ।
बहु-कल्पं बहु-गुणं संपन्नं योग्यम् औषधम् ॥ २८ ॥

अनुरक्तः शुचिर् दक्षो बुद्धि-मान् परिचारकः ।
आढ्यो रोगी भिषग्-वश्यो ज्ञापकः सत्-त्व-वान् अपि ॥ २९ ॥

साध्यो ऽ-साध्य इति व्याधिर् द्वि-धा तौ तु पुनर् द्वि-धा ।
सु-साध्यः कृच्छ्र-साध्यश् च याप्यो यश् चान्-उपक्रमः ॥ २९+(१) ॥
सर्वौषध-क्षमे देहे यूनः पुंसो जितात्मनः ।
अ-मर्म-गो ऽल्प-हेत्व्-अग्र-रूप-रूपो ऽन्-उपद्रवः ॥ ३० ॥

अ-तुल्य-दूष्य-देशर्तु-प्रकृतिः पाद-संपदि ।
ग्रहेष्व् अनु-गुणेष्व् एक-दोष-मार्गो नवः सुखः ॥ ३१ ॥

शस्त्रादि-साधनः कृच्छ्रः संकरे च ततो गदः ।
शेष-त्वाद् आयुषो याप्यः पथ्याभ्यासाद् विपर्यये ॥ ३२ ॥

अन्-उपक्रम एव स्यात् स्थितो ऽत्य्-अन्त-विपर्यये ।
औत्सुक्य-मोहा-रति-कृद् दृष्ट-रिष्टो ऽक्ष-नाशनः ॥ ३३ ॥

त्यजेद् आर्तं भिषग्-भूपैर् द्विष्टं तेषां द्विषं द्विषम् ।
हीनोपकरणं व्यग्रम् अ-विधेयं गतायुषम् ॥ ३४ ॥

चण्डं शोकातुरं भीरुं कृत-घ्नं वैद्य-मानिनम् ।
तन्त्रस्यास्य परं चातो वक्ष्यते ऽध्याय-संग्रहः ॥ ३५ ॥

आयुष्-काम-दिनर्त्व्-ईहा-रोगान्-उत्पादन-द्रवाः ।
अन्न-ज्ञानान्न-संरक्षा-मात्रा-द्रव्य-रसाश्रयाः ॥ ३६ ॥

दोषादि-ज्ञान-तद्-भेद-तच्-चिकित्सा-द्व्य्-उपक्रमाः ।
शुद्ध्य्-आदि-स्नेहन-स्वेद-रेकास्थापन-नावनम् ॥ ३७ ॥

धूम-गण्डूष-दृक्-सेक-तृप्ति-यन्त्रक-शस्त्रकम् ।
सिरा-विधिः शल्य-विधिः शस्त्र-क्षाराग्नि-कर्मिकौ ॥ ३८ ॥

१.३८cv सिरा-व्यधः शल्य-विधिः सूत्र-स्थानम् इमे ऽध्यायास् त्रिंशच् छारीरम् उच्यते ।
गर्भावक्रान्ति-तद्-व्यापद्-अङ्ग-मर्म-विभागिकम् ॥ ३९ ॥

विकृतिर् दूत-जं षष्ठं निदानं सार्वरोगिकम् ।
ज्वरासृक्-श्वास-यक्ष्मादि-मदाद्य्-अर्शो-ऽतिसारिणाम् ॥ ४० ॥

मूत्राघात-प्रमेहाणां विद्रध्य्-आद्य्-उदरस्य च ।
पाण्डु-कुष्ठानिलार्तानां वातास्रस्य च षो-डश ॥ ४१ ॥

चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ।
वमौ मदात्यये ऽर्शःसु विषि द्वौ द्वौ च मूत्रिते ॥ ४२ ॥

विद्रधौ गुल्म-जठर-पाण्डु-शोफ-विसर्पिषु ।
कुष्ठ-श्वित्रानिल-व्याधि-वातास्रेषु चिकित्सितम् ॥ ४३ ॥

द्वा-विंशतिर् इमे ऽध्यायाः कल्प-सिद्धिर् अतः परम् ।
कल्पो वमेर् विरेकस्य तत्-सिद्धिर् वस्ति-कल्पना ॥ ४४ ॥

सिद्धिर् वस्त्य्-आपदां षष्ठो द्रव्य-कल्पो ऽत उत्तरम् ।
बालोपचारे तद्-व्याधौ तद्-ग्रहे द्वौ च भूत-गे ॥ ४५ ॥

उन्मादे ऽथ स्मृति-भ्रंशे द्वौ द्वौ वर्त्मसु संधिषु ।
दृक्-तमो-लिङ्ग-नाशेषु त्रयो द्वौ द्वौ च सर्व-गे ॥ ४६ ॥

कर्ण-नासा-मुख-शिरो-व्रणे भङ्गे भगन्दरे ।
ग्रन्थ्य्-आदौ क्षुद्र-रोगेषु गुह्य-रोगे पृथग् द्वयम् ॥ ४७ ॥

विषे भुजङ्गे कीटेषु मूषकेषु रसायने ।
चत्वारिंशो ऽन्-अपत्यानाम् अध्यायो बीज-पोषणः ॥ ४८ ॥

१.४८dv अध्यायो बीज-पोषणे इत्य् अध्याय-शतं विंशं षड्भिः स्थानैर् उदीरितम् ॥ ४८ ॥

अध्यायः २

ब्राह्मे मुहूर्त उत्तिष्ठेत् स्वस्थो रक्षार्थम् आयुषः ।
शरीर-चिन्तां निर्वर्त्य कृत-शौच-विधिस् ततः ॥ १ ॥

अर्क-न्यग्रोध-खदिर-करञ्ज-ककुभादि-जम् ।
प्रातर् भुक्त्वा च मृद्व्-अग्रं कषाय-कटु-तिक्तकम् ॥ २ ॥

कनीन्य्-अग्र-सम-स्थौल्यं प्रगुणं द्वा-दशाङ्गुलम् ।
भक्षयेद् दन्त-पवनं दन्त-मांसान्य् अ-बाधयन् ॥ ३ ॥

२.३cv भक्षयेद् दन्त-धवनं नाद्याद् अ-जीर्ण-वमथु-श्वास-कास-ज्वरार्दिती ।
तृष्णास्य-पाक-हृन्-नेत्र-शिरः-कर्णामयी च तत् ॥ ४ ॥

सौवीरम् अञ्जनं नित्यं हितम् अक्ष्णोस् ततो भजेत् ।
चक्षुस् तेजो-मयं तस्य विशेषाच् छलेष्मतो भयम् ॥ ५ ॥

२.५dv विशेषाच् छलेष्मणो भयम् भुक्त-वांश् च शिरः-स्नातः श्रान्तः छर्दन-नावनैः ।
रात्रौ जागरितश् चापि नाञ्ज्याज् ज्वरित एव च ॥ ५.१+१ ॥

योजयेत् सप्त-रात्रे ऽस्मात् स्रावणार्थं रसाञ्जनम् ।
ततो नावन-गण्डूष-धूम-ताम्बूल-भाग् भवेत् ॥ ६ ॥

२.६bv स्रावणार्थे रसाञ्जनम् ताम्बूलं क्षत-पित्तास्र-रूक्षोत्कुपित-चक्षुषाम् ।
विष-मूर्छा-मदार्तानाम् अ-पथ्यं शोषिणाम् अपि ॥ ७ ॥

अभ्यङ्गम् आचरेन् नित्यं स जरा-श्रम-वात-हा ।
दृष्टि-प्रसाद-पुष्ट्य्-आयुः-स्वप्न-सु-त्वक्-त्व-दार्ढ्य-कृत् ॥ ८ ॥

शिरः-श्रवण-पादेषु तं विशेषेण शीलयेत् ।
वर्ज्यो ऽभ्यङ्गः कफ-ग्रस्त-कृत-संशुद्ध्य्-अ-जीर्णिभिः ॥ ९ ॥

लाघवं कर्म-सामर्थ्यं दीप्तो ऽग्निर् मेदसः क्षयः ।
विभक्त-घन-गात्र-त्वं व्यायामाद् उपजायते ॥ १० ॥

वात-पित्तामयी बालो वृद्धो ऽ-जीर्णो च तं त्यजेत् ।
अर्ध-शक्त्या निषेव्यस् तु बलिभिः स्निग्ध-भोजिभिः ॥ ११ ॥

शीत-काले वसन्ते च मन्दम् एव ततो ऽन्य-दा ।
तं कृत्वानु-सुखं देहं मर्दयेच् च समन्ततः ॥ १२ ॥

तृष्णा क्षयः प्रतमको रक्त-पित्तं श्रमः क्लमः ।
अति-व्यायामतः कासो ज्वरश् छर्दिश् च जायते ॥ १३ ॥

व्यायाम-जागराध्व-स्त्री-हास्य-भाष्यादि-साहसम् ।
गजं सिंह इवाकर्षन् भजन्न् अति विनश्यति ॥ १४ ॥

२.१४dv भजन् यतो ऽति नश्यति उद्वर्तनं कफ-हरं मेदसः प्रविलायनम् ।
स्थिरी-करणम् अङ्गानां त्वक्-प्रसाद-करं परम् ॥ १५ ॥

दीपनं वृष्यम् आयुष्यं स्नानम् ऊर्जा-बल-प्रदम् ।
कण्डू-मल-श्रम-स्वेद-तन्द्रा-तृड्-दाह-पाप्म-जित् ॥ १६ ॥

२.१६bv स्नानम् ओजो-बल-प्रदम् उष्णाम्बुनाधः-कायस्य परिषेको बलावहः ।
तेनैव तूत्तमाङ्गस्य बल-हृत्-केश-चक्षुषाम् ॥ १७ ॥

२.१७cv तेनैव चोत्तमाङ्गस्य २.१७cv स एव चोत्तमाङ्गस्य २.१७cv स एव तूत्तमाङ्गस्य स्नानम् अर्दित-नेत्रास्य-कर्ण-रोगातिसारिषु ।
आध्मान-पीनसा-जीर्ण-भुक्त-वत्सु च गर्हितम् ॥ १८ ॥

जीर्णे हितं मितं चाद्यान् न वेगान् ईरयेद् बलात् ।
न वेगितो ऽन्य-कार्यः स्यान् ना-जित्वा साध्यम् आमयम् ॥ १९ ॥

सुखार्थाः सर्व-भूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं च न विना धर्मात् तस्माद् धर्म-परो भवेत् ॥ २० ॥

भक्त्या कल्याण-मित्राणि सेवेतेतर-दूर-गः ।
हिंसा-स्तेयान् यथा-कामं पैशुन्यं परुषान्-ऋते ॥ २१ ॥

संभिन्नालापं व्यापादम् अभिध्यां दृग्-विपर्ययम् ।
पापं कर्मेति दश-धा काय-वाङ्-मानसैस् त्यजेत् ॥ २२ ॥

अ-वृत्ति-व्याधि-शोकार्तान् अनुवर्तेत शक्तितः ।
आत्म-वत् सततं पश्येद् अपि कीट-पिपीलिकम् ॥ २३ ॥

अर्चयेद् देव-गो-विप्र-वृद्ध-वैद्य-नृपातिथीन् ।
वि-मुखान् नार्थिनः कुर्यान् नावमन्येत नाक्षिपेत् ॥ २४ ॥

उपकार-प्रधानः स्याद् अपकार-परे ऽप्य् अरौ ।
संपद्-विपत्स्व् एक-मना हेताव् ईर्ष्येत् फले न तु ॥ २५ ॥

काले हितं मितं ब्रूयाद् अ-विसंवादि पेशलम् ।
पूर्वाभिभाषी सु-मुखः सु-शीलः करुणा-मृदुः ॥ २६ ॥

नैकः सुखी न सर्व-त्र विश्रब्धो न च शङ्कितः ।
न कञ्-चिद् आत्मनः शत्रुं नात्मानं कस्य-चिद् रिपुम् ॥ २७ ॥

प्रकाशयेन् नापमानं न च निः-स्नेह-तां प्रभोः ।
जनस्याशयम् आलक्ष्य यो यथा परितुष्यति ॥ २८ ॥

२.२८av प्रकाशयेन् नावमानं तं तथैवानुवर्तेत पराराधन-पण्डितः ।
न पीडयेद् इन्द्रियाणि न चैतान्य् अति लालयेत् ॥ २९ ॥

त्रि-वर्ग-शून्यं नारम्भं भजेत् तं चा-विरोधयन् ।
अनुयायात् प्रति-पदं सर्व-धर्मेषु मध्यमाम् ॥ ३० ॥

नीच-रोम-नख-श्मश्रुर् निर्-मलाङ्घ्रि-मलायनः ।
स्नान-शीलः सु-सुरभिः सु-वेषो ऽन्-उल्बणोज्ज्वलः ॥ ३१ ॥

२.३१cv स्नान-शीलः स-सुरभिः धारयेत् सततं रत्न-सिद्ध-मन्त्र-महौषधीः ।
सातप-त्र-पद-त्राणो विचरेद् युग-मात्र-दृक् ॥ ३२ ॥

निशि चात्ययिके कार्ये दण्डी मौली सहाय-वान् ।
चैत्य-पूज्य-ध्वजा-शस्त-च्छाया-भस्म-तुषा-शुचीन् ॥ ३३ ॥

नाक्रामेच् छर्करा-लोष्ट-बलि-स्नान-भुवो न च ।
नदीं तरेन् न बाहुभ्यां नाग्नि-स्कन्धम् अभिव्रजेत् ॥ ३४ ॥

संदिग्ध-नावं वृक्षं च नारोहेद् दुष्ट-यान-वत् ।
ना-संवृत-मुखः कुर्यात् क्षुति-हास्य-विजृम्भणम् ॥ ३५ ॥

२.३५dv क्षुतिं हास्यं विजृम्भणम् २.३५dv क्षुत्-हास्यं च विजृम्भणम् नासिकां न विकुष्णीयान् ना-कस्माद् विलिखेद् भुवम् ।
नाङ्गैश् चेष्टेत वि-गुणं नासीतोत्कटकश् चिरम् ॥ ३६ ॥

२.३६bv ना-कस्माद् विलिखेन् महीम् २.३६dv नासीतोत्कटक-स्थितः देह-वाक्-चेतसां चेष्टाः प्राक् श्रमाद् विनिवर्तयेत् ।
नोर्ध्व-जानुश् चिरं तिष्ठेन् नक्तं सेवेत न द्रुमम् ॥ ३७ ॥

तथा चत्वर-चैत्यान्तश्-चतुष्-पथ-सुरालयान् ।
सूनाटवी-शून्य-गृह-श्मशानानि दिवापि न ॥ ३८ ॥

अ-संमार्जितम् आदर्शम् अन्-उपस्कृत-कामिनीम् ।
रजस्वलां च नेक्षेत सदा प्रातर् अ-मङ्गलम् ॥ ३८+१ ॥

सर्व-थेक्षेत नादित्यं न भारं शिरसा वहेत् ।
नेक्षेत प्रततं सूक्ष्मं दीप्ता-मेध्या-प्रियाणि च ॥ ३९ ॥

मद्य-विक्रय-संधान-दानादानानि नाचरेत् ।
पुरो-वातातप-रजस्-तुषार-परुषानिलान् ॥ ४० ॥

अन्-ऋजुः क्षवथूद्गार-कास-स्वप्नान्न-मैथुनम् ।
कूल-च्छायां नृप-द्विष्टं व्याल-दंष्ट्रि-विषाणिनः ॥ ४१ ॥

हीनान्-आर्याति-निपुण-सेवां विग्रहम् उत्तमैः ।
संध्यास्व् अभ्यवहार-स्त्री-स्वप्नाध्ययन-चिन्तनम् ॥ ४२ ॥

शत्रु-सत्त्र-गणाकीर्ण-गणिका-पणिकाशनम् ।
गात्र-वक्त्र-नखैर् वाद्यं हस्त-केशावधूननम् ॥ ४३ ॥

तोयाग्नि-पूज्य-मध्येन यानं धूमं शवाश्रयम् ।
मद्याति-सक्तिं विश्रम्भ-स्वातन्त्र्ये स्त्रीषु च त्यजेत् ॥ ४४ ॥

आचार्यः सर्व-चेष्टासु लोक एव हि धी-मतः ।
अनुकुर्यात् तम् एवातो लौकिके ऽर्थे परीक्षकः ॥ ४५ ॥

आर्द्र-संतान-ता त्यागः काय-वाक्-चेतसां दमः ।
स्वार्थ-बुद्धिः परार्थेषु पर्याप्तम् इति सद्-व्रतम् ॥ ४६ ॥

नक्तन्-दिनानि मे यान्ति कथम्-भूतस्य संप्रति ।
दुःख-भाङ् न भवत्य् एवं नित्यं संनिहित-स्मृतिः ॥ ४७ ॥

एवं कृत्स्न-दिनं नीत्वा रात्रौ यामे गृहे गते ।
देवान् ऋषीन् गुरून् स्मृत्वा ततः शयनम् आचरेत् ॥ ४७+१ ॥

२.४७+१bv रात्रेर् यामे गते सति इत्य् आचारः समासेन यं प्राप्नोति समाचरन् ।
आयुर् आरोग्यम् ऐश्वर्यं यशो लोकांश् च शाश्वतान् ॥ ४८ ॥

अध्यायः ३

मासैर् द्वि-संख्यैर् माघाद्यैः क्रमात् षड् ऋतवः स्मृताः ।
शिशिरो ऽथ वसन्तश् च ग्रीष्मो वर्षा-शरद्-धिमाः ॥ १ ॥

शिशिराद्यास् त्रिभिस् तैस् तु विद्याद् अयनम् उत्तरम् ।
आदानं च तद् आदत्ते नृणां प्रति-दिनं बलम् ॥ २ ॥

तस्मिन् ह्य् अत्य्-अर्थ-तीक्ष्णोष्ण-रूक्षा मार्ग-स्व-भावतः ।
आदित्य-पवनाः सौम्यान् क्षपयन्ति गुणान् भुवः ॥ ३ ॥

तिक्तः कषायः कटुको बलिनो ऽत्र रसाः क्रमात् ।
तस्माद् आदानम् आग्नेयम् ऋतवो दक्षिणायनम् ॥ ४ ॥

वर्षादयो विसर्गश् च यद् बलं विसृजत्य् अयम् ।
सौम्य-त्वाद् अत्र सोमो हि बल-वान् हीयते रविः ॥ ५ ॥

मेघ-वृष्ट्य्-अनिलैः शीतैः शान्त-तापे मही-तले ।
स्निग्धाश् चेहाम्ल-लवण-मधुरा बलिनो रसाः ॥ ६ ॥

शीते ऽग्र्यं वृष्टि-घर्मे ऽल्पं बलं मध्यं तु शेषयोः ।
बलिनः शीत-संरोधाद् धेमन्ते प्रबलो ऽनलः ॥ ७ ॥

भवत्य् अल्पेन्धनो धातून् स पचेद् वायुनेरितः ।
अतो हिमे ऽस्मिन् सेवेत स्वाद्व्-अम्ल-लवणान् रसान् ॥ ८ ॥

दैर्घ्यान् निशानाम् एतर्हि प्रातर् एव बुभुक्षितः ।
अवश्य-कार्यं संभाव्य यथोक्तं शीलयेद् अनु ॥ ९ ॥

वात-घ्न-तैलैर् अभ्यङ्गं मूर्ध्नि तैलं विमर्दनम् ।
नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः ॥ १० ॥

३.१०bv मूर्ध-तैलं विमर्दनम् कषायापहृत-स्नेहस् ततः स्नातो यथा-विधि ।
कुङ्कुमेन स-दर्पेण प्रदिग्धो ऽगुरु-धूपितः ॥ ११ ॥

रसान् स्निग्धान् पलं पुष्टं गौडम् अच्छ-सुरां सुराम् ।
गोधूम-पिष्ट-माषेक्षु-क्षीरोत्थ-विकृतीः शुभाः ॥ १२ ॥

नवम् अन्नं वसां तैलं शौच-कार्ये सुखोदकम् ।
प्रावाराजिन-कौशेय-प्रवेणी-कौचवास्तृतम् ॥ १३ ॥

३.१३dv -प्रवेणी-कुथकास्तृतम् उष्ण-स्व-भावैर् लघुभिः प्रावृतः शयनं भजेत् ।
युक्त्यार्क-किरणान् स्वेदं पाद-त्राणं च सर्व-दा ॥ १४ ॥

पीवरोरु-स्तन-श्रोण्यः स-मदाः प्रमदाः प्रियाः ।
हरन्ति शीतम् उष्णाङ्ग्यो धूप-कुङ्कुम-यौवनैः ॥ १५ ॥

अङ्गार-ताप-संतप्त-गर्भ-भू-वेश्म-चारिणः ।
शीत-पारुष्य-जनितो न दोषो जातु जायते ॥ १६ ॥

अयम् एव विधिः कार्यः शिशिरे ऽपि विशेषतः ।
तदा हि शीतम् अधिकं रौक्ष्यं चादान-काल-जम् ॥ १७ ॥

कफश् चितो हि शिशिरे वसन्ते ऽर्कांशु-तापितः ।
हत्वाग्निं कुरुते रोगान् अतस् तं त्वरया त्यजेत् ॥ १८ ॥

तीक्ष्णैर् वमन-नस्याद्यैर् लघु-रूक्षैश् च भोजनैः ।
व्यायामोद्वर्तनाघातैर् जित्वा श्लेष्माणम् उल्बणम् ॥ १९ ॥

स्नातो ऽनुलिप्तः कर्पूर-चन्दनागुरु-कुङ्कुमैः ।
पुराण-यव-गोधूम-क्षौद्र-जाङ्गल-शूल्य-भुक् ॥ २० ॥

सहकार-रसोन्मिश्रान् आस्वाद्य प्रिययार्पितान् ।
प्रियास्य-सङ्ग-सुरभीन् प्रिया-नेत्रोत्पलाङ्कितान् ॥ २१ ॥

सौमनस्य-कृतो हृद्यान् वयस्यैः सहितः पिबेत् ।
निर्गदान् आसवारिष्ट-सीधु-मार्द्वीक-माधवान् ॥ २२ ॥

शृङ्गवेराम्बु साराम्बु मध्व्-अम्बु जलदाम्बु च ।
दक्षिणानिल-शीतेषु परितो जल-वाहिषु ॥ २३ ॥

३.२३bv मध्व्-अम्बु जलदाम्बु वा अ-दृष्ट-नष्ट-सूर्येषु मणि-कुट्टिम-कान्तिषु ।
परपुष्ट-विघुष्टेषु काम-कर्मान्त-भूमिषु ॥ २४ ॥

३.२४av अ-दृष्टा-नष्ट-सूर्येषु विचित्र-पुष्प-वृक्षेषु काननेषु सु-गन्धिषु ।
गोष्ठी-कथाभिश् चित्राभिर् मध्याह्नं गमयेत् सुखी ॥ २५ ॥

गुरु-शीत-दिवा-स्वप्न-स्निग्धाम्ल-मधुरांस् त्यजेत् ।
तीक्ष्णांशुर् अति-तीक्ष्णांशुर् ग्रीष्मे संक्षिपतीव यत् ॥ २६ ॥

३.२६cv स्नेहम् अर्को ऽति-तीक्ष्णांशुर् प्रत्य्-अहं क्षीयते श्लेष्मा तेन वायुश् च वर्धते ।
अतो ऽस्मिन् पटु-कट्व्-अम्ल-व्यायामार्क-करांस् त्यजेत् ॥ २७ ॥

भजेन् मधुरम् एवान्नं लघु स्निग्धं हिमं द्रवम् ।
सु-शीत-तोय-सिक्ताङ्गो लिह्यात् सक्तून् स-शर्करान् ॥ २८ ॥

मद्यं न पेयं पेयं वा स्व्-अल्पं सु-बहु-वारि वा ।
अन्य-था शोष-शैथिल्य-दाह-मोहान् करोति तत् ॥ २९ ॥

३.२९cv अन्य-था शोफ-शैथिल्य- कुन्देन्दु-धवलं शालिम् अश्नीयाज् जाङ्गलैः पलैः ।
पिबेद् रसं नाति-घनं रसालां राग-खाण्डवौ ॥ ३० ॥

३.३०av कुन्देन्दु-धवलात् छालीन् ३.३०dv रसालां राग-खाडवौ ३.३०dv रसालां राग-षाडवौ पानकं पञ्च-सारं वा नव-मृद्-भाजने स्थितम् ।
मोच-चोच-दलैर् युक्तं साम्लं मृन्-मय-शुक्तिभिः ॥ ३१ ॥

३.३१bv नव-मृद्-भाजन-स्थितम् पाटला-वासितं चाम्भः स-कर्पूरं सु-शीतलम् ।
शशाङ्क-किरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ॥ ३२ ॥

स-सितं माहिषं क्षीरं चन्द्र-नक्षत्र-शीतलम् ।
अभ्रङ्-कष-महा-शाल-ताल-रुद्धोष्ण-रश्मिषु ॥ ३३ ॥

वनेषु माधवी-श्लिष्ट-द्राक्षा-स्तबक-शालिषु ।
सु-गन्धि-हिम-पानीय-सिच्यमान-पटालिके ॥ ३४ ॥

कायमाने चिते चूत-प्रवाल-फल-लुम्बिभिः ।
कदली-दल-कल्हार-मृणाल-कमलोत्पलैः ॥ ३५ ॥

कोमलैः कल्पिते तल्पे हसत्-कुसुम-पल्लवे ।
मध्यन्-दिने ऽर्क-तापार्तः स्वप्याद् धारा-गृहे ऽथ-वा ॥ ३६ ॥

पुस्त-स्त्री-स्तन-हस्तास्य-प्रवृत्तोशीर-वारिणि ।
निशा-कर-कराकीर्णे सौध-पृष्ठे निशासु च ॥ ३७ ॥

आसना स्वस्थ-चित्तस्य चन्दनार्द्रस्य मालिनः ।
निवृत्त-काम-तन्त्रस्य सु-सूक्ष्म-तनु-वाससः ॥ ३८ ॥

जलार्द्रास् ताल-वृन्तानि विस्तृताः पद्मिनी-पुटाः ।
उत्क्षेपाश् च मृदूत्क्षेपा जल-वर्षि-हिमानिलाः ॥ ३९ ॥

कर्पूर-मल्लिका-माला हाराः स-हरि-चन्दनाः ।
मनो-हर-कलालापाः शिशवः सारिकाः शुकाः ॥ ४० ॥

मृणाल-वलयाः कान्ताः प्रोत्फुल्ल-कमलोज्ज्वलाः ।
जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ॥ ४१ ॥

आदान-ग्लान-वपुषाम् अग्निः सन्नो ऽपि सीदति ।
वर्षासु दोषैर् दुष्यन्ति ते ऽम्बु-लम्बाम्बु-दे ऽम्बरे ॥ ४२ ॥

३.४२av आदान-म्लान-वपुषाम् स-तुषारेण मरुता सहसा शीतलेन च ।
भू-बाष्पेणाम्ल-पाकेन मलिनेन च वारिणा ॥ ४३ ॥

वह्निनैव च मन्देन तेष्व् इत्य् अन्यो-ऽन्य-दूषिषु ।
भजेत् साधारणं सर्वम् ऊष्मणस् तेजनं च यत् ॥ ४४ ॥

आस्थापनं शुद्ध-तनुर् जीर्णं धान्यं रसान् कृतान् ।
जाङ्गलं पिशितं यूषान् मध्व्-अरिष्टं चिरन्-तनम् ॥ ४५ ॥

मस्तु सौवर्चलाढ्यं वा पञ्च-कोलावचूर्णितम् ।
दिव्यं कौपं शृतं चाम्भो भोजनं त्व् अति-दुर्-दिने ॥ ४६ ॥

३.४६av मस्तु सौवर्चलाढ्यं च व्यक्ताम्ल-लवण-स्नेहं संशुष्कं क्षौद्र-वल् लघु ।
अ-पाद-चारी सुरभिः सततं धूपिताम्बरः ॥ ४७ ॥

हर्म्य-पृष्ठे वसेद् बाष्प-शीत-सीकर-वर्जिते ।
नदी-जलोद-मन्थाहः-स्वप्नायासातपांश् त्यजेत् ॥ ४८ ॥

वर्षा-शीतोचिताङ्गानां सहसैवार्क-रश्मिभिः ।
तप्तानां संचितं वृष्टौ पित्तं शरदि कुप्यति ॥ ४९ ॥

तज्-जयाय घृतं तिक्तं विरेको रक्त-मोक्षणम् ।
तिक्तं स्वादु कषायं च क्षुधितो ऽन्नं भजेल् लघु ॥ ५० ॥

शालि-मुद्ग-सिता-धात्री-पटोल-मधु-जाङ्गलम् ।
तप्तं तप्तांशु-किरणैः शीतं शीतांशु-रश्मिभिः ॥ ५१ ॥

समन्ताद् अप्य् अहो-रात्रम् अगस्त्योदय-निर्-विषम् ।
शुचि हंसोदकं नाम निर्-मलं मल-जिज् जलम् ॥ ५२ ॥

नाभिष्यन्दि न वा रूक्षं पानादिष्व् अमृतोपमम् ।
चन्दनोशीर-कर्पूर-मुक्ता-स्रग्-वसनोज्ज्वलः ॥ ५३ ॥

सौधेषु सौध-धवलां चन्द्रिकां रजनी-मुखे ।
तुषार-क्षार-सौहित्य-दधि-तैल-वसातपान् ॥ ५४ ॥

तीक्ष्ण-मद्य-दिवा-स्वप्न-पुरो-वातान् परित्यजेत् ।
शीते वर्षासु चाद्यांस् त्रीन् वसन्ते ऽन्त्यान् रसान् भजेत् ॥ ५५ ॥

स्वादुं निदाघे शरदि स्वादु-तिक्त-कषायकान् ।
शरद्-वसन्तयो रूक्षं शीतं घर्म-घनान्तयोः ॥ ५६ ॥

अन्न-पानं समासेन विपरीतम् अतो ऽन्य-दा ।
नित्यं सर्व-रसाभ्यासः स्व-स्वाधिक्यम् ऋताव् ऋतौ ॥ ५७ ॥

ऋत्वोर् अन्त्यादि-सप्ताहाव् ऋतु-संधिर् इति स्मृतः ।
तत्र पूर्वो विधिस् त्याज्यः सेवनीयो ऽपरः क्रमात् ॥ ५८ ॥

३.५८av ऋत्वोर् अन्त्यादि-सप्ताहाद् अ-सात्म्य-जा हि रोगाः स्युः सहसा त्याग-शीलनात् ॥ ५८□˘ ॥

अध्यायः ४

वेगान् न धारयेद् वात-विण्-मूत्र-क्षव-तृट्-क्षुधाम् ।
निद्रा-कास-श्रम-श्वास-जृम्भाश्रु-च्छर्दि-रेतसाम् ॥ १ ॥

अधो-वातस्य रोधेन गुल्मोदावर्त-रुक्-क्लमाः ।
वात-मूत्र-शकृत्-सङ्ग-दृष्ट्य्-अग्नि-वध-हृद्-गदाः ॥ २ ॥

स्नेह-स्वेद-विधिस् तत्र वर्तयो भोजनानि च ।
पानानि वस्तयश् चैव शस्तं वातानुलोमनम् ॥ २+१ ॥

शकृतः पिण्डिकोद्वेष्ट-प्रतिश्याय-शिरो-रुजः ।
ऊर्ध्व-वायुः परीकर्तो हृदयस्योपरोधनम् ॥ ३ ॥

४.३cv ऊर्ध्वं वायुः परीकर्तो मुखेन विट्-प्रवृत्तिश् च पूर्वोक्ताश् चामयाः स्मृताः ।
अङ्ग-भङ्गाश्मरी-वस्ति-मेढ्र-वङ्क्षण-वेदनाः ॥ ४ ॥

मूत्रस्य रोधात् पूर्वे च प्रायो रोगास् तद्-औषधम् ।
वर्त्य्-अभ्यङ्गावगाहाश् च स्वेदनं वस्ति-कर्म च ॥ ५ ॥

अन्न-पानं च विड्-भेदि विड्-रोधोत्थेषु यक्ष्मसु ।
मूत्र-जेषु तु पाने च प्राग्-भक्तं शस्यते घृतम् ॥ ६ ॥

४.६cv मूत्र-जेषु च पानं तु ४.६cv मूत्र-जेषु प्रयुञ्जीत ४.६dv सर्पिषश् चावपीडकम् जीर्णान्तिकं चोत्तमया मात्रया योजना-द्वयम् ।
अवपीडकम् एतच् च संज्ञितं धारणात् पुनः ॥ ७ ॥

उद्गारस्या-रुचिः कम्पो विबन्धो हृदयोरसोः ।
आध्मान-कास-हिध्माश् च हिध्मा-वत् तत्र भेषजम् ॥ ८ ॥

शिरो-ऽर्तीन्द्रिय-दौर्बल्य-मन्या-स्तम्भार्दितं क्षुतेः ।
तीक्ष्ण-धूमाञ्जनाघ्राण-नावनार्क-विलोकनैः ॥ ९ ॥

प्रवर्तयेत् क्षुतिं सक्तां स्नेह-स्वेदौ च शीलयेत् ।
शोषाङ्ग-साद-बाधिर्य-संमोह-भ्रम-हृद्-गदाः ॥ १० ॥

तृष्णाया निग्रहात् तत्र शीतः सर्वो विधिर् हितः ।
अङ्ग-भङ्गा-रुचि-ग्लानि-कार्श्य-शूल-भ्रमाः क्षुधः ॥ ११ ॥

४.११dv -कार्श्य-शूल-श्रम-भ्रमाः तत्र योज्यं लघु स्निग्धम् उष्णम् अल्पं च भोजनम् ।
निद्राया मोह-मूर्धाक्षि-गौरवालस्य-जृम्भिकाः ॥ १२ ॥

४.१२av वैवर्ण्यं च क्षुधस् तत्र ४.१२bv स्निग्धोष्णं लघु भोजनम् अङ्ग-मर्दश् च तत्रेष्टः स्वप्नः संवाहनानि च ।
कासस्य रोधात् तद्-वृद्धिः श्वासा-रुचि-हृद्-आमयाः ॥ १३ ॥

शोषो हिध्मा च कार्यो ऽत्र कास-हा सु-तरां विधिः ।
गुल्म-हृद्-रोग-संमोहाः श्रम-श्वासाद् विधारितात् ॥ १४ ॥

४.१४dv श्रम-श्वासा-विधारणात् हितं विश्रमणं तत्र वात-घ्नश् च क्रिया-क्रमः ।
जृम्भायाः क्षव-वद् रोगाः सर्वश् चानिल-जिद् विधिः ॥ १५ ॥

४.१५cच् जृम्भायाः क्षुति-वद् रोगाः पीनसाक्षि-शिरो-हृद्-रुङ्-मन्या-स्तम्भा-रुचि-भ्रमाः ।
स-गुल्मा बाष्पतस् तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ १६ ॥

विसर्प-कोठ-कुष्ठाक्षि-कण्डू-पाण्ड्व्-आमय-ज्वराः ।
स-कास-श्वास-हृल्-लास-व्यङ्ग-श्वयथवो वमेः ॥ १७ ॥

गण्डूष-धूमान्-आहारा रूक्षं भुक्त्वा तद्-उद्वमः ।
व्यायामः स्रुतिर् अस्रस्य शस्तं चात्र विरेचनम् ॥ १८ ॥

४.१८av गण्डूष-धूमान्-आहारं ४.१८av गण्डूष-धूमान्-आहारान् ४.१८bv रूक्षं भुक्त्वा तद् उद्वमेत् ४.१८bv रूक्षान् भुक्त्वा तद् उद्वमेत् स-क्षार-लवणं तैलम् अभ्यङ्गार्थं च शस्यते ।
शुक्रात् तत्-स्रवणं गुह्य-वेदना-श्वयथु-ज्वराः ॥ १९ ॥

४.१९bv अभ्यङ्गार्थे च शस्यते हृद्-व्यथा-मूत्र-सङ्गाङ्ग-भङ्ग-वृद्ध्य्-अश्म-षण्ढ-ताः ।
ताम्र-चूड-सुरा-शालि-वस्त्य्-अभ्यङ्गावगाहनम् ॥ २० ॥

वस्ति-शुद्धि-करैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः ।
तृट्-शूलार्तं त्यजेत् क्षीणं विड्-वमं वेग-रोधिनम् ॥ २१ ॥

रोगाः सर्वे ऽपि जायन्ते वेगोदीरण-धारणैः ।
निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥ २२ ॥

ततश् चानेक-धा प्रायः पवनो यत् प्रकुप्यति ।
अन्न-पानौषधं तस्य युञ्जीतातो ऽनुलोमनम् ॥ २३ ॥

धारयेत् तु सदा वेगान् हितैषी प्रेत्य चेह च ।
लोभेर्ष्या-द्वेष-मात्सर्य-रागादीनां जितेन्द्रियः ॥ २४ ॥

यतेत च यथा-कालं मलानां शोधनं प्रति ।
अत्य्-अर्थ-संचितास् ते हि क्रुद्धाः स्युर् जीवित-च्छिदः ॥ २५ ॥

दोषाः कदा-चित् कुप्यन्ति जिता लङ्घन-पाचनैः ।
ये तु संशोधनैः शुद्धा न तेषां पुनर्-उद्भवः ॥ २६ ॥

४.२६cv ये तु संशोधनैः शुद्धास् ४.२६dv तेषां न पुनर्-उद्भवः च यथा-क्रमं यथा-योगम् अत ऊर्ध्वं प्रयोजयेत् ।
रसायनानि सिद्धानि वृष्य-योगांश् च काल-वित् ॥ २७ ॥

४.२७av यथा-क्रमं यथा-योग्यम् भेषज-क्षपिते पथ्यम् आहारैर् बृंहणं क्रमात् ।
शालि-षष्टिक-गोधूम-मुद्ग-मांस-घृतादिभिः ॥ २८ ॥

४.२८dv -मुद्ग-मांस-रसादिभिः हृद्य-दीपन-भैषज्य-संयोगाद् रुचि-पक्ति-दैः ।
साभ्यङ्गोद्वर्तन-स्नान-निरूह-स्नेह-वस्तिभिः ॥ २९ ॥

तथा स लभते शर्म सर्व-पावक-पाटवम् ।
धी-वर्णेन्द्रिय-वैमल्यं वृष-तां दैर्घ्यम् आयुषः ॥ ३० ॥

ये भूत-विष-वाय्व्-अग्नि-क्षत-भङ्गादि-संभवाः ।
राग-द्वेष-भयाद्याश् च ते स्युर् आगन्तवो गदाः ॥ ३१ ॥

४.३१cv काम-क्रोध-भायाद्याश् त्यागः प्रज्ञापराधानाम् इन्द्रियोपशमः स्मृतिः ।
देश-कालात्म-विज्ञानं सद्-वृत्तस्यानुवर्तनम् ॥ ३२ ॥

अथर्व-विहिता शान्तिः प्रतिकूल-ग्रहार्चनम् ।
भूताद्य-स्पर्शनोपायो निर्दिष्टश् च पृथक् पृथक् ॥ ३३ ॥

अन्-उत्पत्त्यै समासेन विधिर् एष प्रदर्शितः ।
निजागन्तु-विकाराणाम् उत्पन्नानां च शान्तये ॥ ३४ ॥

४.३४av अन्-उत्पत्तौ समासेन शीतोद्भवं दोष-चयं वसन्ते विशोधयन् ग्रीष्म-जम् अभ्र-काले ।
घनात्यये वार्षिकम् आशु सम्यक् प्राप्नोति रोगान् ऋतु-जान् न जातु ॥ ३५ ॥

नित्यं हिताहार-विहार-सेवी समीक्ष्य-कारी विषयेष्व् अ-सक्तः ।
दाता समः सत्य-परः क्षमा-वान् आप्तोपसेवी च भवत्य् अ-रोगः ॥ ३६ ॥

अध्यायः २ जीवनं तर्पणं हृद्यं ह्लादि बुद्धि-प्रबोधनम् ।
तन्व् अ-व्यक्त-रसं मृष्टं शीतं लघ्व् अमृतोपमम् ॥ १ ॥

गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्व् अर्केन्दु-मारुतैः ।
हिता-हित-त्वे तद् भूयो देश-कालाव् अपेक्षते ॥ २ ॥

येनाभिवृष्टम् अ-मलं शाल्य्-अन्नं राजते स्थितम् ।
अ-क्लिन्नम् अ-वि-वर्णं च तत् पेयं गाङ्गम् अन्य-था ॥ ३ ॥

५.३bv शाल्य्-अन्नं राजत-स्थितम् ५.३cv अ-क्लिन्नम् अ-वि-वर्णं स्यात् ५.३cv अ-क्लिन्नम् अ-विवर्णं वा ५.३dv तत् तोयं गाङ्गम् अन्य-था
सामुद्रं तन् न पातव्यं मासाद् आश्वयुजाद् विना ।
ऐन्द्रम् अम्बु सु-पात्र-स्थम् अ-विपन्नं सदा पिबेत् ॥ ४ ॥

तद्-अ-भावे च भूमि-ष्ठम् आन्तरिक्षानुकारि यत् ।
शुचि-पृथ्व्-असित-श्वेते देशे ऽर्क-पवनाहतम् ॥ ५ ॥

५.५av तद्-अ-भावे च भूयिष्ठम् ५.५av तद्-अ-भावे पिबेद् भौमम् न पिबेत् पङ्क-शैवाल-तृण-पर्णाविलास्तृतम् ।
सूर्येन्दु-पवना-दृष्टम् अभिवृष्टं घनं गुरु ॥ ६ ॥

फेनिलं जन्तु-मत् तप्तं दन्त-ग्राह्य् अति-शैत्यतः ।
अन्-आर्तवं च यद् दिव्यम् आर्तवं प्रथमं च यत् ॥ ७ ॥

लूतादि-तन्तु-विण्-मूत्र-विष-संश्लेष-दूषितम् ।
पश्चिमोद-धि-गाः शीघ्र-वहा याश् चा-मलोदकाः ॥ ८ ॥

पथ्याः समासात् ता नद्यो विपरीतास् त्व् अतो ऽन्य-था ।
उपलास्फालनाक्षेप-विच्छेदैः खेदितोदकाः ॥ ९ ॥

५.९av पथ्याः समासतो नद्यो हिमवन्-मलयोद्भूताः पथ्यास् ता एव च स्थिराः ।
कृमि-श्लीपद-हृत्-कण्ठ-शिरो-रोगान् प्रकुर्वते ॥ १० ॥

प्राच्यावन्त्य्-अपरान्तोत्था दुर्-नामानि महेन्द्र-जाः ।
उदर-श्लीपदातङ्कान् सह्य-विन्ध्योद्भवाः पुनः ॥ ११ ॥

५.११bv सह्य-विन्ध्य-भवाः पुनः कुष्ठ-पाण्डु-शिरो-रोगान् दोष-घ्न्यः पारियात्र-जाः ।
बल-पौरुष-कारिण्यः सागराम्भस् त्रि-दोष-कृत् ॥ १२ ॥

५.१२dv सागराम्बु त्रि-दोष-कृत् आविलं स-मलं नीलं घनं पीतम् अथापि च ।
स-क्षारं पिच्छिलं चैव सामुद्रं तन् निगद्यते ॥ १२+१ ॥

विद्यात् कूप-तडागादीन् जाङ्गलानूप-शैलतः ।
नाम्बु पेयम् अ-शक्त्या वा स्व्-अल्पम् अल्पाग्नि-गुल्मिभिः ॥ १३ ॥

पाण्डूदरातिसारार्शो-ग्रहणी-शोष-शोथिभिः ।
ऋते शरन्-निदाघाभ्यां पिबेत् स्वस्थो ऽपि चाल्प-शः ॥ १४ ॥

५.१४bv -ग्रहणी-दोष-शोथिभिः सम-स्थूल-कृशा भुक्त-मध्यान्त-प्रथमाम्बु-पाः ।
शीतं मदात्यय-ग्लानि-मूर्छा-छर्दि-श्रम-भ्रमान् ॥ १५ ॥

५.१५av सम-स्थूल-कृशा भक्त- तृष्णोष्ण-दाह-पित्तास्र-विषाण्य् अम्बु नियच्छति ।
दीपनं पाचनं कण्ठ्यं लघूष्णं वस्ति-शोधनम् ॥ १६ ॥

५.१६av तृष्णोष्म-दाह-पित्तास्र- हिध्माध्मानानिल-श्लेष्म-सद्यः-शुद्धि-नव-ज्वरे ।
कासाम-पीनस-श्वास-पार्श्व-रुक्षु च शस्यते ॥ १७ ॥

५.१७bv -सद्यः-शुद्धे नव-ज्वरे अन्-अभिष्यन्दि लघु च तोयं क्वथित-शीतलम् ।
पित्त-युक्ते हितं दोषे व्युषितं तत् त्रि-दोष-कृत् ॥ १८ ॥

५.१८av रूक्षम् अन्-अभिष्यन्दि ५.१८bv लघु क्वथित-शीतलम् ५.१८cv ऽध्युषितं तत् त्रि-दोष-कृत् नारिकेलोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णा-पित्तानिल-हरं दीपनं वस्ति-शोधनम् ॥ १९ ॥

वर्षासु दिव्य-नादेये परं तोये वरावरे ।
स्वादु-पाक-रसं स्निग्धम् ओजस्यं धातु-वर्धनम् ॥ २० ॥

वात-पित्त-हरं वृष्यं श्लेष्मलं गुरु शीतलम् ।
प्रायः पयो ऽत्र गव्यं तु जीवनीयं रसायनम् ॥ २१ ॥

क्षत-क्षीण-हितं मेध्यं बल्यं स्तन्य-करं सरम् ।
श्रम-भ्रम-मदा-लक्ष्मी-श्वास-कासाति-तृट्-क्षुधः ॥ २२ ॥

५.२२dv -श्वास-कासार्ति-तृट्-क्षुधः ५ .२२dv -श्वास-कासाधि-तृट्-क्षुधः जीर्ण-ज्वरं मूत्र-कृच्छ्रं रक्त-पित्तं च नाशयेत् ।
हितम् अत्य्-अग्न्य्-अ-निद्रेभ्यो गरीयो माहिषं हिमम् ॥ २३ ॥

अल्पाम्बु-पान-व्यायाम-कटु-तिक्ताशनैर् लघु ।
आजं शोष-ज्वर-श्वास-रक्त-पित्तातिसार-जित् ॥ २४ ॥

ईषद्-रूक्षोष्ण-लवणम् औष्ट्राकम् दीपनं लघु ।
शस्तं वात-कफानाह-कृमि-शोफोदरार्शसाम् ॥ २५ ॥

मानुषं वात-पित्तासृग्-अभिघाताक्षि-रोग-जित् ।
तर्पणाश्च्योतनैर् नस्यैर् अ-हृद्यं तूष्णम् आविकम् ॥ २६ ॥

वात-व्याधि-हरं हिध्मा-श्वास-पित्त-कफ-प्रदम् ।
हस्तिन्याः स्थैर्य-कृद् बाढम् उष्णं त्व् ऐकशफं लघु ॥ २७ ॥

शाखा-वात-हरं साम्ल-लवणं जड-ता-करम् ।
पयो ऽभिष्यन्दि गुर्व् आमं युक्त्या शृतम् अतो ऽन्य-था ॥ २८ ॥

विना तु वनिता-स्तन्यम् आमम् एव हितं हि तत् ॥ २८+१अब् ॥
भवेद् गरीयो ऽति-शृतं धारोष्णम् अमृतोपमम् ।
अम्ल-पाक-रसं ग्राहि गुरूष्णं दधि वात-जित् ॥ २९ ॥

मेदः-शुक्र-बल-श्लेष्म-पित्त-रक्ताग्नि-शोफ-कृत् ।
रोचिष्णु शस्तम् अ-रुचौ शीतके विषम-ज्वरे ॥ ३० ॥

पीनसे मूत्र-कृच्छ्रे च रूक्षं तु ग्रहणी-गदे ।
नैवाद्यान् निशि नैवोष्णं वसन्तोष्ण-शरत्सु न ॥ ३१ ॥

५.३१cv शरद्-ग्रीष्म-वसन्तेषु ५.३१dv नाद्यान् नोष्णं न रात्रिषु ना-मुद्ग-सूपं ना-क्षौद्रं तन् ना-घृत-सितोपलम् ।
न चान्-आमलकं नापि नित्यं नो मन्दम् अन्य-था ॥ ३२ ॥

ज्वरासृक्-पित्त-वीसर्प-कुष्ठ-पाण्डु-भ्रम-प्रदम् ।
तक्रं लघु कषायाम्लं दीपनं कफ-वात-जित् ॥ ३३ ॥

शोफोदरार्शो-ग्रहणी-दोष-मूत्र-ग्रहा-रुचीः ।
प्लीह-गुल्म-घृत-व्यापद्-गर-पाण्ड्व्-आमयात्र् जयेत् ॥ ३४ ॥

तद्-वन् मस्तु सरं स्रोतः-शोधि विष्टम्भ-जिल् लघु ।
नव-नीतं नवं वृष्यं शीतं वर्ण-बलाग्नि-कृत् ॥ ३५ ॥

संग्राहि वात-पित्तासृक्-क्षयार्शो-ऽर्दित-कास-जित् ।
क्षीरोद्भवं तु संग्राहि रक्त-पित्ताक्षि-रोग-जित् ॥ ३६ ॥

शस्तं धी-स्मृति-मेधाग्नि-बलायुः-शुक्र-चक्षुषाम् ।
बाल-वृद्ध-प्रजा-कान्ति-सौकुमार्य-स्वरार्थिनाम् ॥ ३७ ॥

क्षत-क्षीण-परीसर्प-शस्त्राग्नि-ग्लपितात्मनाम् ।
वात-पित्त-विषोन्माद-शोषा-लक्ष्मी-ज्वरापहम् ॥ ३८ ॥

स्नेहानाम् उत्तमं शीतं वयसः स्थापनं परम् ।
सहस्र-वीर्यं विधिभिर् घृतं कर्म-सहस्र-कृत् ॥ ३९ ॥

५.३९cv सहस्र-वीर्यं विधि-वद् मदापस्मार-मूर्छाय-शिरः-कर्णाक्षि-योनि-जान् ।
पुराणं जयति व्याधीन् व्रण-शोधन-रोपणम् ॥ ४० ॥

बल्याः किलाट-पीयूष-कूर्चिका-मोरणादयः ।
शुक्र-निद्रा-कफ-करा विष्टम्भि-गुरु-दोषलाः ॥ ४१ ॥

५.४१bv -कूचिका-मोरणादयः गव्ये क्षीर-घृते श्रेष्ठे निन्दिते चावि-संभवे ।
इक्षोः सरो गुरुः स्निग्धो बृंहणः कफ-मूत्र-कृत् ॥ ४२ ॥

वृष्यः शीतो ऽस्र-पित्त-घ्नः स्वादु-पाक-रसो रसः ।
सो ऽग्रे स-लवणो दन्त-पीडितः शर्करा-समः ॥ ४३ ॥

मूलाग्र-जन्तु-जग्धादि-पीडनान् मल-संकरात् ।
किञ्-चित्-कालं विधृत्या च विकृतिं याति यान्त्रिकः ॥ ४४ ॥

५.४४cv किञ्-चित्-काल-विधृत्या च विदाही गुरु-विष्टम्भी तेनासौ तत्र पौण्ड्रकः ।
शैत्य-प्रसाद-माधुर्यैर् वरस् तम् अनु वांशिकः ॥ ४५ ॥

५.४५av गुरुर् विदाही विष्टम्भी शतपर्वक-कान्तार-नैपालाद्यास् ततः क्रमात् ।
स-क्षाराः स-कषायाश् च सोष्णाः किञ्-चिद्-विदाहिनः ॥ ४६ ॥

५.४६av शातपर्वक-कान्तार- ५.४६bv -नेपालाद्यास् ततः क्रमात् फाणितं गुर्व् अभिष्यन्दि चय-कृन् मूत्र-शोधनम् ।
नाति-श्लेष्म-करो धौतः सृष्ट-मूत्र-शकृद् गुडः ॥ ४७ ॥

प्रभूत-कृमि-मज्जासृङ्-मेदो-मांस-कफो ऽपरः ।
हृद्यः पुराणः पथ्यश् च नवः श्लेष्माग्नि-साद-कृत् ॥ ४८ ॥

वृष्याः क्षीण-क्षत-हिता रक्त-पित्तानिलापहाः ।
मत्स्यण्डिका-खण्ड-सिताः क्रमेण गुण-वत्-तमाः ॥ ४९ ॥

तद्-गुणा तिक्त-मधुरा कषाया यास-शर्करा ।
दाह-तृट्-छर्दि-मूर्छासृक्-पित्त-घ्न्यः सर्व-शर्कराः ॥ ५० ॥

शर्करेक्षु-विकाराणां फाणितं च वरावरे ।
चक्षुष्यं छेदि तृट्-श्लेष्म-विष-हिध्मास्र-पित्त-नुत् ॥ ५१ ॥

मेह-कुष्ठ-कृमि-च्छर्दि-श्वास-कासातिसार-जित् ।
व्रण-शोधन-संधान-रोपणं वातलं मधु ॥ ५२ ॥

रूक्षं कषाय-मधुरं तत्-तुल्या मधु-शर्करा ।
उष्णम् उष्णार्तम् उष्णे च युक्तं चोष्णैर् निहन्ति तत् ॥ ५३ ॥

यक्ष्मार्शो-ऽर्दित-पित्तासृङ्-नाशनं ग्राहि दीपनम् ॥ ५३.१+१ ॥

प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।
अ-लब्ध-पाकम् आश्व् एव तयोर् यस्मान् निवर्तते ॥ ५४ ॥

५.५४cv अ-लब्ध-पाकम् एवाशु तैलं स्व-योनि-वत् तत्र मुख्यं तीक्ष्णं व्यवायि च ।
त्वग्-दोष-कृद् अ-चक्षुष्यं सूक्ष्मोष्णं कफ-कृन् न च ॥ ५५ ॥

कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।
बद्ध-विट्कं कृमि-घ्नं च संस्कारात् सर्व-रोग-जित् ॥ ५६ ॥

५.५६dv संस्कारात् सर्व-दोष-जित् स-तिक्तोषणम् ऐरण्डं तैलं स्वादु सरं गुरु ।
वर्ध्म-गुल्मानिल-कफान् उदरं विषम-ज्वरम् ॥ ५७ ॥

रुक्-शोफौ च कटी-गुह्य-कोष्ठ-पृष्ठाश्रयौ जयेत् ।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्व् अति ॥ ५८ ॥

कटूष्णं सार्षपं तीक्ष्णं कफ-शुक्रानिलापहम् ।
लघु पित्तास्र-कृत् कोठ-कुष्ठार्शो-व्रण-जन्तु-जित् ॥ ५९ ॥

आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।
नात्य्-उष्णं निम्ब-जं तिक्तं कृमि-कुष्ठ-कफ-प्रणुत् ॥ ६० ॥

उमा-कुसुम्भ-जं चोष्णं त्वग्-दोष-कफ-पित्त-कृत् ।
वसा मज्जा च वात-घ्नौ बल-पित्त-कफ-प्रदौ ॥ ६१ ॥

कषाय-तिक्त-कटुकं कारञ्जं व्रण-शोधनम् ॥ ६१.१+१ ॥

मांसानुग-स्व-रूपौ च विद्यान् मेदो ऽपि ताव् इव ।
दीपनं रोचनं मध्यं तीक्ष्णोष्णं तुष्टि-पुष्टि-दम् ॥ ६२ ॥

स-स्वादु-तिक्त-कटुकम् अम्ल-पाक-रसं सरम् ।
स-कषायं स्वरारोग्य-प्रतिभा-वर्ण-कृल् लघु ॥ ६३ ॥

नष्ट-निद्राति-निद्रेभ्यो हितं पित्तास्र-दूषणम् ।
कृश-स्थूल-हितं रूक्षं सूक्ष्मं स्रोतो-विशोधनम् ॥ ६४ ॥

वात-श्लेष्म-हरं युक्त्या पीतं विष-वद् अन्य-था ।
गुरु तद्-दोष-जननं नवं जीर्णम् अतो ऽन्य-था ॥ ६५ ॥

द्राक्षेक्षवः स-खर्जूराः शालि-पिष्टम् यवस्य च ।
पञ्च मद्याकाराः श्रेष्ठा द्राक्षा तेषां विशिष्यते ॥ ६५.१+१ ॥

५.६५.१+१bv शालेः पिष्टम् यवस्य च पेयं नोष्णोपचारेण न विरिक्त-क्षुधातुरैः ।
नात्य्-अर्थ-तीक्ष्ण-मृद्व्-अल्प-संभारं कलुषं न च ॥ ६६ ॥

गुल्मोदरार्शो-ग्रहणी-शोष-हृत् स्नेहनी गुरुः ।
सुरानिल-घ्नी मेदो-ऽसृक्-स्तन्य-मूत्र-कफावहा ॥ ६७ ॥

तद्-गुणा वारुणी हृद्या लघुस् तीक्ष्णा निहन्ति च ।
शूल-कास-वमि-श्वास-विबन्धाध्मान-पीनसान् ॥ ६८ ॥

नाति-तीव्र-मदा लघ्वी पथ्या वैभीतकी सुरा ।
व्रणे पाण्ड्व्-आमये कुष्ठे न चात्य्-अर्थं विरुध्यते ॥ ६९ ॥

विष्टम्भिनी यव-सुरा गुर्वी रूक्षा त्रि-दोषला ।
यथा-द्रव्य-गुणो ऽरिष्टः सर्व-मद्य-गुणाधिकः ॥ ७० ॥

ग्रहणी-पाण्डु-कुष्ठार्शः-शोफ-शोषोदर-ज्वरान् ।
हन्ति गुल्म-कृमि-प्लीहनः कषाय-कटु-वातलः ॥ ७१ ॥

५.७१dv कषायः कटु-वातलः मार्द्वीकं लेखनं हृद्यं नात्य्-उष्णं मधुरं सरम् ।
अल्प-पित्तानिलं पाण्डु-मेहार्शः-कृमि-नाशनम् ॥ ७२ ॥

अस्माद् अल्पान्तर-गुणं खार्जूरं वातलं गुरु ।
शार्करः सुरभिः स्वादु-हृद्यो नाति-मदो लघुः ॥ ७३ ॥

५.७३cv शार्करं सुरभि स्वादु ५.७३dv हृद्यं नाति-मदं लघु सृष्ट-मूत्र-शकृद्-वातो गौडस् तर्पण-दीपनः ।
वात-पित्त-करः सीधुः स्नेह-श्लेष्म-विकार-हा ॥ ७४ ॥

मेदः-शोफोदरार्शो-घ्नस् तत्र पक्व-रसो वरः ।
छेदी मध्व्-आसवस् तीक्ष्णो मेह-पीनस-कास-जित् ॥ ७५ ॥

रक्त-पित्त-कफोत्क्लेदि शुक्तं वातानुलोमनम् ।
भृशोष्ण-तीक्ष्ण-रूक्षाम्लं हृद्यं रुचि-करं सरम् ॥ ७६ ॥

५.७६dv हृद्यं रुचि-करं परम् दीपनं शिशिर-स्पर्शं पाण्डु-दृक्-कृमि-नाशनम् ।
गुडेक्षु-मद्य-मार्द्वीक-शुक्तं लघु यथोत्तरम् ॥ ७७ ॥

५.७७bv पाण्डु-हृत् कृमि-नाशनम् ५.७७cv गुडेक्षु-मद्य-माध्वीक- कन्द-मूल-फलाद्यं च तद्-वद् विद्यात् तद्-आसुतम् ।
शाण्डाकी चासुतं चान्यत् कालाम्लं रोचनं लघु ॥ ७८ ॥

धान्याम्लं भेदि तीक्ष्णोष्णं पित्त-कृत् स्पर्श-शीतलम् ।
श्रम-क्लम-हरं रुच्यं दीपनं वस्ति-शूल-नुत् ॥ ७९ ॥

शस्तम् आस्थापने हृद्यं लघु वात-कफापहम् ।
एभिर् एव गुणैर् युक्ते सौवीरक-तुषोदके ॥ ८० ॥

गण्डूष-धारणाद् वक्त्र-मल-दौर्गन्ध्य-शोष-जित् ॥ ८०.१+१ ॥

कृमि-हृद्-रोग-गुल्मार्शः-पाण्डु-रोग-निबर्हणे ।
ते क्रमाद् वि-तुषैर् विद्यात् स-तुषैश् च यवैः कृते ॥ ८१ ॥

५.८१av कृमि-हृद्-रोग-गुल्मार्शो- ५.८१bv -ग्रहणी-पाण्डु-नाशने मूत्रं गो-ऽजावि-महिषी-गजाश्वोष्ट्र-खरोद्भवम् ।
पित्तलं रूक्ष-तीक्ष्णोष्णं लवणानु-रसं कटु ॥ ८२ ॥

कृमि-शोफोदरानाह-शूल-पाण्डु-कफानिलान् ।
गुल्मा-रुचि-विष-श्वित्र-कुष्ठार्शांसि जयेल् लघु ॥ ८३ ॥

५.८३bv -शूल-पाण्डु-कफामयान् तोय-क्षीरेक्षु-तैलानां वर्गैर् मद्यस्य च क्रमात् ।
इति द्रवैक-देशो ऽयं यथा-स्थूलम् उदाहृतः ॥ ८४ ॥

रक्तो महान् स-कलमस् तूर्णकः शकुनाहृतः ।
सारा-मुखो दीर्घशूको लोध्रशूकः सुगन्धिकः ॥ १ ॥

पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौर-शारिवौ ।
काञ्चनो महिषः शूकः दूषकः कुसुमाण्डकः ॥ २ ॥

६.२av पाण्डुकः पुण्डरीकश् च ६.२av पौण्ड्रकः पुण्डरीकश् च ६.२bv प्रमोदो गौर-शालिकः लाङ्गला लोहवालाख्याः कर्दमाः शीतभीरुकाः ।
पतङ्गास् तपनीयाश् च ये चान्ये शालयः शुभाः ॥ ३ ॥

६.३av जाङ्गला लोहवालाख्याः ६.३av लाङ्गला लोहवालाश् च ६.३av लाङ्गलो लोहवालाख्यः ६.३bv कर्दमः शीतभीरुकः स्वादु-पाक-रसाः स्निग्धा वृष्या बद्धाल्प-वर्चसः ।
कषायानु-रसाः पथ्या लघवो मूत्रला हिमाः ॥ ४ ॥

शूक-जेषु वरस् तत्र रक्तस् तृष्णा-त्रि-दोष-हा ।
महांस् तम् अनु कलमस् तं चाप्य् अनु ततः परे ॥ ५ ॥

६.५cv महांस् तस्यानु कलमस् यवका हायनाः पांसु-बाष्प-नैषधकादयः ।
स्वादूष्णा गुरवः स्निग्धाः पाके ऽम्लाः श्लेष्म-पित्तलाः ॥ ६ ॥

६.६bv -वाप्य-नैषधकादयः सृष्ट-मूत्र-पुरीषाश् च पूर्वं पूर्वं च निन्दिताः ।
स्निग्धो ग्राही लघुः स्वादुस् त्रि-दोष-घ्नः स्थिरो हिमः ॥ ७ ॥

षष्टिको व्रीहिषु श्रेष्ठो गौरश् चासित-गौरतः ।
ततः क्रमान् महा-व्रीहि-कृष्ण-व्रीहि-जतूमुखाः ॥ ८ ॥

कुक्कुटाण्डक-लावाख्य-पारावतक-शूकराः ।
वरकोद्दालकोज्ज्वाल-चीन-शारद-दर्दुराः ॥ ९ ॥

६.९av कुक्कुटाण्डक-पालाक्ष- ६.९av कुक्कुटाण्डक-पालाख्य- ६.९av कुक्कुटाण्डक-लावाक्ष- ६.९dv -चीन-शारद-दुर्दराः गन्धनाः कुरुविन्दाश् च गुणैर् अल्पान्तराः स्मृताः ।
स्वादुर् अम्ल-विपाको ऽन्यो व्रीहिः पित्त-करो गुरुः ॥ १० ॥

बहु-मूत्र-पुरीषोष्मा त्रि-दोषस् त्व् एव पाटलः ।
कङ्गु-कोद्रव-नीवार-श्यामाकादि हिमं लघु ॥ ११ ॥

तृण-धान्यं पवन-कृल् लेखनं कफ-पित्त-हृत् ।
भग्न-संधान-कृत् तत्र प्रियङ्गुर् बृंहणी गुरुः ॥ १२ ॥

कोरदूषः परं ग्राही स्पर्शो शीतो विषापहः ।
रूक्षः शीतो गुरुः स्वादुः सरो विड्-वात-कृद् यवः ॥ १३ ॥

६.१३bv स्पर्शो शीतो गरापहः ६.१३bv स्पर्श-शीतो विषापहः वृष्यः स्थैर्य-करो मूत्र-मेदः-पित्त-कफाञ् जयेत् ।
पीनस-श्वास-कासोरु-स्तम्भ-कण्ठ-त्वग्-आमयान् ॥ १४ ॥

न्यूनो यवाद् अनु-यवो रूक्षोष्णो वंश-जो यवः ।
वृष्यः शीतो गुरुः स्निग्धो जीवनो वात-पित्त-हा ॥ १५ ॥

६.१५av न्यूनो यावद् अन्य-यवो संधान-कारी मधुरो गोधूमः स्थैर्य-कृत् सरः ।
पथ्या नन्दीमुखी शीता कषाय-मधुरा लघुः ॥ १६ ॥

निः-सारा वातला रूक्षा जूर्णाध्मान-करा सरा ॥ १६+१ ॥

मुद्गाढकी-मसूरादि शिम्बी-धान्यं विबन्ध-कृत् ।
कषायं स्वादु संग्राहि कटु-पाकं हिमं लघु ॥ १७ ॥

मेदः-श्लेष्मास्र-पित्तेषु हितं लेपोपसेकयोः ।
वरो ऽत्र मुद्गो ऽल्प-चलः कलायस् त्व् अति-वातलः ॥ १८ ॥

असृक्-पित्त-हरो रूक्षो वातलश् चणकः स्मृतः ॥ १८.१+१ ॥

राज-माषो ऽनिल-करो रूक्षो बहु-शकृद् गुरुः ।
उष्णाः कुलत्थाः पाके ऽम्लाः शुक्राश्म-श्वास-पीनसान् ॥ १९ ॥

कासार्शः-कफ-वातांश् च घ्नन्ति पित्तास्र-दाः परम् ।
निष्पावो वात-पित्तास्र-स्तन्य-मूत्र-करो गुरुः ॥ २० ॥

६.२०cv निष्पावो वात-पित्तासृक्- सरो विदाही दृक्-शुक्र-कफ-शोफ-विषापहः ।
माषः स्निग्धो बल-श्लेष्म-मल-पित्त-करः सरः ॥ २१ ॥

गुरूष्णो ऽनिल-हा स्वादुः शुक्र-वृद्धि-विरेक-कृत् ।
फलानि माष-वद् विद्यात् काकाण्डोलात्मगुप्तयोः ॥ २२ ॥

उष्णस् त्वच्यो हिमः स्पर्शे केश्यो बल्यस् तिलो गुरुः ।
अल्प-मूत्रः कटुः पाके मेधाग्नि-कफ-पित्त-कृत् ॥ २३ ॥

६.२३av उष्णस् त्वच्यो हिम-स्पर्शः स्निग्धोमा स्वादु-तिक्तोष्णा कफ-पित्त-करी गुरुः ।
दृक्-शुक्र-हृत् कटुः पाके तद्-वद् बीजं कुसुम्भ-जम् ॥ २४ ॥

माषो ऽत्र सर्वेष्व् अवरो यवकः शूक-जेषु च ।
नवं धान्यम् अभिष्यन्दि लघु संवत्सरोषितम् ॥ २५ ॥

६.२५bv यवकः शूक-जेष्व् अपि ६.२५dv लघु वर्षोषितं च यत् शीघ्र-जन्म तथा सूप्यं निस्-तुषं युक्ति-भर्जितम् ।
मण्ड-पेया-विलेपीनाम् ओदनस्य च लाघवम् ॥ २६ ॥

यव-गोधूम-माषाश् च तिलाश् चाभिनवा हिताः ।
पुराणा वि-रसाः सूक्ष्मा न तथार्थ-करा मताः ॥ २६.१+१ ॥

यथा-पूर्वं शिवस् तत्र मण्डो वातानुलोमनः ।
तृड्-ग्लानि-दोष-शेष-घ्नः पाचनो धातु-साम्य-कृत् ॥ २७ ॥

स्रोतो-मार्दव-कृत् स्वेदी संधुक्षयति चानलम् ।
क्षुत्-तृष्णा-ग्लानि-दौर्बल्य-कुक्षि-रोग-ज्वरापहा ॥ २८ ॥

मलानुलोमनी पथ्या पेया दीपन-पाचनी ।
विलेपी ग्राहिणी हृद्या तृष्णा-घ्नी दीपनी हिता ॥ २९ ॥

व्रणाक्षि-रोग-संशुद्ध-दुर्-बल-स्नेह-पायिनाम् ।
सु-धौतः प्रस्रुतः स्विन्नो ऽ-त्यक्तोष्मा चौदनो लघुः ॥ ३० ॥

यश् चाग्नेयौषध-क्वाथ-साधितो भृष्ट-तण्डुलः ।
विपरीतो गुरुः क्षीर-मांसाद्यैर् यश् च साधितः ॥ ३१ ॥

६.३१av यश् चाग्नेयौषध-क्वाथे ६.३१bv साधितो भृष्ट-तण्डुलैः इति द्रव्य-क्रिया-योग-मानाद्यैः सर्वम् आदिशेत् ।
बृंहणः प्रीणनो वृष्यश् चक्षुष्यो व्रण-हा रसः ॥ ३२ ॥

मौद्गस् तु पथ्यः संशुद्ध-व्रण-कण्ठाक्षि-रोगिणाम् ।
वातानुलोमी कौलत्थो गुल्म-तूणी-प्रतूणि-जित् ॥ ३३ ॥

अ-कृतं कृत-यूषं च तनु संस्कारितं रसम् ।
सूपम् अम्लम् अन्-अम्लं च गुरु विद्याद् यथोत्तरम् ॥ ३३+१ ॥

तिल-पिण्याक-विकृतिः शुष्क-शाकं विरूढकम् ।
शाण्डाकी-वटकं दृङ्-घ्नं दोषलं ग्लपनं गुरु ॥ ३४ ॥

रसाला बृंहणी वृष्या स्निग्धा बल्या रुचि-प्रदा ।
श्रम-क्षुत्-तृट्-क्लम-हरं पानकं प्रीणनं गुरु ॥ ३५ ॥

विष्टम्भि मूत्रलं हृद्यं यथा-द्रव्य-गुणं च तत् ।
लाजास् तृट्-छर्द्य्-अतीसार-मेह-मेदः-कफ-च्छिदः ॥ ३६ ॥

कास-पित्तोपशमना दीपना लघवो हिमाः ।
पृथुका गुरवो बल्याः कफ-विष्टम्भ-कारिणः ॥ ३७ ॥

धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ।
सक्तवो लघवः क्षुत्-तृट्-श्रम-नेत्रामय-व्रणान् ॥ ३८ ॥

६.३८dv -श्रम-नेत्र-गलामयान् घ्नन्ति संतर्पणाः पानात् सद्य एव बल-प्रदाः ।
नोदकान्तरितान् न द्विर् न निशायां न केवलान् ॥ ३९ ॥

न भुक्त्वा न द्वि-जैश् छित्त्वा सक्तून् अद्यान् न वा बहून् ।
पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टि-दूषणः ॥ ४० ॥

रौक्ष्याद् विष्टम्भते कोष्ठे विष्टम्भि-त्वाद् विदह्यते ।
विदाहात् कुरुते ग्लानिं पिण्याको निशि सेवितः ॥ ४०+१ ॥

वेसवारो गुरुः स्निग्धो बलोपचय-वर्धनः ।
मुद्गादि-जास् तु गुरवो यथा-द्रव्य-गुणानुगाः ॥ ४१ ॥

कुकूल-कर्पर-भ्राष्ट्र-कन्द्व्-अङ्गार-विपाचितान् ।
एक-योनीõ लघून् विद्याद् अपूपान् उत्तरोत्तरम् ॥ ४२ ॥

६.४२av कुकूल-खर्पर-भ्राष्ट्र- ६.४२bv -कट्व्-अङ्गार-विपाचितान् ६.४२dv अपूपांस् तु यथोत्तरम् हरिणैण-कुरङ्गर्क्ष-गोकर्ण-मृगमातृकाः ।
शश-शम्बर-चारुष्क-शरभाद्या मृगाः स्मृताः ॥ ४३ ॥

लाव-वार्तीक-वर्तीर-रक्तवर्त्मक-कुक्कुभाः ।
कपिञ्जलोपचक्राख्य-चकोर-कुरुबाहवः ॥ ४४ ॥

६.४४bv -रक्तवर्त्मक-कुर्कुभाः वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी ।
ताम्र-चूडाख्य-बकर-गोनर्द-गिरि-वर्तिकाः ॥ ४५ ॥

६.४५cv कुक्कुटो बकरः कङ्क- ६.४५cv ताम्र-चूडाख्य-वरक- तथा शारपदेन्द्राभ-वरटाद्याश् च विष्किराः ।
जीवञ्जीवक-दात्यूह-भृङ्गाह्व-शुक-सारिकाः ॥ ४६ ॥

६.४६bv -वारटाद्याश् च विष्किराः ६.४६bv -वारटाश् चेति विष्किराः ६.४६bv -वरटाश् चेति विष्किराः लट्वा-कोकिल-हारीत-कपोत-चटकादयः ।
प्रतुदा भेक-गोधाहि-श्वाविद्-आद्या बिले-शयाः ॥ ४७ ॥

गो-खराश्वतरोष्ट्राश्व-द्वीपि-सिंहर्क्ष-वानराः ।
मार्जार-मूषक-व्याघ्र-वृक-बभ्रु-तरक्षवः ॥ ४८ ॥

लोपाक-जम्बुक-श्येन-चाष-वान्ताद-वायसाः ।
शशघ्नी-भास-कुरर-गृध्रोलूक-कुलिङ्गकाः ॥ ४९ ॥

६.४९cv शशारि-भास-कुरर- धूमिका मधुहा चेति प्रसहा मृग-पक्षिणः ।
वराह-महिष-न्यङ्कु-रुरु-रोहित-वारणाः ॥ ५० ॥

सृमरश् चमरः खड्गो गवयश् च महा-मृगाः ।
हंस-सारस-कादम्ब-बक-कारण्डव-प्लवाः ॥ ५१ ॥

बलाकोत्क्रोश-चक्राह्व-मद्गु-क्रौञ्चादयो ऽप्-चराः ।
मत्स्या रोहित-पाठीन-कूर्म-कुम्भीर-कर्कटाः ॥ ५२ ॥

शुक्ति-शङ्खोद्र-शम्बूक-शफरी-वर्मि-चन्द्रिकाः ।
चुलूकी-नक्र-मकर-शिशुमार-तिमिङ्गिलाः ॥ ५३ ॥

६.५३av शुक्ति-शङ्खोद्रु-शम्बूक- ६.५३cv चुल्लकी-नक्र-मकर- राजी-चिलिचिमाद्याश् च मांसम् इत्य् आहुर् अष्ट-धा ।
योनिष्व् अजावी व्यामिश्र-गो-चर-त्वाद् अ-निश्चिते ॥ ५४ ॥

मृग्यं वैष्किरिकं किं च प्रातुदं च बिले-शयम् ।
प्रासहं च महा-मृग्यम् अप्-चरं मात्स्यम् अष्ट-धा ॥ ५४.१+१ ॥

आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ।
तत्र बद्ध-मलाः शीता लघवो जाङ्गला हिताः ॥ ५५ ॥

पित्तोत्तरे वात-मध्ये संनिपाते कफानुगे ।
दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ॥ ५६ ॥

ईषद्-उष्ण-गुरु-स्निग्धा बृंहणा वर्तकादयः ।
तित्तिरिस् तेष्व् अपि वरो मेधाग्नि-बल-शुक्र-कृत् ॥ ५७ ॥

ग्राही वर्ण्यो ऽनिलोद्रिक्त-संनिपात-हरः परम् ।
नाति-पथ्यः शिखी पथ्यः श्रोत्र-स्वर-वयो-दृशाम् ॥ ५८ ॥

तद्-वच् च कुक्कुटो वृष्यो ग्राम्यस् तु श्लेष्मलो गुरुः ।
मेधानल-करा हृद्याः क्रकराः सोपचक्रकाः ॥ ५९ ॥

गुरुः स-लवणः काण-कपोतः सर्व-दोष-कृत् ।
चटकाः श्लेष्मलाः स्निग्धा वात-घ्नाः शुक्रलाः परम् ॥ ६० ॥

६.६०dv वात-घ्नाः शुक्रलाः भृशम् गुरूष्ण-स्निग्ध-मधुरा वर्गाश् चातो यथोत्तरम् ।
मूत्र-शुक्र-कृतो बल्या वात-घ्नाः कफ-पित्तलाः ॥ ६१ ॥

शीता महा-मृगास् तेषु क्रव्याद-प्रसहाः पुनः ।
लवणानु-रसाः पाके कटुका मांस-वर्धनाः ॥ ६२ ॥

६.६२bv क्रव्यादाः प्रसहाः पुनः जीर्णार्शो-ग्रहणी-दोष-शोषार्तानां परं हिताः ।
नाति-शीत-गुरु-स्निग्धं मांसम् आजम् अ-दोषलम् ॥ ६३ ॥

६.६३cv नाति-शीतं गुरु स्निग्धं शरीर-धातु-सामान्याद् अन्-अभिष्यन्दि बृंहणम् ।
विपरीतम् अतो ज्ञेयम् आविकं बृंहणं तु तत् ॥ ६४ ॥

शुष्क-कास-श्रमात्य्-अग्नि-विषम-ज्वर-पीनसान् ।
कार्श्यं केवल-वातांश् च गो-मांसं संनियच्छति ॥ ६५ ॥

उष्णो गरीयान् महिषः स्वप्न-दार्ढ्य-बृहत्-त्व-कृत् ।
तद्-वद् वराहः श्रम-हा रुचि-शुक्र-बल-प्रदः ॥ ६६ ॥

मत्स्याः परं कफ-कराश् चिलिचीमस् त्रि-दोष-कृत् ।
लाव-रोहित-गोधैणाः स्वे स्वे वर्गे वराः परम् ॥ ६७ ॥

मत्स्यादि-पक्षिणां चैव गुरूण्य् अण्डानि चादिशेत् ।
तानि स्निग्धानि वृष्याणि स्वादु-पाक-रसानि च ॥ ६७.१+१ ॥

६.६७.१+१bv गुरूण्य् अण्डान्य् अतो दिशेत् ६.६७.१+१bv गुरूण्य् अण्डानि चान्यतो मांसं सद्यो-हतं शुद्धं वयः-स्थं च भजेत् त्यजेत् ।
मृतं कृशं भृशं मेद्यं व्याधि-वारि-विषैर् हतम् ॥ ६८ ॥

पुं-स्त्रियोः पूर्व-पश्चार्धे गुरुणी गर्भिणी गुरुः ।
लघुर् योषिच् चतुष्-पात्सु विहङ्गेषु पुनः पुमान् ॥ ६९ ॥

शिरः-स्कन्धोरु-पृष्ठस्य कट्याः सक्थ्नोश् च गौरवम् ।
तथाम-पक्वाशययोर् यथा-पूर्वं विनिर्दिशेत् ॥ ७० ॥

शोणित-प्रभृतीनां च धातूनाम् उत्तरोत्तरम् ।
मांसाद् गरीयो वृषण-मेढ्र-वृक्क-यकृद्-गुदम् ॥ ७१ ॥

शाकं पाठा-शठी-सूषा-सुनिषण्ण-सतीन-जम् ।
त्रि-दोष-घ्नं लघु ग्राहि स-राज-क्षव-वास्तुकम् ॥ ७२ ॥

६.७२av शाकं पाठा-शठी-शूषा- सुनिषण्णो ऽग्नि-कृद् वृष्यस् तेषु राज-क्षवः परम् ।
ग्रहण्य्-अर्शो-विकार-घ्नो वर्चो-भेदि तु वास्तुकम् ॥ ७३ ॥

हन्ति दोष-त्रयं कुष्ठं वृष्या सोष्णा रसायनी ।
काकमाची सरा स्वर्या चाङ्गेर्य् अम्लाग्नि-दीपनी ॥ ७४ ॥

६.७४bv वृष्या सोष्णा रसायनम् ग्रहण्य्-अर्शो-ऽनिल-श्लेष्मन्-हितोष्णा ग्राहिणी लघुः ।
पटोल-सप्तलारिष्ट-शार्ङ्गष्टावल्गुजामृताः ॥ ७५ ॥

६.७५cv पटोलं सप्तलारिष्ट- वेत्राग्र-बृहती-वासा-कुतिली-तिलपर्णिकाः ।
मण्डूकपर्णी-कर्कोट-कारवेल्लक-पर्पटाः ॥ ७६ ॥

६.७६av वेत्राग्रं बृहती-वासा- ६.७६bv -कुन्तिली-तिलपर्णिकाः ६.७६bv -कुन्तली-तिलपर्णिकाः नाडी-कलाय-गोजिह्वा-वार्ताकं वनतिक्तकम् ।
करीरं कुलकं नन्दी कुचैला शकुलादनी ॥ ७७ ॥

कठिल्लं केम्बुकं शीतं स-कोशातक-कर्कशम् ।
तिक्तं पाके कटु ग्राहि वातलं कफ-पित्त-जित् ॥ ७८ ॥

६.७८av कठिल्ल-केम्बुकं शीतं हृद्यं पटोलं कृमि-नुत् स्वादु-पाकं रुचि-प्रदम् ।
पित्तलं दीपनं भेदि वात-घ्नं बृहती-द्वयम् ॥ ७९ ॥

वृषं तु वमि-कास-घ्नं रक्त-पित्त-हरं परम् ।
कारवेल्लं स-कटुकं दीपनं कफ-जित् परम् ॥ ८० ॥

वार्ताकं कटु-तिक्तोष्णं मधुरं कफ-वात-जित् ।
स-क्षारम् अग्नि-जननं हृद्यं रुच्यम् अ-पित्तलम् ॥ ८१ ॥

करीरम् आध्मान-करं कषायं स्वादु तिक्तकम् ।
कोशातकावल्गुजकौ भेदिनाव् अग्नि-दीपनौ ॥ ८२ ॥

६.८२dv भेदनाव् अग्नि-दीपनौ तण्डुलीयो हिमो रूक्षः स्वादु-पाक-रसो लघुः ।
मद-पित्त-विषास्र-घ्नो मुञ्जातं वात-पित्त-जित् ॥ ८३ ॥

स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्र-कृत् परम् ।
गुर्वी सरा तु पालङ्क्या मद-घ्नी चाप्य् उपोदका ॥ ८४ ॥

पालङ्क्या-वत् स्मृतश् चञ्चुः स तु संग्रहणात्मकः ।
विदारी वात-पित्त-घ्नी मूत्रला स्वादु-शीतला ॥ ८५ ॥

६.८५av पालङ्क्या-वत् स्मृतश् चुच्चुः ६.८५av पालङ्क्या-वत् स्मृतश् चुञ्चुः जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनम् ।
चक्षुष्या सर्व-दोष-घ्नी जीवन्ती मधुरा हिमा ॥ ८६ ॥

कूष्माण्ड-तुम्ब-कालिङ्ग-कर्कारु्-एर्वारु-तिण्डिशम् ।
तथा त्रपुस-चीनाक-चिर्भटं कफ-वात-कृत् ॥ ८७ ॥

भेदि विष्टम्भ्य् अभिष्यन्दि स्वादु-पाक-रसं गुरु ।
वल्ली-फलानां प्रवरं कूष्माण्डं वात-पित्त-जित् ॥ ८८ ॥

वस्ति-शुद्धि-करं वृष्यं त्रपुसं त्व् अति-मूत्रलम् ।
तुम्बं रूक्ष-तरं ग्राहि कालिङ्गैर्वारु-चिर्भटम् ॥ ८९ ॥

बालं पित्त-हरं शीतं विद्यात् पक्वम् अतो ऽन्य-था ।
शीर्णवृन्तं तु स-क्षारं पित्तलं कफ-वात-जित् ॥ ९० ॥

रोचनं दीपनं हृद्यम् अष्ठीलानाह-नुल् लघु ।
मृणाल-बिस-शालूक-कुमुदोत्पल-कन्दकम् ॥ ९१ ॥

नन्दी-माषक-केलूट-शृङ्गाटक-कसेरुकम् ।
क्रौञ्चादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु ॥ ९२ ॥

कदम्ब-नालिका-मार्ष-कुटिञ्जर-कुतुम्बकम् ।
चिल्ली-लट्वाक-लोणीका-कुरूटक-गवेधुकम् ॥ ९३ ॥

६.९३av कलम्बु-नालिका-मार्ष- ६.९३bv -कुटिञ्जर-कुरुम्बकम् ६.९३bv -कुलिञ्जर-कुरुम्बकम् ६.९३dv -कुरूढक-गवेधुकाः ६.९३dv -कुरण्टक-गवेधुकाः ६.९३dv -कुरण्टक-गवेधुकम् जीवन्त-झुञ्झ्व्-एडगज-यव-शाक-सुवर्चलाः ।
आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम् ॥ ९४ ॥

६.९४bv -यव-शाक-सुवर्चलम् ६.९४dv तथा सूप्यानि लाक्ष्मणम् ६.९४dv तथा सूप्यानि लक्ष्मणा स्वादु रूक्षं स-लवणं वात-श्लेष्म-करं गुरु ।
शीतलं सृष्ट-विण्-मूत्रं प्रायो विष्टभ्य जीर्यति ॥ ९५ ॥

स्विन्नं निष्पीडित-रसं स्नेहाढ्यं नाति-दोषलम् ।
लघु-पत्त्रा तु या चिल्ली सा वास्तुक-समा मता ॥ ९६ ॥

तर्कारी-वरुणं स्वादु स-तिक्तं कफ-वात-जित् ।
वर्षाभ्वौ काल-शाकं च स-क्षारं कटु-तिक्तकम् ॥ ९७ ॥

६.९७av तर्कारी-वरणं स्वादु दीपनं भेदनं हन्ति गर-शोफ-कफानिलान् ।
दीपनाः कफ-वात-घ्नाश् चिरिबिल्वाङ्कुराः सराः ॥ ९८ ॥

संग्राहि शाल्मली-पुष्पं पित्तास्र-घ्नं विशेषतः ॥ ९८.१+१ ॥

शतावर्य्-अङ्कुरास् तिक्ता वृष्या दोष-त्रयापहाः ।
रूक्षो वंश-करीरस् तु विदाही वात-पित्तलः ॥ ९९ ॥

पत्तूरो दीपनस् तिक्तः प्लीहार्शः-कफ-वात-जित् ।
कृमि-कास-कफोत्क्लेदान् कासमर्दो जयेत् सरः ॥ १०० ॥

रूक्षोष्णम् अम्लं कौसुम्भं गुरु पित्त-करं सरम् ।
गुरूष्णं सार्षपं बद्ध-विण्-मूत्रं सर्व-दोष-कृत् ॥ १०१ ॥

यद् बालम् अ-व्यक्त-रसं किञ्-चित्-क्षारं स-तिक्तकम् ।
तन् मूलकं दोष-हरं लघु सोष्णं नियच्छति ॥ १०२ ॥

गुल्म-कास-क्षय-श्वास-व्रण-नेत्र-गलामयान् ।
स्वराग्नि-सादोदावर्त-पीनसांश् च महत् पुनः ॥ १०३ ॥

रसे पाके च कटुकम् उष्ण-वीर्यं त्रि-दोष-कृत् ।
गुर्व् अभिष्यन्दि च स्निग्ध-सिद्धं तद् अपि वात-जित् ॥ १०४ ॥

६.१०४dv -स्विन्नं तद् अपि वात-जित् वात-श्लेष्म-हरं शुष्कं सर्वम् आमं तु दोषलम् ।
कटूष्णो वात-कफ-हा पिण्डालुः पित्त-वर्धनः ॥ १०५ ॥

कुठेर-शिग्रु-सुरस-सुमुखासुरि-भूस्तृणम् ।
फणिज्जार्जक-जम्बीर-प्रभृति ग्राहि शालनम् ॥ १०६ ॥

विदाहि कटु रूक्षोष्णं हृद्यं दीपन-रोचनम् ।
दृक्-शुक्र-कृमि-हृत् तीक्ष्णं दोषोत्क्लेश-करं लघु ॥ १०७ ॥

हिध्मा-कास-विष-श्वास-पार्श्व-रुक्-पूति-गन्ध-हा ।
सुरसः सुमुखो नाति-विदाही गर-शोफ-हा ॥ १०८ ॥

६.१०८av हिध्मा-कास-वमि-श्वास- ६.१०८av हिध्मा-कास-श्रम-श्वास- आर्द्रिका तिक्त-मधुरा मूत्रला न च पित्त-कृत् ।
लशुनो भृश-तीक्ष्णोष्णः कटु-पाक-रसः सरः ॥ १०९ ॥

हृद्यः केश्यो गुरुर् वृष्यः स्निग्धो रोचन-दीपनः ।
भग्न-संधान-कृद् बल्यो रक्त-पित्त-प्रदूषणः ॥ ११० ॥

६.११०bv स्निग्धो दीपन-पाचनः किलास-कुष्ठ-गुल्मार्शो-मेह-कृमि-कफानिलान् ।
स-हिध्मा-पीनस-श्वास-कासान् हन्ति रसायनम् ॥ १११ ॥

६.१११dv -कासान् हन्त्य् अस्र-पित्त-कृत् पलाण्डुस् तद्-गुण-न्यूनः श्लेष्मलो नाति-पित्तलः ।
कफ-वातार्शसां पथ्यः स्वेदे ऽभ्यवहृतौ तथा ॥ ११२ ॥

तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हित-कृन् न सः ।
दीपनः सूरणो रुच्यः कफ-घ्नो विशदो लघुः ॥ ११३ ॥

विशेषाद् अर्शसां पथ्यो भू-कन्दस् त्व् अति-दोषलः ।
पत्त्रे पुष्पे फले नाले कन्दे च गुरु-ता क्रमात् ॥ ११४ ॥

६.११४cv पुष्पे पत्त्रे फले नाले वरा शाकेषु जीवन्ती सार्षपं त्व् अवरं परम् ।
द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्ट-मूत्र-विट् ॥ ११५ ॥

६.११५bv सार्षपस् त्व् अवरः परम् ६.११५bv सर्षपास् त्व् अवराः परम् स्वादु-पाक-रसा स्निग्धा स-कषाया हिमा गुरुः ।
निहन्त्य् अनिल-पित्तास्र-तिक्तास्य-त्व-मदात्ययान् ॥ ११६ ॥

६.११६cv निहन्त्य् अनिल-पित्तासृक्- तृष्णा-कास-श्रम-श्वास-स्वर-भेद-क्षत-क्षयान् ।
उद्रिक्त-पित्तात् जयति त्रीन् दोषान् स्वादु दाडिमम् ॥ ११७ ॥

पित्ता-विरोधि नात्य्-उष्णम् अम्लं वात-कफापहम् ।
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचन-दीपनम् ॥ ११८ ॥

मोच-खर्जूर-पनस-नारिकेल-परूषकम् ।
आम्रात-ताल-काश्मर्य-राजादन-मधूक-जम् ॥ ११९ ॥

सौवीर-बदराङ्कोल्ल-फल्गु-श्लेष्मातकोद्भवम् ।
वातामाभिषुकाक्षोट-मुकूलक-निकोचकम् ॥ १२० ॥

उरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ।
दाह-क्षत-क्षय-हरं रक्त-पित्त-प्रसादनम् ॥ १२१ ॥

स्वादु-पाक-रसं स्निग्धं विष्टम्भि कफ-शुक्र-कृत् ।
फलं तु पित्तलं तालं सरं काश्मर्य-जं हिमम् ॥ १२२ ॥

६.१२२bv श्लेष्मलं वात-पित्त-जित् शकृन्-मूत्र-विबन्ध-घ्नं केश्यं मेध्यं रसायनम् ।
वातामाद्य् उष्ण-वीर्यं तु कफ-पित्त-करं सरम् ॥ १२३ ॥

परं वात-हरं स्निग्धम् अन्-उष्णं तु प्रियाल-जम् ।
प्रियाल-मज्जा मधुरो वृष्यः पित्तानिलापहः ॥ १२४ ॥

कोल-मज्जा गुणैस् तद्-वत् तृट्-छर्दिः-कास-जिच् च सः ।
पक्वं सु-दुर्-जरं बिल्वं दोषलं पूति-मारुतम् ॥ १२५ ॥

दीपनं कफ-वात-घ्नं बालं ग्राह्य् उभयं च तत् ।
कपित्थम् आमं कण्ठ-घ्नं दोषलं दोष-घाति तु ॥ १२६ ॥

६.१२६bv बालं ग्राह्य् उभयं तु तत् पक्वं हिध्मा-वमथु-जित् सर्वं ग्राहि विषापहम् ।
जाम्बवं गुरु विष्टम्भि शीतलं भृश-वातलम् ॥ १२७ ॥

संग्राहि मूत्र-शकृतोर् अ-कण्ठ्यं कफ-पित्त-जित् ।
वात-पित्तास्र-कृद् बालं बद्धास्थि कफ-पित्त-कृत् ॥ १२८ ॥

६.१२८bv अ-कण्ठ्यं कफ-पित्त-नुत् गुर्व् आम्रं वात-जित् पक्वं स्वादव् अम्लं कफ-शुक्र-कृत् ।
वृक्षाम्लं ग्राहि रूक्षोष्णं वात-श्लेष्म-हरं लघु ॥ १२९ ॥

तृष्णा-घ्नम् उष्णम् अम्लायाः फलं पित्त-करं सरम् ॥ १२९.१+१ ॥

शम्या गुरूष्णं केश-घ्नं रूक्षं पीलु तु पित्तलम् ।
कफ-वात-हरं भेदि प्लीहार्शः-कृमि-गुल्म-नुत् ॥ १३० ॥

स-तिक्तं स्वादु यत् पीलु नात्य्-उष्णं तत् त्रि-दोष-जित् ।
त्वक् तिक्त-कटुका स्निग्धा मातुलुङ्गस्य वात-जित् ॥ १३१ ॥

बृंहणं मधुरं मांसं वात-पित्त-हरं गुरु ।
लघु तत्-केसरं कास-श्वास-हिध्मा-मदात्ययान् ॥ १३२ ॥

आस्य-शोषानिल-श्लेष्म-विबन्ध-च्छर्द्य्-अ-रोचकान् ।
गुल्मोदरार्शः-शूलानि मन्दाग्नि-त्वं च नाशयेत् ॥ १३३ ॥

मधुरं किञ्-चिद् अम्लं च हृद्यं भक्त-प्ररोचकम् ।
गुरु वात-प्रशमनं विद्यान् नारङ्ग-जं फलम् ॥ १३३+१ ॥

भल्लातकस्य त्वङ्-मांसं बृंहणं स्वादु शीतलम् ।
तद्-अस्थ्य्-अग्नि-समं मेध्यं कफ-वात-हरं परम् ॥ १३४ ॥

स्वादव् अम्लं शीतम् उष्णं च द्वि-धा पालेवतं गुरु ।
रुच्यम् अत्य्-अग्नि-शमनं रुच्यं मधुरम् आरुकम् ॥ १३५ ॥

६.१३५dv हृद्यं मधुरम् आरुकम् पक्वम् आशु जरां याति नात्य्-उष्ण-गुरु-दोषलम् ।
द्राक्षा-परूषकं चार्द्रम् अम्लं पित्त-कफ-प्रदम् ॥ १३६ ॥

६.१३६bv नात्य्-उष्णं गुरु दोषलम् गुरूष्ण-वीर्यं वात-घ्नं सरं स-करमर्दकम् ।
तथाम्लं कोल-कर्कन्धु-लिकुचाम्रातकारुकम् ॥ १३७ ॥

६.१३७cv तद्-वच् च कोल-कर्कन्धु- ६.१३७dv -लिकुचाम्रातम् आरुकम् ऐरावतं दन्तशठं स-तूदं मृगलिण्डिकम् ।
नाति-पित्त-करं पक्वं शुष्कं च करमर्दकम् ॥ १३८ ॥

दीपनं भेदनं शुष्कम् अम्लीका-कोलयोः फलम् ।
तृष्णा-श्रम-क्लम-च्छेदि लघ्व् इष्टं कफ-वातयोः ॥ १३९ ॥

स्वादव् अम्लं लघु कोलं तु शुष्कं जीर्णं च दीपनम् ॥ १३९.१+१ ॥

फलानाम् अवरं तत्र लिकुचं सर्व-दोष-कृत् ।
हिमानलोष्ण-दुर्-वात-व्याल-लालादि-दूषितम् ॥ १४० ॥

६.१४०cv हिमानिलोष्ण-दुर्-वात- वात-घ्नं दुर्-जरं प्रोक्तं नारङ्गं कफ-कृद् गुरु ।
तृष्णा-शूल-कफोत्क्लेद-च्छर्दि-श्वास-निवारणम् ॥ १४०.१+१ ॥

नारिकेलं गुरु स्निग्धं पित्त-घ्नं स्वादु शीतलम् ।
बल-मांस-करं हृद्यं बृंहणं वस्ति-शोधनम् ॥ १४०.१+२ ॥

जन्तु-जुष्टं जले मग्नम् अ-भूमि-जम् अन्-आर्तवम् ।
अन्य-धान्य-युतं हीन-वीर्यं जीर्ण-तयाति च ॥ १४१ ॥

६.१४१dv -वीर्यं जीर्ण-तयापि च धान्यं त्यजेत् तथा शाकं रूक्ष-सिद्धम् अ-कोमलम् ।
अ-संजात-रसं तद्-वच् छुष्कं चान्य-त्र मूलकात् ॥ १४२ ॥

प्रायेण फलम् अप्य् एवं तथामं बिल्व-वर्जितम् ।
विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्ट-मलं विदुः ॥ १४३ ॥

६.१४३dv सूक्ष्मं सृष्ट-मलं मृदु वात-घ्नं पाकि तीक्ष्णोष्णं रोचनं कफ-पित्त-कृत् ।
सैन्धवं तत्र स-स्वादु वृष्यं हृद्यं त्रि-दोष-नुत् ॥ १४४ ॥

लघ्व् अन्-उष्णं दृशः पथ्यम् अ-विदाह्य् अग्नि-दीपनम् ।
लघु सौवर्चलं हृद्यं सु-गन्ध्य् उद्गार-शोधनम् ॥ १४५ ॥

कटु-पाकं विबन्ध-घ्नं दीपनीयं रुचि-प्रदम् ।
ऊर्ध्वाधः-कफ-वातानुलोमनं दीपनं विडम् ॥ १४६ ॥

६.१४६av कटु पाके विबन्ध-घ्नं विबन्धानाह-विष्टम्भ-शूल-गौरव-नाशनम् ।
विपाके स्वादु सामुद्रं गुरु श्लेष्म-विवर्धनम् ॥ १४७ ॥

स-तिक्त-कटुक-क्षारं तीक्ष्णम् उत्क्लेदि चौद्भिदम् ।
कृष्णे सौवर्चल-गुणा लवणे गन्ध-वर्जिताः ॥ १४८ ॥

रोमकं लघु पांसूत्थं स-क्षारं श्लेष्मलं गुरु ।
लवणानां प्रयोगे तु सैन्धवादि प्रयोजयेत् ॥ १४९ ॥

६.१४९dv सैन्धवादीन् प्रयोजयेत् गुल्म-हृद्-ग्रहणी-पाण्डु-प्लीहानाह-गलामयान् ।
श्वासार्शः-कफ-कासांश् च शमयेद् यव-शूक-जः ॥ १५० ॥

६.१५०cv श्वासार्शः-कफ-वातांश् च ६.१५०dv शमयेद् याव-शूक-जः क्षारः सर्वश् च परमं तीक्ष्णोष्णः कृमि-जिल् लघुः ।
पित्तासृग्-दूषणः पाकी छेद्य् अ-हृद्यो विदारणः ॥ १५१ ॥

अ-पथ्यः कटु-लावण्याच् छुक्रौजः-केश-चक्षुषाम् ।
हिङ्गु वात-कफानाह-शूल-घ्नं पित्त-कोपनम् ॥ १५२ ॥

कटु-पाक-रसं रुच्यं दीपनं पाचनं लघु ।
कषाया मधुरा पाके रूक्षा वि-लवणा लघुः ॥ १५३ ॥

दीपनी पाचनी मेध्या वयसः स्थापनी परम् ।
उष्ण-वीर्या सरायुष्या बुद्धीन्द्रिय-बल-प्रदा ॥ १५४ ॥

कुष्ठ-वैवर्ण्य-वैस्वर्य-पुराण-विषम-ज्वरान् ।
शिरोऽक्षि-पाण्डु-हृद्-रोग-कामला-ग्रहणी-गदान् ॥ १५५ ॥

स-शोष-शोफातीसार-मेद-मोह-वमि-कृमीन् ।
श्वास-कास-प्रसेकार्शः-प्लीहानाह-गरोदरम् ॥ १५६ ॥

६.१५६bv -मेह-मोह-वमि-कृमीन् विबन्धं स्रोतसां गुल्मम् ऊरु-स्तम्भम् अ-रोचकम् ।
हरीतकी जयेद् व्याधींस् तांस् तांश् च कफ-वात-जान् ॥ १५७ ॥

तद्-वद् आमलकं शीतम् अम्लं पित्त-कफापहम् ।
कटु पाके हिमं केश्यम् अक्षम् ईषच् च तद्-गुणम् ॥ १५८ ॥

६.१५८cv कटु पाके ऽ-हिमं केश्यम् इयं रसायन-वरा त्रि-फलाक्ष्य्-आमयापहा ।
रोपणी त्वग् गद-क्लेद-मेदो-मेह-कफास्र-जित् ॥ १५९ ॥

स-केसरं चतुर्-जातं त्वक्-पत्रैलं त्रि-जातकम् ।
पित्त-प्रकोपि तीक्ष्णोष्णं रूक्षं रोचन-दीपनम् ॥ १६० ॥

सु-गन्धि सर्व-पेयानां व्यञ्जनानां च वासनम् ।
लेहानां खाद्य-पाकानां चूर्णानां च प्रयोजयेत् ॥ १६०.१+१ ॥

रसे पाके च कटुकं कफ-घ्नं मरिचं लघु ।
श्लेष्मला स्वादु-शीतार्द्रा गुर्वी स्निग्धा च पिप्पली ॥ १६१ ॥

सा शुष्का विपरीतातः स्निग्धा वृष्या रसे कटुः ।
स्वादु-पाकानिल-श्लेष्म-श्वास-कासापहा सरा ॥ १६२ ॥

न ताम् अत्य् उपयुञ्जीत रसायन-विधिं विना ।
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्ध-नुत् ॥ १६३ ॥

रुच्यं लघु स्वादु-पाकं स्निग्धोष्णं कफ-वात-जित् ।
तद्-वद् आर्द्रकम् एतच् च त्रयं त्रि-कटुकं जयेत् ॥ १६४ ॥

स्थौल्याग्नि-सदन-श्वास-कास-श्लीपद-पीनसान् ।
चविका-पिप्पली-मूलं मरिचाल्पान्तरं गुणैः ॥ १६५ ॥

चित्रको ऽग्नि-समः पाके शोफार्शः-कृमि-कुष्ठ-हा ।
पञ्च-कोलकम् एतच् च मरिचेन विना स्मृतम् ॥ १६६ ॥

६.१६६cv पञ्च-कोलकम् एतत् तु गुल्म-प्लीहोदरानाह-शूल-घ्नं दीपनं परम् ।
बिल्व-काश्मर्य-तर्कारी-पाटला-टुण्टुकैर् महत् ॥ १६७ ॥

६.१६७bv -शूल-घ्नं दीपनं लघु जयेत् कषाय-तिक्तोष्णं पञ्च-मूलं कफानिलौ ।
ह्रस्वं बृहत्य्-अंशुमती-द्वय-गोक्षुरकैः स्मृतम् ॥ १६८ ॥

६.१६८av जयेत् कषाय-तीक्ष्णोष्णं स्वादु-पाक-रसं नाति-शीतोष्णं सर्व-दोष-जित् ।
बला-पुनर्नवैरण्ड-शूर्पपर्णी-द्वयेन तु ॥ १६९ ॥

६.१६९cv बला-पुनर्नवैरण्डैः ६.१६९dv -शूर्पपर्णी-द्वयेन च ६.१६९dv शूर्पपर्णी-द्वयेन च ६.१६९dv शूर्पपर्णी-द्वयेन तु मध्यमं कफ-वात-घ्नं नाति-पित्त-करं सरम् ।
अभीरु-वीरा-जीवन्ती-जीवकर्षभकैः स्मृतम् ॥ १७० ॥

जीवनाख्यं तु चक्षुष्यं वृष्यं पित्तानिलापहम् ।
तृणाख्यं पित्त-जिद् दर्भ-काशेक्षु-शर-शालिभिः ॥ १७१ ॥

६.१७१av जीवनाख्यं च चक्षुष्यं शूक-शिम्बी-ज-पक्वान्न-मांस-शाक-फलौषधैः ।
वर्गितैर् अन्न-लेशो ऽयम् उक्तो नित्योपयोगिकः ॥ १७२ ॥

६.१७२dv उक्तो नित्यौपयोगिकः

राजा राज-गृहासन्ने प्राणाचार्यं निवेशयेत् ।
सर्व-दा स भवत्य् एवं सर्व-त्र प्रतिजागृविः ॥ १ ॥

अन्न-पानं विषाद् रक्षेद् विशेषेण मही-पतेः ।
योग-क्षेमौ तद्-आयत्तौ धर्माद्या यन्-निबन्धनाः ॥ २ ॥

७.२dv धर्माद्यास् तन्-निबन्धनाः ओदनो विष-वान् सान्द्रो यात्य् अ-विस्राव्य-ताम् इव ।
चिरेण पच्यते पक्वो भवेत् पर्युषितोपमः ॥ ३ ॥

मयूर-कण्ठ-तुल्योष्मा मोह-मूर्छा-प्रसेक-कृत् ।
हीयते वर्ण-गन्धाद्यैः क्लिद्यते चन्द्रिका-चितः ॥ ४ ॥

७.४dv क्लिद्यते चन्द्रिकान्वितः ७.४dv क्लिद्यते चन्द्रकाचितः ७.४dv क्लिद्यते चन्द्रकान्वितः व्यञ्जनान्य् आशु शुष्यन्ति ध्याम-क्वाथानि तत्र च ।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा ॥ ५ ॥

७.५dv छाया दृश्येत वा न वा फेनोर्ध्व-राजि-सीमन्त-तन्तु-बुद्बुद-संभवः ।
विच्छिन्न-वि-रसाः रागाः खाण्डवाः शाकम् आमिषम् ॥ ६ ॥

७.६cv विच्छिन्न-वि-रसा राग- ७.६cv विच्छिन्ना वि-रसा रागाः ७.६dv -खाण्डवाः शाकम् आमिषम् नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते ।
श्यावा-पीतासिता तक्रे घृते पानीय-संनिभा ॥ ७ ॥

७.७bv क्षीरे दध्नि च दृश्यते मस्तुनि स्यात् कपोताभा राजी कृष्णा तुषोदके ।
काली मद्याम्भसोः क्षौद्रे हरित् तैले ऽरुणोपमा ॥ ८ ॥

पाकः फलानाम् आमानां पक्वानां परिकोथनम् ।
द्रव्याणाम् आर्द्र-शुष्काणां स्यातां म्लानि-विवर्ण-ते ॥ ९ ॥

मृदूनां कठिनानां च भवेत् स्पर्श-विपर्ययः ।
माल्यस्य स्फुटिताग्र-त्वं म्लानिर् गन्धान्तरोद्भवः ॥ १० ॥

७.१०cv माल्यानां स्फुटिताग्र-त्वं ७.१०dv ग्लानिर् गन्धान्तरोद्भवः ७.१०dv म्लानि-गन्धान्तरोद्भवः ध्याम-मण्डल-ता वस्त्रे शदनं तन्तु-पक्ष्मणाम् ।
धातु-मौक्तिक-काष्ठाश्म-रत्नादिषु मलाक्त-ता ॥ ११ ॥

७.११bv शातनं तन्तु-पक्ष्मणाम् स्नेह-स्पर्श-प्रभा-हानिः स-प्रभ-त्वं तु मृन्-मये ।
विष-दः श्याव-शुष्कास्यो वि-लक्षो वीक्षते दिशः ॥ १२ ॥

स्वेद-वेपथु-मांस् त्रस्तो भीतः स्खलति जृम्भते ।
प्राप्यान्नं स-विषं त्व् अग्निर् एकावर्तः स्फुटत्य् अति ॥ १३ ॥

७.१३dv एकावर्तः स्फुटत्य् अपि शिखि-कण्ठाभ-धूमार्चिर् अन्-अर्चिर् वोग्र-गन्ध-वान् ।
म्रियन्ते मक्षिकाः प्राश्य काकः क्षाम-स्वरो भवेत् ॥ १४ ॥

उत्क्रोशन्ति च दृष्ट्वैतच् छुक-दात्यूह-सारिकाः ।
हंसः प्रस्खलति ग्लानिर् जीवञ्जीवस्य जायते ॥ १५ ॥

चकोरस्याक्षि-वैराग्यं क्रौञ्चस्य स्यान् मदोदयः ।
कपोत-परभृद्-दक्ष-चक्रवाका जहत्य् असून् ॥ १६ ॥

उद्वेगं याति मार्जारः शकृन् मुञ्चति वानरः ।
हृष्येन् मयूरस् तद्-दृष्ट्या मन्द-तेजो भवेद् विषम् ॥ १७ ॥

७.१७av उद्वेजयति मार्जारः ७.१७cv हृष्येन् मयूरस् तद् दृष्ट्वा इत्य् अन्नं विष-वज् ज्ञात्वा त्यजेद् एवं प्रयत्नतः ।
यथा तेन विपद्येरन्न् अपि न क्षुद्र-जन्तवः ॥ १८ ॥

७.१८av इत्य् अन्नं स-विषं ज्ञात्वा ७.१८bv त्यजेद् एव प्रयत्नतः स्पृष्टे तु कण्डू-दाहोषा-ज्वरार्ति-स्फोट-सुप्तयः ।
नख-रोम-च्युतिः शोफः सेकाद्या विष-नाशनाः ॥ १९ ॥

शस्तास् तत्र प्रलेपाश् च सेव्य-चन्दन-पद्मकैः ।
स-सोमवल्क-तालीश-पत्त्र-कुष्ठामृता-नतैः ॥ २० ॥

लाला जिह्वौष्ठयोर् जाड्यम् ऊषा चिमिचिमायनम् ।
दन्त-हर्षो रसा-ज्ञ-त्वं हनु-स्तम्भश् च वक्त्र-गे ॥ २१ ॥

७.२१av लाला जिह्वौष्ठयोर् जाड्यं ७.२१bv मुखे चिमिचिमायनम् सेव्याद्यैस् तत्र गण्डूषाः सर्वं च विष-जिद् धितम् ।
आमाशय-गते स्वेद-मूर्छाध्मान-मद-भ्रमाः ॥ २२ ॥

रोम-हर्षो वमिर् दाहश् चक्षुर्-हृदय-रोधनम् ।
बिन्दुभिश् चाचयो ऽङ्गानां पक्वाशय-गते पुनः ॥ २३ ॥

अनेक-वर्णं वमति मूत्रयत्य् अतिसार्यते ।
तन्द्रा कृश-त्वं पाण्डु-त्वम् उदरं बल-संक्षयः ॥ २४ ॥

तयोर् वान्त-विरिक्तस्य हरिद्रे कटभीं गुडम् ।
सिन्धुवारित-निष्पाव-बाष्पिका-शतपर्विकाः ॥ २५ ॥

तण्डुलीयक-मूलानि कुक्कुटाण्डम् अवल्गुजम् ।
नावनाञ्जन-पानेषु योजयेद् विष-शान्तये ॥ २६ ॥

विष-भुक्ताय दद्याच् च शुद्धायोर्ध्वम् अधस् तथा ।
सूक्ष्मं ताम्र-रजः काले स-क्षौद्रं हृद्-विशोधनम् ॥ २७ ॥

शुद्धे हृदि ततः शाणं हेम-चूर्णस्य दापयेत् ।
न सज्जते हेम-पाङ्गे पद्म-पत्त्रे ऽम्बु-वद् विषम् ॥ २८ ॥

जायते विपुलं चायुर् गरे ऽप्य् एष विधिः स्मृतः ।
विरुद्धम् अपि चाहारं विद्याद् विष-गरोपमम् ॥ २९ ॥

७.२९dv विद्याद् गर-विषोपमम् आनूपम् आमिषं माष-क्षौद्र-क्षीर-विरूढकैः ।
विरुध्यते सह बिसैर् मूलकेन गुडेन वा ॥ ३० ॥

विशेषात् पयसा मत्स्या मत्स्येष्व् अपि चिलीचिमः ।
विरुद्धम् अम्लं पयसा सह सर्वं फलं तथा ॥ ३१ ॥

तद्-वत् कुलत्थ-चणक-कङ्गु-वल्ल-मकुष्टकाः ।
भक्षयित्वा हरितकं मूलकादि पयस् त्यजेत् ॥ ३२ ॥

७.३२av तद्-वत् कुलत्थ-वरक- ७.३२cv भक्षयित्वा हरित्-कन्द- ७.३२dv -मूलकादि पयस् त्यजेत् वाराहं श्वाविधा नाद्याद् दध्ना पृषत-कुक्कुटौ ।
आम-मांसानि पित्तेन माष-सूपेन मूलकम् ॥ ३३ ॥

७.३३av वराहं श्वाविधा नाद्याद् अविं कुसुम्भ-शाकेन बिसैः सह विरूढकम् ।
माष-सूप-गुड-क्षीर-दध्य्-आज्यैर् लाकुचं फलम् ॥ ३४ ॥

फलं कदल्यास् तक्रेण दध्ना ताल-फलेन वा ।
कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ॥ ३५ ॥

सिद्धां वा मत्स्य-पचने पचने नागरस्य वा ।
सिद्धाम् अन्य-त्र वा पात्रे कामात् ताम् उषितां निशाम् ॥ ३६ ॥

७.३६bv पचने नागरस्य च ७.३६dv कामात् ताम् उषितां निशि ७.३६dv कपोताम् उषितां निशाम् ७.३६dv नाद्यात् ताम् उषितां निशाम् ७.३६dv कामाताम् उषितां निशाम् ७.३६dv कामाचीम् उषितां निशाम् मत्स्य-निस्तलन-स्नेहे साधिताः पिप्पलीस् त्यजेत् ।
कांस्ये दशाहम् उषितं सर्पिर् उष्णं त्व् अरुष्करे ॥ ३७ ॥

७.३७av मत्स्य-निस्तलन-स्नेह- ७.३७bv -साधिताः पिप्पलीस् त्यजेत् ७.३७dv सर्पिर् उष्णं त्व् अरुष्करैः भासो विरुध्यते शूल्यः कम्पिल्लस् तक्र-साधितः ।
ऐकध्यं पायस-सुरा-कृशराः परिवर्जयेत् ॥ ३८ ॥

मधु-सर्पिर्-वसा-तैल-पानीयानि द्वि-शश् त्रि-शः ।
एक-त्र वा समांशानि विरुध्यन्ते परस्-परम् ॥ ३९ ॥

भिन्नांशे अपि मध्व्-आज्ये दिव्य-वार्य् अनु-पानतः ।
मधु-पुष्कर-बीजं च मधु-मैरेय-शार्करम् ॥ ४० ॥

मन्थानु-पानः क्षैरेयो हारिद्रः कटु-तैल-वान् ।
उपोदकातिसाराय तिल-कल्केन साधिता ॥ ४१ ॥

बलाका वारुणी-युक्ता कुल्माषैश् च विरुध्यते ।
भृष्टा वराह-वसया सैव सद्यो निहन्त्य् असून् ॥ ४२ ॥

तद्-वत् तित्तिरि-पत्त्राढ्य-गोधा-लाव-कपिञ्जलाः ।
ऐरण्डेनाग्निना सिद्धास् तत्-तैलेन विमूर्छिताः ॥ ४३ ॥

हारीत-मांसं हारिद्र-शूलक-प्रोत-पाचितम् ।
हरिद्रा-वह्निना सद्यो व्यापादयति जीवितम् ॥ ४४ ॥

७.४४cv हारिद्र-वह्निना सद्यो भस्म-पांसु-परिध्वस्तं तद् एव च स-माक्षिकम् ।
यत् किञ्-चिद् दोषम् उत्क्लेश्य न हरेत् तत् समासतः ॥ ४५ ॥

विरुद्धं शुद्धिर् अत्रेष्टा शमो वा तद्-विरोधिभिः ।
द्रव्यैस् तैर् एव वा पूर्वं शरीरस्याभिसंस्कृतिः ॥ ४६ ॥

व्यायाम-स्निग्ध-दीप्ताग्नि-वयः-स्थ-बल-शालिनाम् ।
विरोध्य् अपि न पीडायै सात्म्यम् अल्पं च भोजनम् ॥ ४७ ॥

७.४७av व्यायामि-स्निग्ध-दीप्ताग्नि- पादेना-पथ्यम् अभ्यस्तं पाद-पादेन वा त्यजेत् ।
निषेवेत हितं तद्-वद् एक-द्वि-त्र्य्-अन्तरी-कृतम् ॥ ४८ ॥

अ-पथ्यम् अपि हि त्यक्तं शीलितं पथ्यम् एव वा ।
सात्म्या-सात्म्य-विकाराय जायते सहसान्य-था ॥ ४९ ॥

७.४९cv सात्म्या-सात्म्यं विकाराय क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।
सन्तो यान्त्य् अ-पुनर्-भावम् अ-प्रकम्प्या भवन्ति च ॥ ५० ॥

७.५०cv नाप्नुवन्ति पुनर्-भावम् अत्य्-अन्त-संनिधानानां दोषाणां दूषणात्मनाम् ।
अ-हितैर् दूषणं भूयो न विद्वान् कर्तुम् अर्हति ॥ ५१ ॥

आहार-शयना-ब्रह्म-चर्यैर् युक्त्या प्रयोजितैः ।
शरीरं धार्यते नित्यम् आगारम् इव धारणैः ॥ ५२ ॥

७.५२bv -चर्यैर् युक्त्या निषेवितैः आहारो वर्णितस् तत्र तत्र तत्र च वक्ष्यते ।
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बला-बलम् ॥ ५३ ॥

७.५३bv तत्र तत्र च लक्ष्यते वृष-ता क्लीब-ता ज्ञानम् अ-ज्ञानं जीवितं न च ।
अ-काले ऽति-प्रसङ्गाच् च न च निद्रा निषेविता ॥ ५४ ॥

सुखायुषी पराकुर्यात् काल-रात्रिर् इवापरा ।
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥ ५५ ॥

अ-रूक्षम् अन्-अभिष्यन्दि त्व् आसीन-प्रचलायितम् ।
ग्रीष्मे वायु-चयादान-रौक्ष्य-रात्र्य्-अल्प-भावतः ॥ ५६ ॥

७.५६cv ग्रीष्मे वात-चयादान- दिवा-स्वप्नो हितो ऽन्यस्मिन् कफ-पित्त-करो हि सः ।
मुक्त्वा तु भाष्य-यानाध्व-मद्य-स्त्री-भार-कर्मभिः ॥ ५७ ॥

क्रोध-शोक-भयैः क्लान्तान् श्वास-हिध्मातिसारिणः ।
वृद्ध-बाला-बल-क्षीण-क्षत-तृट्-शूल-पीडितान् ॥ ५८ ॥

७.५८dv -क्षुत्-तृट्-शूल-निपीडितान् अ-जीर्ण्य्-अभिहतोन्मत्तान् दिवा-स्वप्नोचितान् अपि ।
धातु-साम्यं तथा ह्य् एषां श्लेष्मा चाङ्गानि पुष्यति ॥ ५९ ॥

७.५९av अ-जीर्णाभिहतोन्मत्तान् बहु-मेदः-कफाः स्वप्युः स्नेह-नित्याश् च नाहनि ।
विषार्तः कण्ठ-रोगी च नैव जातु निशास्व् अपि ॥ ६० ॥

अ-काल-शयनान् मोह-ज्वर-स्तैमित्य-पीनसाः ।
शिरो-रुक्-शोफ-हृल्-लास-स्रोतो-रोधाग्नि-मन्द-ताः ॥ ६१ ॥

तत्रोपवास-वमन-स्वेद-नावनम् औषधम् ।
योजयेद् अति-निद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ६२ ॥

नावनं लङ्घनं चिन्तां व्यवायं शोक-भी-क्रुधः ।
एभिर् एव च निद्राया नाशः श्लेष्माति-संक्षयात् ॥ ६३ ॥

निद्रा-नाशाद् अङ्ग-मर्द-शिरो-गौरव-जृम्भिकाः ।
जाड्य-ग्लानि-भ्रमा-पक्ति-तन्द्रा रोगाश् च वात-जाः ॥ ६४ ॥

७.६४cv जाड्यं ग्लानि-भ्रमा-पक्ति- कफो ऽल्पो वायुनोद्धूतो धमनीः संनिरुध्य तु ।
कुर्यात् संज्ञापहां तन्द्रां दारुणां मोह-कारिणीम् ॥ ६४+१ ॥

उन्मीलित-विनिर्भुग्ने परिवर्तित-तारके ।
भवतस् तत्र नयने स्रुते लुलित-पक्ष्मणी ॥ ६४+२ ॥

अर्ध-त्रि-रात्रात् सा साध्या न सा साध्या ततः परम् ॥ ६४+३अब् ॥
यथा-कालम् अतो निद्रां रात्रौ सेवेत सात्म्यतः ।
अ-सात्म्याज् जागराद् अर्धं प्रातः स्वप्याद् अ-भुक्त-वान् ॥ ६५ ॥

७.६५cv अ-सात्म्य-जागराद् अर्धं शीलयेन् मन्द-निद्रस् तु क्षीर-मद्य-रसान् दधि ।
अभ्यङ्गोद्वर्तन-स्नान-मूर्ध-कर्णाक्षि-तर्पणम् ॥ ६६ ॥

कान्ता-बाहु-लताश्लेषो निर्वृतिः कृत-कृत्य-ता ।
मनो-ऽनुकूला विषयाः कामं निद्रा-सुख-प्रदाः ॥ ६७ ॥

ब्रह्म-चर्य-रतेर् ग्राम्य-सुख-निः-स्पृह-चेतसः ।
निद्रा संतोष-तृप्तस्य स्वं कालं नातिवर्तते ॥ ६८ ॥

ग्राम्य-धर्मे त्यजेन् नारीम् अन्-उत्तानां रजस्वलाम् ।
अ-प्रियाम् अ-प्रियाचारां दुष्ट-संकीर्ण-मेहनाम् ॥ ६९ ॥

अति-स्थूल-कृशाम् सूतां गर्भिणीम् अन्य-योषितम् ।
वर्णिनीम् अन्य-योनिं च गुरु-देव-नृपालयम् ॥ ७० ॥

७.७०bv गर्भिणीम् अन्य-योषिताम् चैत्य-श्मशानायतन-चत्वराम्बु-चतुष्-पथम् ।
पर्वाण्य् अन्-अङ्गं दिवसं शिरो-हृदय-ताडनम् ॥ ७१ ॥

अत्य्-आशितो ऽ-धृतिः क्षुद्-वान् दुः-स्थिताङ्गः पिपासितः ।
बालो वृद्धो ऽन्य-वेगार्तस् त्यजेद् रोगी च मैथुनम् ॥ ७२ ॥

सेवेत कामतः कामं तृप्तो वाजी-कृताम् हिमे ।
त्र्य्-अहाद् वसन्त-शरदोः पक्षाद् वर्षा-निदाघयोः ॥ ७३ ॥

७.७३bv तृप्तो वाजी-करैर् हिमे ७.७३bv तृप्तो वाजी-कृतैर् हिमे ७.७३cv द्व्य्-अहाद् वसन्त-शरदोः ७.७३dv पक्षाद् वृष्टि-निदाघयोः भ्रम-क्लमोरु-दौर्बल्य-बल-धात्व्-इन्द्रिय-क्षयाः ।
अ-पर्व-मरणं च स्याद् अन्य-था गच्छतः स्त्रियम् ॥ ७४ ॥

७.७४av भ्रम-क्लमोरु-दौर्बल्यं ७.७४bv बल-धात्व्-इन्द्रिय-क्षयः स्मृति-मेधायुर्-आरोग्य-पुष्टीन्द्रिय-यशो-बलैः ।
अधिका मन्द-जरसो भवन्ति स्त्रीषु संयताः ॥ ७५ ॥

७.७५dv भवन्ति स्त्रीषु संयुताः स्नानानुलेपन-हिमानिल-खण्ड-खाद्य-शीताम्बु-दुग्ध-रस-यूष-सुरा-प्रसन्नाः ।
सेवेत चानु शयनं विरतौ रतस्य तस्यैवम् आशु वपुषः पुनर् एति धाम ॥ ७६ ॥

श्रुत-चरित-समृद्धे कर्म-दक्षे दयालौ भिषजि निर्-अनुबन्धं देह-रक्षां निवेश्य । भवति विपुल-तेजः-स्वास्थ्य-कीर्ति-प्रभावः स्व-कुशल-फल-भोगी भूमि-पालश् चिरायुः ॥ ७७ ॥

अद्यायः ८

मात्राशी सर्व-कालं स्यान् मात्रा ह्य् अग्नेः प्रवर्तिका ।
मात्रां द्रव्याण्य् अपेक्षन्ते गुरूण्य् अपि लघून्य् अपि ॥ १ ॥

गुरूणाम् अर्ध-सौहित्यं लघूनां नाति-तृप्त-ता ।
मात्रा-प्रमाणं निर्दिष्टं सुखं यावद् विजीर्यति ॥ २ ॥

८.२dv सुखं यावद् धि जीर्यते भोजनं हीन-मात्रं तु न बलोपचयौजसे ।
सर्वेषां वात-रोगाणां हेतु-तां च प्रपद्यते ॥ ३ ॥

अति-मात्रं पुनः सर्वान् आशु दोषान् प्रकोपयेत् ।
पीड्यमाना हि वाताद्या युग-पत् तेन कोपिताः ॥ ४ ॥

८.४cv संपीड्यमाना वाताद्या आमेनान्नेन दुष्टेन तद् एवाविश्य कुर्वते ।
विष्टम्भयन्तो ऽलसकं च्यावयन्तो विषूचिकाम् ॥ ५ ॥

अधरोत्तर-मार्गाभ्यां सहसैवा-जितात्मनः ।
प्रयाति नोर्ध्वं नाधस्-ताद् आहारो न च पच्यते ॥ ६ ॥

आमाशये ऽलसी-भूतस् तेन सो ऽलसकः स्मृतः ।
विविधैर् वेदनोद्भेदैर् वाय्व्-आदि-भृश-कोपतः ॥ ७ ॥

सूचीभिर् इव गात्राणि विध्यतीति विषूचिका ।
तत्र शूल-भ्रमानाह-कम्प-स्तम्भादयो ऽनिलात् ॥ ८ ॥

पित्ताज् ज्वरातिसारान्तर्-दाह-तृट्-प्रलयादयः ।
कफाच् छर्द्य्-अङ्ग-गुरु-ता-वाक्-सङ्ग-ष्ठीवनादयः ॥ ९ ॥

विशेषाद् दुर्-बलस्याल्प-वह्नेर् वेग-विधारिणः ।
पीडितं मारुतेनान्नं श्लेष्मणा रुद्धम् अन्तरा ॥ १० ॥

अलसं क्षोभितं दोषैः शल्य-त्वेनैव संस्थितम् ।
शूलादीन् कुरुते तीव्रांश् छर्द्य्-अतीसार-वर्जितान् ॥ ११ ॥

८.११bv शल्य-त्वेनेव संस्थितम् सो ऽलसो ऽत्य्-अर्थ-दुष्टास् तु दोषा दुष्टाम-बद्ध-खाः ।
यान्तस् तिर्यक् तनुं सर्वां दण्ड-वत् स्तम्भयन्ति चेत् ॥ १२ ॥

दण्डकालसकं नाम तं त्यजेद् आशु-कारिणम् ।
विरुद्धाध्यशना-जीर्ण-शीलिनो विष-लक्षणम् ॥ १३ ॥

आम-दोषं महा-घोरं वर्जयेद् विष-संज्ञकम् ।
विष-रूपाशु-कारि-त्वाद् विरुद्धोपक्रम-त्वतः ॥ १४ ॥

अथामम् अलसी-भूतं साध्यं त्वरितम् उल्लिखेत् ।
पीत्वा सोग्रा-पटु-फलं वार्य् उष्णं योजयेत् ततः ॥ १५ ॥

स्वेदनं फल-वर्तिं च मल-वातानुलोमनीम् ।
नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥ १६ ॥

८.१६bv मल-दोषानुलोमनीम् मदनं पिप्पली कुष्ठं वचा गौराश् च सर्षपाः ।
गुड-क्षार-समायुक्ता फल-वर्तिः प्रशस्यते ॥ १६.१+१ ॥

विषूच्याम् अति-वृद्धायां पार्ष्ण्योर् दाहः प्रशस्यते ।
तद्-अहश् चोपवास्यैनं विरिक्त-वद् उपाचरेत् ॥ १७ ॥

तीव्रार्तिर् अपि ना-जीर्णी पिबेच् छूल-घ्नम् औषधम् ।
आम-सन्नो ऽनलो नालं पक्तुं दोषौषधाशनम् ॥ १८ ॥

निहन्याद् अपि चैतेषां विभ्रमः सहसातुरम् ।
जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्ध-गुरूदरे ॥ १९ ॥

८.१९bv व्यापत्तिः सहसातुरम् दोष-शेषस्य पाकार्थम् अग्नेः संधुक्षणाय च ।
शान्तिर् आम-विकाराणां भवति त्व् अपतर्पणात् ॥ २० ॥

त्रि-विधं त्रि-विधे दोषे तत् समीक्ष्य प्रयोजयेत् ।
तत्राल्पे लङ्घनं पथ्यं मध्ये लङ्घन-पाचनम् ॥ २१ ॥

८.२१bv तत् समीक्ष्य प्रकल्पयेत् प्रभूते शोधनं तद् धि मूलाद् उन्मूलयेन् मलान् ।
एवम् अन्यान् अपि व्याधीन् स्व-निदान-विपर्ययात् ॥ २२ ॥

चिकित्सेद् अनुबन्धे तु सति हेतु-विपर्ययम् ।
त्यक्त्वा यथा-यथं वैद्यो युञ्ज्याद् व्याधि-विपर्ययम् ॥ २३ ॥

तद्-अर्थ-कारि वा पक्वे दोषे त्व् इद्धे च पावके ।
हितम् अभ्यञ्जन-स्नेह-पान-वस्त्य्-आदि युक्तितः ॥ २४ ॥

८.२४bv दोषे वृद्धे च पावके ८.२४bv दोषे त्व् ऋद्धे तु पावके अ-जीर्णं च कफाद् आमं तत्र शोफो ऽक्षि-गण्डयोः ।
सद्यो-भुक्त इवोद्गारः प्रसेकोत्क्लेश-गौरवम् ॥ २५ ॥

विष्टब्धम् अनिलाच् छूल-विबन्धाध्मान-साद-कृत् ।
पित्ताद् विदग्धं तृण्-मोह-भ्रमाम्लोद्गार-दाह-वत् ॥ २६ ॥

८.२६dv -भ्रमाम्लोद्गार-दाह-कृत् लङ्घनं कार्यम् आमे तु विष्टब्धे स्वेदनं भृशम् ।
विदग्धे वमनं यद् वा यथावस्थं हितं भवेत् ॥ २७ ॥

८.२७dv यथावस्थं हितं भजेत् गरीयसो भवेल् लीनाद् आमाद् एव विलम्बिका ।
कफ-वातानुबद्धाम-लिङ्गा तत्-सम-साधना ॥ २८ ॥

८.२८cv कफ-वातानुविद्धाम- अ-श्रद्धा हृद्-व्यथा शुद्धे ऽप्य् उद्गारे रस-शेषतः ।
शयीत किञ्-चिद् एवात्र सर्वश् चान्-आशितो दिवा ॥ २९ ॥

८.२९dv सर्वश् चान्-अशितो दिवा स्वप्याद् अ-जीर्णी संजात-बुभुक्षो ऽद्यान् मितं लघु ।
विबन्धो ऽति-प्रवृत्तिर् वा ग्लानिर् मारुत-मूढ-ता ॥ ३० ॥

८.३०dv ग्लानिर् मारुत-शूल-ता अ-जीर्ण-लिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ।
न चाति-मात्रम् एवान्नम् आम-दोषाय केवलम् ॥ ३१ ॥

द्विष्ट-विष्टम्भि-दग्धाम-गुरु-रूक्ष-हिमा-शुचि ।
विदाहि शुष्कम् अत्य्-अम्बु-प्लुतं चान्नं न जीर्यति ॥ ३२ ॥

उपतप्तेन भुक्तं च शोक-क्रोध-क्षुद्-आदिभिः ।
मिश्रं पथ्यम् अ-पथ्यं च भुक्तं समशनं मतम् ॥ ३३ ॥

८.३३bv शोक-क्रोध-क्षुधादिभिः ८.३३bv क्रोध-शोक-भयादिभिः विद्याद् अध्यशनं भूयो भुक्तस्योपरि भोजनम् ।
अ-काले बहु चाल्पं वा भुक्तं तु विषमाशनम् ॥ ३४ ॥

त्रीण्य् अप्य् एतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ।
काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्-मनाः ॥ ३५ ॥

षड्-रसं मधुर-प्रायं नाति-द्रुत-विलम्बितम् ।
स्नातः क्षुद्-वान् विविक्त-स्थो धौत-पाद-कराननः ॥ ३६ ॥

तर्पयित्वा पितॄन् देवान् अतिथीन् बालकान् गुरून् ।
प्रत्यवेक्ष्य तिरश्चो ऽपि प्रतिपन्न-परिग्रहान् ॥ ३७ ॥

समीक्ष्य सम्यग् आत्मानम् अ-निन्दन्न् अ-ब्रुवन् द्रवम् ।
इष्टम् इष्टैः सहाश्नीयाच् छुचि-भक्त-जनाहृतम् ॥ ३८ ॥

भोजनं तृण-केशादि-जुष्टम् उष्णी-कृतं पुनः ।
शाकावरान्न-भूयिष्ठम् अत्य्-उष्ण-लवणं त्यजेत् ॥ ३९ ॥

किलाट-दधि-कूचीका-क्षार-शुक्ताम-मूलकम् ।
कृश-शुष्क-वराहावि-गो-मत्स्य-महिषामिषम् ॥ ४० ॥

८.४०bv -क्षार-शुक्ताम्ल-मूलकम् माष-निष्पाव-शालूक-बिस-पिष्ट-विरूढकम् ।
शुष्क-शाकानि यवकान् फाणितं च न शीलयेत् ॥ ४१ ॥

८.४१bv -तिल-पिष्ट-विरूढकम् शीलयेच् छालि-गोधूम-यव-षष्टिक-जाङ्गलम् ।
सुनिषण्णक-जीवन्ती-बाल-मूलक-वास्तुकम् ॥ ४२ ॥

पथ्यामलक-मृद्वीका-पटोली-मुद्ग-शर्कराः ।
घृत-दिव्योदक-क्षीर-क्षौद्र-दाडिम-सैन्धवम् ॥ ४३ ॥

त्रि-फलां मधु-सर्पिर्भ्यां निशि नेत्र-बलाय च ।
स्वास्थ्यानुवृत्ति-कृद् यच् च रोगोच्छेद-करं च यत् ॥ ४४ ॥

बिसेक्षु-मोच-चोचाम्र-मोदकोत्कारिकादिकम् ।
अद्याद् द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः ॥ ४५ ॥

विपरीतम् अतश् चान्ते मध्ये ऽम्ल-लवणोत्कटम् ।
अन्नेन कुक्षेर् द्वाव् अंशौ पानेनैकं प्रपूरयेत् ॥ ४६ ॥

आश्रयं पवनादीनां चतुर्थम् अवशेषयेत् ।
अनु-पानं हिमं वारि यव-गोधूमयोर् हितम् ॥ ४७ ॥

दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्ट-मयेषु तु ।
शाक-मुद्गादि-विकृतौ मस्तु-तक्राम्ल-काञ्जिकम् ॥ ४८ ॥

८.४८bv कोष्णं पिष्ट-मयेषु च सुरा कृशानां पुष्ट्य्-अर्थं स्थूलानां तु मधूदकम् ।
शोषे मांस-रसो मद्यं मांसे स्व्-अल्पे च पावके ॥ ४९ ॥

८.४९bv स्थूलानां च मधूदकम् ८.४९dv मांसेष्व् अल्पे च पावके व्याध्य्-औषधाध्व-भाष्य-स्त्री-लङ्घनातप-कर्मभिः ।
क्षीणे वृद्धे च बाले च पयः पथ्यं यथामृतम् ॥ ५० ॥

८.५०av व्याध्य्-औषधाध्व-भार-स्त्री- विपरीतं यद् अन्नस्य गुणैः स्याद् अ-विरोधि च ।
अनु-पानं समासेन सर्व-दा तत् प्रशस्यते ॥ ५१ ॥

अनु-पानं करोत्य् ऊर्जां तृप्तिं व्याप्तिं दृढाङ्ग-ताम् ।
अन्न-संघात-शैथिल्य-विक्लित्ति-जरणानि च ॥ ५२ ॥

नोर्ध्व-जत्रु-गद-श्वास-कासोरः-क्षत-पीनसे ।
गीत-भाष्य-प्रसङ्गे च स्वर-भेदे च तद् धितम् ॥ ५३ ॥

प्रक्लिन्न-देह-मेहाक्षि-गल-रोग-व्रणातुराः ।
पानं त्यजेयुः सर्वश् च भाष्याध्व-शयनं त्यजेत् ॥ ५४ ॥

पीत्वा भुक्त्वातपं वह्निं यानं प्लवन-वाहनम् ॥ ५५अब् ॥
प्रसृष्टे विण्-मूत्रे हृदि सु-वि-मले दोषे स्व-पथ-गे ॥ ५५च् ॥
विशुद्धे चोद्गारे क्षुद्-उपगमने वाते ऽनुसरति ॥ ५५द् ॥
तथाग्नाव् उद्रिक्ते विशद-करणे देहे च सु-लघौ ॥ ५५ए ॥
प्रयुञ्जीताहारं विधि-नियमितं कालः स हि मतः ॥ ५५f ॥
८.५५fव् प्रयुञ्जीताहारं विधि-नियमितः कालः स हि मतः

अध्यायः ९

द्रव्यम् एव रसादीनां श्रेष्ठं ते हि तद्-आश्रयाः ।
पञ्च-भूतात्मकं तत् तु क्ष्माम् अधिष्ठाय जायते ॥ १ ॥

अम्बु-योन्य्-अग्नि-पवन-नभसाम् समवायतः ।
तन्-निर्वृत्तिर् विशेषश् च व्यपदेशस् तु भूयसा ॥ २ ॥

९.२dv व्यपदेशश् च भूयसा तस्मान् नैक-रसं द्रव्यं भूत-संघात-संभवात् ।
नैक-दोषास् ततो रोगास् तत्र व्यक्तो रसः स्मृतः ॥ ३ ॥

९.३av तन् नैक-भूत-जं द्रव्यं अ-व्यक्तो ऽनु-रसः किञ्-चिद् अन्ते व्यक्तो ऽपि चेष्यते ।
गुर्व्-आदयो गुणा द्रव्ये पृथिव्य्-आदौ रसाश्रये ॥ ४ ॥

रसेषु व्यपदिश्यन्ते साहचर्योपचारतः ।
तत्र द्रव्यं गुरु-स्थूल-स्थिर-गन्ध-गुणोल्बणम् ॥ ५ ॥

पार्थिवं गौरव-स्थैर्य-संघातोपचयावहम् ।
द्रव-शीत-गुरु-स्निग्ध-मन्द-सान्द्र-रसोल्बणम् ॥ ६ ॥

९.६dv -मन्द-सान्द्र-गुणोल्बणम् आप्यं स्नेहन-विष्यन्द-क्लेद-प्रह्लाद-बन्ध-कृत् ।
रूक्ष-तीक्ष्णोष्ण-विशद-सूक्ष्म-रूप-गुणोल्बणम् ॥ ७ ॥

आग्नेयं दाह-भा-वर्ण-प्रकाश-पवनात्मकम् ।
वायव्यं रूक्ष-विशद-लघु-स्पर्श-गुणोल्बणम् ॥ ८ ॥

रौक्ष्य-लाघव-वैशद्य-विचार-ग्लानि-कारकम् ।
नाभसं सूक्ष्म-विशद-लघु-शब्द-गुणोल्बणम् ॥ ९ ॥

९.९bv -विचार-ग्लपनात्मकम् सौषिर्य-लाघव-करं जगत्य् एवम् अन्-औषधम् ।
न किञ्-चिद् विद्यते द्रव्यं वशान् नानार्थ-योगयोः ॥ १० ॥

द्रव्यम् ऊर्ध्व-गमं तत्र प्रायो ऽग्नि-पवनोत्कटम् ।
अधो-गामि च भूयिष्ठं भूमि-तोय-गुणाधिकम् ॥ ११ ॥

इति द्रव्यं रसान् भेदैर् उत्तर-त्रोपदेक्ष्यते ।
वीर्यं पुनर् वदन्त्य् एके गुरु स्निग्धं हिमं मृदु ॥ १२ ॥

९.१२av इति द्रव्यं रसो भेदैर् लघु रूक्षोष्ण-तीक्ष्णं च तद् एवं मतम् अष्ट-धा ।
चरकस् त्व् आह वीर्यं तत् क्रियते येन या क्रिया ॥ १३ ॥

९.१३cv चरकस् त्व् आह वीर्यं तु ९.१३dv येन या क्रियते क्रिया ना-वीर्यं कुरुते किञ्-चित् सर्वा वीर्य-कृता हि सा ।
गुर्व्-आदिष्व् एव वीर्याख्या तेनान्व्-अर्थेति वर्ण्यते ॥ १४ ॥

समग्र-गुण-सारेषु शक्त्य्-उत्कर्ष-विवर्तिषु ।
व्यवहाराय मुख्य-त्वाद् बह्व्-अग्र-ग्रहणाद् अपि ॥ १५ ॥

९.१५av समग्र-गुण-सार-त्वाच् ९.१५bv छक्त्य्-उत्कर्ष-विवर्तनात् अतश् च विपरीत-त्वात् संभवत्य् अपि नैव सा ।
विवक्ष्यते रसाद्येषु वीर्यं गुर्व्-आदयो ह्य् अतः ॥ १६ ॥

उष्णं शीतं द्वि-धैवान्ये वीर्यम् आचक्षते ऽपि च ।
नानात्मकम् अपि द्रव्यम् अग्नी-षोमौ महा-बलौ ॥ १७ ॥

व्यक्ता-व्यक्तं जगद् इव नातिक्रामति जातु चित् ।
तत्रोष्णं भ्रम-तृड्-ग्लानि-स्वेद-दाहाशु-पाकि-ताः ॥ १८ ॥

९.१८av व्यक्ता-व्यक्तं जगद् इदं ९.१८av व्यक्ताव्यक्तं यथा विश्वं शमं च वात-कफयोः करोति शिशिरं पुनः ।
ह्लादनं जीवनं स्तम्भं प्रसादं रक्त-पित्तयोः ॥ १९ ॥

जाठरेणाग्निना योगाद् यद् उदेति रसान्तरम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २० ॥

स्वादुः पटुश् च मधुरम् अम्लो ऽम्लं पच्यते रसः ।
तिक्तोषण-कषायाणां विपाकः प्राय-शः कटुः ॥ २१ ॥

रसैर् असौ तुल्य-फलस् तत्र द्रव्यं शुभा-शुभम् ।
किञ्-चिद् रसेन कुरुते कर्म पाकेन चापरम् ॥ २२ ॥

गुणान्तरेण वीर्येण प्रभावेणैव किञ्-च-न ।
यद् यद् द्रव्ये रसादीनां बल-वत्-त्वेन वर्तते ॥ २३ ॥

अभिभूयेतरांस् तत् तत् कारण-त्वं प्रपद्यते ।
विरुद्ध-गुण-संयोगे भूयसाल्पं हि जीयते ॥ २४ ॥

रसं विपाकस् तौ वीर्यं प्रभावस् तान्य् अपोहति ।
बल-साम्ये रसादीनाम् इति नैसर्गिकं बलम् ॥ २५ ॥

९.२५bv प्रभावस् तान् व्यपोहति रसादि-साम्ये यत् कर्म विशिष्टं तत् प्रभाव-जम् ।
दन्ती रसाद्यैस् तुल्यापि चित्रकस्य विरेचनी ॥ २६ ॥

मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ।
इति सामान्यतः कर्म द्रव्यादीनां पुनश् च तत् ॥ २७ ॥

विचित्र-प्रत्ययारब्ध-द्रव्य-भेदेन भिद्यते ।
स्वादुर् गुरुश् च गोधूमो वात-जिद् वात-कृद् यवः ॥ २८ ॥

उष्णा मत्स्याः पयः शीतं कटुः सिंहो न शूकरः ॥ २८ ॥

अध्यायः १०

क्ष्माम्भो-ऽग्नि-क्ष्माम्बु-तेजः-ख-वाय्व्-अग्न्य्-अनिल-गो-ऽनिलैः ।
द्वयोल्बणैः क्रमाद् भूतैर् मधुरादि-रसोद्भवः ॥ १ ॥

तेषां विद्याद् रसं स्वादुं यो वक्त्रम् अनुलिम्पति ।
आस्वाद्यमानो देहस्य ह्लादनो ऽक्ष-प्रसादनः ॥ २ ॥

१०.२bv यो वक्त्रम् उपलिम्पति प्रियः पिपीलिकादीनाम् अम्लः क्षालयते मुखम् ।
हर्षणो रोम-दन्तानाम् अक्षि-भ्रुव-निकोचनः ॥ ३ ॥

१०.३bv अम्लः स्रावयते मुखम् लवणः स्यन्दयत्य् आस्यं कपोल-गल-दाह-कृत् ।
तिक्तो विशदयत्य् आस्यं रसनं प्रतिहन्ति च ॥ ४ ॥

१०.४dv रसनां प्रतिहन्ति च उद्वेजयति जिह्वाग्रं कुर्वंश् चिमिचिमां कटुः ।
स्रावयत्य् अक्षि-नासास्यं कपोलं दहतीव च ॥ ५ ॥

कषायो जडयेज् जिह्वां कण्ठ-स्रोतो-विबन्ध-कृत् ।
रसानाम् इति रूपाणि कर्माणि मधुरो रसः ॥ ६ ॥

आ-जन्म-सात्म्यात् कुरुते धातूनां प्रबलं बलम् ।
बाल-वृद्ध-क्षत-क्षीण-वर्ण-केशेन्द्रियौजसाम् ॥ ७ ॥

प्रशस्तो बृंहणः कण्ठ्यः स्तन्य-संधान-कृद् गुरुः ।
आयुष्यो जीवनः स्निग्धः पित्तानिल-विषापहः ॥ ८ ॥

कुरुते ऽत्य्-उपयोगेन स मेदः-श्लेष्म-जान् गदान् ।
स्थौल्याग्नि-साद-संन्यास-मेह-गण्डार्बुदादिकान् ॥ ९ ॥

१०.९bv स मेदः-कफ-जान् गदान् अम्लो ऽग्नि-दीप्ति-कृत् स्निग्धो हृद्यः पाचन-रोचनः ।
उष्ण-वीर्यो हिम-स्पर्शः प्रीणनः क्लेदनो लघुः ॥ १० ॥

१०.१०cv उष्ण-वीर्यो हिमः स्पर्शे १०.१०dv प्रीणनो भेदनो लघुः करोति कफ-पित्तास्रं मूढ-वातानुलोमनः ।
सो ऽत्य्-अभ्यस्तस् तनोः कुर्याच् छैथिल्यं तिमिरं भ्रमम् ॥ ११ ॥

१०.११bv मूढ-वातानुलोमनम् कण्डू-पाण्डु-त्व-वीसर्प-शोफ-विस्फोट-तृड्-ज्वरान् ।
लवणः स्तम्भ-संघात-बन्ध-विध्मापनो ऽग्नि-कृत् ॥ १२ ॥

स्नेहनः स्वेदनस् तीक्ष्णो रोचनश् छेद-भेद-कृत् ।
सो ऽति-युक्तो ऽस्र-पवनं खलतिं पलितं वलीम् ॥ १३ ॥

तृट्-कुष्ठ-विष-वीसर्पान् जनयेत् क्षपयेद् बलम् ।
तिक्तः स्वयम् अ-रोचिष्णुर् अ-रुचिं कृमि-तृड्-विषम् ॥ १४ ॥

कुष्ठ-मूर्छा-ज्वरोत्क्लेश-दाह-पित्त-कफाञ् जयेत् ।
क्लेद-मेदो-वसा-मज्ज-शकृन्-मूत्रोपशोषणः ॥ १५ ॥

लघुर् मेध्यो हिमो रूक्षः स्तन्य-कण्ठ-विशोधनः ।
धातु-क्षयानिल-व्याधीन् अति-योगात् करोति सः ॥ १६ ॥

१०.१६cv धातु-क्षयं चल-व्याधीन् कटुर् गलामयोदर्द-कुष्ठालसक-शोफ-जित् ।
व्रणावसादनः स्नेह-मेदः-क्लेदोपशोषणः ॥ १७ ॥

दीपनः पाचनो रुच्यः शोधनो ऽन्नस्य शोषणः ।
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥ १८ ॥

१०.१८bv शोधनो ऽन्नस्य हाषणः कुरुते सो ऽति-योगेन तृष्णां शुक्र-बल-क्षयम् ।
मूर्छाम् आकुञ्चनं कम्पं कटी-पृष्ठादिषु व्यथाम् ॥ १९ ॥

१०.१९av कुरुते सो ऽति-वेगेन कषायः पित्त-कफ-हा गुरुर् अस्र-विशोधनः ।
पीडनो रोपणः शीतः क्लेद-मेदो-विशोषणः ॥ २० ॥

आम-संस्तम्भनो ग्राही रूक्षो ऽति त्वक्-प्रसादनः ।
करोति शीलितः सो ऽति विष्टम्भाध्मान-हृद्-रुजः ॥ २१ ॥

तृट्-कार्श्य-पौरुष-भ्रंश-स्रोतो-रोध-मल-ग्रहान् ।
घृत-हेम-गुडाक्षोट-मोच-चोच-परूषकम् ॥ २२ ॥

१०.२२bv -स्रोतो-रोध-गल-ग्रहान् १०.२२bv -स्रोतो-बन्ध-मल-ग्रहान् अभीरु-वीरा-पनस-राजादन-बला-त्रयम् ।
मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभौ ॥ २३ ॥

मधूकं मधुकं बिम्बी विदारी श्रावणी-युगम् ।
क्षीरशुक्ला तुकाक्षीरी क्षीरिण्यौ काश्मरी सहे ॥ २४ ॥

१०.२४cv क्षीरशुक्ला तवक्षीरी क्षीरेक्षु-गोक्षुर-क्षौद्र-द्राक्षादिर् मधुरो गणः ।
अम्लो धात्री-फलाम्लीका-मातुलुङ्गाम्ल-वेतसम् ॥ २५ ॥

दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।
आम्रम् आम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २६ ॥

वृक्षाम्ल-कोल-लिकुच-कोशाम्लातक-धन्वनम् ।
मस्तु-धान्याम्ल-मद्यानि जम्बीरं तिल-कण्टकम् ॥ २६+१ ॥

वरं सौवर्चलं कृष्णं विडं सामुद्रम् औद्भिदम् ।
रोमकं पांसु-जं सीसं क्षारश् च लवणो गणः ॥ २७ ॥

१०.२७dv क्षाराश् च लवणो गणः तिक्तः पटोली त्रायन्ती वालकोशीर-चन्दनम् ।
भूनिम्ब-निम्ब-कटुका-तगरागुरु-वत्सकम् ॥ २८ ॥

नक्तमाल-द्वि-रजनी-मुस्त-मूर्वाटरूषकम् ।
पाठापामार्ग-कांस्यायो-गुडूची-धन्वयासकम् ॥ २९ ॥

पञ्च-मूलं महद् व्याघ्र्यौ विशालातिविषा वचा ।
कटुको हिङ्गु-मरिच-कृमिजित्-पञ्च-कोलकम् ॥ ३० ॥

१०.३०cv कटुको हिङ्गु-मरिचं १०.३०dv कृमिजित्-पञ्च-कोलकम् कुठेराद्या हरितकाः पित्तं मूत्रम् अरुष्करम् ।
वर्गः कषायः पथ्याक्षं शिरीषः खदिरो मधु ॥ ३१ ॥

१०.३१bv पित्तं मूत्रम् अरुष्करः १०.३१cv वर्गः कषायः पथ्याक्षः कदम्बोदुम्बरं मुक्ता-प्रवालाञ्जन-गैरिकम् ।
बालं कपित्थं खर्जूरं बिस-पद्मोत्पलादि च ॥ ३२ ॥

१०.३२dv बिस-पद्मोत्पलानि च मधुरं श्लेष्मलं प्रायो जीर्णाच् छालि-यवाद् ऋते ।
मुद्गाद् गोधूमतः क्षौद्रात् सिताया जाङ्गलामिषात् ॥ ३३ ॥

प्रायो ऽम्लं पित्त-जननं दाडिमामलकाद् ऋते ।
अ-पथ्यं लवणं प्रायश् चक्षुषो ऽन्य-त्र सैन्धवात् ॥ ३४ ॥

तिक्तं कटु च भूयिष्ठम् अ-वृष्यं वात-कोपनम् ।
ऋते ऽमृता-पटोलीभ्यां शुण्ठी-कृष्णा-रसोनतः ॥ ३५ ॥

कषायं प्राय-शः शीतं स्तम्भनं चाभयां विना ।
रसाः कट्व्-अम्ल-लवणा वीर्येणोष्णा यथोत्तरम् ॥ ३६ ॥

१०.३६bv स्तम्भनं चाभयामृते तिक्तः कषायो मधुरस् तद्-वद् एव च शीतलाः ।
तिक्तः कटुः कषायश् च रूक्षा बद्ध-मलास् तथा ॥ ३७ ॥

पट्व्-अम्ल-मधुराः स्निग्धाः सृष्ट-विण्-मूत्र-मारुताः ।
पटोः कषायस् तस्माच् च मधुरः परमं गुरुः ॥ ३८ ॥

लघुर् अम्लः कटुस् तस्मात् तस्माद् अपि च तिक्तकः ।
संयोगाः सप्त-पञ्चाशत् कल्पना तु त्रि-षष्टि-धा ॥ ३९ ॥

लवणाद् अम्ल-मधुरौ कार्यौ स्यातां यथा-क्रमम् ।
वायोर् निर्-अनुबन्धस्य पाक-शान्ति-प्रवृत्तये ॥ ३९.१+१ ॥

१०.३९.१+१dv पाक-शान्ति-प्रसक्तये प्राक् तिक्तो मधुरः पश्चात् कषायो ऽन्ते विधीयते ।
तैः पित्तं शमम् अभ्येति पक्वाच्छी-कृत-पिण्डितम् ॥ ३९.१+२ ॥

कटुः प्राक् तिक्तकः पश्चात् कषायो ऽन्ते विधीयते ।
तैः श्लेष्मा शमम् अभ्येति पक्वाच्छी-कृत-पिण्डितः ॥ ३९.१+३ ॥

१०.३९.१+३av कटुकः प्राक् ततस् तिक्तः १०.३९.१+३dv पक्वो ऽच्छी-कृत-पिण्डितः रसानां यौगिक-त्वेन यथा-स्थूलं विभज्यते ।
एकैक-हीनास् तान् पञ्च-दश यान्ति रसा द्विके ॥ ४० ॥

१०.४०cv एकैक-हीनास् ते पञ्च- १०.४०dv -पञ्च यान्ति रसा द्विके स्वादुर् द्विकेषु पञ्चाम्लश् चतुरो लवणस् त्रयम् ।
द्वौ तिक्तः कटुकश् चैकं याति पञ्च-दशेति तु ॥ ४०+१ ॥

त्रिके स्वादुर् दशाम्लः षट् त्रीन् पटुस् तिक्त एककम् ।
चतुष्केषु दश स्वादुश् चतुरो ऽम्लः पटुः सकृत् ॥ ४१ ॥

१०.४१cv चतुष्के तु दश स्वादुश् पञ्चकेष्व् एकम् एवाम्लो मधुरः पञ्च सेवते ।
द्रव्यम् एकं षड्-आस्वादम् अ-संयुक्ताश् च षड् रसाः ॥ ४२ ॥

षट् पञ्चका षट् च पृथग् रसाः स्युश् चतुर्-द्विकौ पञ्च-दश-प्रकारौ ।
भेदास् त्रिका विंशतिर् एकम् एव द्रव्यं षड्-आस्वादम् इति त्रि-षष्टिः ॥ ४३ ॥

ते रसानु-रसतो रस-भेदास् तारतम्य-परिकल्पनया च ।
संभवन्ति गणनां समतीता दोष-भेषज-वशाद् उपयोज्याः ॥ ४४ ॥

अध्यायः ११

दोष-धातु-मला मूलं सदा देहस्य तं चलः ।
उत्साहोच्छ्वास-निश्वास-चेष्टा-वेग-प्रवर्तनैः ॥ १ ॥

सम्यग्-गत्या च धातूनाम् अक्षाणां पाटवेन च ।
अनुगृह्णात्य् अ-विकृतः पित्तं पक्त्य्-ऊष्म-दर्शनैः ॥ २ ॥

क्षुत्-तृड्-रुचि-प्रभा-मेधा-धी-शौर्य-तनु-मार्दवैः ।
श्लेष्मा स्थिर-त्व-स्निग्ध-त्व-संधि-बन्ध-क्षमादिभिः ॥ ३ ॥

प्रीणनं जीवनं लेपः स्नेहो धारण-पूरणे ।
गर्भोत्पादश् च धातूनां श्रेष्ठं कर्म क्रमात् स्मृतम् ॥ ४ ॥

अवष्टम्भः पुरीषस्य मूत्रस्य क्लेद-वाहनम् ।
स्वेदस्य क्लेद-विधृतिर् वृद्धस् तु कुरुते ऽनिलः ॥ ५ ॥

११.५cv स्वेदस्य केश-विधृतिर् ११.५dv वृद्धश् च कुरुते ऽनिलः कार्श्य-काष्ण्योर्ष्ण-काम-त्व-कम्पानाह-शकृद्-ग्रहान् ।
बल-निद्रेन्द्रिय-भ्रंश-प्रलाप-भ्रम-दीन-ताः ॥ ६ ॥

११.६av कार्श्य-काष्ण्योर्ष्ण-कामि-त्व- पीत-विण्-मूत्र-नेत्र-त्वक्-क्षुत्-तृड्-दाहाल्प-निद्र-ताः ।
पित्तं श्लेष्माग्नि-सदन-प्रसेकालस्य-गौरवम् ॥ ७ ॥

श्वैत्य-शैत्य-श्लथाङ्ग-त्वं श्वास-कासाति-निद्र-ताः ।
रसो ऽपि श्लेष्म-वद् रक्तं विसर्प-प्लीह-विद्रधीन् ॥ ८ ॥

कुष्ठ-वातास्र-पित्तास्र-गुल्मोप-कुश-कामलाः ।
व्यङ्गाग्नि-नाश-संमोह-रक्त-त्वङ्-नेत्र-मूत्र-ताः ॥ ९ ॥

११.९cv व्यङ्गाग्नि-साद-संमोह मांसं गण्डार्बुद-ग्रन्थि-गण्डोरूदर-वृद्धि-ताः ।
कण्ठादिष्व् अधि-मांसं च तद्-वन् मेदस् तथा श्रमम् ॥ १० ॥

११.१०bv -गण्डोरूदर-वृद्ध-ताः अल्पे ऽपि चेष्टिते श्वासं स्फिक्-स्तनोदर-लम्बनम् ।
अस्थ्य् अध्य्-अस्थ्य् अधि-दन्तांश् च मज्जा नेत्राङ्ग-गौरवम् ॥ ११ ॥

११.१३cv मूत्रं तु वस्तेर् निस्तोदं पर्वसु स्थूल-मूलानि कुर्यात् कृच्छ्राण्य् अरूंषि च ।
अति-स्त्री-काम-तां वृद्धं शुक्तं शुक्राश्मरीम् अपि ॥ १२ ॥

कुक्षाव् आध्मानम् आटोपं गौरवं वेदनां शकृत् ।
मूत्रं तु वस्ति-निस्तोदं कृते ऽप्य् अ-कृत-संज्ञ-ताम् ॥ १३ ॥

स्वेदो ऽति-स्वेद-दौर्गन्ध्य-कण्डूर् एवं च लक्षयेत् ।
दूषिकादीन् अपि मलान् बाहुल्य-गुरु-तादिभिः ॥ १४ ॥

लिङ्गं क्षीणे ऽनिले ऽङ्गस्य सादो ऽल्पं भाषितेहितम् ।
संज्ञा-मोहस् तथा श्लेष्म-वृद्ध्य्-उक्तामय-संभवः ॥ १५ ॥

पित्ते मन्दो ऽनलः शीतं प्रभा-हानिः कफे भ्रमः ।
श्लेष्माशयानां शून्य-त्वं हृद्-द्रवः श्लथ-संधि-ता ॥ १६ ॥

११.१६dv हृद्-गदः श्लथ-संधि-ता रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दा-सहिष्णु-ता ।
रक्ते ऽम्ल-शिशिर-प्रीति-सिरा-शैथिल्य-रूक्ष-ताः ॥ १७ ॥

मांसे ऽक्ष-ग्लानि-गण्ड-स्फिक्-शुष्क-ता-संधि-वेदनाः ।
मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्ग-ता ॥ १८ ॥

अस्थ्न्य् अस्थि-तोदः शदनं दन्त-केश-नखादिषु ।
अस्थ्नां मज्जनि सौषिर्यं भ्रमस् तिमिर-दर्शनम् ॥ १९ ॥

११.१९av अस्थ्न्य् अस्थि-तोदः सदनं शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितम् एव वा ।
तोदो ऽत्य्-अर्थं वृषणयोर् मेढ्रं धूमायतीव च ॥ २० ॥

पुरीषे वायुर् अन्त्राणि स-शब्दो वेष्टयन्न् इव ।
कुक्षौ भ्रमति यात्य् ऊर्ध्वं हृत्-पार्श्वे पीडयन् भृशम् ॥ २१ ॥

११.२१cv कुक्षिं भ्रमति यात्य् ऊर्ध्वं मूत्रे ऽल्पं मूत्रयेत् कृच्छ्राद् वि-वर्णं सास्रम् एव वा ।
स्वेदे रोम-च्युतिः स्तब्ध-रोम-ता स्फुटनं त्वचः ॥ २२ ॥

मलानाम् अति-सूक्ष्माणां दुर्-लक्ष्यं लक्षयेत् क्षयम् ।
स्व-मलायन-संशोष-तोद-शून्य-त्व-लाघवैः ॥ २३ ॥

दोषादीनां यथा-स्वं च विद्याद् वृद्धि-क्षयौ भिषक् ।
क्षयेण विपरीतानां गुणानां वर्धनेन च ॥ २४ ॥

वृद्धिं मलानां सङ्गाच् च क्षयं चाति-विसर्गतः ।
मलोचित-त्वाद् देहस्य क्षयो वृद्धेस् तु पीडनः ॥ २५ ॥

तत्रास्थनि स्थितो वायुः पित्तं तु स्वेद-रक्तयोः ।
श्लेष्मा शेषेषु तेनैषाम् आश्रयाश्रयिणां मिथः ॥ २६ ॥

यद् एकस्य तद् अन्यस्य वर्धन-क्षपणौषधम् ।
अस्थि-मारुतयोर् नैवं प्रायो वृद्धिर् हि तर्पणात् ॥ २७ ॥

श्लेष्मणानुगता तस्मात् संक्षयस् तद्-विपर्ययात् ।
वायुनानुगतो ऽस्माच् च वृद्धि-क्षय-समुद्भवान् ॥ २८ ॥

विकारान् साधयेच् छीघ्रं क्रमाल् लङ्घन-बृंहणैः ।
वायोर् अन्य-त्र तज्-जांस् तु तैर् एवोत्क्रम-योजितैः ॥ २९ ॥

विशेषाद् रक्त-वृद्ध्य्-उत्थान् रक्त-स्रुति-विरेचनैः ।
मांस-वृद्धि-भवान् रोगान् शस्त्र-क्षाराग्नि-कर्मभिः ॥ ३० ॥

स्थौल्य-कार्श्योपचारेण मेदो-जान् अस्थि-संक्षयात् ।
जातान् क्षीर-घृतैस् तिक्त-संयुतैर् वस्तिभिस् तथा ॥ ३१ ॥

११.३१dv -संयुक्तैर् वस्तिभिस् तथा मज्ज-शुक्रोद्भवान् रोगान् भोजनैः स्वादु-तिक्तकैः ।
वृद्धं शुक्रं व्यवायाद्यैर् यच् चान्यच् छुक्र-शोषिकम् ॥ ३१+१ ॥

११.३१+१av प्रत्य्-अनीकौषधं मज्ज- ११.३१+१bv -शुक्र-वृद्धि-क्षये हितम् विड्-वृद्धि-जान् अतीसार-क्रियया विट्-क्षयोद्भवान् ।
मेषाज-मध्य-कुल्माष-यव-माष-द्वयादिभिः ॥ ३२ ॥

मूत्र-वृद्धि-क्षयोत्थांश् च मेह-कृच्छ्र-चिकित्सया ।
व्यायामाभ्यञ्जन-स्वेद-मद्यैः स्वेद-क्षयोद्भवान् ॥ ३३ ॥

११.३३av मूत्र-वृद्धि-क्षयोत्थांस् तु स्व-स्थान-स्थस्य कायाग्नेर् अंशा धातुषु संश्रिताः ।
तेषां सादाति-दीप्तिभ्यां धातु-वृद्धि-क्षयोद्भवः ॥ ३४ ॥

पूर्वो धातुः परं कुर्याद् वृद्धः क्षीणश् च तद्-विधम् ।
दोषा दुष्टा रसैर् धातून् दूषयन्त्य् उभये मलान् ॥ ३५ ॥

अधो द्वे सप्त शिरसि खानि स्वेद-वहानि च ।
मला मलायनानि स्युर् यथा-स्वं तेष्व् अतो गदाः ॥ ३६ ॥

ओजस् तु तेजो धातूनां शुक्रान्तानां परं स्मृतम् ।
हृदय-स्थम् अपि व्यापि देह-स्थिति-निबन्धनम् ॥ ३७ ॥

स्निग्धं सोमात्मकं शुद्धम् ईषल्-लोहित-पीतकम् ।
यन्-नाशे नियतं नाशो यस्मिंस् तिष्ठति तिष्ठति ॥ ३८ ॥

निष्पद्यन्ते यतो भावा विविधा देह-संश्रयाः ।
ओजः क्षीयेत कोप-क्षुद्-ध्यान-शोक-श्रमादिभिः ॥ ३९ ॥

बिभेति दुर्-बलो ऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ।
दुश्-छायो दुर्-मना रूक्षो भवेत् क्षामश् च तत्-क्षये ॥ ४० ॥

११.४०cv वि-च्छायो दुर्-मना रूक्षो ११.४०dv भवेत् क्षामश् च तत्-क्षयात् जीवनीयौषध-क्षीर-रसाद्यास् तत्र भेषजम् ।
ओजो-वृद्धौ हि देहस्य तुष्टि-पुष्टि-बलोदयः ॥ ४१ ॥

११.४१cv ओजो-वृद्धौ च देहस्य ११.४१cv ओजो-वृद्धौ तु देहस्य ११.४१dv तुष्टि-पुष्टि-बलोदयाः यद् अन्नं द्वेष्टि यद् अपि प्रार्थयेता-विरोधि तु ।
तत् तत् त्यजन् समश्नंश् च तौ तौ वृद्धि-क्षयौ जयेत् ॥ ४२ ॥

११.४२cv तत् तत् त्यजन् समश्नन् वा कुर्वते हि रुचिं दोषा विपरीत-समानयोः ।
वृद्धाः क्षीणाश् च भूयिष्ठं लक्षयन्त्य् अ-बुधास् तु न ॥ ४३ ॥

११.४३av कुर्वन्ति हि रुचिं दोषा यथा-बलं यथा-स्वं च दोषा वृद्धा वितन्वते ।
रूपाणि जहति क्षीणाः समाः स्वं कर्म कुर्वते ॥ ४४ ॥

य एव देहस्य समा विवृद्ध्यै त एव दोषा विषमा वधाय ।
यस्माद् अतस् ते हित-चर्ययैव क्षयाद् विवृद्धेर् इव रक्षणीयाः ॥ ४५ ॥

११.४५dv क्षयाद् विवृद्धेर् अपि रक्षणीयाः

अध्यायः १२

पक्वाशय-कटी-सक्थि-श्रोत्रास्थि-स्पर्शनेन्द्रियम् ।
स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः ॥ १ ॥

नाभिर् आमाशयः स्वेदो लसीका रुधिरं रसः ।
दृक् स्पर्शनं च पित्तस्य नाभिर् अत्र विशेषतः ॥ २ ॥

उरः-कण्ठ-शिरः-क्लोम-पर्वाण्य् आमाशयो रसः ।
मेदो घ्राणं च जिह्वा च कफस्य सु-तराम् उरः ॥ ३ ॥

प्राणादि-भेदात् पञ्चात्मा वायुः प्राणो ऽत्र मूर्ध-गः ।
उरः-कण्ठ-चरो बुद्धि-हृदयेन्द्रिय-चित्त-धृक् ॥ ४ ॥

ष्ठीवन-क्षवथूद्गार-निःश्वासान्न-प्रवेश-कृत् ।
उरः स्थानम् उदानस्य नासा-नाभि-गलांश् चरेत् ॥ ५ ॥

१२.५dv नासा-नाभि-गलांश् चरन् वाक्-प्रवृत्ति-प्रयत्नोर्जा-बल-वर्ण-स्मृति-क्रियः ।
व्यानो हृदि स्थितः कृत्स्न-देह-चारी महा-जवः ॥ ६ ॥

गत्य्-अपक्षेपणोत्क्षेप-निमेषोन्मेषणादिकाः ।
प्रायः सर्वाः क्रियास् तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥ ७ ॥

समानो ऽग्नि-समीप-स्थः कोष्ठे चरति सर्वतः ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ ८ ॥

अपानो ऽपान-गः श्रोणि-वस्ति-मेढ्रोरु-गो-चरः ।
शुक्रार्तव-शकृन्-मूत्र-गर्भ-निष्क्रमण-क्रियः ॥ ९ ॥

पित्तं पञ्चात्मकं तत्र पक्वामाशय-मध्य-गम् ।
पञ्च-भूतात्मक-त्वे ऽपि यत् तैजस-गुणोदयात् ॥ १० ॥

त्यक्त-द्रव्य-त्वं पाकादि-कर्मणानल-शब्दितम् ।
पचत्य् अन्नं विभजते सार-किट्टौ पृथक् तथा ॥ ११ ॥

१२.११dv सार-किट्टे पृथक् तथा तत्र-स्थम् एव पित्तानां शेषाणाम् अप्य् अनुग्रहम् ।
करोति बल-दानेन पाचकं नाम तत् स्मृतम् ॥ १२ ॥

आमाशयाश्रयं पित्तं रञ्जकं रस-रञ्जनात् ।
बुद्धि-मेधाभिमानाद्यैर् अभिप्रेतार्थ-साधनात् ॥ १३ ॥

साधकं हृद्-गतं पित्तं रूपालोचनतः स्मृतम् ।
दृक्-स्थम् आलोचकं त्वक्-स्थं भ्राजकं भ्राजनात् त्वचः ॥ १४ ॥

श्लेष्मा तु पञ्च-धोरः-स्थः स त्रिकस्य स्व-वीर्यतः ।
हृदयस्यान्न-वीर्याच् च तत्-स्थ एवाम्बु-कर्मणा ॥ १५ ॥

१२.१५av श्लेष्मापि पञ्च-धोरः-स्थः कफ-धाम्नां च शेषाणां यत् करोत्य् अवलम्बनम् ।
अतो ऽवलम्बकः श्लेष्मा यस् त्व् आमाशय-संस्थितः ॥ १६ ॥

१२.१६dv यस् त्व् आमाशय-संश्रितः क्लेदकः सो ऽन्न-संघात-क्लेदनाद् रस-बोधनात् ।
बोधको रसना-स्थायी शिरः-संस्थो ऽक्ष-तर्पणात् ॥ १७ ॥

तर्पकः संधि-संश्लेषाच् छ्लेषकः संधिषु स्थितः ।
इति प्रायेण दोषाणां स्थानान्य् अ-विकृतात्मनाम् ॥ १८ ॥

१२.१८bv छलेषकः संधि-संस्थितः व्यापिनाम् अपि जानीयात् कर्माणि च पृथक् पृथक् ।
उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति संचयम् ॥ १९ ॥

शीतेन कोपम् उष्णेन शमं स्निग्धादयो गुणाः ।
शीतेन युक्तास् तीक्ष्णाद्याश् चयं पित्तस्य कुर्वते ॥ २० ॥

उष्णेन कोपं मन्दाद्याः शमं शीतोपसंहिताः ।
शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश् चयम् ॥ २१ ॥

उष्णेन कोपं तेनैव गुणा रूक्षादयः शमम् ।
चयो वृद्धिः स्व-धाम्न्य् एव प्रद्वेषो वृद्धि-हेतुषु ॥ २२ ॥

विपरीत-गुणेच्छा च कोपस् तून्-मार्ग-गमि-ता ।
लिङ्गानां दर्शनं स्वेषाम् अ-स्वास्थ्यं रोग-संभवः ॥ २३ ॥

स्व-स्थान-स्थस्य सम-ता विकारा-संभवः शमः ।
चय-प्रकोप-प्रशमा वायोर् ग्रीष्मादिषु त्रिषु ॥ २४ ॥

वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ।
चीयते लघु-रूक्षाभिर् ओषधिभिः समीरणः ॥ २५ ॥

१२.२५av वर्षादिषु च पित्तस्य तद्-विधस् तद्-विधे देहे कालस्यौष्ण्यान् न कुप्यति ।
अद्भिर् अम्ल-विपाकाभिर् ओषधिभिश् च तादृशम् ॥ २६ ॥

पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ।
चीयते स्निग्ध-शीताभिर् उदकौषधिभिः कफः ॥ २७ ॥

तुल्ये ऽपि काले देहे च स्कन्न-त्वान् न प्रकुप्यति ।
इति काल-स्व-भावो ऽयम् आहारादि-वशात् पुनः ॥ २८ ॥

१२.२८bv स्कन्न-त्वान् न विकुप्यति चयादीन् यान्ति सद्यो ऽपि दोषाः काले ऽपि वा न तु ।
व्याप्नोति सहसा देहम् आ-पाद-तल-मस्तकम् ॥ २९ ॥

निवर्तते तु कुपितो मलो ऽल्पाल्पं जलौघ-वत् ।
नाना-रूपैर् अ-संख्येयैर् विकारैः कुपिता मलाः ॥ ३० ॥

तापयन्ति तनुं तस्मात् तद्-धेत्व्-आकृति-साधनम् ।
शक्यं नैकैक-शो वक्तुम् अतः सामान्यम् उच्यते ॥ ३१ ॥

दोषा एव हि सर्वेषां रोगाणाम् एक-कारणम् ।
यथा पक्षी परिपतन् सर्वतः सर्वम् अप्य् अहः ॥ ३२ ॥

छायाम् अत्येति नात्मीयां यथा वा कृत्स्नम् अप्य् अदः ।
विकार-जातं विविधं त्रीन् गुणान् नातिवर्तते ॥ ३३ ॥

तथा स्व-धातु-वैषम्य-निमित्तम् अपि सर्व-दा ।
विकार-जातं त्रीन् दोषान् तेषां कोपे तु कारणम् ॥ ३४ ॥

अर्थैर् अ-सात्म्यैः संयोगः कालः कर्म च दुष्-कृतम् ।
हीनाति-मिथ्या-योगेन भिद्यते तत् पुनस् त्रि-धा ॥ ३५ ॥

हीनो ऽर्थेनेन्द्रियस्याल्पः संयोगः स्वेन नैव वा ।
अति-योगो ऽति-संसर्गः सूक्ष्म-भासुर-भैरवम् ॥ ३६ ॥

अत्य्-आसन्नाति-दूर-स्थं वि-प्रियं विकृतादि च ।
यद् अक्ष्णा वीक्ष्यते रूपं मिथ्या-योगः स दारुणः ॥ ३७ ॥

१२.३७dv मिथ्या-योगः सु-दारुणः एवम् अत्य्-उच्च-पूत्य्-आदीन् इन्द्रियार्थान् यथा-यथम् ।
विद्यात् कालस् तु शीतोष्ण-वर्षा-भेदात् त्रि-धा मतः ॥ ३८ ॥

१२.३८dv -वर्ष-भेदात् त्रि-धा मतः स हीनो हीन-शीतादिर् अति-योगो ऽति-लक्षणः ।
मिथ्या-योगस् तु निर्दिष्टो विपरीत-स्व-लक्षणः ॥ ३९ ॥

काय-वाक्-चित्त-भेदेन कर्मापि विभजेत् त्रि-धा ।
कायादि-कर्मणो हीना प्रवृत्तिर् हीन-संज्ञकः ॥ ४० ॥

१२.४०cv कायादि-कर्मणां हीना १२.४०dv प्रवृत्तिर् हीन-संज्ञिका अति-योगो ऽति-वृत्तिस् तु वेगोदीरण-धारणम् ।
विषमाङ्ग-क्रियारम्भ-पतन-स्खलनादिकम् ॥ ४१ ॥

१२.४१av अति-योगो ऽति-वृत्तिश् च भाषणं सामि-भुक्तस्य राग-द्वेष-भयादि च ।
कर्म प्राणातिपातादि दश-धा यच् च निन्दितम् ॥ ४२ ॥

मिथ्या-योगः समस्तो ऽसाव् इह वामु-त्र वा कृतम् ।
निदानम् एतद् दोषाणां कुपितास् तेन नैक-धा ॥ ४३ ॥

१२.४३bv इह चामु-त्र वा कृतम् कुर्वन्ति विविधान् व्याधीन् शाखा-कोष्ठास्थि-संधिषु ।
शाखा रक्तादयस् त्वक् च बाह्य-रोगायनं हि तत् ॥ ४४ ॥

१२.४४dv बाह्य-रोगायनं हि सा तद्-आश्रया मष-व्यङ्ग-गण्डालज्य्-अर्बुदादयः ।
बहिर्-भागाश् च दुर्-नाम-गुल्म-शोफादयो गदाः ॥ ४५ ॥

अन्तः कोष्ठो महा-स्रोत आम-पक्वाशयाश्रयः ।
तत्-स्थानाः छर्द्य्-अतीसार-कास-श्वासोदर-ज्वराः ॥ ४६ ॥

अन्तर्-भागं च शोफार्शो-गुल्म-विसर्प-विद्रधि ।
शिरो-हृदय-वस्त्य्-आदि-मर्माण्य् अस्थ्नां च संधयः ॥ ४७ ॥

१२.४७dv -मर्माण्य् अस्थ्नां तु संधयः तन्-निबद्धाः सिरा-स्नायु-कण्डराद्याश् च मध्यमः ।
रोग-मार्गः स्थितास् तत्र यक्ष्म-पक्ष-वधार्दिताः ॥ ४८ ॥

मूर्धादि-रोगाः संध्य्-अस्थि-त्रिक-शूल-ग्रहादयः ।
स्रंस-व्यास-व्यध-स्वाप् अ-साद-रुक्-तोद-भेदनम् ॥ ४९ ॥

सङ्गाङ्ग-भङ्ग-संकोच-वर्त-हर्षण-तर्पणम् ।
कम्प-पारुष्य-सौषिर्य-शोष-स्पन्दन-वेष्टनम् ॥ ५० ॥

स्तम्भः कषाय-रस-ता वर्णः श्यावो ऽरुणो ऽपि वा ।
कर्माणि वायोः पित्तस्य दाह-रागोष्म-पाकि-ताः ॥ ५१ ॥

स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्छनं मदः ।
कटुकाम्लौ रसौ वर्णः पाण्डुरारुण-वर्जितः ॥ ५२ ॥

श्लेष्मणः स्नेह-काठिन्य-कण्डू-शीत-त्व-गौरवम् ।
बन्धोपलेप-स्तैमित्य-शोफा-पक्त्य्-अति-निद्र-ताः ॥ ५३ ॥

वर्णः श्वेतो रसौ स्वादु-लवणौ चिर-कारि-ता ।
इत्य् अ-शेषामय-व्यापि यद् उक्तं दोष-लक्षणम् ॥ ५४ ॥

दर्शनाद्यैर् अवहितस् तत् सम्यग् उपलक्षयेत् ।
व्याध्य्-अवस्था-विभाग-ज्ञः पश्यन्न् आर्तान् प्रति-क्षणम् ॥ ५५ ॥

अभ्यासात् प्राप्यते दृष्टिः कर्म-सिद्धि-प्रकाशिनी ।
रत्नादि-सद्-अ-सज्-ज्ञानं न शास्त्राद् एव जायते ॥ ५६ ॥

१२.५६av अभ्यासाज् जायते दृष्टिः १२.५६av अभ्यासात् केवलं दृष्टिः दृष्टापचार-जः कश्-चित् कश्-चित् पूर्वापराध-जः ।
तत्-संकराद् भवत्य् अन्यो व्याधिर् एवं त्रि-धा स्मृतः ॥ ५७ ॥

१२.५७bv कश्-चित् पूर्वापचार-जः १२.५७dv व्याधिर् एवं त्रि-धा मतः यथा-निदानं दोषोत्थः कर्म-जो हेतुभिर् विना ।
महारम्भो ऽल्पके हेताव् आतङ्को दोष-कर्म-जः ॥ ५८ ॥

विपक्ष-शीलनात् पूर्वः कर्म-जः कर्म-संक्षयात् ।
गच्छत्य् उभय-जन्मा तु दोष-कर्म-क्षयात् क्षयम् ॥ ५९ ॥

द्वि-धा स्व-पर-तन्त्र-त्वाद् व्याधयो ऽन्त्याः पुनर् द्वि-धा ।
पूर्व-जाः पूर्व-रूपाख्या जाताः पश्चाद् उपद्रवाः ॥ ६० ॥

यथा-स्व-जन्मोपशयाः स्व-तन्त्राः स्पष्ट-लक्षणाः ।
विपरीतास् ततो ऽन्ये तु विद्याद् एवं मलान् अपि ॥ ६१ ॥

ताँ लक्षयेद् अवहितो विकुर्वाणान् प्रति-ज्वरम् ।
तेषां प्रधान-प्रशमे प्रशमो ऽ-शाम्यतस् तथा ॥ ६२ ॥

पश्चाच् चिकित्सेत् तूर्णं वा बल-वन्तम् उपद्रवम् ।
व्याधि-क्लिष्ट-शरीरस्य पीडा-कर-तरो हि सः ॥ ६३ ॥

१२.६३av पश्चाच् चिकित्सेत् पूर्वं वा विकार-नामा-कुशलो न जिह्रीयात् कदा-च-न ।
न हि सर्व-विकाराणां नामतो ऽस्ति ध्रुवा स्थितिः ॥ ६४ ॥

स एव कुपितो दोषः समुत्थान-विशेषतः ।
स्थानान्तराणि च प्राप्य विकारान् कुरुते बहून् ॥ ६५ ॥

तस्माद् विकार-प्रकृतीर् अधिष्ठानान्तराणि च ।
बुद्ध्वा हेतु-विशेषांश् च शीघ्रं कुर्याद् उपक्रमम् ॥ ६६ ॥

दूष्यं देशं बलं कालम् अनलं प्रकृतिं वयः ।
सत्-त्वं सात्म्यं तथाहारम् अवस्थाश् च पृथग्-विधाः ॥ ६७ ॥

सूक्ष्म-सूक्ष्माः समीक्ष्यैषां दोषौषध-निरूपणे ।
यो वर्तते चिकित्सायां न स स्खलति जातु चित् ॥ ६८ ॥

गुर्व्-अल्प-व्याधि-संस्थानं सत्-त्व-देह-बला-बलात् ।
दृश्यते ऽप्य् अन्य-था-कारं तस्मिन्न् अवहितो भवेत् ॥ ६९ ॥

गुरुं लघुम् इति व्याधिं कल्पयंस् तु भिषग्-ब्रुवः ।
अल्प-दोषाकलनया पथ्ये विप्रतिपद्यते ॥ ७० ॥

१२.७०bv कलयंस् तु भिषग्-ब्रुवः १२.७०bv कल्पयंस् तु भिषग् ध्रुवम् ततो ऽल्पम् अल्प-वीर्यं वा गुरु-व्याधौ प्रयोजितम् ।
उदीरयेत्-तरां रोगान् संशोधनम् अ-योगतः ॥ ७१ ॥

शोधनं त्व् अति-योगेन विपरीतं विपर्यये ।
क्षिणुयान् न मलान् एव केवलं वपुर् अस्यति ॥ ७२ ॥

१२.७२dv केवलं वपुर् अप्य् अति अतो ऽभियुक्तः सततं सर्वम् आलोच्य सर्व-था ।
तथा युञ्जीत भैषज्यम् आरोग्याय यथा ध्रुवम् ॥ ७३ ॥

१२.७३dv आरोग्याय यथा भवेत् वक्ष्यन्ते ऽतः परं दोषा वृद्धि-क्षय-विभेदतः ।
पृथक् त्रीन् विद्धि संसर्गस् त्रि-धा तत्र तु तान् नव ॥ ७४ ॥

१२.७४cv पृथक् त्रीन् विद्धि संसर्गं त्रीन् एव समया वृद्ध्या षड् एकस्यातिशायने ।
त्रयो-दश समस्तेषु षड् द्व्य्-एकातिशयेन तु ॥ ७५ ॥

१२.७५dv षड् द्व्य्-एकातिशयेन च एकं तुल्याधिकैः षट् च तारतम्य-विकल्पनात् ।
पञ्च-विंशतिम् इत्य् एवं वृद्धैः क्षीणैश् च तावतः ॥ ७६ ॥

१२.७६cv पञ्च-विंशतिर् इत्य् एवं एकैक-वृद्धि-सम-ता-क्षयैः षट् ते पुनश् च षट् ।
एक-क्षय-द्वन्द्व-वृद्ध्या स-विपर्यययापि ते ॥ ७७ ॥

भेदा द्वि-षष्टिर् निर्दिष्टास् त्रि-षष्टिः स्वास्थ्य-कारणम् ॥ ७८अब् ॥
संसर्गाद् रस-रुधिरादिभिस् तथैषां ॥ ७८च् ॥
१२.७८cv संसर्गाद् रस-रुधिरादिभिस् तथैतान् दोषांस् तु क्षय-सम-ता-विवृद्धि-भेदैः ॥ ७८द् ॥
१२.७८dv दोषाणां क्षय-सम-ता-विवृद्धि-भेदैः आनन्त्यं तर-तम-योगतश् च यातान् ॥ ७८ए ॥
जानीयाद् अवहित-मानसो यथा-स्वम् ॥ ७८f ॥

अध्यायः १३

वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।
स्वाद्व्-अम्ल-लवणोष्णानि भोज्यान्य् अभ्यङ्ग-मर्दनम् ॥ १ ॥

वेष्टनं त्रासनं सेको मद्यं पैष्टिक-गौडिकम् ।
स्निग्धोष्णा वस्तयो वस्ति-नियमः सुख-शील-ता ॥ २ ॥

दीपनैः पाचनैः स्निग्धाः स्नेहाश् चानेक-योनयः ।
विशेषान् मेद्य-पिशित-रस-तैलानुवासनम् ॥ ३ ॥

पित्तस्य सर्पिषः पानं स्वादु-शीतैर् विरेचनम् ।
स्वादु-तिक्त-कषायाणि भोजनान्य् औषधानि च ॥ ४ ॥

सु-गन्धि-शीत-हृद्यानां गन्धानाम् उपसेवनम् ।
कण्ठे-गुणानां हाराणां मणीनाम् उरसा धृतिः ॥ ५ ॥

कर्पूर-चन्दनोशीरैर् अनुलेपः क्षणे क्षणे ।
प्रदोषश् चन्द्रमाः सौधं हारि गीतं हिमो ऽनिलः ॥ ६ ॥

अ-यन्त्रण-सुखं मित्रं पुत्रः संदिग्ध-मुग्ध-वाक् ।
छन्दानुवर्तिनो दाराः प्रियाः शील-विभूषिताः ॥ ७ ॥

१३.७av अ-यन्त्रण-मुखं मित्रं शीताम्बु-धारा-गर्भाणि गृहाण्य् उद्यान-दीर्घिकाः ।
सु-तीर्थ-विपुल-स्वच्छ-सलिलाशय-सैकते ॥ ८ ॥

साम्भो-ज-जल-तीरान्ते कायमाने द्रुमाकुले ।
सौम्या भावाः पयः सर्पिर् विरेकश् च विशेषतः ॥ ९ ॥

१३.९bv कायमानं द्रुमाकुले श्लेष्मणो विधिना युक्तं तीक्ष्णं वमन-रेचनम् ।
अन्नं रूक्षाल्प-तीक्ष्णोष्णं कटु-तिक्त-कषायकम् ॥ १० ॥

दीर्घ-काल-स्थितं मद्यं रति-प्रीतिः प्रजागरः ।
अनेक-रूपो व्यायामश् चिन्ता रूक्षं विमर्दनम् ॥ ११ ॥

विशेषाद् वमनं यूषः क्षौद्रं मेदो-घ्नम् औषधम् ।
धूमोपवास-गण्डूषा निः-सुख-त्वं सुखाय च ॥ १२ ॥

उपक्रमः पृथग् दोषान् यो ऽयम् उद्दिश्य कीर्तितः ।
संसर्ग-संनिपातेषु तं यथा-स्वं विकल्पयेत् ॥ १३ ॥

१३.१३dv तं यथा-स्वं प्रकल्पयेत् ग्रैष्मः प्रायो मरुत्-पित्ते वासन्तः कफ-मारुते ।
मरुतो योग-वाहि-त्वात् कफ-पित्ते तु शारदः ॥ १४ ॥

चय एव जयेद् दोषं कुपितं त्व् अ-विरोधयन् ।
सर्व-कोपे बलीयांसं शेष-दोषा-विरोधतः ॥ १५ ॥

प्रयोगः शमयेद् व्याधिम् एकं यो ऽन्यम् उदीरयेत् ।
नासौ विशुद्धः शुद्धस् तु शमयेद् यो न कोपयेत् ॥ १६ ॥

१३.१६av प्रयोगः शमयेद् व्याधिं १३.१६bv यो ऽन्यम् अन्यम् उदीरयेत् व्यायामाद् ऊष्मणस् तैक्ष्ण्याद् अ-हिताचरणाद् अपि ।
कोष्ठाच् छाखास्थि-मर्माणि द्रुत-त्वान् मारुतस्य च ॥ १७ ॥

दोषा यान्ति तथा तेभ्यः स्रोतो-मुख-विशोधनात् ।
वृद्ध्याभिष्यन्दनात् पाकात् कोष्ठं वायोश् च निग्रहात् ॥ १८ ॥

तत्र-स्थाश् च विलम्बेरन् भूयो हेतु-प्रतीक्षिणः ।
ते कालादि-बलं लब्ध्वा कुप्यन्त्य् अन्याश्रयेष्व् अपि ॥ १९ ॥

तत्रान्य-स्थान-संस्थेषु तदीयाम् अ-बलेषु तु ।
कुर्याच् चिकित्सां स्वाम् एव बलेनान्याभिभाविषु ॥ २० ॥

आगन्तुं शमयेद् दोषं स्थानिनं प्रतिकृत्य वा ।
प्रायस् तिर्यग्-गता दोषाः क्लेशयन्त्य् आतुरांश् चिरम् ॥ २१ ॥

साधारणं वा कुर्वीत क्रियाम् उभय-योगिनीम् ॥ २१.१+१ ॥

कुर्यान् न तेषु त्वरया देहाग्नि-बल-वित् क्रियाम् ।
शमयेत् तान् प्रयोगेण सुखं वा कोष्ठम् आनयेत् ॥ २२ ॥

ज्ञात्वा कोष्ठ-प्रपन्नांश् च यथासन्नं विनिर्हरेत् ।
स्रोतो-रोध-बल-भ्रंश-गौरवानिल-मूढ-ताः ॥ २३ ॥

१३.२३dv -गौरवानिल-मूढ-ता आलस्या-पक्ति-निष्ठीव-मल-सङ्गा-रुचि-क्लमाः ।
लिङ्गं मलानां सामानां निर्-आमाणां विपर्ययः ॥ २४ ॥

विण्-मूत्र-नख-दन्त-त्वक्-चक्षुषां पीत-ता भवेत् ।
रक्त-त्वम् अथ कृष्ण-त्वं पृष्ठास्थि-कटि-संधि-रुक् ॥ २४.१+१ ॥

१३.२४.१+१dv पृष्ठास्थि-कटि-संधिषु शिरो-रुक् जायते तीव्रा निद्रा वि-रस-ता मुखे ।
क्व-चिच् च श्वयथुर् गात्रे ज्वरातीसार-हर्षणम् ॥ २४.१+२ ॥

ऊष्मणो ऽल्प-बल-त्वेन धातुम् आद्यम् अ-पाचितम् ।
दुष्टम् आमाशय-गतं रसम् आमं प्रचक्षते ॥ २५ ॥

अन्ये दोषेभ्य एवाति-दुष्टेभ्यो ऽन्यो-ऽन्य-मूर्छनात् ।
कोद्रवेभ्यो विषस्येव वदन्त्य् आमस्य संभवम् ॥ २६ ॥

आमेन तेन संपृक्ता दोषा दूष्याश् च दूषिताः ।
सामा इत्य् उपदिश्यन्ते ये च रोगास् तद्-उद्भवाः ॥ २७ ॥

वायुः सामो विबन्धाग्नि-साद-स्तम्भान्त्र-कूजनैः ।
वेदना-शोफ-निस्तोदैः क्रम-शो ऽङ्गानि पीडयन् ॥ २७+१ ॥

विचरेद् युग-पच् चापि गृह्णाति कुपितो भृशम् ।
स्नेहाद्यैर् वृद्धिम् आयाति सूर्य-मेघोदये निशि ॥ २७+२ ॥

निर्-आमो विशदो रूक्षो निर्-विबन्धो ऽल्प-वेदनः ।
विपरीत-गुणैः शान्तिं स्निग्धैर् याति विशेषतः ॥ २७+३ ॥

दुर्-गन्धि हरितं श्यावं पित्तम् अम्लं घनं गुरु ।
अम्लीका-कण्ठ-हृद्-दाह-करं सामं विनिर्दिशेत् ॥ २७+४ ॥

आ-ताम्र-पीतम् अत्य्-उष्णं रसे कटुकम् अ-स्थिरम् ।
पक्वं वि-गन्धि विज्ञेयं रुचि-पक्ति-बल-प्रदम् ॥ २७+५ ॥

१३.२७+५dv रुचि-वह्नि-बल-प्रदम् आविलस् तन्तुलः स्त्यानः कण्ठ-देशे ऽवतिष्ठते ।
सामो बलासो दुर्-गन्धिः क्षुद्-उद्गार-विघात-कृत् ॥ २७+६ ॥

फेन-वान् पिण्डितः पाण्डुर् निः-सारो ऽ-गन्ध एव च ।
पक्वः स एव विज्ञेयश् छेद-वान् वक्त्र-शुद्धि-दः ॥ २७+७ ॥

सर्व-देह-प्रविसृतान् सामान् दोषान् न निर्हरेत् ।
लीनान् धातुष्व् अन्-उत्क्लिष्टान् फलाद् आमाद् रसान् इव ॥ २८ ॥

आश्रयस्य हि नाशाय ते स्युर् दुर्-निर्हर-त्वतः ।
पाचनैर् दीपनैः स्नेहैस् तान् स्वेदैश् च परिष्कृतान् ॥ २९ ॥

शोधयेच् छोधनैः काले यथासन्नं यथा-बलम् ।
हन्त्य् आशु युक्तं वक्त्रेण द्रव्यम् आमाशयान् मलान् ॥ ३० ॥

घ्राणेन चोर्ध्व-जत्रूत्थान् पक्वाधानाद् गुदेन च ।
उत्क्लिष्टान् अध ऊर्ध्वं वा न चामान् वहतः स्वयम् ॥ ३१ ॥

धारयेद् औषधैर् दोषान् विधृतास् ते हि रोग-दाः ।
प्रवृत्तान् प्राग् अतो दोषान् उपेक्षेत हिताशिनः ॥ ३२ ॥

विबद्धान् पाचनैस् तैस् तैः पाचयेन् निर्हरेत वा ।
श्रावणे कार्त्तिके चैत्रे मासि साधारणे क्रमात् ॥ ३३ ॥

१३.३३bv पाचयेन् निर्हरेत् तथा प्रावृट्-शरद्-वसन्तेषु मासेष्व् एतेषु शोधयेत् ।
साधारणेषु विधिना त्रि-मासान्तरितान् मलान् ॥ ३३+१ ॥

ग्रीष्म-वर्षा-हिम-चितान् वाय्व्-आदीन् आशु निर्हरेत् ।
अत्य्-उष्ण-वर्ष-शीता हि ग्रीष्म-वर्षा-हिमागमाः ॥ ३४ ॥

संधौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ।
स्वस्थ-वृत्तम् अभिप्रेत्य व्याधौ व्याधि-वशेन तु ॥ ३५ ॥

त्रयः साधारणास् तेषाम् अन्तरे प्रावृषादयः ।
प्रावृट् शुचि-नभौ तेषु शरद् ऊर्ज-सहौ स्मृतौ ॥ ३५.१+१ ॥

तपस्यो मधु-मासश् च वसन्तः शोधनं प्रति ।
एतान् ऋतून् विकल्प्यैवं दद्यात् संशोधनं भिषक् ॥ ३५.१+२ ॥

कृत्वा शीतोष्ण-वृष्टीनां प्रतीकारं यथा-यथम् ।
प्रयोजयेत् क्रियां प्राप्तां क्रिया-कालं न हापयेत् ॥ ३६ ॥

युञ्ज्याद् अन्-अन्नम् अन्नादौ मध्ये ऽन्ते कवडान्तरे ।
ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम् ॥ ३७ ॥

कफोद्रेके गदे ऽन्-अन्नं बलिनो रोग-रोगिणोः ।
अन्नादौ वि-गुणे ऽपाने समाने मध्य इष्यते ॥ ३८ ॥

व्याने ऽन्ते प्रातर्-आशस्य सायम्-आशस्य तूत्तरे ।
ग्रास-ग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ३९ ॥

मुहुर् मुहुर् विष-च्छर्दि-हिध्मा-तृट्-श्वास-कासिषु ।
योज्यं स-भोज्यं भैषज्यं भोज्यैश् चित्रैर् अ-रोचके ॥ ४० ॥

कम्पाक्षेपक-हिध्मासु सामुद्गं लघु-भोजिनाम् ।
ऊर्ध्व-जत्रु-विकारेषु स्वप्न-काले प्रशस्यते ॥ ४१ ॥

अध्यायः १४

उपक्रम्यस्य हि द्वि-त्वाद् द्वि-धैवोपक्रमो मतः ।
एकः संतर्पणस् तत्र द्वितीयश् चापतर्पणः ॥ १ ॥

बृंहणो लङ्घनश् चेति तत्-पर्यायाव् उदाहृतौ ।
बृंहणं यद् बृहत्-त्वाय लङ्घनं लाघवाय यत् ॥ २ ॥

देहस्य भवतः प्रायो भौमापम् इतरच् च ते ।
स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनं च यत् ॥ ३ ॥

भूतानां तद् अपि द्वैध्याद् द्वितयं नातिवर्तते ।
शोधनं शमनं चेति द्वि-धा तत्रापि लङ्घनम् ॥ ४ ॥

यद् ईरयेद् बहिर् दोषान् पञ्च-धा शोधनं च तत् ।
निरूहो वमनं काय-शिरो-रेको ऽस्र-विस्रुतिः ॥ ५ ॥

न शोधयति यद् दोषान् समान् नोदीरयत्य् अपि ।
समी-करोति विषमान् शमनं तच् च सप्त-धा ॥ ६ ॥

पाचनं दीपनं क्षुत्-तृड्-व्यायामातप-मारुताः ।
बृंहणं शमनं त्व् एव वायोः पित्तानिलस्य च ॥ ७ ॥

बृंहयेद् व्याधि-भैषज्य-मद्य-स्त्री-शोक-कर्शितान् ।
भाराध्वोरः-क्षत-क्षीण-रूक्ष-दुर्-बल-वातलान् ॥ ८ ॥

गर्भिणी-सूतिका-बाल-वृद्धान् ग्रीष्मे ऽपरान् अपि ।
मांस-क्षीर-सिता-सर्पिर्-मधुर-स्निग्ध-वस्तिभिः ॥ ९ ॥

स्वप्न-शय्या-सुखाभ्यङ्ग-स्नान-निर्वृति-हर्षणैः ।
मेहाम-दोषाति-स्निग्ध-ज्वरोरु-स्तम्भ-कुष्ठिनः ॥ १० ॥

विसर्प-विद्रधि-प्लीह-शिरः-कण्ठाक्षि-रोगिणः ।
स्थूलांश् च लङ्घयेन् नित्यं शिशिरे त्व् अपरान् अपि ॥ ११ ॥

तत्र संशोधनैः स्थौल्य-बल-पित्त-कफाधिकान् ।
आम-दोष-ज्वर-च्छर्दिर्-अतीसार-हृद्-आमयैः ॥ १२ ॥

विबन्ध-गौरवोद्गार-हृल्-लासादिभिर् आतुरान् ।
मध्य-स्थौल्यादिकान् प्रायः पूर्वं पाचन-दीपनैः ॥ १३ ॥

एभिर् एवामयैर् आर्तान् हीन-स्थौल्य-बलाधिकान् ।
क्षुत्-तृष्णा-निग्रहैर् दोषैस् त्व् आर्तान् मध्य-बलैर् दृढान् ॥ १४ ॥

१४.१४cv क्षुत्-तृष्णा-निग्रहैर् दोषैर् १४.१४cv क्षुत्-तृष्णा-निग्रहैर् दोषैश् १४.१४dv चार्तान् मध्य-बलैर् दृढान् समीरणातपायासैः किम् उताल्प-बलैर् नरान् ।
न बृंहयेल् लङ्घनीयान् बृंहयांस् तु मृदु लङ्घयेत् ॥ १५ ॥

युक्त्या वा देश-कालादि-बलतस् तान् उपाचरेत् ।
बृंहिते स्याद् बलं पुष्टिस् तत्-साध्यामय-संक्षयः ॥ १६ ॥

वि-मलेन्द्रिय-ता सर्गो मलानां लाघवं रुचिः ।
क्षुत्-तृट्-सहोदयः शुद्ध-हृदयोद्गार-कण्ठ-ता ॥ १७ ॥

व्याधि-मार्दवम् उत्साहस् तन्द्रा-नाशश् च लङ्घिते ।
अन्-अपेक्षित-मात्रादि-सेविते कुरुतस् तु ते ॥ १८ ॥

अति-स्थौल्याति-कार्श्यादीन् वक्ष्यन्ते ते च सौषधाः ।
रूपं तैर् एव च ज्ञेयम् अति-बृंहित-लङ्घिते ॥ १९ ॥

१४.१९cv रूपं तैर् एव विज्ञेयम् अति-स्थौल्यापची-मेह-ज्वरोदर-भगन्दरान् ।
कास-संन्यास-कृच्छ्राम-कुष्ठादीन् अति-दारुणान् ॥ २० ॥

तत्र मेदो-ऽनिल-श्लेष्म-नाशनं सर्वम् इष्यते ।
कुलत्थ-जूर्ण-श्यामाक-यव-मुद्ग-मधूदकम् ॥ २१ ॥

मस्तु-दण्डाहतारिष्ट-चिन्ता-शोधन-जागरम् ।
मधुना त्रि-फलां लिह्याद् गुडूचीम् अभयां घनम् ॥ २२ ॥

रसाञ्जनस्य महतः पञ्च-मूलस्य गुग्गुलोः ।
शिला-जतु-प्रयोगश् च साग्निमन्थ-रसो हितः ॥ २३ ॥

१४.२३cv शिलाह्वस्य प्रयोगश् च विडङ्गं नागरं क्षारः काल-लोह-रजो मधु ।
यवामलक-चूर्णं च योगो ऽति-स्थौल्य-दोष-जित् ॥ २४ ॥

व्योष-कट्वी-वरा-शिग्रु-विडङ्गातिविषा-स्थिराः ।
हिङ्गु-सौवर्चलाजाजी-यवानी-धान्य-चित्रकाः ॥ २५ ॥

निशे बृहत्यौ हपुषा पाठा मूलं च केम्बुकात् ।
एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥ २६ ॥

१४.२६dv तैलं च सदृशांशिकम् सक्तुभिः षो-डश-गुणैर् युक्तं पीतं निहन्ति तत् ।
अति-स्थौल्यादिकान् सर्वान् रोगान् अन्यांश् च तद्-विधान् ॥ २७ ॥

हृद्-रोग-कामला-श्वित्र-श्वास-कास-गल-ग्रहान् ।
बुद्धि-मेधा-स्मृति-करं संनस्याग्नेश् च दीपनम् ॥ २८ ॥

अति-कार्श्यं भ्रमः कासस् तृष्णाधिक्यम् अ-रोचकः ।
स्नेहाग्नि-निद्रा-दृक्-श्रोत्र-शुक्रौजः-क्षुत्-स्वर-क्षयः ॥ २९ ॥

१४.२९av अति-कार्श्यं भ्रमः श्वास- १४.२९bv -तृष्णाधिक्यम् अ-रोचकः वस्ति-हृन्-मूर्ध-जङ्घोरु-त्रिक-पार्श्व-रुजा ज्वरः ।
प्रलापोर्ध्वानिल-ग्लानि-च्छर्दि-पर्वास्थि-भेदनम् ॥ ३० ॥

१४.३०dv -च्छर्दिः-पर्वास्थि-भेदनम् वर्चो-मूत्र-ग्रहाद्याश् च जायन्ते ऽति-विलङ्घनात् ।
कार्श्यम् एव वरं स्थौल्यान् न हि स्थूलस्य भेषजम् ॥ ३१ ॥

१४.३१av विण्-मूत्रादि-ग्रहाद्याश् च १४.३१dv न हि स्थौल्यस्य भेषजम् बृंहणं लङ्घनं वालम् अति-मेदो-ऽग्नि-वात-जित् ।
मधुर-स्निग्ध-सौहित्यैर् यत् सौख्येन च नश्यति ॥ ३२ ॥

१४.३२av बृंहणं लङ्घनं नालम् १४.३२cv मधुर-स्नेह-सौहित्यैर् १४.३२dv यत् सौख्येन विनश्यति क्रशिमा स्थविमात्य्-अन्त-विपरीत-निषेवणैः ।
योजयेद् बृंहणं तत्र सर्वं पानान्न-भेषजम् ॥ ३३ ॥

अ-चिन्तया हर्षणेन ध्रुवं संतर्पणेन च ।
स्वप्न-प्रसङ्गाच् च कृशो वराह इव पुष्यति ॥ ३४ ॥

१४.३४av अ-चिन्तया प्रहर्षेण १४.३४cv स्वप्न-प्रसङ्गाच् च नरो न हि मांस-समं किञ्-चिद् अन्यद् देह-बृहत्-त्व-कृत् ।
मांसाद-मांसं मांसेन संभृत-त्वाद् विशेषतः ॥ ३५ ॥

१४.३५dv संभृत-त्वाद् विशिष्यते १४.३५dv संभृत-त्वाद् बृहत्-त्व-कृत् गुरु चा-तर्पणं स्थूले विपरीतं हितं कृशे ।
यव-गोधूमम् उभयोस् तद्-योग्याहित-कल्पनम् ॥ ३६ ॥

१४.३६dv तद्-योग्य-हित-कल्पनम् १४.३६dv ततो ग्राहित-कल्पनम् दोष-गत्यातिरिच्यन्ते ग्राहि-भेद्य्-आदि-भेदतः ।
उपक्रमा न ते द्वि-त्वाद् भिन्ना अपि गदा इव ॥ ३७ ॥

१४.३७cv उपक्रमा न तु द्वि-त्वाद्

अध्यायः १५

मदन-मधुक-लम्बा-निम्ब-बिम्बी-विशाला-त्रपुस-कुटज-मूर्वा-देवदाली-कृमिघ्नम् ।
विदुल-दहन-चित्राः कोशवत्यौ करञ्जः कण-लवण-वचैला-सर्षपाश् छर्दनानि ॥ १ ॥
निकुम्भ-कुम्भ-त्रि-फला-गवाक्षी-स्नुक्-शङ्खिनी-नीलिनि-तिल्वकानि ।
शम्याक-कम्पिल्लक-हेमदुग्धा दुग्धं च मूत्रं च विरेचनानि ॥ २ ॥

मदन-कुटज-कुष्ठ-देवदाली-मधुक-वचा-दश-मूल-दारु-रास्नाः ।
यव-मिशि-कृतवेधनं कुलत्था मधु लवणं त्रिवृता निरूहणानि ॥ ३ ॥

१५.३cv यव-मिशि-कृतवेधनं कुलत्थो वेल्लापामार्ग-व्योष-दार्वी-सुराला बीजं शैरीषं बार्हतं शैग्रवं च ।
सारो माधूकः सैन्धवं तार्क्ष्य-शैलं त्रुट्यौ पृथ्वीका शोधयन्त्य् उत्तमाङ्गम् ॥ ४ ॥
भद्रदारु नतं कुष्ठं दश-मूलं बला-द्वयम् ।
वायुं वीरतरादिश् च विदार्य्-आदिश् च नाशयेत् ॥ ५ ॥

१५.५bv दश-मूलं बला-त्रयम् १५.५dv विदार्य्-आदिश् च शोधयेत् दूर्वानन्ता निम्ब-वासात्मगुप्ता गुन्द्राभीरुः शीतपाकी प्रियङ्गुः ।
न्यग्रोधादिः पद्मकादिः स्थिरे द्वे पद्मं वन्यं शारिवादिश् च पित्तम् ॥ ६ ॥

आरग्वधादिर् अर्कादिर् मुष्ककाद्यो ऽसनादिकः ।
सुरसादिः स-मुस्तादिर् वत्सकादिर् बलास-जित् ॥ ७ ॥

जीवन्ती-काकोल्यौ मेदे द्वे मुद्ग-माषपर्ण्यौ च ।
ऋषभक-जीवक-मधुकं चेति गणो जीवनीयाख्यः ॥ ८ ॥

विदारि-पञ्चाङ्गुल-वृश्चिकाली-वृश्चीव-देवाह्वय-शूर्पपर्ण्यः ।
कण्डूकरी जीवन-ह्रस्व-संज्ञे द्वे पञ्चके गोपसुता त्रिपादी ॥ ९ ॥

१५.९bv -वृश्चीव-देवा-द्वय-शूर्पपर्ण्यः १५.९dv कण्डूकरी गोपसुता त्रिपादी विदार्य्-आदिर् अयं हृद्यो बृंहणो वात-पित्त-हा ।
शोष-गुल्माङ्ग-मर्दोर्ध्व-श्वास-कास-हरो गणः ॥ १० ॥

१५.१०cv शोष-गुल्माङ्ग-सादोर्ध्व- शारिवोशीर-काश्मर्य-मधूक-शिशिर-द्वयम् ।
यष्टी परूषकं हन्ति दाह-पित्तास्र-तृड्-ज्वरान् ॥ ११ ॥

पद्मक-पुण्ड्रौ वृद्धि-तुगर्द्ध्यः शृङ्ग्य् अमृता दश जीवन-संज्ञाः ।
स्तन्य-करा घ्नन्तीरण-पित्तं प्रीणन-जीवन-बृंहण-वृष्याः ॥ १२ ॥

परूषकं वरा द्राक्षा कट्फलं कतकात् फलम् ।
राजाह्वं दाडिमं शाकं तृण्-मूत्रामय-वात-जित् ॥ १३ ॥

अञ्जनं फलिनी मांसी पद्मोत्पल-रसाञ्जनम् ।
सैला-मधुक-नागाह्वं विषान्तर्-दाह-पित्त-नुत् ॥ १४ ॥

१५.१४dv विषान्तर्-दाह-पित्त-जित् १५.१४dv विषान्तर्-दाह-पित्त-हृत् पटोल-कटु-रोहिणी-चन्दनं मधुस्रव-गुडूचि-पाठान्वितम् ।
निहन्ति कफ-पित्त-कुष्ठ-ज्वरान् विषं वमिम् अ-रोचकं कामलाम् ॥ १५ ॥

गुडूची-पद्मकारिष्ट-धानका-रक्त-चन्दनम् ।
पित्त-श्लेष्म-ज्वर-च्छर्दि-दाह-तृष्णा-घ्नम् अग्नि-कृत् ॥ १६ ॥

१५.१६bv -धान्यका-रक्त-चन्दनम् १५.१६bv -धान्यकं रक्त-चन्दनम् १५.१६bv -धनिका-रक्त-चन्दनम् आरग्वधेन्द्रयव-पाटलि-काकतिक्ता-निम्बामृता-मधुरसा-स्रुव-वृक्ष-पाठाः ।
भूनिम्ब-सैर्यक-पटोल-करञ्ज-युग्म-सप्तच्छदाग्नि-सुषवी-फल-बाण-घोण्टाः ॥
१७ ॥

आरग्वधादिर् जयति च्छर्दि-कुष्ठ-विष-ज्वरान् ।
कफं कण्डूं प्रमेहं च दुष्ट-व्रण-विशोधनः ॥ १८ ॥

१५.१८dv मेदोदर-विशोधनः असन-तिनिश-भूर्ज-श्वेतवाह-प्रकीर्याः खदिर-कदर-भण्डी-शिंशिपा-मेषशृङ्ग्यः ।
त्रि-हिम-तल-पलाशा जोङ्गकः शाक-शालौ क्रमुक-धव-कलिङ्ग-च्छागकर्णाश्वकर्णाः ॥
१९ ॥

असनादिर् विजयते श्वित्र-कुष्ठ-कफ-क्रिमीन् ।
पाण्डु-रोगं प्रमेहं च मेदो-दोष-निबर्हणः ॥ २० ॥

१५.२०bv श्वित्र-कुष्ठ-वमि-क्रिमीन् वरुण-सैर्यक-युग्म-शतावरी-दहन-मोरट-बिल्व-विषाणिकाः ।
द्वि-बृहती-द्वि-करञ्ज-जया-द्वयं बहलपल्लव-दर्भ-रुजाकराः ॥ २१ ॥

१५.२१av वरण-सैर्यक-युग्म-शतावरी- वरुणादिः कफं मेदो मन्दाग्नि-त्वं नियच्छति ।
आढ्य-वातं शिरः-शूलं गुल्मं चान्तः स-विद्रधिम् ॥ २२ ॥

१५.२२av वरणादिः कफं मेदो १५.२२cv अधो-वातं शिरः-शूलं ऊषकस् तुत्थकं हिङ्गु कासीस-द्वय-सैन्धवम् ।
स-शिला-जतु कृच्छ्राश्म-गुल्म-मेदः-कफापहम् ॥ २३ ॥

१५.२३dv -गुल्म-मेह-कफापहम् वेल्लन्तरारणिक-बूक-वृषाश्मभेद-गोकण्टकेत्कट-सहाचर-बाण-काशाः ।
वृक्षादनी-नल-कुश-द्वय-गुण्ठ-गुन्द्रा-भल्लूक-मोरट-कुरण्ट-करम्भ-पार्थाः ॥
२४ ॥

१५.२४bv -गोकण्टकोत्कट-सहाचर-बाण-काशाः १५.२४cv वृक्षादनी-नल-कुश-द्वय-गुन्थ-गुन्द्रा- १५.२४cv वृक्षादनी-नल-कुश-द्वय-गुञ्छ-गुन्द्रा- १५.२४cv वृक्षादनी-नल-कुश-द्वय-गुच्छ-गुन्द्रा- वर्गो वीरतराद्यो ऽयं हन्ति वात-कृतान् गदान् ।
अश्मरी-शर्करा-मूत्र-कृच्छ्राघात-रुजा-हरः ॥ २५ ॥

१५.२५dv -कृच्छ्राघात-रुजापहः लोध्र-शाबरक-लोध्र-पलाशा जिङ्गिनी-सरल-कट्फल-युक्ताः ।
कुत्सिताम्ब-कदली-गतशोकाः सैलवालु-परिपेलव-मोचाः ॥ २६ ॥

१५.२६av लोध्र-शाबर-कदम्ब-पलाशा १५.२६bv झिञ्झिणी-सरल-कट्फल-युक्ताः एष लोध्रादिको नाम मेदः-कफ-हरो गणः ।
योनि-दोष-हरः स्तम्भी वर्ण्यो विष-विनाशनः ॥ २७ ॥

अर्कालर्कौ नागदन्ती विशल्या भार्गी रास्ना वृश्चिकाली प्रकीर्या ।
प्रत्यक्पुष्पी पीततैलोदकीर्या श्वेता-युग्मं तापसानां च वृक्षः ॥ २८ ॥

अयम् अर्कादिको वर्गः कफ-मेदो-विषापहः ।
कृमि-कुष्ठ-प्रशमनो विशेषाद् व्रण-शोधनः ॥ २९ ॥

१५.२९av अयम् अर्कादिको नाम सुरस-युग-फणिज्जं कालमाला विडङ्गं खरबुस-वृषकर्णी-कट्फलं कासमर्दः ।
क्षवक-सरसि-भार्गी-कार्मुकाः काकमाची कुलहल-विषमुष्टी भूस्तृणो भूतकेशी ॥ ३० ॥
१५.३०bv खरबुक-वृषकर्णी-कट्फलाः कासमर्दः १५.३०bv खरबुस-वृषकर्णी-कट्फलाः कासमर्दः १५.३०ब्च् खरमुख-वृषकर्णी-कट्फलं कासमर्दः १५.३०cv क्षवक-सुरसि-भार्गी-कार्मुकाः काकमाची १५.३०cv क्षवक-सुरसि-भार्गी-कामुकाः काकमाची १५.३०cv क्षवक-सरसि-भार्गी-कामुकाः काकमाची १५.३०cv क्षवक-स्वरसि-भार्गी-कार्मुकाः काकमाची सुरसादिर् गणः श्लेष्म-मेदः-कृमि-निषूदनः ।
प्रतिश्याया-रुचि-श्वास-कास-घ्नो व्रण-शोधनः ॥ ३१ ॥

मुष्कक-स्नुग्-वरा-द्वीपि-पलाश-धव-शिंशिपाः ।
गुल्म-मेहाश्मरी-पाण्डु-मेदो-ऽर्शः-कफ-शुक्र-जित् ॥ ३२ ॥

१५.३२bv -पलाश-धव-शिंशिपम् वत्सक-मूर्वा-भार्गी-कटुका मरीचं घुणप्रिया च गण्डीरम् ।
एला पाठाजाजी कट्वङ्ग-फलाजमोद-सिद्धार्थ-वचाः ॥ ३३ ॥

जीरक-हिङ्गु-विडङ्गं पशुगन्धा पञ्च-कोलकं हन्ति ।
चल-कफ-मेदः-पीनस-गुल्म-ज्वर-शूल-दुर्-नाम्नः ॥ ३४ ॥

१५.३४dv पशुगन्धा पञ्च-कोलकं घ्नन्ति वचा-जलद-देवाह्व-नागरातिविषाभयाः ।
हरिद्रा-द्वय-यष्ट्य्-आह्व-कलशी-कुटजोद्भवाः ॥ ३५ ॥

वचा-हरिद्रादि-गणाव् आमातीसार-नाशनौ ।
मेदः-कफाढ्य-पवन-स्तन्य-दोष-निबर्हणौ ॥ ३६ ॥

१५.३६bv आमातीसार-पाचनौ प्रियङ्गु-पुष्पाञ्जन-युग्म-पद्माः पद्माद् रजो योजनवल्ल्य् अनन्ता ।
मानद्रुमो मोच-रसः समङ्गा पुन्नाग-शीतं मदनीय-हेतुः ॥ ३७ ॥

१५.३७cv सारद्रुमो मोच-रसः समङ्गा १५.३७dv पुन्नाम-शीतं मदनीय-हेतुः अम्बष्ठा मधुकं नमस्करी नन्दीवृक्ष-पलाश-कच्छुराः ।
लोध्रं धातकि-बिल्व-पेशिके कट्वङ्गः कमलोद्भवं रजः ॥ ३८ ॥

गणौ प्रियङ्ग्व्-अम्बष्ठादी पक्वातीसार-नाशनौ ।
संधानीयौ हितौ पित्ते व्रणानाम् अपि रोपणौ ॥ ३९ ॥

मुस्ता-वचाग्नि-द्वि-निशा-द्वि-तिक्ता-भल्लात-पाठा-त्रि-फला-विषाख्याः ।
कुष्ठं त्रुटी हैमवती च योनि-स्तन्यामय-घ्ना मल-पाचनाश् च ॥ ४० ॥

न्यग्रोध-पिप्पल-सदाफल-लोध्र-युग्मं जम्बू-द्वयार्जुन-कपीतन-सोमवल्काः ।
प्लक्षाम्र-वञ्जुल-पियाल-पलाश-नन्दी-कोली-कदम्ब-विरला-मधुकं मधूकम् ॥ ४१ ॥
१५.४१av न्यग्रोध-पिप्पल-सदाफल-लोध्र-युग्म- १५.४१bv -जम्बू-द्वयार्जुन-कपीतन-सोमवल्काः न्यग्रोधादिर् गणो व्रण्यः संग्राही भग्न-साधनः ।
मेदः-पित्तास्र-तृड्-दाह-योनि-रोग-निबर्हणः ॥ ४२ ॥

१५.४२av न्यग्रोधादिर् गणो वर्ण्यः १५.४२dv -योनि-दोष-निबर्हणः एला-युग्म-तुरुष्क-कुष्ठ-फलिनी-मांसी-जल-ध्यामकं ॥ ४३अ ॥
स्पृक्का-चोरक-चोच-पत्त्र-तगर-स्थौणेय-जाती-रसाः ॥ ४३ब् ॥
१५.४३bv -स्पृक्का-चोरक-चोच-पत्त्र-तगर-स्थौणेय-जाती-रसाः शुक्तिर् व्याघ्रनखो ऽमराह्वम् अगुरुः श्रीवासकः कुङ्कुमं ॥ ४३च् ॥
१५.४३cv शुक्तिर् व्याघ्रनखो ऽमराह्वम् अगुरुः श्रीवासकं कुङ्कुमं १५.४३cv शुक्ति-व्याघ्रनखौ सुराह्वम् अगुरुः श्रीवेष्टकः कुङ्कुमं चण्डा-गुग्गुलु-देव-धूप-खपुराः पुन्नाग-नागाह्वयम् ॥ ४३द् ॥
एलादिको वात-कफौ विषं च विनियच्छति ।
वर्ण-प्रसादनः कण्डू-पिटिका-कोठ-नाशनः ॥ ४४ ॥

१५.४४cv वर्ण्यः प्रसादनः कण्डू- श्यामा-दन्ती-द्रवन्ती-क्रमुक-कुटरणा-शङ्खिनी-चर्म-साह्वा- ॥ ४५अ ॥
१५.४५av श्यामा-दन्ती-द्रवन्ती-क्रमुक-कुटरणी-शङ्खिनी-चर्म-साह्वा- -स्वर्णक्षीरी-गवाक्षी-शिखरि-रजनक-च्छिन्नरोहा-करञ्जाः ॥ ४५ब् ॥
बस्तान्त्री व्याधिघातो बहल-बहु-रसस् तीक्ष्णवृक्षात् फलानि ॥ ४५च् ॥
१५.४५cv बस्तान्त्री व्याधिघातो बहुल-बहु-रसस् तीक्ष्णवृक्षात् फलानि श्यामाद्यो हन्ति गुल्मं विषम-रुचि-कफौ हृद्-रुजं मूत्र-कृच्छ्रम् ॥ ४५द् ॥
त्रयस्-त्रिंशद् इति प्रोक्ता वर्गास् तेषु त्व् अ-लाभतः ।
युञ्ज्यात् तद्-विधम् अन्यच् च द्रव्यं जह्याद् अ-यौगिकम् ॥ ४६ ॥

एते वर्गा दोष-दूष्याद्य् अपेक्ष्य कल्क-क्वाथ-स्नेह-लेहादि-युक्ताः ।
पाने नस्ये ऽन्वासने ऽन्तर् बहिर् वा लेपाभ्यङ्गैर् घ्नन्ति रोगान् सु-कृच्छ्रान् ॥ ४७ ॥

१५.४७av एते वर्गा दोष-दूष्याद्य् अवेक्ष्य १५.४७dv सेकालेपैर् घ्नन्ति रोगान् सु-कृच्छ्रान् १५.४७dv स्वेदाभ्यङ्गैर् घ्नन्ति रोगान् सु-कृच्छ्रान्

अध्यायः १६

गुरु-शीत-सर-स्निग्ध-मन्द-सूक्ष्म-मृदु-द्रवम् ।
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ १ ॥

सर्पिर् मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ २ ॥

माधुर्याद् अ-विदाहि-त्वाज् जन्माद्य् एव च शीलनात् ।
पित्त-घ्नास् ते यथा-पूर्वम् इतर-घ्ना यथोत्तरम् ॥ ३ ॥

घृतात् तैलं गुरु वसा तैलान् मज्जा ततो ऽपि च ।
द्वाभ्यां त्रिभिश् चतुर्भिस् तैर् यमकस् त्रि-वृतो महान् ॥ ४ ॥

स्वेद्य-संशोध्य-मद्य-स्त्री-व्यायामासक्त-चिन्तकाः ।
वृद्ध-बाला-बल-कृशा रूक्षाः क्षीणास्र-रेतसः ॥ ५ ॥

वातार्त-स्यन्द-तिमिर-दारुण-प्रतिबोधिनः ।
स्नेह्या न त्व् अति-मन्दाग्नि-तीक्ष्णाग्नि-स्थूल-दुर्-बलाः ॥ ६ ॥

ऊरु-स्तम्भातिसाराम-गल-रोग-गरोदरैः ।
मूर्छा-छर्द्य्-अ-रुचि-श्लेष्म-तृष्णा-मद्यैश् च पीडिताः ॥ ७ ॥

अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ।
तत्र धी-स्मृति-मेधादि-काङ्क्षिणां शस्यते घृतम् ॥ ८ ॥

१६.८cv तत्र धी-स्मृति-मेधाग्नि- ग्रन्थि-नाडी-कृमि-श्लेष्म-मेदो-मारुत-रोगिषु ।
तैलं लाघव-दार्ढ्यार्थि-क्रूर-कोष्ठेषु देहिषु ॥ ९ ॥

वातातपाध्व-भार-स्त्री-व्यायाम-क्षीण-धातुषु ।
रूक्ष-क्लेश-क्षमात्य्-अग्नि-वातावृत-पथेषु च ॥ १० ॥

शेषौ वसा तु संध्य्-अस्थि-मर्म-कोष्ठ-रुजासु च ।
तथा दग्धाहत-भ्रष्ट-योनि-कर्ण-शिरो-रुजि ॥ ११ ॥

तैलं प्रावृषि वर्षान्ते सर्पिर् अन्यौ तु माधवे ।
ऋतौ साधारणे स्नेहः शस्तो ऽह्नि वि-मले रवौ ॥ १२ ॥

तैलं त्वरायां शीते ऽपि घर्मे ऽपि च घृतं निशि ।
निश्य् एव पित्ते पवने संसर्गे पित्त-वत्य् अपि ॥ १३ ॥

निश्य् अन्य-था वात-कफाद् रोगाः स्युः पित्ततो दिवा ।
युक्त्यावचारयेत् स्नेहं भक्ष्याद्य्-अन्नेन वस्तिभिः ॥ १४ ॥

नस्याभ्यञ्जन-गण्डूष-मूर्ध-कर्णाक्षि-तर्पणैः ।
रस-भेदैकक-त्वाभ्यां चतुः-षष्टिर् विचारणाः ॥ १५ ॥

स्नेहस्यान्याभिभूत-त्वाद् अल्प-त्वाच् च क्रमात् स्मृताः ।
यथोक्त-हेत्व्-अ-भावाच् च नाच्छ-पेयो विचारणा ॥ १६ ॥

१६.१६av स्नेहस्यान्नाभिभूत-त्वाद् १६.१६dv नाच्छः पेयो विचारणा स्नेहस्य कल्पः स श्रेष्ठः स्नेह-कर्माशु-साधनात् ।
द्वाभ्यां चतुर्भिर् अष्टाभिर् यामैर् जीर्यन्ति याः क्रमात् ॥ १७ ॥

ह्रस्व-मध्योत्तमा मात्रास् तास् ताभ्यश् च ह्रसीयसीम् ।
कल्पयेद् वीक्ष्य दोषादीन् प्राग् एव तु ह्रसीयसीम् ॥ १८ ॥

ह्यस्तने जीर्ण एवान्ने स्नेहो ऽच्छः शुद्धये बहुः ।
शमनः क्षुद्-वतो ऽन्-अन्नो मध्य-मात्रश् च शस्यते ॥ १९ ॥

बृंहणो रस-मद्याद्यैः स-भक्तो ऽल्पो हितः स च ।
बाल-वृद्ध-पिपासार्त-स्नेह-द्विण्-मद्य-शीलिषु ॥ २० ॥

१६.२०bv स-भक्तो ऽल्पो हितश् च सः स्त्री-स्नेह-नित्य-मन्दाग्नि-सुखित-क्लेश-भीरुषु ।
मृदु-कोष्ठाल्प-दोषेषु काले चोष्णे कृशेषु च ॥ २१ ॥

प्राङ्-मध्योत्तर-भक्तो ऽसाव् अधो-मध्योर्ध्व-देह-जान् ।
व्याधीञ् जयेद् बलं कुर्याद् अङ्गानां च यथा-क्रमम् ॥ २२ ॥

वार्य् उष्णम् अच्छे ऽनुपिबेत् स्नेहे तत् सुख-पक्तये ।
आस्योपलेप-शुद्ध्यै च तौबरारुष्करे न तु ॥ २३ ॥

मूर्छा दाहो ऽ-रतिस् तृष्णा जृम्भा मोह-भ्रम-क्लमाः ।
भवन्ति जीर्यति स्नेहे जीर्णः स्यात् तैः शमं गतैः ॥ २३+१ ॥

जीर्णा-जीर्ण-विशङ्कायां पुनर् उष्णोदकं पिबेत् ।
तेनोद्गार-विशुद्धिः स्यात् ततश् च लघु-ता रुचिः ॥ २४ ॥

भोज्यो ऽन्नं मात्रया पास्यन् श्वः पिबन् पीत-वान् अपि ।
द्रवोष्णम् अन्-अभिष्यन्दि नाति-स्निग्धम् अ-संकरम् ॥ २५ ॥

उष्णोदकोपचारी स्याद् ब्रह्म-चारी क्षपाशयः ।
न वेग-रोधी व्यायाम-क्रोध-शोक-हिमातपान् ॥ २६ ॥

प्रवात-यान-यानाध्व-भाष्यात्य्-आसन-संस्थितीः ।
नीचात्य्-उच्चोपधानाहः-स्वप्न-धूम-रजांसि च ॥ २७ ॥

१६.२७bv -भाष्याभ्यासन-संस्थितीः १६.२७bv -भाष्यात्य्-अशन-संस्थितीः १६.२७bv -भाष्यात्य्-आशन-संस्थितीः यान्य् अहानि पिबेत् तानि तावन्त्य् अन्यान्य् अपि त्यजेत् ।
सर्व-कर्मस्व् अयं प्रायो व्याधि-क्षीणेषु च क्रमः ॥ २८ ॥

उपचारस् तु शमने कार्यः स्नेहे विरिक्त-वत् ।
त्र्य्-अहम् अच्छं मृदौ कोष्ठे क्रूरे सप्त-दिनं पिबेत् ॥ २९ ॥

सम्यक्-स्निग्धो ऽथ-वा यावद् अतः सात्म्यी-भवेत् परम् ।
वातानुलोम्यं दीप्तो ऽग्निर् वर्चः स्निग्धम् अ-संहतम् ॥ ३० ॥

स्नेहोद्वेगः क्लमः सम्यक्-स्निग्धे रूक्षे विपर्ययः ।
अति-स्निग्धे तु पाण्डु-त्वं घ्राण-वक्त्र-गुद-स्रवाः ॥ ३१ ॥

१६.३१av मृदु-स्निग्धाङ्ग-ता ग्लानिः १६.३१bv स्नेहोद्वेगो ऽथ लाघवम् १६.३१bv स्नेहोद्वेगो ऽङ्ग-लाघवम् १६.३१cv अति-स्निग्धे तु पाण्डु-त्व- १६.३१cv वि-मलेन्द्रिय-ता सम्यक्- १६.३१dv -घ्राण-वक्त्र-गुद-स्रवाः १६.३१dv -स्निग्धे रूक्षे विपर्ययः अ-मात्रया-हितो ऽ-काले मिथ्याहार-विहारतः ।
स्नेहः करोति शोफार्शस्-तन्द्रा-स्तम्भ-वि-संज्ञ-ताः ॥ ३२ ॥

कण्डू-कुष्ठ-ज्वरोत्क्लेश-शूलानाह-भ्रमादिकान् ।
क्षुत्-तृष्णोल्लेखन-स्वेद-रूक्ष-पानान्न-भेषजम् ॥ ३३ ॥

१६.३३bv -शूलानाह-बल-क्षयान् १६.३३cv क्षुत्-तृष्णोल्लेखनं स्वेदो १६.३३dv रूक्षं पानान्न-भेषजम् तक्रारिष्ट-खलोद्दाल-यव-श्यामाक-कोद्रवाः ।
पिप्पली-त्रि-फला-क्षौद्र-पथ्या-गो-मूत्र-गुग्गुलु ॥ ३४ ॥

१६.३४av तक्रारिष्टं खलोद्दाल- १६.३४bv -यव-श्यामाक-कोद्रवम् यथा-स्वं प्रति-रोगं च स्नेह-व्यापदि साधनम् ।
विरूक्षणे लङ्घन-वत् कृतातिकृत-लक्षणम् ॥ ३५ ॥

स्निग्ध-द्रवोष्ण-धन्वोत्थ-रस-भुक् स्वेदम् आचरेत् ।
स्निग्धस् त्र्य्-अहं स्थितः कुर्याद् विरेकं वमनं पुनः ॥ ३६ ॥

१६.३६bv -रस-भुक् स्वेदम् आचरन् एकाहं दिनम् अन्यच् च कफम् उत्क्लेश्य तत्-करैः ।
मांसला मेदुरा भूरि-श्लेष्माणो विषमाग्नयः ॥ ३७ ॥

स्नेहोचिताश् च ये स्नेह्यास् तान् पूर्वं रूक्षयेत् ततः ।
संस्नेह्य शोधयेद् एवं स्नेह-व्यापन् न जायते ॥ ३८ ॥

अलं मलान् ईरयितुं स्नेहश् चा-सात्म्य-तां गतः ।
बाल-वृद्धादिषु स्नेह-परिहारा-सहिष्णुषु ॥ ३९ ॥

योगान् इमान् अन्-उद्वेगान् सद्यः-स्नेहान् प्रयोजयेत् ।
प्राज्य-मांस-रसास् तेषु पेया वा स्नेह-भर्जिता ॥ ४० ॥

१६.४०dv पेया वा स्नेह-भर्जिताः तिल-चूर्णश् च स-स्नेह-फाणितः कृशरा तथा ।
क्षीर-पेया घृताढ्योष्णा दध्नो वा स-गुडः सरः ॥ ४१ ॥

१६.४१av तिल-चूर्णं च स-स्नेह- १६.४१bv -फाणितं कृशरा तथा पेया च पञ्च-प्रसृता स्नेहैस् तण्डुल-पञ्चमैः ।
सप्तैते स्नेहनाः सद्यः स्नेहाश् च लवणोल्बणाः ॥ ४२ ॥

१६.४२dv स्नेहश् च लवणोल्बणः तद् ध्य् अभिष्यन्द्य् अ-रूक्षं च सूक्ष्मम् उष्णं व्यवायि च ।
गुडानूपामिष-क्षीर-तिल-माष-सुरा-दधि ॥ ४३ ॥

१६.४३av तद् धि विष्यन्द्य् अ-रूक्षं च कुष्ठ-शोफ-प्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ।
त्रि-फला-पिप्पली-पथ्या-गुग्गुल्व्-आदि-विपाचितान् ॥ ४४ ॥

स्नेहान् यथा-स्वम् एतेषां योजयेद् अ-विकारिणः ।
क्षीणानां त्व् आमयैर् अग्नि-देह-संधुक्षण-क्षमान् ॥ ४५ ॥

१६.४५av क्षीणानाम् आमयैर् अग्नि- दीप्तान्तराग्निः परिशुद्ध-कोष्ठः प्रत्यग्र-धातुर् बल-वर्ण-युक्तः ।
दृढेन्द्रियो मन्द-जरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ४६ ॥

अध्यायः १७

स्वेदस् तापोपनाहोष्म-द्रव-भेदाच् चतुर्-विधः ।
तापो ऽग्नि-तप्त-वसन-फाल-हस्त-तलादिभिः ॥ १ ॥

उपनाहो वचा-किण्व-शताह्वा-देवदारुभिः ।
धान्यैः समस्तैर् गन्धैश् च रास्नैरण्ड-जटामिषैः ॥ २ ॥

उद्रिक्त-लवणैः स्नेह-चुक्र-तक्र-पयः-प्लुतैः ।
केवले पवने श्लेष्म-संसृष्टे सुरसादिभिः ॥ ३ ॥

पित्तेन पद्मकाद्यैस् तु शाल्वणाख्यैः पुनः पुनः ।
स्निग्धोष्ण-वीर्यैर् मृदुभिश् चर्म-पट्टैर् अ-पूतिभिः ॥ ४ ॥

१७.४av पित्तेन पद्मकाद्यैश् च १७.४bv शाल्वलाख्यैः पुनः पुनः अ-लाभे वात-जित् पत्र-कौशेयाविक-शाटकैः ।
बद्धं रात्रौ दिवा मुञ्चेन् मुञ्चेद् रात्रौ दिवा-कृतम् ॥ ५ ॥

ऊष्मा तूत्कारिका-लोष्ट-कपालोपल-पांसुभिः ।
पत्र-भङ्गेन धान्येन करीष-सिकता-तुषैः ॥ ६ ॥

अनेकोपाय-संतप्तैः प्रयोज्यो देश-कालतः ।
शिग्रु-वारणकैरण्ड-करञ्ज-सुरसार्जकात् ॥ ७ ॥

शिरीष-वासा-वंशार्क-मालती-दीर्घवृन्ततः ।
पत्र-भङ्गैर् वचाद्यैश् च मांसैश् चानूप-वारि-जैः ॥ ८ ॥

दश-मूलेन च पृथक् सहितैर् वा यथा-मलम् ।
स्नेह-वद्भिः सुरा-शुक्त-वारि-क्षीरादि-साधितैः ॥ ९ ॥

कुम्भीर् गलन्तीर् नाडीर् वा पूरयित्वा रुजार्दितम् ।
वाससाच्छादितं गात्रं स्निग्धं सिञ्चेद् यथा-सुखम् ॥ १० ॥

१७.१०cv वस्त्रावच्छादितं गात्रं तैर् एव वा द्रवैः पूर्णं कुण्डं सर्वाङ्ग-गे ऽनिले ।
अवगाह्यातुरस् तिष्ठेद् अर्शः-कृच्छ्रादि-रुक्षु च ॥ ११ ॥

निवाते ऽन्तर्-बहिः-स्निग्धो जीर्णान्नः स्वेदम् आचरेत् ।
व्याधि-व्याधित-देशर्तु-वशान् मध्य-वरावरम् ॥ १२ ॥

१७.१२av निर्-वाते ऽन्तर्-बहिः-स्निग्धो कफार्तो रूक्षणं रूक्षो रूक्षः स्निग्धं कफानिले ।
आमाशय-गते वायौ कफे पक्वाशयाश्रिते ॥ १३ ॥

१७.१३av कफे तं रूक्षणै रूक्षो रूक्ष-पूर्वं तथा स्नेह-पूर्वं स्थानानुरोधतः ।
अल्पं वङ्क्षणयोः स्व्-अल्पं दृङ्-मुष्क-हृदये न वा ॥ १४ ॥

१७.१४cv अल्पं वङ्क्षणयोः स्वेदं शीत-शूल-क्षये स्विन्नो जाते ऽङ्गानां च मार्दवे ।
स्याच् छनैर् मृदितः स्नातस् ततः स्नेह-विधिं भजेत् ॥ १५ ॥

पित्तास्र-कोप-तृण्-मूर्छा-स्वराङ्ग-सदन-भ्रमाः ।
संधि-पीडा ज्वरः श्याव-रक्त-मण्डल-दर्शनम् ॥ १६ ॥

स्वेदाति-योगाच् छर्दिश् च तत्र स्तम्भनम् औषधम् ।
विष-क्षाराग्न्य्-अतीसार-च्छर्दि-मोहातुरेषु च ॥ १७ ॥

स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तम्भनम् अन्य-था ।
द्रव-स्थिर-सर-स्निग्ध-रूक्ष-सूक्ष्मं च भेषजम् ॥ १८ ॥

स्वेदनं स्तम्भनं श्लक्ष्णं रूक्ष-सूक्ष्म-सर-द्रवम् ।
प्रायस् तिक्तं कषायं च मधुरं च समासतः ॥ १९ ॥

स्तम्भितः स्याद् बले लब्धे यथोक्तामय-संक्षयात् ।
स्तम्भ-त्वक्-स्नायु-संकोच-कम्प-हृद्-वाग्-घनु-ग्रहैः ॥ २० ॥

पादौष्ठ-त्वक्-करैः श्यावैर् अति-स्तम्भितम् आदिशेत् ।
न स्वेदयेद् अति-स्थूल-रूक्ष-दुर्-बल-मूर्छितान् ॥ २१ ॥

स्तम्भनीय-क्षत-क्षीण-क्षाम-मद्य-विकारिणः ।
तिमिरोदर-वीसर्प-कुष्ठ-शोषाढ्य-रोगिणः ॥ २२ ॥

१७.२२dv -कुष्ठ-शोफाढ्य-रोगिणः पीत-दुग्ध-दधि-स्नेह-मधून् कृत-विरेचनान् ।
भ्रष्ट-दग्ध-गुद-ग्लानि-क्रोध-शोक-भयार्दितान् ॥ २३ ॥

१७.२३dv -क्रोध-शोक-भयान्वितान् १७.२३dv -क्रोध-रक्त-क्षयान्वितान् क्षुत्-तृष्णा-कामला-पाण्डु-मेहिनः पित्त-पीडितान् ।
गर्भिणीं पुष्पितां सूतां मृदु चात्ययिके गदे ॥ २४ ॥

१७.२४dv मृदु त्व् आत्ययिके गदे श्वास-कास-प्रतिश्याय-हिध्माध्मान-विबन्धिषु ।
स्वर-भेदानिल-व्याधि-श्लेष्माम-स्तम्भ-गौरवे ॥ २५ ॥

अङ्ग-मर्द-कटी-पार्श्व-पृष्ठ-कुक्षि-हनु-ग्रहे ।
महत्-त्वे मुष्कयोः खल्याम् आयामे वात-कण्टके ॥ २६ ॥

मूत्र-कृच्छ्रार्बुद-ग्रन्थि-शुक्राघाताढ्य-मारुते ।
स्वेदं यथा-यथं कुर्यात् तद्-औषध-विभागतः ॥ २७ ॥

स्वेदो हितस् त्व् अन्-आग्नेयो वाते मेदः-कफावृते ।
निवातं गृहम् आयासो गुरु-प्रावरणं भयम् ॥ २८ ॥

उपनाहाहव-क्रोधा भूरि-पानं क्षुधातपः ॥ २८॑ ॥
१७.२८॑अव् उपनाहाहव-क्रोध- १७.२८॑ब्व् -भूरि-पानं क्षुधातपः १७.२८॑ब्व् भूरि-पान-क्षुद्-आतपः स्वेदयन्ति दशैतानि नरम् अग्नि-गुणाद् ऋते ॥ २८॑+१ ॥

स्नेह-क्लिन्नाः कोष्ठ-गा धातु-गा वा स्रोतो-लीना ये च शाखास्थि-संस्थाः ।
दोषाः स्वेदैस् ते द्रवी-कृत्य कोष्ठं नीताः सम्यक् शुद्धिभिर् निर्ह्रियन्ते ॥ २९ ॥

अध्यायः १८

कफे विदध्याद् वमनं संयोगे वा कफोल्बणे ।
तद्-वद् विरेचनं पित्ते विशेषेण तु वामयेत् ॥ १ ॥

नव-ज्वरातिसाराधः-पित्तासृग्-राज-यक्ष्मिणः ।
कुष्ठ-मेहापची-ग्रन्थि-श्लीपदोन्माद-कासिनः ॥ २ ॥

श्वास-हृल्-लास-वीसर्प-स्तन्य-दोषोर्ध्व-रोगिणः ।
अ-वाम्या गर्भिणी रूक्षः क्षुधितो नित्य-दुःखितः ॥ ३ ॥

१८.३bv -स्तन्य-रोगोर्ध्व-रोगिणः १८.३cv अ-वाम्या गर्भिणी-रूक्ष- १८.३dv -क्षुधिता नित्य-दुःखिताः बाल-वृद्ध-कृश-स्थूल-हृद्-रोगि-क्षत-दुर्-बलाः ।
प्रसक्त-वमथु-प्लीह-तिमिर-कृमि-कोष्ठिनः ॥ ४ ॥

ऊर्ध्व-प्रवृत्त-वाय्व्-अस्र-दत्त-वस्ति-हत-स्वराः ।
मूत्राघात्य् उदरी गुल्मी दुर्-वमो ऽत्य्-अग्निर् अर्शसः ॥ ५ ॥

१८.५av ऊर्ध्व-प्रवृत्त-वातास्र- उदावर्त-भ्रमाष्ठीला-पार्श्व-रुग्-वात-रोगिणः ।
ऋते विष-गरा-जीर्ण-विरुद्धाभ्यवहारतः ॥ ६ ॥

१८.६av उदावर्त-श्रमाष्ठीला- प्रसक्त-वमथोः पूर्वे प्रायेणाम-ज्वरो ऽपि च ।
धूमान्तैः कर्मभिर् वर्ज्याः सर्वैर् एव त्व् अ-जीर्णिनः ॥ ७ ॥

विरेक-साध्या गुल्मार्शो-विस्फोट-व्यङ्ग-कामलाः ।
जीर्ण-ज्वरोदर-गर-च्छर्दि-प्लीह-हलीमकाः ॥ ८ ॥

१८.८cv जीर्ण-ज्वरोदर-च्छर्दि- १८.८dv -प्लीहानाह-हलीमकाः १८.८dv -प्लीह-पाण्डु-हलीमकाः विद्रधिस् तिमिरं काचः स्यन्दः पक्वाशय-व्यथा ।
योनि-शुक्राश्रया रोगाः कोष्ठ-गाः कृमयो व्रणाः ॥ ९ ॥

१८.९cv योनि-शुक्र-गता रोगाः १८.९cv योनि-शुक्राशया रोगाः वातास्रम् ऊर्ध्व-गं रक्तं मूत्राघातः शकृद्-ग्रहः ।
वाम्यश् च कुष्ठ-मेहाद्या न तु रेच्या नव-ज्वरी ॥ १० ॥

१८.१०av वातासृग् ऊर्ध्व-गं रक्तं १८.१०dv न तु रेच्यो नव-ज्वरी अल्पाग्न्य्-अधो-ग-पित्तास्र-क्षत-पाय्व्-अतिसारिणः ।
स-शल्यास्थापित-क्रूर-कोष्ठाति-स्निग्ध-शोषिणः ॥ ११ ॥

१८.११cv स-शल्याभिहत-क्रूर- अथ साधारणे काले स्निग्ध-स्विन्नं यथा-विधि ।
श्वो-वम्यम् उत्क्लिष्ट-कफं मत्स्य-माष-तिलादिभिः ॥ १२ ॥

१८.१२dv मत्स्य-मांस-तिलादिभिः १८.१२dv मांस-माष-तिलादिभिः निशां सुप्तं सु-जीर्णान्नं पूर्वाह्णे कृत-मङ्गलम् ।
निर्-अन्नम् ईषत्-स्निग्धं वा पेयया पीत-सर्पिषम् ॥ १३ ॥

१८.१३av निशां सुप्तं च जीर्णान्नं वृद्ध-बाला-बल-क्लीब-भीरून् रोगानुरोधतः ।
आ-कण्ठं पायितान् मद्यं क्षीरम् इक्षु-रसं रसम् ॥ १४ ॥

१८.१४cv आ-कण्ठं पाययेन् मद्यं यथा-विकार-विहितां मधु-सैन्धव-संयुताम् ।
कोष्ठं विभज्य भैषज्य-मात्रां मन्त्राभिमन्त्रिताम् ॥ १५ ॥

ब्रह्म-दक्षाश्वि-रुद्रेन्द्र-भू-चन्द्रार्कानिलानलाः ।
ऋषयः सौषधि-ग्रामा भूत-संघाश् च पान्तु वः ॥ १६ ॥

रसायनम् इवर्षीणाम् अ-मराणाम् इवामृतम् ।
सुधेवोत्तम-नागानां भैषज्यम् इदम् अस्तु ते ॥ १७ ॥

१८.१७av रसायनम् इवर्षीणां १८.१७bv देवानाम् अमृतं यथा नमो भग-वते भैषज्य-गुरवे वैडूर्य-प्रभ-राजाय ॥ १७+१ ॥

तथा-गतायार्हते सम्यक्-संबुद्धाय ॥ १७+२ ॥

तद् यथा ॥ १७+३ ॥

भैषज्ये भैषज्ये महा-भैषज्ये समुद्गते स्वाहा ॥ १७+४ ॥

१८.१७+४व् भैषज्ये भैषज्ये महा-भैषज्ये भैषज्य-समुद्गते स्वाहा १८.१७+४व् भैषज्ये महा-भैषज्ये समुद्गते स्वाहा प्राङ्-मुखं पाययेत् पीतो मुहूर्तम् अनुपालयेत् ।
तन्-मना जात-हृल्-लास-प्रसेकश् छर्दयेत् ततः ॥ १८ ॥

१८.१८av प्राङ्-मुखं पाययेत् पीतं १८.१८av प्राङ्-मुखं पाययेत् पीते १८.१८dv -प्रसेकं छर्दयेत् ततः अङ्गुलीभ्याम् अन्-आयस्तो नालेन मृदुनाथ-वा ।
गल-ताल्व् अ-रुजन् वेगान् अ-प्रवृत्तान् प्रवर्तयन् ॥ १९ ॥

१८.१९dv ना-प्रवृत्तान् प्रवर्तयन् १८.१९dv ना-प्रवृत्तान् प्रवर्तयेत् १८.१९dv अ-प्रवृत्तान् प्रवर्तयेत् प्रवर्तयन् प्रवृत्तांश् च जानु-तुल्यासने स्थितः ।
उभे पार्श्वे ललाटं च वमतश् चास्य धारयेत् ॥ २० ॥

प्रपीडयेत् तथा नाभिं पृष्ठं च प्रतिलोमतः ।
कफे तीक्ष्णोष्ण-कटुकैः पित्ते स्वादु-हिमैर् इति ॥ २१ ॥

वमेत् स्निग्धाम्ल-लवणैः संसृष्टे मरुता कफे ।
पित्तस्य दर्शनं यावच् छेदो वा श्लेष्मणो भवेत् ॥ २२ ॥

हीन-वेगः कणा-धात्री-सिद्धार्थ-लवणोदकैः ।
वमेत् पुनः पुनस् तत्र वेगानाम् अ-प्रवर्तनम् ॥ २३ ॥

प्रवृत्तिः स-विबन्धा वा केवलस्यौषधस्य वा ।
अ-योगस् तेन निष्ठीव-कण्डू-कोठ-ज्वरादयः ॥ २४ ॥

निर्-विबन्धं प्रवर्तन्ते कफ-पित्तानिलाः क्रमात् ।
सम्यग्-योगे ऽति-योगे तु फेन-चन्द्रक-रक्त-वत् ॥ २५ ॥

१८.२५dv फेन-चन्द्रिक-रक्त-वत् मनः-प्रसादः स्वास्थ्यं चावस्थानं च स्वयं भवेत् ।
वैपरीत्यम् अ-योगानां न चाति-महती व्यथा ॥ २५.१+(१) ॥
१८.२५.१+(१)अव् मनः-प्रसादः स्वास्थ्यं च १८.२५.१+(१)ब्व् अवस्थानं स्वयं भवेत् वमितं क्षाम-ता दाहः कण्ठ-शोषस् तमो भ्रमः ।
घोरा वाय्व्-आमया मृत्युर् जीव-शोणित-निर्गमात् ॥ २६ ॥

सम्यग्-योगेन वमितं क्षणम् आश्वास्य पाययेत् ।
धूम-त्रयस्यान्य-तमं स्नेहाचारम् अथादिशेत् ॥ २७ ॥

ततः सायं प्रभाते वा क्षुद्-वान् स्नातः सुखाम्बुना ।
भुञ्जानो रक्त-शाल्य्-अन्नं भजेत् पेयादिकं क्रमम् ॥ २८ ॥

१८.२८cv पुराण-रक्त-शालीनाम् १८.२८cv भुञ्जानो ऽन्नम् अपेक्षेत १८.२८dv अ-स्नेह-लवणोषणम् १८.२८dv पेयादिकम् इमं क्रमम् १८.२८dv पेयादिकम् इमं क्रमात् १८.२८dv पेयादिकम् अमुं क्रमम् पेयां विलेपीम् अ-कृतं कृतं च यूषं रसं त्रीन् उभयं तथैकम् ।
क्रमेण सेवेत नरो ऽन्न-कालान् प्रधान-मध्यावर-शुद्धि-शुद्धः ॥ २९ ॥

यथाणुर् अग्निस् तृण-गो-मयाद्यैः संधुक्ष्यमाणो भवति क्रमेण ।
महान् स्थिरः सर्व-पचस् तथैव शुद्धस्य पेयादिभिर् अन्तराग्निः ॥ ३० ॥

१८.३०dv शुद्धस्य पेयादिभिर् अन्तर्-अग्निः जघन्य-मध्य-प्रवरे तु वेगाश् चत्वार इष्टा वमने षड् अष्टौ ।
दशैव ते द्वि-त्रि-गुणा विरेके प्रस्थस् तथा स्याद् द्वि-चतुर्-गुणश् च ॥ ३१ ॥

पित्तावसानं वमनं विरेकाद् अर्धं कफान्तं च विरेकम् आहुः ।
द्वि-त्रान् स-विट्कान् अपनीय वेगान् मेयं विरेके वमने तु पीतम् ॥ ३२ ॥

अथैनं वामितं भूयः स्नेह-स्वेदोपपादितम् ।
श्लेष्म-काले गते ज्ञात्वा कोष्ठं सम्यग् विरेचयेत् ॥ ३३ ॥

बहु-पित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते ।
प्रभूत-मारुतः क्रूरः कृच्छ्राच् छ्यामादिकैर् अपि ॥ ३४ ॥

कषाय-मधुरैः पित्ते विरेकः कटुकैः कफे ।
स्निग्धोष्ण-लवणैर् वायाव् अ-प्रवृत्तौ तु पाययेत् ॥ ३५ ॥

उष्णाम्बु स्वेदयेद् अस्य पाणि-तापेन चोदरम् ।
उत्थाने ऽल्पे दिने तस्मिन् भुक्त्वान्ये-द्युः पुनः पिबेत् ॥ ३६ ॥

अ-दृढ-स्नेह-कोष्ठस् तु पिबेद् ऊर्ध्वं दशाहतः ।
भूयो ऽप्य् उपस्कृत-तनुः स्नेह-स्वेदैर् विरेचनम् ॥ ३७ ॥

यौगिकं सम्यग् आलोच्य स्मरन् पूर्वम् अतिक्रमम् ।
हृत्-कुक्ष्य्-अ-शुद्धिर् अ-रुचिर् उत्क्लेशः श्लेष्म-पित्तयोः ॥ ३८ ॥

१८.३८bv स्मरन् पूर्वम् अनुक्रमम् कण्डू-विदाहः पिटिकाह् पीनसो वात-विड्-ग्रहः ।
अ-योग-लक्षणं योगो वैपरीत्ये यथोदितात् ॥ ३९ ॥

१८.३९av कण्डू-विदाहः पिटिका विट्-पित्त-कफ-वातेषु निःसृतेषु क्रमात् स्रवेत् ।
निः-श्लेष्म-पित्तम् उदकं श्वेतं कृष्णं स-लोहितम् ॥ ४० ॥

मांस-धावन-तुल्यं वा मेदः-खण्डाभम् एव वा ।
गुद-निःसरणं तृष्णा भ्रमो नेत्र-प्रवेशनम् ॥ ४१ ॥

१८.४१dv श्रमो नेत्र-प्रवेशनम् भवन्त्य् अति-विरिक्तस्य तथाति-वमनामयाः ।
सम्यग्-विरिक्तम् एनं च वमनोक्तेन योजयेत् ॥ ४२ ॥

धूम-वर्ज्येन विधिना ततो वमित-वान् इव ।
क्रमेणान्नानि भुञ्जानो भजेत् प्रकृति-भोजनम् ॥ ४३ ॥

मन्द-वह्निम् अ-संशुद्धम् अ-क्षामं दोष-दुर्-बलम् ।
अ-दृष्ट-जीर्ण-लिङ्गं च लङ्घयेत् पीत-भेषजम् ॥ ४४ ॥

स्नेह-स्वेदौषधोत्क्लेश-सङ्गैर् इति न बाध्यते ।
संशोधनास्र-विस्राव-स्नेह-योजन-लङ्घनैः ॥ ४५ ॥

यात्य् अग्निर् मन्द-तां तस्मात् क्रमं पेयादिम् आचरेत् ।
स्रुताल्प-पित्त-श्लेष्माणं मद्य-पं वात-पैत्तिकम् ॥ ४६ ॥

पेयां न पाययेत् तेषां तर्पणादि-क्रमो हितः ।
अ-पक्वं वमनं दोशान् पच्यमानं विरेचनम् ॥ ४७ ॥

१८.४७bv तर्पणादिः क्रमो हितः १८.४७bv तर्पणादिः क्रमो मतः १८.४७bv तर्पणादि-क्रमो मतः निर्हरेद् वमनस्यातः पाकं न प्रतिपालयेत् ।
दुर्-बलो बहु-दोषश् च दोष-पाकेन यः स्वयम् ॥ ४८ ॥

विरिच्यते भेदनीयैर् भोज्यैस् तम् उपपादयेत् ।
दुर्-बलः शोधितः पूर्वम् अल्प-दोषः कृशो नरः ॥ ४९ ॥

१८.४९bv भोज्यैस् तं समुपाचरेत् अ-परिज्ञात-कोष्ठश् च पिबेन् मृद्व् अल्पम् औषधम् ।
वरं तद् अ-सकृत्-पीतम् अन्य-था संशयावहम् ॥ ५० ॥

१८.५०av वरं तद् अ-सकृत्-पीतं १८.५०bv नान्य-था संशयावहम् हरेद् बहूंश् चलान् दोषान् अल्पान् अल्पान् पुनः पुनः ।
दुर्-बलस्य मृदु-द्रव्यैर् अल्पान् संशमयेत् तु तान् ॥ ५१ ॥

क्लेशयन्ति चिरं ते हि हन्युर् वैनम् अ-निर्हृताः ।
मन्दाग्निं क्रूर-कोष्ठं च स-क्षार-लवणैर् घृतैः ॥ ५२ ॥

१८.५२bv हन्युश् चैनम् अ-निर्हृताः संधुक्षिताग्निं विजित-कफ-वातं च शोधयेत् ।
रूक्ष-बह्व्-अनिल-क्रूर-कोष्ठ-व्यायाम-शीलिनाम् ॥ ५३ ॥

दीप्ताग्नीनां च भैषज्यम् अ-विरेच्यैव जीर्यति ।
तेभ्यो वस्तिं पुरा दद्यात् ततः स्निग्धं विरेचनम् ॥ ५४ ॥

१८.५४cv तेभ्यो वस्तिं पुरो दद्यात् शकृन् निर्हृत्य वा किञ्-चित् तीक्ष्णाभिः फल-वर्तिभिः ।
प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत् सुखम् ॥ ५५ ॥

विषाभिघात-पिटिका-कुष्ठ-शोफ-विसर्पिणः ।
कामला-पाण्डु-मेहार्तान् नाति-स्निग्धान् विशोधयेत् ॥ ५६ ॥

१८.५६dv नाति-स्निग्धान् विरेचयेत् सर्वान् स्नेह-विरेकैश् च रूक्षैस् तु स्नेह-भावितान् ।
कर्मणां वमनादीनां पुनर् अप्य् अन्तरे ऽन्तरे ॥ ५७ ॥

१८.५७bv रूक्षैश् च स्नेह-भावितान् स्नेह-स्वेदौ प्रयुञ्जीत स्नेहम् अन्ते बलाय च ।
मलो हि देहाद् उत्क्लेश्य ह्रियते वाससो यथा ॥ ५८ ॥

स्नेह-स्वेदैस् तथोत्क्लिष्टः शोध्यते शोधनैर् मलः ।
स्नेह-स्वेदाव् अन्-अभ्यस्य कुर्यात् संशोधनं तु यः ॥ ५९ ॥

१८.५९av स्नेह-स्वेदैस् तथोत्क्लेश्य १८.५९bv ह्रियते शोधनैर् मलः दारु शुष्कम् इवान्-आमे शरीरं तस्य दीर्यते ॥ ५९□अब् ॥
बुद्धि-प्रसादं बलम् इन्द्रियाणां धातु-स्थिर-त्वं ज्वलनस्य दीप्तिम् ।
चिराच् च पाकं वयसः करोति संशोधनं सम्यग्-उपास्यमानम् ॥ ६०□ ॥
१८.६०□अव् बुद्धेः प्रसादं बलम् इन्द्रियाणां १८.६०□ब्व् धातोः स्थिर-त्वं ज्वलनस्य दीप्तिम्

अध्यायः १९

वातोल्बणेषु दोषेषु वाते वा वस्तिर् इष्यते ।
उपक्रमाणां सर्वेषां सो ऽग्रणीस् त्रि-विधस् तु सः ॥ १ ॥

१९.१dv सो ऽग्रणीस् त्रि-विधश् च सः निरूहो ऽन्वासनं वस्तिर् उत्तरस् तेन साधयेत् ।
गुल्मानाह-खुड-प्लीह-शुद्धातीसार-शूलिनः ॥ २ ॥

जीर्ण-ज्वर-प्रतिश्याय-शुक्रानिल-मल-ग्रहान् ।
वर्ध्माश्मरी-रजो-नाशान् दारुणांश् चानिलामयान् ॥ ३ ॥

अन्-आस्थाप्यास् त्व् अति-स्निग्धः क्षतोरस्को भृशं कृशः ।
आमातीसारी वमि-मान् संशुद्धो दत्त-नावनः ॥ ४ ॥

श्वास-कास-प्रसेकार्शो-हिध्माध्मानाल्प-वह्नयः ।
शून-पायुः कृताहारो बद्ध-च्छिद्रोदकोदरी ॥ ५ ॥

१९.५dv बद्ध-च्छिद्र-दकोदरी कुष्ठी च मधु-मेही च मासान् सप्त च गर्भिणी ।
आस्थाप्या एव चान्वास्या विशेषाद् अति-वह्नयः ॥ ६ ॥

रूक्षाः केवल-वातार्ता नानुवास्यास् त एव च ।
ये ऽन्-आस्थाप्यास् तथा पाण्डु-कामला-मेह-पीनसाः ॥ ७ ॥

निर्-अन्न-प्लीह-विड्-भेदि-गुरु-कोष्ठ-कफोदराः ।
अभिष्यन्दि-भृश-स्थूल-कृमि-कोष्ठाढ्य-मारुताः ॥ ८ ॥

१९.८bv -गुरु-कोष्ठः कफोदरी १९.८cv अभिष्यन्दि-कृश-स्थूल- पीते विषे गरे ऽपच्यां श्लीपदी गल-गण्ड-वान् ।
तयोस् तु नेत्रं हेमादि-धातु-दार्व्-अस्थि-वेणु-जम् ॥ ९ ॥

गो-पुच्छाकारम् अ-च्छिद्रं श्लक्ष्णर्जु गुटिका-मुखम् ।
ऊने ऽब्दे पञ्च पूर्णे ऽस्मिन्न् आ-सप्तभ्यो ऽङ्गुलानि षट् ॥ १० ॥

सप्तमे सप्त तान्य् अष्टौ द्वा-दशे षो-डशे नव ।
द्वा-दशैव परं विंशाद् वीक्ष्य वर्षान्तरेषु च ॥ ११ ॥

वयो-बल-शरीराणि प्रमाणम् अभिवर्धयेत् ।
स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ॥ १२ ॥

पूर्णे ऽब्दे ऽङ्गुलम् आदाय तद्-अर्धार्ध-प्रवर्धितम् ।
त्र्य्-अङ्गुलं परमं छिद्रं मूले ऽग्रे वहते तु यत् ॥ १३ ॥

मुद्गं माषं कलायं च क्लिन्नं कर्कन्धुकं क्रमात् ।
मूल-च्छिद्र-प्रमाणेन प्रान्ते घटित-कर्णिकम् ॥ १४ ॥

वर्त्याग्रे पिहितं मूले यथा-स्वं द्व्य्-अङ्गुलान्तरम् ।
कर्णिका-द्वितयं नेत्रे कुर्यात् तत्र च योजयेत् ॥ १५ ॥

१९.१५bv यथा-स्वं द्व्य्-अङ्गुलान्तरे १९.१५dv कुर्यात् तत्र प्रयोजयेत् १९.१५dv कुर्यात् तत्र तु योजयेत् अजावि-महिषादीनां वस्तिं सु-मृदितं दृढम् ।
कषाय-रक्तं निश्-छिद्र-ग्रन्थि-गन्ध-सिरं तनुम् ॥ १६ ॥

१९.१६av गो-ऽजावि-महिषादीनां ग्रथितं साधु सूत्रेण सुख-संस्थाप्य-भेषजम् ।
वस्त्य्-अ-भावे ऽङ्क-पादं वा न्यसेद् वासो ऽथ-वा घनम् ॥ १७ ॥

१९.१७av ग्रन्थितं साधु सूत्रेण निरूह-मात्रा प्रथमे प्रकुञ्चो वत्सरे परम् ।
प्रकुञ्च-वृद्धिः प्रत्य्-अब्दं यावत् षट् प्रसृतास् ततः ॥ १८ ॥

१९.१८bv प्रकुञ्चो वत्सरात् परम् प्रसृतं वर्धयेद् ऊर्ध्वं द्वा-दशाष्टा-दशस्य तु ।
आ-सप्ततेर् इदं मानं दशैव प्रसृताः परम् ॥ १९ ॥

१९.१९bv द्वा-दशाष्टा-दशस्य च यथा-यथं निरूहस्य पादो मात्रानुवासने ।
आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्ध-बलं पुनः ॥ २० ॥

अन्वासनार्हं विज्ञाय पूर्वम् एवानुवासयेत् ।
शीते वसन्ते च दिवा रात्रौ के-चित् ततो ऽन्य-दा ॥ २१ ॥

१९.२१dv रात्रौ के-चित् ततो ऽन्य-था अभ्यक्त-स्नातम् उचितात् पाद-हीनं हितं लघु ।
अ-स्निग्ध-रूक्षम् अशितं सानु-पानं द्रवादि च ॥ २२ ॥

१९.२२dv सानु-पानं द्रवादि वा कृत-चङ्क्रमणं मुक्त-विण्-मूत्रं शयने सुखे ।
नात्य्-उच्छ्रिते न चोच्-छीर्षे संविष्टं वाम-पार्श्वतः ॥ २३ ॥

संकोच्य दक्षिणं सक्थि प्रसार्य च ततो ऽपरम् ।
अथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्ध-मुखं गुदे ॥ २४ ॥

१९.२४dv स्निग्धं स्निग्ध-मुखे गुदे उच्छ्वास्य वस्तेर् वदने बद्धे हस्तम् अ-कम्पयन् ।
पृष्ठ-वंशं प्रति ततो नाति-द्रुत-विलम्बितम् ॥ २५ ॥

नाति-वेगं न वा मन्दं सकृद् एव प्रपीडयेत् ।
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २६ ॥

१९.२६cv सावशेषं प्रकुर्वीत दत्ते तूत्तान-देहस्य पाणिना ताडयेत् स्फिजौ ।
तत्-पार्ष्णिभ्यां तथा शय्यां पादतश् च त्रिर् उत्क्षिपेत् ॥ २७ ॥

ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्यान् मुष्टिनाङ्गं च स्नेहेनाभ्यज्य मर्दयेत् ॥ २८ ॥

वेदनार्तम् इति स्नेहो न हि शीघ्रं निवर्तते ।
योज्यः शीघ्रं निवृत्ते ऽन्यः स्नेहो ऽ-तिष्ठन्न् अ-कार्य-कृत् ॥ २९ ॥

दीप्ताग्निं त्व् आगत-स्नेहं सायाह्ने भोजयेल् लघु ।
निवृत्ति-कालः परमस् त्रयो यामस् ततः परम् ॥ ३० ॥

अहो-रात्रम् उपेक्षेत परतः फल-वर्तिभिः ।
तीक्ष्णैर् वा वस्तिभिः कुर्याद् यत्नं स्नेह-निवृत्तये ॥ ३१ ॥

अति-रौक्ष्याद् अन्-आगच्छन् न चेज् जाड्यादि-दोष-कृत् ।
उपेक्षेतैव हि ततो ऽध्युषितश् च निशां पिबेत् ॥ ३२ ॥

प्रातर् नागर-धान्याम्भः कोष्णं केवलम् एव वा ।
अन्वासयेत् तृतीये ऽह्नि पञ्चमे वा पुनश् च तम् ॥ ३३ ॥

यथा वा स्नेह-पक्तिः स्याद् अतो ऽत्य्-उल्बण-मारुतान् ।
व्यायाम-नित्यान् दीप्ताग्नीन् रूक्षांश् च प्रति-वासरम् ॥ ३४ ॥

आध्मान-संकोच-पुरीष-बन्ध-क्षीणेन्द्रिय-त्वा-रुचि-भङ्ग-शूलाः ।
पाङ्गुल्य-शाखाश्रित-वात-भग्न-बन्धाश् च साध्या ह्य् अनुवासनेन ॥ ३४+१ ॥

१९.३४+१dv -वाताश् च साध्या ह्य् अनुवासनेन इति स्नेहैस् त्रि-चतुरैः स्निग्धे स्रोतो-विशुद्धये ।
निरूहं शोधनं युञ्ज्याद् अ-स्निग्धे स्नेहनं तनोः ॥ ३५ ॥

पञ्चमे ऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्-चिद्-आवृत्ते प्रयुक्ते बलि-मङ्गले ॥ ३६ ॥

अभ्यक्त-स्वेदितोत्सृष्ट-मलं नाति-बुभुक्षितम् ।
अवेक्ष्य पुरुषं दोष-भेषजादीनि चादरात् ॥ ३७ ॥

१९.३७cv अवेत्य पुरुषं दोष- वस्तिं प्रकल्पयेद् वैद्यस् तद्-विद्यैर् बहुभिः सह ।
क्वाथयेद् विंशति-पलं द्रव्यस्याष्टौ फलानि च ॥ ३८ ॥

१९.३८bv तद्-वेद्यैर् बहुभिः सह १९.३८bv तद्-विधैर् बहुभिः सह ततः क्वाथाच् चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।
पित्ते स्वस्थे च षष्ठांशम् अष्टमांशं कफे ऽधिके ॥ ३९ ॥

१९.३९bv स्नेहं वाते ऽनु कल्पयेत् १९.३९bv स्नेहं वाते तु कल्पयेत् सर्व-त्र चाष्टमं भागं कल्काद् भवति वा यथा ।
नात्य्-अच्छ-सान्द्र-ता वस्तेः पल-मात्रं गुडस्य च ॥ ४० ॥

मधु-पट्व्-आदि-शेषं च युक्त्या सर्वं तद् एकतः ।
उष्णाम्बु-कुम्भी-बाष्पेण तप्तं खज-समाहतम् ॥ ४१ ॥

प्रक्षिप्य वस्तौ प्रणयेत् पायौ नात्य्-उष्ण-शीतलम् ।
नाति-स्निग्धं न वा रूक्षं नाति-तीक्ष्णं न वा मृदु ॥ ४२ ॥

नात्य्-अच्छ-सान्द्रं नोनाति-मात्रं ना-पटु नाति च ।
लवणं तद्-वद् अम्लं च पठन्त्य् अन्ये तु तद्-विदः ॥ ४३ ॥

१९.४३dv वदन्त्य् अन्ये तु तद्-विदः मात्रां त्रि-पलिकां कुर्यात् स्नेह-माक्षिकयोः पृथक् ।
कर्षार्धं माणिमन्थस्य स्वस्थे कल्क-पल-द्वयम् ॥ ४४ ॥

सर्व-द्रवाणां शेषाणां पलानि दश कल्पयेत् ।
माक्षिकं लवणं स्नेहं कल्कं क्वाथम् इति क्रमात् ॥ ४५ ॥

आवपेत निरूहाणाम् एष संयोजने विधिः ।
उत्तानो दत्त-मात्रे तु निरूहे तन्-मना भवेत् ॥ ४६ ॥

कृतोपधानः सञ्जात-वेगश् चोत्कटकः सृजेत् ।
आगतौ परमः कालो मुहूर्तो मृत्यवे परम् ॥ ४७ ॥

१९.४७bv -वेगश् चोत्कटुकः सृजेत् १९.४७bv -वेगश् चोत्कुटकः सृजेत् १९.४७dv मुहूर्तो मृत्यवे परः तत्रानुलोमिकं स्नेह-क्षार-मूत्राम्ल-कल्पितम् ।
त्वरितं स्निग्ध-तीक्ष्णोष्णं वस्तिम् अन्यं प्रपीडयेत् ॥ ४८ ॥

१९.४८av तत्रानुलोमिक-स्नेह- विदद्यात् फल-वर्तिं वा स्वेदनोत्त्रासनादि च ।
स्वयम् एव निवृत्ते तु द्वितीयो वस्तिर् इष्यते ॥ ४९ ॥

१९.४९bv स्वेदनोत्रासनादि वा तृतीयो ऽपि चतुर्थो ऽपि यावद् वा सु-निरूढ-ता ।
विरिक्त-वच् च योगादीन् विद्याद् योगे तु भोजयेत् ॥ ५० ॥

१९.५०bv यावद् वा सु-निरूह-ता १९.५०dv विद्याद् योगे तु योजयेत् कोष्णेन वारिणा स्नातं तनु-धन्व-रसौदनम् ।
विकारा ये निरूढस्य भवन्ति प्रचलैर् मलैः ॥ ५१ ॥

१९.५१av कोष्णेन वारिणा स्नानं १९.५१cv विकारा ये निरूहस्य ते सुखोष्णाम्बु-सिक्तस्य यान्ति भुक्त-वतः शमम् ।
अथ वातार्दितं भूयः सद्य एवानुवासयेत् ॥ ५२ ॥

सम्यग्-धीनाति-योगाश् च तस्य स्युः स्नेह-पीत-वत् ।
किञ्-चित्-कालं स्थितो यश् च स-पुरीषो निवर्तते ॥ ५३ ॥

१९.५३cv किञ्-चित्-कालं स्थितो यस्य सानुलोमानिलः स्नेहस् तत् सिद्धम् अनुवासनम् ।
एकं त्रीन् वा बलासे तु स्नेह-वस्तीन् प्रकल्पयेत् ॥ ५४ ॥

१९.५४dv स्नेह-वस्तीन् प्रयोजयेत् पञ्च वा सप्त वा पित्ते नवैका-दश वानिले ।
पुनस् ततो ऽप्य् अ-युग्मांस् तु पुनर् आस्थापनं ततः ॥ ५५ ॥

कफ-पित्तानिलेष्व् अन्नं यूष-क्षीर-रसैः क्रमात् ।
वात-घ्नौषध-निःक्वाथ-त्रिवृता-सैन्धवैर् युतः ॥ ५६ ॥

वस्तिर् एको ऽनिले स्निग्धः स्वाद्व्-अम्लोष्णो रसान्वितः ।
न्यग्रोधादि-गण-क्वाथ-पद्मकादि-सिता-युतौ ॥ ५७ ॥

१९.५७bv स्वाद्व्-अम्लोष्ण-रसान्वितः पित्ते स्वादु-हिमौ साज्य-क्षीरेक्षु-रस-माक्षिकौ ।
आरग्वधादि-निःक्वाथ-वत्सकादि-युतास् त्रयः ॥ ५८ ॥

रूक्षाः स-क्षौद्र-गो-मूत्रास् तीक्ष्णोष्ण-कटुकाः कफे ।
त्रयस् ते संनिपाते ऽपि दोषान् घ्नन्ति यतः क्रमात् ॥ ५९ ॥

१९.५९cv त्रयश् च संनिपाते ऽपि त्रिभ्यः परं वस्तिम् अतो नेच्छन्त्य् अन्ये चिकित्सकाः ।
न हि दोषश् चतुर्थो ऽस्ति पुनर् दीयेत यं प्रति ॥ ६० ॥

१९.६०av नाचार्य-चरकस्यातो १९.६०bv वस्तिस् त्रिभ्यः परं मतः उत्क्लेशनं शुद्धि-करं दोषाणां शमनं क्रमात् ।
त्रि-धैव कल्पयेद् वस्तिम् इत्य् अन्ये ऽपि प्रचक्षते ॥ ६१ ॥

१९.६१cv त्रि-धैवं कल्पयेद् वस्तिम् दोषौषधादि-बलतः सर्वम् एतत् प्रमाणयेत् ।
सम्यङ्-निरूढ-लिङ्गं तु ना-संभाव्य निवर्तयेत् ॥ ६२ ॥

प्राक् स्नेह एकः पञ्चान्ते द्वा-दशास्थापनानि च ।
सान्वासनानि कर्मैवं वस्तयस् त्रिंशद् ईरिताः ॥ ६३ ॥

कालः पञ्च-दशैको ऽत्र प्राक् स्नेहो ऽन्ते त्रयस् तथा ।
षट् पञ्च-वस्त्य्-अन्तरिता योगो ऽष्टौ वस्तयो ऽत्र तु ॥ ६४ ॥

त्रयो निरूहाः स्नेहाश् च स्नेहाव् आद्य्-अन्तयोर् उभौ ।
स्नेह-वस्तिं निरूहं वा नैकम् एवातिशीलयेत् ॥ ६५ ॥

उत्क्लेशाग्नि-वधौ स्नेहान् निरूहान् मरुतो भयम् ।
तस्मान् निरूढः स्नेह्यः स्यान् निरूह्यश् चानुवासितः ॥ ६६ ॥

स्नेह-शोधन-युक्त्यैवं वस्ति-कर्म त्रि-दोष-जित् ।
ह्रस्वया स्नेह-पानस्य मात्रया योजितः समः ॥ ६७ ॥

मात्रा-वस्तिः स्मृतः स्नेहः शीलनीयः सदा च सः ।
बाल-वृद्धाध्व-भार-स्त्री-व्यायामासक्त-चिन्तकैः ॥ ६८ ॥

१९.६८cv बाल-वृद्धाध्व-भाष्य-स्त्री- वात-भग्ना-बलाल्पाग्नि-नृपेश्वर-सुखात्मभिः ।
दोष-घ्नो निष्-परीहारो बल्यः सृष्ट-मलः सुखः ॥ ६९ ॥

१९.६९bv -नृपैश्वर्य-सुखात्मभिः वस्तौ रोगेषु नारीणां योनि-गर्भाशयेषु च ।
द्वि-त्रास्थापन-शुद्धेभ्यो विदध्याद् वस्तिम् उत्तरम् ॥ ७० ॥

आतुराङ्गुल-मानेन तन्-नेत्रं द्वा-दशाङ्गुलम् ।
वृत्तं गो-पुच्छ-वन् मूल-मद्ययोः कृत-कर्णिकम् ॥ ७१ ॥

सिद्धार्थक-प्रवेशाग्रं श्लक्ष्णं हेमादि-संभवम् ।
कुन्दाश्वमार-सुमनः-पुष्प-वृन्तोपमं दृढम् ॥ ७२ ॥

तस्य वस्तिर् मृदु-लघुर् मात्रा शुक्तिर् विकल्प्य वा ।
अथ स्नाताशीतस्यास्य स्नेह-वस्ति-विधानतः ॥ ७३ ॥

१९.७३bv मात्रा शुक्तिर् विकल्प्य च १९.७३bv मात्रा शुक्तिः प्रकल्प्य वा ऋजोः सुखोपविष्टस्य पीठे जानु-समे मृदौ ।
हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतो-विशुद्धये ॥ ७४ ॥

सूक्ष्मां शलाकां प्रणयेत् तया शुद्धे अनु-सेवनि ।
आ-मेहनान्तं नेत्रं च निष्-कम्पं गुद-वत् ततः ॥ ७५ ॥

१९.७५bv तया शुद्धे अनु-सेवनीम् पीडिते ऽन्तर्-गते स्नेहे स्नेह-वस्ति-क्रमो हितः ।
वस्तीन् अनेन विधिना दद्यात् त्रींश् चतुरो ऽपि वा ॥ ७६ ॥

१९.७६av पीडिते ऽनुगते स्नेहे अनुवासन-वच् छेषं सर्वम् एवास्य चिन्तयेत् ।
स्त्रीणाम् आर्तव-काले तु योनिर् गृह्णात्य् अपावृतेः ॥ ७७ ॥

विदधीत तदा तस्माद् अन्-ऋताव् अपि चात्यये ।
योनि-विभ्रंश-शूलेषु योनि-व्यापद्य् असृग्-दरे ॥ ७८ ॥

नेत्रं दशाङ्गुलं मुद्ग-प्रवेशं चतुर्-अङ्गुलम् ।
अपत्य-मार्गे योज्यं स्याद् द्व्य्-अङ्गुलं मूत्र-वर्त्मनि ॥ ७९ ॥

मूत्र-कृच्छ्र-विकारेषु बालानां त्व् एकम् अङ्गुलम् ।
प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिर् एव तु ॥ ८० ॥

उत्तानायाः शयानायाः सम्यक् संकोच्य सक्थिनी ।
ऊर्ध्व-जान्वास् त्रि-चतुरान् अहो-रात्रेण योजयेत् ॥ ८१ ॥

वस्तींस् त्रि-रात्रम् एवं च स्नेह-मात्रां विवर्धयन् ।
त्र्य्-अहम् एव च विश्रम्य प्रणिदध्यात् पुनस् त्र्य्-अहम् ॥ ८२ ॥

१९.८२bv स्नेह-मात्रां विवर्धयेत् पक्षाद् विरेको वमिते ततः पक्षान् निरूहणम् ।
सद्यो निरूढश् चान्वास्यः सप्त-रात्राद् विरेचितः ॥ ८३ ॥

यथा कुसुम्भादि-युतात् तोयाद् रागं हरेत् पटः ।
तथा द्रवी-कृताद् देहाद् वस्तिर् निर्हरते मलान् ॥ ८४ ॥

शाखा-गताः कोष्ठ-गताश् च रोगा मर्मोर्ध्व-सर्वावयवाङ्ग-जाश् च ।
ये सन्ति तेषां न तु कश्-चिद् अन्यो वायोः परं जन्मनि हेतुर् अस्ति ॥ ८५ ॥

१९.८५cv ये सन्ति तेषां न हि कश्-चिद् अन्यो विट्-श्लेष्म-पित्तादि-मलोच्चयानां विक्षेप-संहार-करः स यस्मात् ।
तस्याति-वृद्धस्य शमाय नान्यद् वस्तेर् विना भेषजम् अस्ति किञ्-चित् ॥ ८६ ॥

१९.८६av विट्-श्लेष्म-पित्तादि-मलाचयानां १९.८६av विट्-श्लेष्म-पित्तादि-मलाशयानां १९.८६av विण्-मूत्र-पित्तादि-मलाशयानां १९.८६bv विक्षेप-संहार-करो हि वायुः १९.८६dv वस्तेः समं भेषजम् अस्ति यस्मात् तस्माच् चिकित्सार्ध इति प्रदिष्टः कृत्स्ना चिकित्सापि च वस्तिर् एकैः ।
तथा निजागन्तु-विकार-कारि-रक्तौषध-त्वेन सिरा-व्यधो ऽपि ॥ ८७ ॥

१९.८७av तस्माच् चिकित्सार्धम् इति प्रदिष्टः १९.८७bv कृत्स्ना चिकित्सापि च वस्तिर् एके

अध्यायः २०

ऊर्ध्व-जत्रु-विकारेषु विशेषान् नस्यम् इष्यते ।
नासा हि शिरसो द्वारं तेन तद् व्याप्य हन्ति तान् ॥ १ ॥

विरेचनं बृंहणं च शमनं च त्रि-धापि तत् ।
विरेचनं शिरः-शूल-जाड्य-स्यन्द-गलामये ॥ २ ॥

२०.२bv शमनं च त्रि-धा भवेत् मर्श-ध्मानावपीडाख्यैस् तत् पुनः षड्-विधं स्मृतम् ॥ २.१+१ ॥

२०.२.१+१av मर्श-ध्मानावपीडाख्यात् शोफ-गण्ड-कृमि-ग्रन्थि-कुष्ठापस्मार-पीनसे ।
बृंहणं वात-जे शूले सूर्यावर्ते स्वर-क्षये ॥ ३ ॥

स्नेहेन तीक्ष्णैः सिद्धेन कल्क-क्वाथादिभिश् च तत् ॥ ३.१+१ ॥

नासास्य-शोषे वाक्-सङ्गे कृच्छ्र-बोधे ऽव-बाहुके ।
शमनं नीलिका-व्यङ्ग-केश-दोषाक्षि-राजिषु ॥ ४ ॥

२०.४dv -केश-दोषाक्षि-रोगिषु २०.४dv -केश-दोषाक्षि-रोग-जित् यथा-स्वं यौगिकैः स्नेहैर् यथा-स्वं च प्रसाधितैः ।
कल्क-क्वाथादिभिश् चाद्यं मधु-पट्व्-आसवैर् अपि ॥ ५ ॥

बृंहणं धन्व-मांसोत्थ-रसासृक्-खपुरैर् अपि ।
शमनं योजयेत् पूर्वैः क्षीरेण सलिलेन वा ॥ ६ ॥

२०.६dv क्षीरेण सलिलेन च २०.६dv क्षीरेण च जलेन च मर्शश् च प्रतिमर्शश् च द्वि-धा स्नेहो ऽत्र मात्रया ।
कल्काद्यैर् अवपीडस् तु स तीक्ष्णैर् मूर्ध-रेचनः ॥ ७ ॥

२०.७dv तीक्ष्णैर् मूर्ध-विरेचनः ध्मानं विरेचनश् चूर्णो युञ्ज्यात् तं मुख-वायुना ।
षड्-अङ्गुल-द्वि-मुखया नाड्या भेषज-गर्भया ॥ ८ ॥

२०.८av ध्मानं विरेचनैश् चूर्णैर् २०.८dv नाड्या भैषज्य-गर्भया स हि भूरि-तरं दोषं चूर्ण-त्वाद् अपकर्षति ।
प्रदेशिन्य्-अङ्गुली-पर्व-द्वयान् मग्न-समुद्धृतात् ॥ ९ ॥

यावत् पतत्य् असौ बिन्दुर् दशाष्टौ षट् क्रमेण ते ।
मर्शस्योत्कृष्ट-मध्योना मात्रास् ता एव च क्रमात् ॥ १० ॥

बिन्दु-द्वयोनाः कल्कादेर् योजयेन् न तु नावनम् ।
तोय-मद्य-गर-स्नेह-पीतानां पातुम् इच्छताम् ॥ ११ ॥

भुक्त-भक्त-शिरः-स्नात-स्नातु-काम-स्रुतासृजाम् ।
नव-पीनस-वेगार्त-सूतिका-श्वास-कासिनाम् ॥ १२ ॥

२०.१२av भुक्ताभ्यक्त-शिरः-स्नात- शुद्धानां दत्त-वस्तीनां तथान्-आर्तव-दुर्-दिने ।
अन्य-त्रात्ययिकाद् व्याधेर् अथ नस्यं प्रयोजयेत् ॥ १३ ॥

प्रातः श्लेष्मणि मध्याह्ने पित्ते सायन्-निशोश् चले ।
स्वस्थ-वृत्ते तु पूर्वाह्णे शरत्-काल-वसन्तयोः ॥ १४ ॥

शीते मध्यन्-दिने ग्रीष्मे सायं वर्षासु सातपे ।
वाताभिभूते शिरसि हिध्मायाम् अपतानके ॥ १५ ॥

मन्या-स्तम्भे स्वर-भ्रंशे सायं प्रातर् दिने दिने ।
एकाहान्तरम् अन्य-त्र सप्ताहं च तद् आचरेत् ॥ १६ ॥

स्निग्ध-स्विन्नोत्तमाङ्गस्य प्राक्-कृतावश्यकस्य च ।
निवात-शयन-स्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ॥ १७ ॥

अथोत्तानर्जु-देहस्य पाणि-पादे प्रसारिते ।
किञ्-चिद्-उन्नत-पादस्य किञ्-चिन् मूर्धनि नामिते ॥ १८ ॥

नासा-पुटं पिधायैकं पर्यायेण निषेचयेत् ।
उष्णाम्बु-तप्तं भैषज्यं प्रणाड्या पिचुनाथ-वा ॥ १९ ॥

२०.१९dv प्रणाल्या पिचुनाथ-वा दत्ते पाद-तल-स्कन्ध-हस्त-कर्णादि मर्दयेत् ।
शनैर् उच्छिद्य निष्ठीवेत् पार्श्वयोर् उभयोस् ततः ॥ २० ॥

२०.२०cv शनैर् उच्छिन्द्य निष्ठीवेत् आ-भेषज-क्षयाद् एवं द्विस् त्रिर् वा नस्यम् आचरेत् ।
मूर्छायां शीत-तोयेन सिञ्चेत् परिहरन् शिरः ॥ २१ ॥

स्नेहं विरेचनस्यान्ते दद्याद् दोषाद्य-अपेक्षया ।
नस्यान्ते वाक्-शतं तिष्ठेद् उत्तानो धारयेत् ततः ॥ २२ ॥

२०.२२av स्नेहं रेचन-नस्यान्ते धूमं पीत्वा कवोष्णाम्बु-कवडान् कण्ठ-शुद्धये ।
सम्यक्-स्निग्धे सुखोच्छ्वास-स्वप्न-बोधाक्ष-पाटवम् ॥ २३ ॥

रूक्षे ऽक्षि-स्तब्ध-ता शोषो नासास्ये मूर्ध-शून्य-ता ।
स्निग्धे ऽति कण्डू-गुरु-ता-प्रसेका-रुचि-पीनसाः ॥ २४ ॥

२०.२४cv स्निग्धे ऽति कण्डूर् गुरु-ता २०.२४dv प्रसेका-रुचि-पीनसाः सु-विरिक्ते ऽक्षि-लघु-ता-वक्त्र-स्वर-विशुद्धयः ।
दुर्-विरिक्ते गदोद्रेकः क्षाम-ताति-विरेचिते ॥ २५ ॥

प्रतिमर्शः क्षत-क्षाम-बाल-वृद्ध-सुखात्मसु ।
प्रयोज्यो ऽ-काल-वर्षे ऽपि न त्व् इष्टो दुष्ट-पीनसे ॥ २६ ॥

मद्य-पीते ऽ-बल-श्रोत्रे कृमि-दूषित-मूर्धनि ।
उत्कृष्टोत्क्लिष्ट-दोषे च हीन-मात्र-तया हि सः ॥ २७ ॥

२०.२७dv हीन-मान-तया हि सः निशाहर्-भुक्त-वान्ताहः-स्वप्नाध्व-श्रम-रेतसाम् ।
शिरो-ऽभ्यञ्जन-गण्डूष-प्रस्रावाञ्जन-वर्चसाम् ॥ २८ ॥

दन्त-काष्ठस्य हासस्य योज्यो ऽन्ते ऽसौ द्वि-बिन्दुकः ।
पञ्चसु स्रोतसां शुद्धिः क्लम-नाशस् त्रिषु क्रमात् ॥ २९ ॥

दृग्-बलं पञ्चसु ततो दन्त-दार्ढ्यं मरुच्-छमः ।
न नस्यम् ऊन-सप्ताब्दे नातीताशीति-वत्सरे ॥ ३० ॥

न चोनाष्टा-दशे धूमः कवडो नोन-पञ्चमे ।
न शुद्धिर् ऊन-दशमे न चातिक्रान्त-सप्ततौ ॥ ३१ ॥

२०.३१bv कवडो न्यून-पञ्चमे आ-जन्म-मरणं शस्तः प्रतिमर्शस् तु वस्ति-वत् ।
मर्श-वच् च गुणान् कुर्यात् स हि नित्योपसेवनात् ॥ ३२ ॥

न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्श-वद् भयम् ।
तैलम् एव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ ३३ ॥

२०.३३cv तैलम् एव च नस्यार्थं शिरसः श्लेष्म-धाम-त्वात् स्नेहाः स्वस्थस्य नेतरे ।
आशु-कृच्-चिर-कारि-त्वं गुणोत्कर्षापकृष्ट-ता ॥ ३४ ॥

२०.३४dv गुणोत्कृष्टापकृष्ट-ता २०.३४dv गुणोत्कृष्टापकर्ष-ता २०.३४dv गुणोत्कर्षापकर्ष-ता मर्शे च प्रतिमर्शे च विशेषो न भवेद् यदि ।
को मर्शं स-परीहारं सापदं च भजेत् ततः ॥ ३५ ॥

२०.३५dv सापदं च वदेत् ततः अच्छ-पान-विचाराख्यौ कुटी-वातातप-स्थिती ।
अन्वास-मात्रा-वस्ती च तद्-वद् एव विनिर्दिशेत् ॥ ३६ ॥

२०.३६dv तद्-वद् एव च निर्दिशेत् पटोल-मुद्ग-वार्ताक-ह्रस्वमूलक-जाङ्गलैः ।
रसैः शालि-यवान् अद्यान् नस्य-कर्मणि षड्-विधे ॥ ३६+१ ॥

उच्चैर्-भाषणम् आयासम् अ-जीर्णा-सात्म्य-भोजनम् ।
दत्त-नस्यो नरः क्रोधं यानादींश् च विवर्जयेत् ॥ ३६+२ ॥

जीवन्ती-जल-देवदारु-जलद-त्वक्-सेव्य-गोपी-हिमं ॥ ३७अ ॥
दार्वी-त्वङ्-मधुक-प्लवागुरु-वरी-पुण्ड्राह्व-बिल्वोत्पलम् ॥ ३७ब् ॥
धावन्यौ सुरभिं स्थिरे कृमिहरं पत्त्रं त्रुटीं रेणुकां ॥ ३७च् ॥
किञ्जल्कं कमलाद् बलां शत-गुणे दिव्ये ऽम्भसि क्वाथयेत् ॥ ३७द् ॥
तैलाद् रसं दश-गुणं परिशेष्य तेन तैलं पचेत सलिलेन दशैव वारान् ।
पाके क्षिपेच् च दशमे समम् आज-दुग्धं नस्यं महा-गुणम् उशन्त्य् अणु-तैलम् एतत् ॥ ३८ ॥

२०.३८bv तैलं पचेच् च सलिलेन दशैव वारान् घनोन्नत-प्रसन्न-त्वक्-स्कन्ध-ग्रीवास्य-वक्षसः ।
दृढेन्द्रियास्त-पलिता भवेयुर् नस्य-शीलिनः ॥ ३९ ॥

२०.३९cv दृढेन्द्रियास् त्व् अ-पलिता

अध्यायः २१

जत्रूर्ध्व-कफ-वातोत्थ-विकाराणाम् अ-जन्मने ।
उच्छेदाय च जातानां पिबेद् धूमं सदात्म-वान् ॥ १ ॥

२१.१av जत्रूर्ध्वं कफ-वातोत्थ- स्निग्धो मध्यः स तीक्ष्णश् च वाते वात-कफे कफे ।
योज्यो न रक्त-पित्तार्ति-विरिक्तोदर-मेहिषु ॥ २ ॥

२१.२cv योज्यो न पित्त-रक्तार्त- २१.२cv योज्यो न पित्त-रक्तार्ति- तिमिरोर्ध्वानिलाध्मान-रोहिणी-दत्त-वस्तिषु ।
मत्स्य-मद्य-दधि-क्षीर-क्षौद्र-स्नेह-विषाशिषु ॥ ३ ॥

शिरस्य् अभिहते पाण्डु-रोगे जागरिते निशि ।
रक्त-पित्तान्ध्य-बाधिर्य-तृण्-मूर्छा-मद-मोह-कृत् ॥ ४ ॥

धूमो ऽ-काले ऽति-पीतो वा तत्र शीतो विधिर् हितः ।
क्षुत-जृम्भित-विण्-मूत्र-स्त्री-सेवा-शस्त्र-कर्मणाम् ॥ ५ ॥

२१.५dv -स्त्री-सेवा-शस्त्र-कर्मिणाम् हासस्य दन्त-काष्ठस्य धूमम् अन्ते पिबेन् मृदुम् ।
कालेष्व् एषु निशाहार-नावनान्ते च मध्यमम् ॥ ६ ॥

२१.६av हास्यस्य दन्त-काष्ठस्य निद्रा-नस्याञ्जन-स्नान-च्छर्दितान्ते विरेचनम् ।
वस्ति-नेत्र-सम-द्रव्यं त्रि-कोशं कारयेद् ऋजु ॥ ७ ॥

मूलाग्रे ऽङ्गुष्ठ-कोलास्थि-प्रवेशं धूम-नेत्रकम् ।
तीक्ष्ण-स्नेहन-मध्येषु त्रीणि चत्वारि पञ्च च ॥ ८ ॥

२१.८av मूले ऽग्रे ऽङ्गुष्ठ-कोलास्थि- अङ्गुलानां क्रमात् पातुः प्रमाणेनाष्टकानि तत् ।
ऋजूपविष्टस् तच्-चेता विवृतास्यस् त्रि-पर्ययम् ॥ ९ ॥

२१.९cv ऋजूपविष्टस् तच्-चित्तो पिधाय च्छिद्रम् एकैकं धूमं नासिकया पिबेत् ।
प्राक् पिबेन् नासयोत्क्लिष्टे दोषे घ्राण-शिरो-गते ॥ १० ॥

२१.१०dv दोषे नासा-शिरो-गते उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कण्ठ-गे ।
मुखेनैवोद्वमेद् धूमं नासया दृग्-विघात-कृत् ॥ ११ ॥

आक्षेप-मोक्षैः पातव्यो धूमस् तु त्रिस् त्रिभिस् त्रिभिः ।
अह्नः पिबेत् सकृत् स्निग्धं द्विर् मध्यं शोधनं परम् ॥ १२ ॥

२१.१२bv धूमस् त्रींस् त्रींस् त्रिभिस् त्रिभिः त्रिश् चतुर् वा मृदौ तत्र द्रव्याण्य् अगुरु गुग्गुलु ।
मुस्त-स्थौणेय-शैलेय-नलदोशीर-वालकम् ॥ १३ ॥

२१.१३av त्रिश् चतुर् वा मृदोस् तत्र वराङ्ग-कौन्ती-मधुक-बिल्व-मज्जैलवालुकम् ।
श्रीवेष्टकं सर्ज-रसो ध्यामकं मदनं प्लवम् ॥ १४ ॥

शल्लकी कुङ्कुमं माषा यवाः कुन्दुरुकस् तिलाः ।
स्नेहः फलानां साराणां मेदो मज्जा वसा घृतम् ॥ १५ ॥

शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ।
न्यग्रोधोदुम्बराश्वत्थ-प्लक्ष-लोध्र-त्वचः सिता ॥ १६ ॥

यष्टीमधु सुवर्णत्वक् पद्मकं रक्तयष्टिका ।
गन्धाश् चा-कुष्ठ-तगरास् तीक्ष्णे ज्योतिष्मती निशा ॥ १७ ॥

दश-मूल-मनोह्वालं लाक्षा श्वेता फल-त्रयम् ।
गन्ध-द्रव्याणि तीक्ष्णानि गणो मूर्ध-विरेचनः ॥ १८ ॥

२१.१८av दश-मूल-मनोह्वाल- २१.१८bv -लाक्षा श्वेता फल-त्रयम् जले स्थिताम् अहो-रात्रम् इषीकां द्वा-दशाङ्गुलाम् ।
पिष्टैर् धूमौषधैर् एवं पञ्च-कृत्वः प्रलेपयेत् ॥ १९ ॥

२१.१९cv पिष्टैर् धूमौषधैर् एव वर्तिर् अङ्गुष्ठक-स्थूला यव-मध्या यथा भवेत् ।
छाया-शुष्कां वि-गर्भां तां स्नेहाभ्यक्तां यथा-यथम् ॥ २० ॥

२१.२०av वर्तिर् अङ्गुष्ठ-वत् स्थूला धूम-नेत्रार्पितां पातुम् अग्नि-प्लुष्टां प्रयोजयेत् ।
शराव-संपुट-च्छिद्रे नाडीं न्यस्य दशाङ्गुलाम् ॥ २१ ॥

अष्टाङ्गुलां वा वक्त्रेण कास-वान् धूमम् आपिबेत् ॥ २१□ॅअब् ॥
कासः श्वासः पीनसो वि-स्वर-त्वं पूतिर् गन्धः पाण्डु-ता केश-दोषः ।
कर्णास्याक्षि-स्राव-कण्ड्व्-अर्ति-जाड्यं तन्द्रा हिध्मा धूम-पं न स्पृशन्ति ॥ २२□ॅ ॥
हृत्-कण्ठेन्द्रिय-संशुद्धिर् लाघवं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक्-पीतस्य लक्षणम् ॥ २२□ॅ+१ ॥

अध्यायः २२

चतुः-प्रकारो गण्डूषः स्निग्धः शमन-शोधनौ ।
रोपणश् च त्रयस् तत्र त्रिषु योज्याश् चलादिषु ॥ १ ॥

अन्त्यो व्रण-घ्नः स्निग्धो ऽत्र स्वाद्व्-अम्ल-पटु-साधितैः ।
स्नेहैः संशमनस् तिक्त-कषाय-मधुरौषधैः ॥ २ ॥

शोधनस् तिक्त-कट्व्-अम्ल-पटूष्णै रोपणः पुनः ।
कषाय-तिक्तकैस् तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥

शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथा-यथम् ।
कल्कैर् युक्तं विपक्वं वा यथा-स्पर्शं प्रयोजयेत् ॥ ४ ॥

दन्त-हर्षे दन्त-चाले मुख-रोगे च वातिके ।
सुखोष्णम् अथ-वा शीतं तिल-कल्कोदकं हितम् ॥ ५ ॥

गण्डूष-धारणे नित्यं तैलं मांस-रसो ऽथ-वा ।
ऊषा-दाहान्विते पाके क्षते चागन्तु-संभवे ॥ ६ ॥

२२.६dv क्षते वागन्तु-संभवे विषे क्षाराग्नि-दग्धे च सर्पिर् धार्यं पयो ऽथ-वा ।
वैशद्यं जनयत्य् आशु संदधाति मुखे व्रणान् ॥ ७ ॥

२२.७av विष-क्षाराग्नि-दग्धे च २२.७cv वैशद्यं जनयत्य् आस्ये २२.७dv संदधाति मुख-व्रणान् दाह-तृष्णा-प्रशमनं मधु-गण्डूष-धारणम् ।
धान्याम्लम् आस्य-वैरस्य-मल-दौर्गन्ध्य-नाशनम् ॥ ८ ॥

तद् एवा-लवणं शीतं मुख-शोष-हरं परम् ।
आशु क्षाराम्बु-गण्डूषो भिनत्ति श्लेष्मणश् चयम् ॥ ९ ॥

सुखोष्णोदक-गण्डूषैर् जायते वक्त्र-लाघवम् ।
निवाते सातपे स्विन्न-मृदित-स्कन्ध-कन्धरः ॥ १० ॥

गण्डूषम् अ-पिबन् किञ्-चिद्-उन्नतास्यो विधारयेत् ।
कफ-पूर्णास्य-ता यावत् स्रवद्-घ्राणाक्ष-ताथ-वा ॥ ११ ॥

अ-संचार्यो मुखे पूर्णे गण्डूषः कवडो ऽन्य-था ॥ ११अब् ॥
२२.११अव् अ-संचार्यो मुखे ऽ-पूर्णे मन्या-शिरः-कर्ण-मुखाक्षि-रोगाः प्रसेक-कण्ठामय-वक्त्र-शोषाः ।
हृल्-लास-तन्द्रा-रुचि-पीनसाश् च साध्या विशेषात् कवड-ग्रहेण ॥ १२ ॥

कल्को रस-क्रिया चूर्णस् त्रि-विधं प्रतिसारणम् ॥ १३अब् ॥
२२.१३av कल्को रस-क्रिया चूर्णं युञ्ज्यात् तत् कफ-रोगेषु गण्डूष-विहितौषधैः ।
मुखालेपस् त्रि-धा दोष-विष-हा वर्ण-कृच् च सः ॥ १४ ॥

२२.१४cv मुख-लेपस् त्रि-धा दोष- व्याधेर् अपचयः पुष्टिर् वैशद्यं वक्त्र-लाघवम् ।
इन्द्रियाणां प्रसादश् च कवडे शुद्धि-लक्षणम् ॥ १४.१+१ ॥

हीनाज् जाड्य-कफोत्क्लेशाव् अ-रस-ज्ञानम् एव च ।
अति-योगान् मुखे पाकः शोष-तृष्णा-रुचि-क्लमः ॥ १४.१+२ ॥

२२.१४.१+२av हीनाद् ध्मान-कफोत्लेशाव् उष्णो वात-कफे शस्तः शेषेष्व् अत्य्-अर्थ-शीतलः ।
त्रि-प्रमाणश् चतुर्-भाग-त्रि-भागार्धाङ्गुलोन्नतिः ॥ १५ ॥

अ-शुष्कस्य स्थितिस् तस्य शुष्को दूषयति च्छविम् ।
तम् आर्द्रयित्वापनयेत् तद्-अन्ते ऽभ्यङ्गम् आचरेत् ॥ १६ ॥

विवर्जयेद् दिवा-स्वप्न-भाष्याग्न्य्-आतप-शुक्-क्रुधः ।
न योज्यः पीनसे ऽ-जीर्णे दत्त-नस्ये हनु-ग्रहे ॥ १७ ॥

२२.१७dv दत्ते नस्ये हनु-ग्रहे अ-रोचके जागरिते स तु हन्ति सु-योजितः ।
अ-काल-पलित-व्यङ्ग-वली-तिमिर-नीलिकाः ॥ १८ ॥

२२.१८bv स च हन्ति सु-योजितः कोल-मज्जा वृषान् मूलं शाबरं गौर-सर्षपाः ।
सिंही-मूलं तिलाः कृष्णा दार्वी-त्वङ् निस्-तुषा यवाः ॥ १९ ॥

दर्भ-मूल-हिमोशीर-शिरीष-मिशि-तण्डुलाः ।
कुमुदोत्पल-कल्हार-दूर्वा-मधुक-चन्दनम् ॥ २० ॥

कालीयक-तिलोशीर-मांसी-तगर-पद्मकम् ।
तालीश-गुन्द्रा-पुण्ड्राह्व-यष्टी-काश-नतागुरु ॥ २१ ॥

इत्य् अर्धार्धोदिता लेपा हेमन्तादिषु षट् स्मृताः ।
-मुखालेपन-शीलानां दृढं भवति दर्शनम् ॥ २२ ॥

वदनं चा-परिम्लानं श्लक्ष्णं तामरसोपमम् ।
अभ्यङ्ग-सेक-पिचवो वस्तिश् चेति चतुर्-विधम् ॥ २३ ॥

मूर्ध-तैलं बहु-गुणं तद् विद्याद् उत्तरोत्तरम् ।
तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्य-कण्डू-मलादिषु ॥ २४ ॥

२२.२४dv रूक्ष-कण्डू-मलादिषु अरूंषिका-शिरस्-तोद-दाह-पाक-व्रणेषु तु ।
परिषेकः पिचुः केश-शात-स्फुटन-धूपने ॥ २५ ॥

२२.२५bv -दाह-पाक-व्रणेषु च नेत्र-स्तम्भे च वस्तिस् तु प्रसुप्त्य्-अर्दित-जागरे ।
नासास्य-शोषे तिमिरे शिरो-रोगे च दारुणे ॥ २६ ॥

विधिस् तस्य निषण्णस्य पीठे जानु-समे मृदौ ।
शुद्धाक्त-स्विन्न-देहस्य दिनान्ते गव्य-माहिषम् ॥ २७ ॥

द्वा-दशाङ्गुल-विस्तीर्णं चर्म-पट्टं शिरः-समम् ।
आ-कर्ण-बन्धन-स्थानं ललाटे वस्त्र-वेष्टिते ॥ २८ ॥

चैल-वेणिकया बद्ध्वा माष-कल्केन लेपयेत् ।
ततो यथा-व्याधि शृतं स्नेहं कोष्णं निषेचयेत् ॥ २९ ॥

ऊर्ध्वं केश-भुवो यावद् अङ्गुलं धारयेच् च तम् ।
आ-वक्त्र-नासिकोत्क्लेदाद् दशाष्टौ षट् चलादिषु ॥ ३० ॥

२२.३०cv आ-वक्त्र-नासिका-क्लेदाद् मात्रा-सहस्राण्य् अ-रुजे त्व् एकं स्कन्धादि मर्दयेत् ।
मुक्त-स्नेहस्य परमं सप्ताहं तस्य सेवनम् ॥ ३१ ॥

२२.३१dv सप्ताहं तस्य सेचनम् धारयेत् पूरणं कर्णे कर्ण-मूलं विमर्दयन् ।
रुजः स्यान् मार्दवं यावन् मात्रा-शतम् अ-वेदने ॥ ३२ ॥

२२.३२bv कर्ण-मूलं विमर्दयेत् यावत् पर्येति हस्ताग्रं दक्षिणं जानु-मण्डलम् ।
निमेषोन्मेष-कालेन समं मात्रा तु सा स्मृता ॥ ३३ ॥

२२.३३cv निमेषोन्मेष-मात्रेण कच-सदन-सित-त्व-पिञ्जर-त्वं परिफुटनं शिरसः समीर-रोगान् ।
जयति जनयतीन्द्रिय-प्रसादं स्वर-हनु-मूर्ध-बलं च मूर्ध-तैलम् ॥ ३४ ॥

२२.३४av कच-शदन-सित-त्व-पिञ्जर-त्वं २२.३४av कच-शदन-सित-त्व-पिञ्जर-त्व- २२.३४av कच-सदन-सित-त्व-पिञ्जर-त्व-

अध्यायः २३

सर्वेषाम् अक्षि-रोगाणाम् आदाव् आश्च्योतनं हितम् ।
रुक्-तोद-कण्डु-घर्षाश्रु-दाह-राग-निबर्हणम् ॥ १ ॥

२३.१dv -दाह-रोग-निबर्हणम् उष्णं वाते कफे कोष्णं तच् छीतं रक्त-पित्तयोः ।
निवात-स्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥

शुक्तौ प्रलम्बयान्येन पिचु-वर्त्या कनीनिके ।
दश द्वा-दश वा बिन्दून् द्व्य्-अङ्गुलाद् अवसेचयेत् ॥ ३ ॥

ततः प्रमृज्य मृदुना चैलेन कफ-वातयोः ।
अन्येन कोष्ण-पानीय-प्लुतेन स्वेदयेन् मृदु ॥ ४ ॥

अत्य्-उष्ण-तीक्ष्णं रुग्-राग-दृङ्-नाशायाक्षि-सेचनम् ।
अति-शीतं तु कुरुते निस्तोद-स्तम्भ-वेदनाः ॥ ५ ॥

कषाय-वर्त्म-तां घर्षं कृच्छ्राद् उन्मेषणं बहु ।
विकार-वृद्धिम् अत्य्-अल्पं संरम्भम् अ-परिस्रुतम् ॥ ६ ॥

गत्वा संधि-शिरो-घ्राण-मुख-स्रोतांसि भेषजम् ।
ऊर्ध्व-गान् नयने न्यस्तम् अपवर्तयते मलान् ॥ ७ ॥

२३.७av गत्वा संधि-सिरा-घ्राण- अथाञ्जनं शुद्ध-तनोर् नेत्र-मात्राश्रये मले ।
पक्व-लिङ्गे ऽल्प-शोफाति-कण्डू-पैच्छिल्य-लक्षिते ॥ ८ ॥

२३.८cv पक्व-लिङ्गे ऽल्प-शोफार्ति- मन्द-घर्षाश्रु-रागे ऽक्ष्णि प्रयोज्यं घन-दूषिके ।
आर्ते पित्त-कफासृग्भिर् मारुतेन विशेषतः ॥ ९ ॥

लेखनं रोपणं दृष्टि-प्रसादनम् इति त्रि-धा ।
अञ्जनं लेखनं तत्र कषायाम्ल-पटूषणैः ॥ १० ॥

रोपणं तिक्तकैर् द्रव्यैः स्वादु-शीतैः प्रसादनम् ।
तीक्ष्णाञ्जनाभिसंतप्ते नयने तत् प्रसादनम् ॥ ११ ॥

प्रयुज्यमानं लभते प्रत्यञ्जन-समाह्वयम् ।
दशाङ्गुला तनुर् मध्ये शलाका मुकुलानना ॥ १२ ॥

प्रशस्ता लेखने ताम्री रोपणे काल-लोह-जा ।
अङ्गुली च सुवर्णोत्था रूप्य-जा च प्रसादने ॥ १३ ॥

पिण्डो रस-क्रिया चूर्णस् त्रि-धैवाञ्जन-कल्पना ।
गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत् ॥ १४ ॥

२३.१४cv गुरु-मध्य-लघौ दोषे २३.१४dv ताः क्रमेण प्रयोजयेत् पिण्डस्य तीक्ष्ण-द्रव्यस्य मृदु-द्रव्य-कृतस्य च ।
हरेणु-मात्रं द्वि-गुणं प्रमाणं कथयन्त्य् अपि ॥ १४+१ ॥

रस-क्रियायाम् अप्य् एवं विडङ्ग-फल-मात्रकम् ।
शलाकां द्वि-गुणां तीक्ष्णे चूर्णे च त्रि-गुणां मृदौ ॥ १४+२ ॥

हरेणु-मात्रा पिण्डस्य वेल्ल-मात्रा रस-क्रिया ।
तीक्ष्णस्य द्वि-गुणं तस्य मृदुनश् चूर्णितस्य च ॥ १५ ॥

२३.१५av पिण्डो हरेणु-मात्रस् तु २३.१५av हरेणु-मात्रं पिण्डस्य २३.१५av हरेणु-मात्रः पिण्डस् तु २३.१५bv वल्ल-मात्रा रस-क्रिया २३.१५dv मृदोश् चूर्णाञ्जनस्य च द्वे शलाके तु तीक्ष्णस्य तिस्रस् तद्-इतरस्य च ।
निशि स्वप्ने न मध्याह्ने म्लाने नोष्ण-गभस्तिभिः ॥ १६ ॥

२३.१६bv तिस्रः स्युर् इतरस्य च २३.१६cv निशि स्वप्नेन मध्याह्ने २३.१६dv पानान्नोष्ण-गभस्तिभिः अक्षि-रोगाय दोषाः स्युर् वर्धितोत्पीडित-द्रुताः ।
प्रातः सायं च तच्-छान्त्यै व्य्-अभ्रे ऽर्के ऽतो ऽञ्जयेत् सदा ॥ १७ ॥

वदन्त्य् अन्ये तु न दिवा प्रयोज्यं तीक्ष्णम् अञ्जनम् ।
विरेक-दुर्-बलं चक्षुर् आदित्यं प्राप्य सीदति ॥ १८ ॥

स्वप्नेन रात्रौ कालस्य सौम्य-त्वेन च तर्पिता ।
शीत-सात्म्या दृग् आग्नेयी स्थिर-तां लभते पुनः ॥ १९ ॥

अत्य्-उद्रिक्ते बलासे तु लेखनीये ऽथ-वा गदे ।
कामम् अहन्य् अपि नात्य्-उष्णे तीक्ष्णम् अक्ष्णि प्रयोजयेत् ॥ २० ॥

अश्मनो जन्म लोहस्य तत एव च तीक्ष्ण-ता ।
उपघातो ऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २१ ॥

न रात्राव् अपि शीते ऽति नेत्रे तीक्ष्णाञ्जनं हितम् ।
दोषम् अ-स्रावयेत् स्तब्धं कण्डू-जाड्यादि-कारि तत् ॥ २२ ॥

२३.२२cv दोषम् अ-स्रावयत् स्तब्धं २३.२२cv दोषम् अ-स्रावयत् स्तम्भ- २३.२२cv दोषं न स्रावयेत् स्तम्भ- २३.२२dv -कण्डू-जाड्यादि-कारि तत्
नाञ्जयेद् भीत-वमित-विरिक्ताशित-वेगिते ।
क्रुद्ध-ज्वरित-तान्ताक्षि-शिरो-रुक्-शोक-जागरे ॥ २३ ॥

अ-दृष्टे ऽर्के शिरः-स्नाते पीतयोर् धूम-मद्ययोः ।
अ-जीर्णे ऽग्न्य्-अर्क-संतप्ते दिवा-सुप्ते पिपासिते ॥ २४ ॥

२३.२४dv दिवा-स्वप्ने पिपासिते अति-तीक्ष्ण-मृदु-स्तोक-बह्व्-अच्छ-घन-कर्कशम् ।
अत्य्-अर्थ-शीतलं तप्तम् अञ्जनं नावचारयेत् ॥ २५ ॥

२३.२५cv अत्य्-अर्थं शीतलं तप्तम् अथानुमीलयन् दृष्टिम् अन्तः संचारयेच् छनैः ।
अञ्जिते वर्त्मनी किञ्-चिच् चालयेच् चैवम् अञ्जनम् ॥ २६ ॥

तीक्ष्णं व्याप्नोति सहसा न चोन्मेष-निमेषणम् ।
निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत् ॥ २७ ॥

अपेतौषध-संरम्भं निर्वृतं नयनं यदा ।
व्याधि-दोषर्तु-योग्याभिर् अद्भिः प्रक्षालयेत् तदा ॥ २८ ॥

दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं स-वाससा ।
ऊर्ध्व-वर्त्मनि संगृह्य शोध्यं वामेन चेतरत् ॥ २९ ॥

वर्त्म-प्राप्तो ऽञ्जनाद् दोषो रोगान् कुर्याद् अतो ऽन्य-था ।
कण्डू-जाड्ये ऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ॥ ३० ॥

२३.३०av वर्त्म-प्राप्ताञ्जनाद् दोषो २३.३०bv रोगान् कुर्यात् ततो ऽन्य-था तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हिमम् ॥ ३०अब् ॥
२३.३०अव् तीक्ष्णाञ्जनाति-तप्ते तु २३.३०अव् तीक्ष्णाञ्जनाति-योगे तु २३.३०ब्व् चूर्णं प्रत्यञ्जनं हितम्

अध्यायः २४

नयने ताम्यति स्तब्धे शुष्के रूक्षे ऽभिघातिते ।
वात-पित्तातुरे जिह्मे शीर्ण-पक्ष्माविलेक्षणे ॥ १ ॥

कृच्छ्रोन्मील-सिरा-हर्ष-सिरोत्पात-तमो-ऽर्जुनैः ।
स्यन्द-मन्थान्यतो-वात-वात-पर्याय-शुक्रकैः ॥ २ ॥

आतुरे शान्त-रागाश्रु-शूल-संरम्भ-दूषिके ।
निवाते तर्पणं योज्यं शुद्धयोर् मूर्ध-काययोः ॥ ३ ॥

काले साधारणे प्रातः सायं वोत्तान-शायिनः ।
यव-माष-मयीं पालीं नेत्र-कोशाद् बहिः समाम् ॥ ४ ॥

२४.४bv सायं चोत्तान-शायिनः द्व्य्-अङ्गुलोच्चां दृढां कृत्वा यथा-स्वं सिद्धम् आवपेत् ।
सर्पिर् निमीलिते नेत्रे तप्ताम्बु-प्रविलायितम् ॥ ५ ॥

२४.५dv तप्ताम्बु-प्रविलापितम् नक्तान्ध्य-वात-तिमिर-कृच्छ्र-बोधादिके वसाम् ।
आ-पक्ष्माग्राद् अथोन्मेषं शनकैस् तस्य कुर्वतः ॥ ६ ॥

मात्रा विगणयेत् तत्र वर्त्म-संधि-सितासिते ।
दृष्टौ च क्रम-शो व्याधौ शतं त्रीणि च पञ्च च ॥ ७ ॥

२४.७av मात्रां विगणयेत् तत्र शतानि सप्त चाष्टौ च दश मन्थे दशानिले ।
पित्ते षट् स्वस्थ-वृत्ते च बलासे पञ्च धारयेत् ॥ ८ ॥

२४.८bv दश मन्थे ऽनिले दश कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे निगालयेत् ।
पिबेच् च धूमं नेक्षेत व्योम रूपं च भास्वरम् ॥ ९ ॥

२४.९dv व्योम रूपं च भास्-करम् इत्थं प्रति-दिनं वायौ पित्ते त्व् एकान्तरं कफे ।
स्वस्थे तु द्व्य्-अन्तरं दद्याद् आ-तृप्तेर् इति योजयेत् ॥ १० ॥

प्रकाश-क्षम-ता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते विपर्ययो ऽ-तृप्ते ऽति-तृप्ते श्लेष्म-जा रुजः ॥ ११ ॥

२४.११dv तृप्ते ऽति श्लेष्म-जा रुजः स्नेह-पीता तनुर् इव क्लान्ता दृष्टिर् हि सीदति ।
तर्पणान्-अन्तरं तस्माद् दृग्-बलाधान-कारिणम् ॥ १२ ॥

पुट-पाकं प्रयुञ्जीत पूर्वोक्तेष्व् एव यक्ष्मसु ।
स वाते स्नेहनः श्लेष्म-सहिते लेखनो हितः ॥ १३ ॥

२४.१३bv पूर्वोक्तेष्व् एषु यक्ष्मसु २४.१३bv पूर्वोक्तेषु च यक्ष्मसु दृग्-दौर्बल्ये ऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ।
भू-शय-प्रसहानूप-मेदो-मज्ज-वसामिषैः ॥ १४ ॥

स्नेहनं पयसा पिष्टैर् जीवनीयैश् च कल्पयेत् ।
मृग-पक्षि-यकृन्-मांस-मुक्तायस्-ताम्र-सैन्धवैः ॥ १५ ॥

स्रोतो-ज-शङ्ख-फेनालैर् लेखनं मस्तु-कल्कितैः ।
मृग-पक्षि-यकृन्-मज्ज-वसान्त्र-हृदयामिषैः ॥ १६ ॥

मधुरैः स-घृतैः स्तन्य-क्षीर-पिष्टैः प्रसादनम् ।
बिल्व-मात्रं पृथक् पिण्डं मांस-भेषज-कल्कयोः ॥ १७ ॥

उरुबूक-वटाम्भो-ज-पत्त्रैः स्नेहादिषु क्रमात् ।
वेष्टयित्वा मृदा लिप्तं धव-धन्वन-गो-मयैः ॥ १८ ॥

२४.१८bv -पत्त्रैः स्निग्धादिषु क्रमात् पचेत् प्रदीप्तैर् अग्न्य्-आभं पक्वं निष्पीड्य तद्-रसम् ।
नेत्रे तर्पण-वद् युञ्ज्यात् शतं द्वे त्रीणि धारयेत् ॥ १९ ॥

लेखन-स्नेहनान्त्येषु कोष्णौ पूर्वौ हिमो ऽपरः ।
धूम-पो ऽन्ते तयोर् एव योगास् तत्र च तृप्ति-वत् ॥ २० ॥

तर्पणं पुट-पाकं च नस्यान्-अर्हे न योजयेत् ।
यावन्त्य् अहानि युञ्जीत द्विस् ततो हित-भाग् भवेत् ॥ २१ ॥

मालती-मल्लिका-पुष्पैर् बद्धाक्षो निवसेन् निशाम् ॥ २१□अब् ॥
२४.२१□ब्व् बद्धाक्षो निवसेन् निशि सर्वात्मना नेत्र-बलाय यत्नं कुर्वीत नस्याञ्जन-तर्पणाद्यैः ।
दृष्टिश् च नष्टा विविधं जगच् च तमो-मयं जायत एक-रूपम् ॥ २२□ ॥

अध्यायः २५

नाना-विधानां शल्यानां नाना-देश-प्रबोधिनाम् ।
आहर्तुम् अभ्युपायो यस् तद् यन्त्रं यच् च दर्शने ॥ १ ॥

२५.१bv नाना-देश-विबाधिनाम् अर्शो-भगन्दरादीनां शस्त्र-क्षाराग्नि-योजने ।
शेषाङ्ग-परिरक्षायां तथा वस्त्य्-आदि-कर्मणि ॥ २ ॥

घटिकालाबु-शृङ्गं च जाम्बवौष्ठादिकानि च ।
अनेक-रूप-कार्याणि यन्त्राणि विविधान्य् अतः ॥ ३ ॥

विकल्प्य कल्पयेत् बुद्ध्या यथा-स्थूलं तु वक्ष्यते ।
तुल्यानि कङ्क-सिंहर्क्ष-काकादि-मृग-पक्षिणाम् ॥ ४ ॥

मुखैर् मुखानि यन्त्राणां कुर्यात् तत्-संज्ञकानि च ।
अष्टा-दशाङ्गुलायामान्य् आयसानि च भूरि-शः ॥ ५ ॥

मसूराकार-पर्य्-अन्तैः कण्ठे बद्धानि कीलकैः ।
विद्यात् स्वस्तिक-यन्त्राणि मूले ऽङ्कुश-नतानि च ॥ ६ ॥

२५.६dv मूले ऽङ्कुश-निभानि च तैर् दृढैर् अस्थि-संलग्न-शल्याहरणम् इष्यते ।
कील-बद्ध-विमुक्ताग्रौ संदंशौ षो-डशाङ्गुलौ ॥ ७ ॥

त्वक्-सिरा-स्नायु-पिशित-लग्न-शल्यापकर्षणौ ।
षड्-अङ्गुलो ऽन्यो हरणे सूक्ष्म-शल्योप-पक्ष्मणाम् ॥ ८ ॥

मुचुण्डी सूक्ष्म-दन्तर्जुर् मूले रुचक-भूषणा ।
गम्भीर-व्रण-मांसानाम् अर्मणः शेषितस्य च ॥ ९ ॥

२५.९av मुचुटी सूक्ष्म-दन्तर्जुर् द्वे द्वा-दशाङ्गुले मत्स्य-ताल-वत् द्व्य्-एक-तालके ।
ताल-यन्त्रे स्मृते कर्ण-नाडी-शल्यापहारिणी ॥ १० ॥

२५.१०bv -तालु-वत् द्व्य्-एक-तालुके २५.१०cv तालु-यन्त्रे स्मृते कर्ण- २५.१०dv -नाडी-शल्यापहारणे २५.१०dv -नाडी-शल्यापकर्षणी नाडी-यन्त्राणि सुषिराण्य् एकानेक-मुखानि च ।
स्रोतो-गतानां शल्यानाम् आमयानां च दर्शने ॥ ११ ॥

२५.११bv एकानेक-मुखानि तु क्रियाणां सु-कर-त्वाय कुर्याद् आचूषणाय च ।
तद्-विस्तार-परीणाह-दैर्घ्यं स्रोतो-ऽनुरोधतः ॥ १२ ॥

दशाङ्गुलार्ध-नाहान्तः-कण्ठ-शल्यावलोकिनी ।
नाडी पञ्च-मुख-च्छिद्रा चतुष्-कर्णस्य संग्रहे ॥ १३ ॥

२५.१३bv -कण्ठ-शल्यावलोकने वारङ्गस्य द्वि-कर्णस्य त्रि-च्छिद्रा तत्-प्रमाणतः ।
वारङ्ग-कर्ण-संस्थानानाह-दैर्घ्यानुरोधतः ॥ १४ ॥

नाडीर् एवं-विधाश् चान्या द्रष्टुं शल्यानि कारयेत् ।
पद्म-कर्णिकया मूर्ध्नि सदृशी द्वा-दशाङ्गुला ॥ १५ ॥

चतुर्थ-सुषिरा नाडी शल्य-निर्घातिनी मता ।
अर्शसां गो-स्तनाकारं यन्त्रकं चतुर्-अङ्गुलम् ॥ १६ ॥

नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षड्-अङ्गुलम् ।
द्वि-च्छिद्रं दर्शने व्याधेर् एक-च्छिद्रं तु कर्मणि ॥ १७ ॥

मध्ये ऽस्य त्र्य्-अङ्गुलं छिद्रम् अङ्गुष्ठोदर-विस्तृतम् ।
अर्धाङ्गुलोच्छ्रितोद्वृत्त-कर्णिकं च तद्-ऊर्ध्वतः ॥ १८ ॥

२५.१८dv -कर्णिकं तु तद्-ऊर्ध्वतः शम्य्-आख्यं तादृग् अ-च्छिद्रं यन्त्रम् अर्शः-प्रपीडनम् ।
सर्व-थापनयेद् ओष्ठं छिद्राद् ऊर्ध्वं भगन्दरे ॥ १९ ॥

घ्राणार्बुदार्शसाम् एक-च्छिद्रा नाड्य्-अङ्गुल-द्वया ।
प्रदेशिनी-परीणाहा स्याद् भगन्दर-यन्त्र-वत् ॥ २० ॥

अङ्गुली-त्राणकं दान्तं वार्क्षं वा चतुर्-अङ्गुलम् ।
द्वि-च्छिद्रं गो-स्तनाकारं तद्-वक्त्र-विवृतौ सुखम् ॥ २१ ॥

योनि-व्रणेक्षणं मध्ये सुषिरं षो-डशाङ्गुलम् ।
मुद्रा-बद्धं चतुर्-भित्तम् अम्भो-ज-मुकुलाननम् ॥ २२ ॥

२५.२२cv मुद्रा-बद्धं चतुर्-भिन्नम् २५.२२cv मुद्रा-बद्धं चतुष्-कोणम् चतुः-शलाकम् आक्रान्तं मूले तद् विकसेन् मुखे ।
यन्त्रे नाडी-व्रणाभ्यङ्ग-क्षालनाय षड्-अङ्गुले ॥ २३ ॥

वस्ति-यन्त्राकृती मूले मुखे ऽङ्गुष्ठ-कलाय-खे ।
अग्रतो ऽ-कर्णिके मूले निबद्ध-मृदु-चर्मणी ॥ २४ ॥

द्वि-द्वारा नलिका पिच्छ-नलिका वोदकोदरे ।
धूम-वस्त्य्-आदि-यन्त्राणि निर्दिष्टानि यथा-यथम् ॥ २५ ॥

त्र्य्-अङ्गुलास्यं भवेच् छृङ्गं चूषणे ऽष्टा-दशाङ्गुलम् ।
अग्रे सिद्धार्थक-च्छिद्रं सु-नद्धं चूचुकाकृति ॥ २६ ॥

स्याद् द्वा-दशाङ्गुलो ऽलाबुर् नाहे त्व् अष्टा-दशाङ्गुलः ।
चतुस्-त्र्य्-अङ्गुल-वृत्तास्यो दीप्तो ऽन्तः श्लेष्म-रक्त-हृत् ॥ २७ ॥

तद्-वद् घटी हिता गुल्म-विलयोन्नमने च सा ।
शलाकाख्यानि यन्त्राणि नाना-कर्माकृतीनि च ॥ २८ ॥

२५.२८dv नाना-कर्माकृतीनि तु यथा-योग-प्रमाणानि तेषाम् एषण-कर्मणी ।
उभे गण्डू-पद-मुखे स्रोतोभ्यः शल्य-हारिणी ॥ २९ ॥

२५.२९bv तेषाम् एषण-कर्मणि मसूर-दल-वक्त्रे द्वे स्याताम् अष्ट-नवाङ्गुले ।
शङ्कवः षड् उभौ तेषां षो-डश-द्वा-दशाङ्गुलौ ॥ ३० ॥

व्यूहने ऽहि-फणा-वक्त्रौ द्वौ दश-द्वा-दशाङ्गुलौ ।
चालने शर-पुङ्खास्याव् आहार्ये बडिशाकृती ॥ ३१ ॥

नतो ऽग्रे शङ्कुना तुल्यो गर्भ-शङ्कुर् इति स्मृतः ।
अष्टाङ्गुलायतस् तेन मूढ-गर्भं हरेत् स्त्रियाः ॥ ३२ ॥

अश्मर्य्-आहरणं सर्प-फणा-वद् वक्रम् अग्रतः ।
शर-पुङ्ख-मुखं दन्त-पातनं चतुर्-अङ्गुलम् ॥ ३३ ॥

२५.३३av अश्मर्य्-आहरणे सर्प- २५.३३bv -फणा-वद् वक्त्रम् अग्रतः कार्पास-विहितोष्णीषाः शलाकाः षट् प्रमार्जने ।
पायाव् आसन्न-दूरार्थे द्वे दश-द्वा-दशाङ्गुले ॥ ३४ ॥

द्वे षट्-सप्ताङ्गुले घ्राणे द्वे कर्णे ऽष्ट-नवाङ्गुले ।
कर्ण-शोधनम् अश्वत्थ-पत्त्र-प्रान्तं स्रुवाननम् ॥ ३५ ॥

शलाका-जाम्बवौष्ठानां क्षारे ऽग्नौ च पृथक् त्रयम् ।
युञ्ज्यात् स्थूलाणु-दीर्घाणां शलाकाम् अन्त्र-वर्ध्मनि ॥ ३६ ॥

मध्योर्ध्व-वृत्त-दण्डां च मूले चार्धेन्दु-संनिभाम् ।
कोलास्थि-दल-तुल्यास्या नासार्शो-ऽर्बुद-दाह-कृत् ॥ ३७ ॥

अष्टाङ्गुला निम्न-मुखास् तिस्रः क्षारौषध-क्रमे ।
कनीनी-मध्यमानामी-नख-मान-समैर् मुखैः ॥ ३८ ॥

२५.३८cv कनिष्ठा-मध्यमानामी- स्वं स्वम् उक्तानि यन्त्राणि मेढ्र-शुद्ध्य्-अञ्जनादिषु ।
अनु-यन्त्राण्य् अयस्-कान्त-रज्जू-वस्त्राश्म-मुद्गराः ॥ ३९ ॥

२५.३९cv अणु-यन्त्राण्य् अयस्-कान्त- वध्रान्त्र-जिह्वा-वालाश् च शाखा-नख-मुख-द्वि-जाः ।
कालः पाकः करः पादो भयं हर्षश् च तत्-क्रियाः ॥ ४० ॥

२५.४०av वध्र्य्-अन्त्र-जिह्वा-वालाश् च २५.४०av वर्ध्रान्त्र-जिह्वा-वालाश् च २५.४०bv -शाखा-नख-मुख-द्वि-जाः उपाय-वित् प्रविभजेद् आलोच्य निपुणं धिया ॥ ४०□अब् ॥
निर्घातनोन्मथन-पूरण-मार्ग-शुद्धि-संव्यूहनाहरण-बन्धन-पीडनानि ।
आचूषणोन्नमन-नामन-चाल-भङ्ग-व्यावर्तनर्जु-करणानि च यन्त्र-कर्म ॥ ४१□ ॥
विवर्तते साध्व् अवगाहते च ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।
यन्त्रेष्व् अतः कङ्क-मुखं प्रधानं स्थानेषु सर्वेष्व् अधिकारि यच् च ॥ ४२□ ॥
२५.४२□अव् निवर्तते साध्व् अवगाहते च २५.४२□द्व् स्थानेषु सर्वेष्व् अ-विकारि यच् च

अध्यायः २६

षड्-विंशतिः सु-कर्मारैर् घटितानि यथा-विधि ।
शस्त्राणि रोम-वाहीनि बाहुल्येनाङ्गुलानि षट् ॥ १ ॥

सु-रूपाणि सु-धाराणि सु-ग्रहाणि च कारयेत् ।
अ-करालानि सु-ध्मात-सु-तीक्ष्णाव् अर्तिते ऽयसि ॥ २ ॥

समाहित-मुखाग्राणि नीलाम्भो-ज-च्छवीनि च ।
नामानुगत-रूपाणि सदा संनिहितानि च ॥ ३ ॥

स्वोन्मानार्ध-चतुर्थांश-फलान्य् एकैक-शो ऽपि च ।
प्रायो द्वि-त्राणि युञ्जीत तानि स्थान-विशेषतः ॥ ४ ॥

२६.४av स्व-मानार्ध-चतुर्थांश- मण्डलाग्रं वृद्धि-पत्त्रम् उत्पलाध्य्-अर्ध-धारके ।
सर्पैषण्यौ वेतसाख्यं शरार्य्-आस्य-त्रि-कूर्चके ॥ ४+(१) ॥
कुशास्यं साट-वदनम् अन्तर्-वक्त्रार्ध-चन्द्रके ।
व्रीहि-मुखं कुठारी च शलाकाङ्गुलि-शस्त्रके ॥ ४+(२) ॥
२६.४+(२)अव् कुशास्या साट-वदना २६.४+(२)ब्व् अन्तर्-वक्त्रार्ध-चन्द्रकम् २६.४+(२)ब्व् छन्न-वक्त्रार्ध-चन्द्रके २६.४+(२)ब्व् छन्न-वक्त्रार्ध-चन्द्रकम् बडिशं कर-पत्त्राख्यं कर्तरी नख-शस्त्रकम् ।
दन्त-लेखनकं सूच्यः कूर्चो नाम खजाह्वयम् ॥ ४+(३) ॥
आरा चतुर्-विधाकारा तथा स्यात् कर्ण-वेधनी ॥ ४+(४)अब् ॥
२६.४+(४)ब्व् तथा स्यात् कर्ण-वेधनम् मण्डलाग्रं फले तेषां तर्जन्य्-अन्तर्-नखाकृति ।
लेखने छेदने योज्यं पोथकी-शुण्डिकादिषु ॥ ५ ॥

२६.५av मण्डलाग्रं फलं तेषां वृद्धि-पत्त्रं क्षुराकारं छेद-भेदन-पाटने ।
ऋज्व्-अग्रम् उन्नते शोफे गम्भीरे च तद् अन्य-था ॥ ६ ॥

२६.६dv गम्भीरे तु ततो ऽन्य-था नताग्रं पृष्ठतो दीर्घ-ह्रस्व-वक्त्रं यथाश्रयम् ।
उत्पलाध्य्-अर्ध-धाराख्ये भेदने छेदने तथा ॥ ७ ॥

२६.७bv -ह्रस्व-वक्त्रं यथाशयम् २६.७bv -ह्रस्व-वक्त्रं यथा-क्रमम् २६.७bv -ह्रस्व-वक्त्रं यथा-यथम् २६.७bv -ह्रस्व-वक्त्रे यथा-यथम् सर्पास्यं घ्राण-कर्णार्शश्-छेदने ऽर्धाङ्गुलं फले ।
गतेर् अन्वेषणे श्लक्ष्णा गण्डू-पद-मुखैषणी ॥ ८ ॥

भेदनार्थे ऽपरा सूची-मुखा मूल-निविष्ट-खा ।
वेतसं व्यधने स्राव्ये शरार्य्-आस्य-त्रि-कूर्चके ॥ ९ ॥

कुशाटा-वदने स्राव्ये द्व्य्-अङ्गुलं स्यात् तयोः फलम् ।
तद्-वद् अन्तर्-मुखं तस्य फलम् अध्य्-अर्धम् अङ्गुलम् ॥ १० ॥

२६.१०अच् कुशाटा वदने स्राव्ये अर्ध-चन्द्राननं चैतत् तथाध्य्-अर्धाङ्गुलं फले ।
व्रीहि-वक्त्रं प्रयोज्य च तत् सिरोदरयोर् व्यधे ॥ ११ ॥

पृथुः कुठारी गो-दन्त-सदृशार्धाङ्गुलानना ।
तयोर्ध्व-दण्डया विध्येद् उपर्य् अस्थ्नां स्थितां सिराम् ॥ १२ ॥

ताम्री शलाका द्वि-मुखी मुखे कुरुबकाकृतिः ।
लिङ्ग-नाशं तया विध्येत् कुर्याद् अङ्गुलि-शस्त्रकम् ॥ १३ ॥

२६.१३av ताम्री शलाका द्वि-मुखा मुद्रिका-निर्गत-मुखं फले त्व् अर्धाङ्गुलायतम् ।
योगतो वृद्धि-पत्त्रेण मण्डलाग्रेण वा समम् ॥ १४ ॥

तत् प्रदेशिन्य्-अग्र-पर्व-प्रमाणार्पण-मुद्रिकम् ।
सूत्र-बद्धं गल-स्रोतो-रोग-च्छेदन-भेदने ॥ १५ ॥

२६.१५bv -प्रमाणार्पित-मुद्रिकम् ग्रहणे शुण्डिकार्मादेर् बडिशं सु-नताननम् ।
छेदे ऽस्थ्नां करपत्त्रं तु खर-धारं दशाङ्गुलम् ॥ १६ ॥

२६.१६bv बडिशः सु-नताननः विस्तारे द्व्य्-अङ्गुलं सूक्ष्म-दन्तं सु-त्सरु-बन्धनम् ।
स्नायु-सूत्र-कच-च्छेदे कर्तरी कर्तरी-निभा ॥ १७ ॥

वक्रर्जु-धारं द्वि-मुखं नख-शस्त्रं नवाङ्गुलम् ।
सूक्ष्म-शल्योद्धृति-च्छेद-भेद-प्रच्छान-लेखने ॥ १८ ॥

२६.१८dv -भेद-प्रच्छन्न-लेखने एक-धारं चतुष्-कोणं प्रबद्धाकृति चैकतः ।
दन्त-लेखनकं तेन शोधयेद् दन्त-शर्कराम् ॥ १९ ॥

२६.१९bv प्रवृद्धाकृति चैकतः वृत्ता गूढ-दृढाः पाशे तिस्रः सूच्यो ऽत्र सीवने ।
मांसलानां प्रदेशानां त्र्य्-अश्रा त्र्य्-अङ्गुलम् आयता ॥ २० ॥

अल्प-मांसास्थि-संधि-स्थ-व्रणानां द्व्य्-अङ्गुलायता ।
व्रीहि-वक्त्रा धनुर्-वक्रा पक्वामाशय-मर्मसु ॥ २१ ॥

सा सार्ध-द्व्य्-अङ्गुला सर्व-वृत्तास् ताश् चतुर्-अङ्गुलाः ।
कूर्चो वृत्तैक-पीठ-स्थाः सप्ताष्टौ वा सु-बन्धनाः ॥ २२ ॥

२६.२२av सा सार्ध-द्व्य्-अङ्गुला सर्वा २६.२२bv वृत्तास् ताश् चतुर्-अङ्गुलाः स योज्यो नीलिका-व्यङ्ग-केश-शातेषु कुट्टने ।
अर्धाङ्गुल-मुखैर् वृत्तैर् अष्टाभिः कण्टकैः खजः ॥ २३ ॥

२६.२३bv -केश-शातन-कुट्टने पाणिभ्यां मथ्यमानेन घ्राणात् तेन हरेद् असृक् ।
व्यधनं कर्ण-पालीनां यूथिका-मुकुलाननम् ॥ २४ ॥

२६.२४cv व्यधने कर्ण-पालीनां २६.२४dv यूथिका-मुकुलानना आरार्धाङ्गुल-वृत्तास्या तत्-प्रवेशा तथोर्ध्वतः ।
चतुर्-अश्रा तया विध्येच् छोफं पक्वाम-संशये ॥ २५ ॥

कर्ण-पालीं च बहलां बहलायाश् च शस्यते ।
सूची त्रि-भाग-सुषिरा त्र्य्-अङ्गुला कर्ण-वेधनी ॥ २६ ॥

२६.२६bv तस्या एव च शस्यते जलौकः-क्षार-दहन-काचोपल-नखादयः ।
अ-लौहान्य् अनु-शस्त्राणि तान्य् एवं च विकल्पयेत् ॥ २७ ॥

अपराण्य् अपि यन्त्रादीन्य् उपयोगं च यौगिकम् ।
उत्पाट्य-पाट्य-सीव्यैष्य-लेख्य-प्रच्छान-कुट्टनम् ॥ २८ ॥

२६.२८cv उत्पाट्य-पाट्य-सेव्यैष्य- २६.२८dv -लेख्य-प्रच्छन्न-कुट्टनम् छेद्यं भेद्यं व्यधो मन्थो ग्रहो दाहश् च तत्-क्रियाः ।
कुण्ठ-खण्ड-तनु-स्थूल-ह्रस्व-दीर्घ-त्व-वक्र-ताः ॥ २९ ॥

शस्त्राणां खर-धार-त्वम् अष्टौ दोषाः प्रकीर्तिताः ।
छेद-भेदन-लेख्यार्थं शस्त्रं वृन्त-फलान्तरे ॥ ३० ॥

तर्जनी-मध्यमाङ्गुष्ठैर् गृह्णीयात् सु-समाहितः ।
विस्रावणानि वृन्ताग्रे तर्जन्य्-अङ्गुष्ठकेन च ॥ ३१ ॥

तल-प्रच्छन्न-वृन्ताग्रं ग्राह्यं व्रीहि-मुखं मुखे ।
मूलेष्व् आहरणार्थानि क्रिया-सौकर्यतो ऽपरम् ॥ ३२ ॥

२६.३२cv मूलेष्व् आहरणार्थे तु २६.३२cv मूलेष्व् आहरणार्थेषु स्यान् नवाङ्गुल-विस्तारः सु-घनो द्वा-दशाङ्गुलः ।
क्षौम-पत्त्रोर्ण-कौशेय-दुकूल-मृदु-चर्म-जः ॥ ३३ ॥

विन्यस्त-पाशः सु-स्यूतः सान्तरोर्णा-स्थ-शस्त्रकः ।
शलाका-पिहितास्यश् च शस्त्र-कोशः सु-संचयः ॥ ३४ ॥

जलौकसस् तु सुखिनां रक्त-स्रावाय योजयेत् ।
दुष्टाम्बु-मत्स्य-भेकाहि-शव-कोथ-मलोद्भवाः ॥ ३५ ॥

२६.३५cv दुष्टाम्बु-मत्स्य-भेकादि- रक्ताः श्वेता भृशं कृष्णाश् चपलाः स्थूल-पिच्छिलाः ।
इन्द्रायुध-विचित्रोर्ध्व-राजयो रोमशाश् च ताः ॥ ३६ ॥

स-विषा वर्जयेत् ताभिः कण्डू-पाक-ज्वर-भ्रमाः ।
विष-पित्तास्र-नुत् कार्यं तत्र शुद्धाम्बु-जाः पुनः ॥ ३७ ॥

२६.३७cv विष-पित्तास्र-जित् कार्यं २६.३७dv तत्र शुद्धाम्बु-संभवाः निर्-विषाः शैवल-श्यावा वृत्ता नीलोर्ध्व-राजयः ।
कषाय-पृष्ठास् तन्व्-अङ्ग्यः किञ्-चित्-पीतोदराश् च याः ॥ ३८ ॥

ता अप्य् अ-सम्यग्-वमनात् प्रततं च निपातनात् ।
सीदन्तिः सलिलं प्राप्य रक्त-मत्ता इति त्यजेत् ॥ ३९ ॥

२६.३९cv सीदन्ति सलिलं प्राप्य अथेतरा निशा-कल्क-युक्ते ऽम्भसि परिप्लुताः ।
अवन्ति-सोमे तक्रे वा पुनश् चाश्वासिता जले ॥ ४० ॥

२६.४०cv काञ्जिके कालशेये वा लागयेद् घृत-मृत्-स्तन्य-रक्त-शस्त्र-निपातनैः ।
पिबन्तीर् उन्नत-स्कन्धाश् छादयेन् मृदु-वाससा ॥ ४१ ॥

२६.४१av लागयेत् पल-मृत्-स्तन्य- संपृक्ताद् दुष्ट-शुद्धास्राज् जलौका दुष्ट-शोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकाद् इव ॥ ४२ ॥

२६.४२av संसृष्टाद् दुष्ट-शुद्धास्राज् गुल्मार्शो-विद्रधीन् कुष्ठ-वात-रक्त-गलामयान् ।
नेत्र-रुग्-विष-वीसर्पान् शमयन्ति जलौकसः ॥ ४२+(१) ॥
दंशस्य तोदे कण्ड्वां वा मोक्षयेद् वामयेच् च ताम् ।
पटु-तैलाक्त-वदनां श्लक्ष्ण-कण्डन-रूषिताम् ॥ ४३ ॥

२६.४३bv मोक्षयेद् वामयेच् च ताः २६.४३cv पटु-तैलाक्त-वदनाः २६.४३dv श्लक्ष्ण-कण्डन-रूक्षिताम् २६.४३dv श्लक्ष्ण-कण्डन-रूषिताः २६.४३dv श्लक्ष्ण-कण्डन-रूक्षिताः रक्षन् रक्त-मदाद् भूयः सप्ताहं ता न पातयेत् ।
पूर्व-वत् पटु-ता दार्ढ्यं सम्यग्-वान्ते जलौकसाम् ॥ ४४ ॥

क्लमो ऽति-योगान् मृत्युर् वा दुर्-वान्ते स्तब्ध-ता मदः ।
अन्य-त्रान्य-त्र ताः स्थाप्या घटे मृत्स्नाम्बु-गर्भिणि ॥ ४५ ॥

लालादि-कोथ-नाशार्थं स-विषाः स्युस् तद्-अन्वयात् ।
अ-शुद्धौ स्रावयेद् दंशान् हरिद्रा-गुड-माक्षिकैः ॥ ४६ ॥

शत-धौताज्य-पिचवस् ततो लेपाश् च शीतलाः ।
दुष्ट-रक्तापगमनात् सद्यो राग-रुजां शमः ॥ ४७ ॥

अ-शुद्धं चलितं स्थानात् स्थितं रक्तं व्रणाशये ।
व्य्-अम्ली-भवेत् पर्युषितं तस्मात् तत् स्रावयेत् पुनः ॥ ४८ ॥

२६.४८cv अम्ली-भवेत् पर्युषितं युञ्ज्यान् नालाबु-घटिका रक्ते पित्तेन दूषिते ।
तासाम् अनल-संयोगाद् युञ्ज्यात् तु कफ-वायुना ॥ ४९ ॥

२६.४९dv युञ्ज्याच् च कफ-वायुना कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ।
स्कन्न-त्वाद् वात-पित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ॥ ५० ॥

२६.५०bv न शृङ्गेणाति निर्हरेत् २६.५०bv न शृङ्गेणाभिनिर्हरेत् गात्रं बद्ध्वोपरि दृढं रज्ज्वा पट्टेन वा समम् ।
स्नायु-संध्य्-अस्थि-मर्माणि त्यजन् प्रच्छानम् आचरेत् ॥ ५१ ॥

अधो-देश प्रविसृतैः पदैर् उपरि-गामिभिः ।
न गाढ-घन-तिर्यग्भिर् न पदे पदम् आचरन् ॥ ५२ ॥

२६.५२dv न पदे पदम् आचरेत् प्रच्छानेनैक-देश-स्थं ग्रथितं जल-जन्मभिः ।
हरेच् छृङ्गादिभिः सुप्तम् असृग् व्यापि सिरा-व्यधैः ॥ ५३ ॥

२६.५३bv ग्रन्थितं जल-जन्मभिः प्रच्छानं पिण्डिते वा स्याद् अवगाढे जलौकसः ।
त्वक्-स्थे ऽलाबु-घटी-शृङ्गं सिरैव व्यापके ऽसृजि ॥ ५४ ॥

वातादि-धाम वा शृङ्ग-जलौको-ऽलाबुभिः क्रमात् ।
स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद् वायु-कोपतः ॥ ५५ ॥

स-तोद-कण्डुः शोफस् तं सर्पिषोष्णेन सेचयेत् ॥ ५५ab ॥
२६.५५av स-तोद-कण्डू-शोफस् तं

अध्यायः २७

मधुरं लवणं किञ्-चिद् अ-शीतोष्णम् अ-संहतम् ।
पद्मेन्द्रगोप-हेमावि-शश-लोहित-लोहितम् ॥ १ ॥

लोहितं प्रभवः शुद्धं तनोस् तेनैव च स्थितः ।
तत् पित्त-श्लेष्मलैः प्रायो दूष्यते कुरुते ततः ॥ २ ॥

२७.२av लोहितं प्रवदेच् छुद्धं विसर्प-विद्रधि-प्लीह-गुल्माग्नि-सदन-ज्वरान् ।
मुख-नेत्र-शिरो-रोग-मद-तृड्-लवणास्य-ताः ॥ ३ ॥

कुष्ठ-वातास्र-पित्तास्र-कट्व्-अम्लोद्गिरण-भ्रमान् ।
शीतोष्ण-स्निग्ध-रूक्षाद्यैर् उपक्रान्ताश् च ये गदाः ॥ ४ ॥

सम्यक् साध्या न सिध्यन्ति ते च रक्त-प्रकोप-जाः ।
तेषु स्रावयितुं रक्तम् उद्रिक्तं व्यधयेत् सिराम् ॥ ५ ॥

न तून-षो-डशातीत-सप्तत्य्-अब्द-स्रुतासृजाम् ।
अ-स्निग्धा-स्वेदितात्य्-अर्थ-स्वेदितानिल-रोगिणाम् ॥ ६ ॥

२७.६av न न्यून-षो-डशातीत- गर्भिणी-सूतिका-जीर्ण-पित्तास्र-श्वास-कासिनाम् ।
अतीसारोदर-च्छर्दि-पाण्डु-सर्वाङ्ग-शोफिनाम् ॥ ७ ॥

स्नेह-पीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।
ना-यन्त्रितां सिरां विध्येन् न तिर्यङ् नाप्य् अन्-उत्थिताम् ॥ ८ ॥

२७.८dv न तिर्यङ् नाप्य् अन्-उच्छ्रिताम् नाति-शीतोष्ण-वाताभ्रेष्व् अन्य-त्रात्ययिकाद् गदात् ।
शिरो-नेत्र-विकारेषु ललाट्यां मोक्षयेत् सिराम् ॥ ९ ॥

२७.९dv लालाट्यां मोक्षयेत् सिराम् २७.९dv लालाट्या मोक्षयेत् सिराः २७.९dv ललाट्या मोक्षयेत् सिराः अपाङ्ग्याम् उपनास्यां वा कर्ण-रोगेषु कर्ण-जाम् ।
नासा-रोगेषु नासाग्रे स्थितां नासा-ललाटयोः ॥ १० ॥

२७.१०av अपाङ्ग्या उपनास्या वा पीनसे मुख-रोगेषु जिह्वौष्ठ-हनु-तालु-गाः ।
जत्रूर्ध्व-ग्रन्थिषु ग्रीवा-कर्ण-शङ्ख-शिरः-श्रिताः ॥ ११ ॥

२७.११cv जत्रूर्ध्वं ग्रन्थिषु ग्रीवा- उरो-ऽपाङ्ग-ललाट-स्था उन्मादे ऽपस्मृतौ पुनः ।
हनु-संधौ समस्ते वा सिरां भ्रू-मध्य-गामिनीम् ॥ १२ ॥

२७.१२av उरो-ऽपाङ्ग-ललाट-स्थाम् २७.१२dv सिरा भ्रू-मध्य-गामिनीः विद्रधौ पार्श्व-शूले च पार्श्व-कक्षा-स्तनान्तरे ।
तृतीयके ऽंसयोर् मध्ये स्कन्धस्याधश् चतुर्थके ॥ १३ ॥

प्रवाहिकायां शूलिन्यां श्रोणितो द्व्य्-अङ्गुले स्थिताम् ।
शुक्र-मेढ्रामये मेढ्र ऊरु-गां गल-गण्डयोः ॥ १४ ॥

गृध्रस्यां जानुनो ऽधस्-ताद् ऊर्ध्वं वा चतुर्-अङ्गुले ।
इन्द्र-वस्तेर् अधो ऽपच्यां द्व्य्-अङ्गुले चतुर्-अङ्गुले ॥ १५ ॥

ऊर्ध्वं गुल्फस्य सक्थ्य्-अर्तौ तथा क्रोष्टुक-शीर्षके ।
पाद-दाहे खुडे हर्षे विपाद्यां वात-कण्टके ॥ १६ ॥

२७.१६av ऊर्ध्वं गुल्फस्य संध्य्-अर्तौ चिप्ये च द्व्य्-अङ्गुले विध्येद् उपरि क्षिप्र-मर्मणः ।
गृध्रस्याम् इव विश्वाच्यां यथोक्तानाम् अ-दर्शने ॥ १७ ॥

मर्म-हीने यथासन्ने देशे ऽन्यां व्यधयेत् सिराम् ।
अथ स्निग्ध-तनुः सज्ज-सर्वोपकरणो बली ॥ १८ ॥

कृत-स्वस्त्य्-अयनः स्निग्ध-रसान्न-प्रतिभोजितः ।
अग्नि-तापातप-स्विन्नो जानूच्चासन-संस्थितः ॥ १९ ॥

मृदु-पट्टात्त-केशान्तो जानु-स्थापित-कूर्परः ।
मुष्टिभ्यां वस्त्र-गर्भाभ्यां मन्ये गाढं निपीडयेत् ॥ २० ॥

२७.२०dv मन्ये गाढं प्रपीडयेत् दन्त-प्रपीडनोत्कास-गण्डाध्मानानि चाचरेत् ।
पृष्ठतो यन्त्रयेच् चैनं वस्त्रम् आवेष्टयन् नरः ॥ २१ ॥

२७.२१dv वस्त्रम् आवेष्टयेन् नरः कन्धरायां परिक्षिप्य न्यस्यान्तर् वाम-तर्जनीम् ।
एषो ऽन्तर्-मुख-वर्ज्यानां सिराणां यन्त्रणे विधिः ॥ २२ ॥

२७.२२bv तस्यान्तर् वाम-तर्जनीम् २७.२२cv एषो ऽन्तर्-मुख-वर्जानां ततो मध्यमयाङ्गुल्या वैद्यो ऽङ्गुष्ठ-विमुक्तया ।
ताडयेद् उत्थितां ज्ञात्वा स्पर्शाद् वाङ्गुष्ठ-पीडनैः ॥ २३ ॥

२७.२३dv स्पर्शाङ्गुष्ठ-प्रपीडनैः कुठार्या लक्षयेन् मध्ये वाम-हस्त-गृहीतया ।
फलोद्देशे सु-निष्-कम्पं सिरां तद्-वच् च मोक्षयेत् ॥ २४ ॥

ताडयन् पीडयंश् चैनां विध्येद् व्रीहि-मुखेन तु ।
अङ्गुष्ठेनोन्नमय्याग्रे नासिकाम् उप-नासिकाम् ॥ २५ ॥

२७.२५av ताडयन् पीडयन् वैनां २७.२५av ताडयन् पीडयेच् चैनां अभ्युन्नत-विदष्टाग्र-जिह्वस्याधस् तद्-आश्रयाम् ।
यन्त्रयेत् स्तनयोर् ऊर्ध्वं ग्रीवाश्रित-सिरा-व्यधे ॥ २६ ॥

पाषाण-गर्भ-हस्तस्य जानु-स्थे प्रसृते भुजे ।
कुक्षेर् आरभ्य मृदिते विध्येद् बद्धोर्ध्व-पट्टके ॥ २७ ॥

विध्येद् धस्त-सिरां बाहाव् अन्-आकुञ्चित-कूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिम् अङ्गुष्ठ-गर्भिणम् ॥ २८ ॥

२७.२८dv मुष्टिम् अङ्गुष्ठ-गर्भिणीम् ऊर्ध्वं वेध्य-प्रदेशाच् च पट्टिकां चतुर्-अङ्गुले ।
विध्येद् आलम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ॥ २९ ॥

प्रहृष्टे मेहने जङ्घा-सिरां जानुन्य् अ-कुञ्चिते ।
पादे तु सु-स्थिते ऽधस्-ताज् जानु-संधेर् निपीडिते ॥ ३० ॥

२७.३०cv पादे तु भू-स्थिते ऽधस्-ताज् गाढं कराभ्याम् आ-गुल्फं चरणे तस्य चोपरि ।
द्वितीये कुञ्चिते किञ्-चिद्-आरूढे हस्त-वत् ततः ॥ ३१ ॥

बद्ध्वा विध्येत् सिराम् इत्थम् अन्-उक्तेष्व् अपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत् तद् यन्त्रम् उपाय-वित् ॥ ३२ ॥

मांसले निक्षिपेद् देशे व्रीह्य्-आस्यं व्रीहि-मात्रकम् ।
यवार्धम् अस्थ्नाम् उपरि सिरां विध्यन् कुठारिकाम् ॥ ३३ ॥

२७.३३dv सिरां विध्यन् कुठारया २७.३३dv सिरां विध्येत् कुठारया २७.३३dv सिरां विध्येत् कुठारिकाम् सम्यग्-विद्धा स्रवेद् धारां यन्त्रे मुक्ते तु न स्रवेत् ।
अल्प-कालं वहत्य् अल्पं दुर्-विद्धा तैल-चूर्णनैः ॥ ३४ ॥

२७.३४av सम्यग्-विद्धे स्रवेद् धारा २७.३४bv यन्त्रे मुक्ते च न स्रवेत् २७.३४dv दुर्-विद्धा तैल-चूर्णितैः स-शब्दम् अति-विद्धा तु स्रवेद् दुःखेन धार्यते ।
भी-मूर्छा-यन्त्र-शैथिल्य-कुण्ठ-शस्त्राति-तृप्तयः ॥ ३५ ॥

क्षाम-त्व-वेगि-ता-स्वेदा रक्तस्या-स्रुति-हेतवः ।
अ-सम्यग् अस्रे स्रवति वेल्ल-व्योष-निशा-नतैः ॥ ३६ ॥

सागार-धूम-लवण-तैलैर् दिह्यात् सिरा-मुखम् ।
सम्यक्-प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७ ॥

२७.३७dv तैलेन लवणेन वा अग्रे स्रवति दुष्टास्रं कुसुम्भाद् इव पीतिका ।
सम्यक् स्रुत्वा स्वयं तिष्ठेच् छुद्धं तद् इति नाहरेत् ॥ ३८ ॥

यन्त्रं विमुच्य मूर्छायां वीजिते व्यजनैः पुनः ।
स्रावयेन् मूर्छति पुनस् त्व् अपरे-द्युस् त्र्य्-अहे ऽपि वा ॥ ३९ ॥

वाताच् छ्यावारुणं रूक्षं वेग-स्राव्य् अच्छ-फेनिलं ।
पित्तात् पीतासितं विस्रम् अ-स्कन्द्य् औष्ण्यात् स-चन्द्रिकम् ॥ ४० ॥

२७.४०dv अ-स्कन्द्य् औष्ण्यात् स-चन्द्रकम् वातिकं शोणितं शीघ्रं भूमिः पिबति चावृतम् ।
मक्षिकाणाम् अ-कान्तं च रक्तं भवति पैत्तिकम् ॥ ४०+१ ॥

श्लैष्मिकं मक्षिकाक्रान्तं शुष्यत्य् अपि न चेणयत् ॥ ४०+२अब् ॥
कफात् स्निग्धम् असृक् पाण्डु तन्तु-मत् पिच्छिलं घनम् ।
संसृष्ट-लिङ्गं संसर्गात् त्रि-दोषं मलिनाविलम् ॥ ४१ ॥

अ-शुद्धौ बलिनो ऽप्य् अस्रं न प्रस्थात् स्रावयेत् परम् ।
अति-स्रुतौ हि मृत्युः स्याद् दारुणा वा चलामयाः ॥ ४२ ॥

२७.४२av अ-शुद्धं बलिनो ऽप्य् अस्रं तत्राभ्यङ्ग-रस-क्षीर-रक्त-पानानि भेषजम् ।
स्रुते रक्ते शनैर् यन्त्रम् अपनीय हिमाम्बुना ॥ ४३ ॥

प्रक्षाल्य तैल-प्लोताक्तं बन्धनीयं सिरा-मुखम् ।
अ-शुद्धं स्रावयेद् भूयः सायम् अह्न्य् अपरे ऽपि वा ॥ ४४ ॥

२७.४४cv अ-शुद्धौ स्रावयेद् भूयः स्नेहोपस्कृत-देहस्य पक्षाद् वा भृश-दूषितम् ।
किञ्-चिद् धि शेषे दुष्टास्रे नैव रोगो ऽतिवर्तते ॥ ४५ ॥

स-शेषम् अप्य् अतो धार्यं न चाति-स्रुतिम् आचरेत् ।
हरेच् छृङ्गादिभिः शेषं प्रसादम् अथ-वा नयेत् ॥ ४६ ॥

शीतोपचार-पित्तास्र-क्रिया-शुद्धि-विशोषणैः ।
दुष्टं रक्तम् अन्-उद्रिक्तम् एवम् एव प्रसादयेत् ॥ ४७ ॥

रक्ते त्व् अ-तिष्ठति क्षिप्रं स्तम्भनीम् आचरेत् क्रियाम् ।
लोध्र-प्रियङ्गु-पत्तङ्ग-माष-यष्ट्य्-आह्व-गैरिकैः ॥ ४८ ॥

मृत्-कपालाञ्जन-क्षौम-मषी-क्षीरि-त्वग्-अङ्कुरैः ।
विचूर्णयेद् व्रण-मुखं पद्मकादि-हिमं पिबेत् ॥ ४९ ॥

ताम् एव वा सिरां विध्येद् व्यधात् तस्माद् अन्-अन्तरम् ।
सिरा-मुखं वा त्वरितं दहेत् तप्त-शलाकया ॥ ५० ॥

२७.५०cv सिरा-मुखं च त्वरितं उन्-मार्ग-गा यन्त्र-निपीडनेन स्व-स्थानम् आयान्ति पुनर् न यावत् ।
दोषाः प्रदुष्टा रुधिरं प्रपन्नास् तावद् धिताहार-विहार-भाक् स्यात् ॥ ५१ ॥

नात्य्-उष्ण-शीतं लघु दीपनीयं रक्ते ऽपनीते हितम् अन्न-पानम् ।
तदा शरीरं ह्य् अन्-अवस्थितासृग् अग्निर् विशेषाद् इति रक्षितव्यः ॥ ५२ ॥

२७.५२cv तदा शरीरं ह्य् अन्-अवस्थितास्रम् २७.५२dv अग्निर् विशेषाद् इति रक्षणीयः २७.५२dv अग्निर् विशेषेण च रक्षितव्यः प्रसन्न-वर्णेन्द्रियम् इन्द्रियार्थान् इच्छन्तम् अ-व्याहत-पक्तृ-वेगम् ।
सुखान्वितं पुष्टि-बलोपपन्नं विशुद्ध-रक्तं पुरुषं वदन्ति ॥ ५३ ॥

रक्त-जा व्यङ्ग-कुष्ठाद्याः कण्ठास्याक्षि-शिरो-गदाः ।
पलितारूंषिकाबाधाः शाम्यन्त्य् एते सिरा-व्यधात् ॥ ५३+१ ॥

निर्-व्याधि-नीलोत्पल-पत्त्र-नेत्रं सु-व्यक्त-मूलासित-बद्ध-केशम् ।
चन्द्रोपमं पद्म-सु-गन्धि वक्त्रं भवेल् ललाटे तु सिरा-व्यधेन ॥ ५३+२ ॥

अध्यायः २८

वक्रर्जु-तिर्यग्-ऊर्ध्वाधः शल्यानां पञ्च-धा गतिः ।
ध्यामं शोफ-रुजा-वन्तं स्रवन्तं शोणितं मुहुः ॥ १ ॥

अभ्युद्गतं बुद्बुद-वत् पिटिकोपचितं व्रणम् ।
मृदु-मांसं च जानीयाद् अन्तः-शल्यं समासतः ॥ २ ॥

२८.२av अभ्युन्नतं बुद्बुद-वत् २८.२cv मृदु-मांसं विजानीयाद् विशेषात् त्वग्-गते शल्ये वि-वर्णः कठिनायतः ।
शोफो भवति मांस-स्थे चोषः शोफो विवर्धते ॥ ३ ॥

पीडना-क्षम-ता पाकः शल्य-मार्गो न रोहति ।
पेश्य्-अन्तर-गते मांस-प्राप्त-वच् छ्वयथुं विना ॥ ४ ॥

२८.४av पीडने ऽ-क्षम-ता पाकः २८.४dv -प्राप्त-वच् छ्वयथोर् विना आक्षेपः स्नायु-जालस्य संरम्भ-स्तम्भ-वेदनाः ।
स्नायु-गे दुर्-हरं चैतत् सिराध्मानं सिराश्रिते ॥ ५ ॥

२८.५cv स्नाव-गे दुर्-हरं चैतत् स्व-कर्म-गुण-हानिः स्यात् स्रोतसां स्रोतसि स्थिते ।
धमनी-स्थे ऽनिले रक्तं फेन-युक्तम् उदीरयेत् ॥ ६ ॥

२८.६dv फेन-युक्तम् उदीरयन् निर्याति शब्द-वान् स्याच् च हृल्-लासः साङ्ग-वेदनः ।
संघर्षो बल-वान् अस्थि-संधि-प्राप्ते ऽस्थि-पूर्ण-ता ॥ ७ ॥

२८.७cv संहर्षो बल-वान् अस्थि- नैक-रूपा रुजो ऽस्थि-स्थे शोफस् तद्-वच् च संधि-गे ।
चेष्टा-निवृत्तिश् च भवेद् आटोपः कोष्ठ-संश्रिते ॥ ८ ॥

आनाहो ऽन्न-शकृन्-मूत्र-दर्शनं च व्रणानने ।
विद्यान् मर्म-गतं शल्यं मर्म-विद्धोपलक्षणैः ॥ ९ ॥

यथा-स्वं च परिस्रावैस् त्वग्-आदिषु विभावयेत् ।
रुह्यते शुद्ध-देहानाम् अनुलोम-स्थितं तु तत् ॥ १० ॥

२८.१०av यथा-यथं परिस्रावैस् दोष-कोपाभिघातादि-क्षोभाद् भूयो ऽपि बाधते ।
त्वङ्-नष्टे यत्र तत्र स्युर् अभ्यङ्ग-स्वेद-मर्दनैः ॥ ११ ॥

राग-रुग्-दाह-संरम्भा यत्र चाज्यं विलीयते ।
आशु शुष्यति लेपो वा तत्-स्थानं शल्य-वद् वदेत् ॥ १२ ॥

२८.१२bv यत्र वाज्यं विलीयते २८.१२cv आशुष्यति प्रलेपो वा मांस-प्रणष्टं संशुद्ध्या कर्शनाच् छ्लथ-तां गतम् ।
क्षोभाद् रागादिभिः शल्यं लक्षयेत् तद्-वद् एव च ॥ १३ ॥

२८.१३bv कर्षणाच् छ्लथ-तां गतम् पेश्य्-अस्थि-संधि-कोष्ठेषु नष्टम् अस्थिषु लक्षयेत् ।
अस्थ्नाम् अभ्यञ्जन-स्वेद-बन्ध-पीडन-मर्दनैः ॥ १४ ॥

प्रसारणाकुञ्चनतः संधि-नष्टं तथास्थि-वत् ।
नष्टे स्नायु-सिरा-स्रोतो-धमनीष्व् अ-समे पथि ॥ १५ ॥

अश्व-युक्तं रथं खण्ड-चक्रम् आरोप्य रोगिणम् ।
शीघ्रं नयेत् ततस् तस्य संरम्भाच् छल्यम् आदिशेत् ॥ १६ ॥

मर्म-नष्टं पृथङ् नोक्तं तेषां मांसादि-संश्रयात् ।
सामान्येन स-शल्यं तु क्षोभिण्या क्रियया स-रुक् ॥ १७ ॥

वृत्तं पृथु चतुष्-कोणं त्रि-पुटं च समासतः ।
अ-दृश्य-शल्य-संस्थानं व्रणाकृत्या विभावयेत् ॥ १८ ॥

तेषाम् आहरणोपायौ प्रतिलोमानुलोमकौ ।
अर्वाचीन-पराचीने निर्हरेत् तद्-विपर्ययात् ॥ १९ ॥

२८.१९cv अवाचीन-पराचीने सुखाहार्यं यतश् छित्त्वा ततस् तिर्यग्-गतं हरेत् ।
शल्यं न निर्घात्यम् उरः-कक्षा-वङ्क्षण-पार्श्व-गम् ॥ २० ॥

प्रतिलोमम् अन्-उत्तुण्डं छेद्यं पृथु-मुखं च यत् ।
नैवाहरेद् वि-शल्य-घ्नं नष्टं वा निर्-उपद्रवम् ॥ २१ ॥

अथाहरेत् कर-प्राप्यं करेणैवेतरत् पुनः ।
दृश्यं सिंहाहि-मकर-वर्मि-कर्कटकाननैः ॥ २२ ॥

अ-दृश्यं व्रण-संस्थानाद् ग्रहीतुं शक्यते यतः ।
कङ्क-भृङ्गाह्व-कुरर-शरारि-वायसाननैः ॥ २३ ॥

संदंशाभ्यां त्वग्-आदि-स्थं तालाभ्यां सुषिरं हरेत् ।
सुषिर-स्थं तु नलकैः शेषं शेषैर् यथा-यथम् ॥ २४ ॥

शस्त्रेण वा विशस्यादौ ततो निर्-लोहितं व्रणम् ।
कृत्वा घृतेन संस्वेद्य बद्धाचारिकम् आदिशेत् ॥ २५ ॥

२८.२५dv बद्धाचारिकम् आचरेत् सिरा-स्नायु-विलग्नं तु चालयित्वा शलाकया ।
हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥ २६ ॥

२८.२६av सिरा-स्नायु-विलग्नं च २८.२६av सिरा-स्नाव-विलग्नं तु ततः स्थानान्तरं प्राप्तं आहरेत् तद् यथा-यथम् ।
यथा-मार्गं दुर्-आकर्षम् अन्यतो ऽप्य् एवम् आहरेत् ॥ २७ ॥

अस्थि-दष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ।
इत्य् अ-शक्ये सु-बलिभिः सु-गृहीतस्य किङ्करैः ॥ २८ ॥

२८.२८av अस्थि-दृष्टे नरं पद्भ्यां २८.२८av अस्थि-नष्टे नरं पद्भ्यां २८.२८av अस्थि-लग्नं नरं पद्भ्यां २८.२८av अस्थि-स्थं न परं पद्भ्यां
तथाप्य् अ-शक्ये वारङ्गं वक्री-कृत्य धनुर्-ज्यया ।
सु-बद्धं वक्त्र-कटके बध्नीयात् सु-समाहितः ॥ २९ ॥

सु-संयतस्य पञ्चाङ्ग्या वाजिनः कशयाथ तम् ।
ताडयेद् इति मूर्धानं वेगेनोन्नमयन् यथा ॥ ३० ॥

२८.३०dv वेगेनोन्नमयेद् यथा उद्धरेच् छल्यम् एवं वा शाखायां कल्पयेत् तरोः ।
बद्ध्वा दुर्-बल-वारङ्गं कुशाभिः शल्यम् आहरेत् ॥ ३१ ॥

श्वयथु-ग्रस्त-वारङ्गं शोफम् उत्पीड्य युक्तितः ।
मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत् ॥ ३२ ॥

तैर् एव चानयेन् मार्गम् अ-मार्गोत्तुण्डितं तु यत् ।
मृदित्वा कर्णिनां कर्णं नाड्य्-आस्येन निगृह्य वा ॥ ३३ ॥

२८.३३av तेनैव वा नयेन् मार्गम् २८.३३bv अ-मार्गोत्तुण्डितं च यत् अयस्-कान्तेन निष्-कर्णं विवृतास्यम् ऋजु-स्थितम् ।
पक्वाशय-गतं शल्यं विरेकेण विनिर्हरेत् ॥ ३४ ॥

दुष्ट-वात-विष-स्तन्य-रक्त-तोयादि चूषणैः ।
कण्ठ-स्रोतो-गते शल्ये सूत्रं कण्ठे प्रवेशयेत् ॥ ३५ ॥

बिसेनात्ते ततः शल्ये बिसं सूत्रं समं हरेत् ।
नाड्याग्नि-तापितां क्षिप्त्वा शलाकाम् अप्-स्थिरी-कृताम् ॥ ३६ ॥

२८.३६bv जतु-दिग्धम् अ-जातुषम् आनयेज् जातुषं कण्ठाज् जतु-दिग्धाम् अ-जातुषम् ।
केशोन्दुकेन पीतेन द्रवैः कण्टकम् आक्षिपेत् ॥ ३७ ॥

२८.३७bv जतु-दिग्धम् अ-जातुषम् २८.३७cv केशाण्डकेन पीतेन २८.३७cv केशाण्डुकेन पीतेन २८.३७cv केशोण्डुकेन पीतेन सहसा सूत्र-बद्धेन वमतस् तेन चेतरत् ।
अ-शक्यं मुख-नासाभ्याम् आहर्तुं परतो नुदेत् ॥ ३८ ॥

अप्-पान-स्कन्ध-घाताभ्यां ग्रास-शल्यं प्रवेशयेत् ।
सूक्ष्माक्षि-व्रण-शल्यानि क्षौम-वाल-जलैर् हरेत् ॥ ३९ ॥

अपां पूर्णं विधुनुयाद् अवाक्-शिरसम् आयतम् ।
वामयेच् चा-मुखं भस्म-राशौ वा निखनेन् नरम् ॥ ४० ॥

२८.४०cv वामयेद् आ-मुखं भस्म- २८.४०cv वामयेद् वा-मुखं भस्म- २८.४०cv वामयेद् वा सुखं भस्म- कर्णे ऽम्बु-पूर्णे हस्तेन मथित्वा तैल-वारिणी ।
क्षिपेद् अधो-मुखं कर्णं हन्याद् वाचूषयेत वा ॥ ४१ ॥

२८.४१dv हन्याद् वाचूषयेत् तदा २८.४१dv हन्याद् वाचूषयेत च कीटे स्रोतो-गते कर्णं पूरयेद् लवणाम्बुना ।
शुक्तेन वा सुखोष्णेन मृते क्लेद-हरो विधिः ॥ ४२ ॥

जातुषं हेम-रूप्यादि-धातु-जं च चिर-स्थितम् ।
ऊष्मणा प्राय-शः शल्यं देह-जेन विलीयते ॥ ४३ ॥

मृद्-वेणु-दारु-शृङ्गास्थि-दन्त-वालोपलानि न ।
विषाण-वेण्व्-अयस्-ताल-दारु-शल्यं चिराद् अपि ॥ ४४ ॥

२८.४४bv -दन्त-वालोपलादि न प्रायो निर्भुज्यते तद् धि पचत्य् आशु पलासृजी ।
शल्ये मांसावगाढे चेत् स देशो न विदह्यते ॥ ४५ ॥

२८.४५cv शल्ये मांसावगाढे च ततस् तं मर्दन-स्वेद-शुद्धि-कर्षण-बृंहणैः ।
तीक्ष्णोपनाह-पानान्न-घन-शस्त्र-पदाङ्कनैः ॥ ४६ ॥

२८.४६bv -शुद्धि-कर्शन-बृंहणैः पाचयित्वा हरेच् छल्यं पाटनैषण-भेदनैः ।
शल्य-प्रदेश-यन्त्राणाम् अवेक्ष्य बहु-रूप-ताम् ॥ ४७ ॥

तैस् तैर् उपायैर् मति-मान् शल्यं विद्यात् तथाहरेत् ॥ ४७अब् ॥
२८.४७ब्व् शल्यं विद्यात् ततो हरेत्

अध्यायः २९

व्रणः संजायते प्रायः पाकाच् छ्वयथु-पूर्वकात् ।
तम् एवोपचरेत् तस्माद् रक्षन् पाकं प्रयत्नतः ॥ १ ॥

सु-शीत-लेप-सेकास्र-मोक्ष-संशोधनादिभिः ।
शोफो ऽल्पो ऽल्पोष्म-रुक् सामः स-वर्णः कठिनः स्थिरः ॥ २ ॥

२९.२av सु-शीत-लेप-सेकासृङ्- २९.२cv शोफो ऽल्पो ऽल्पोष्म-रुक् चामः पच्यमानो वि-वर्णस् तु रागी वस्तिर् इवाततः ।
स्फुटतीव स-निस्तोदः साङ्ग-मर्द-विजृम्भिकः ॥ ३ ॥

संरम्भा-रुचि-दाहोषा-तृड्-ज्वरा-निद्र-तान्वितः ।
स्त्यानं विष्यन्दयत्य् आज्यं व्रण-वत् स्पर्शना-सहः ॥ ४ ॥

पक्वे ऽल्प-वेग-ता म्लानिः पाण्डु-ता वलि-संभवः ।
नामो ऽन्तेषून्नतिर् मध्ये कण्डू-शोफादि-मार्दवम् ॥ ५ ॥

२९.५av पक्वे ऽल्प-वेग-ता ग्लानिः २९.५av पक्वे ऽल्प-वेदना ग्लानिः २९.५av पक्वे ऽल्प-वेदना म्लानिः २९.५av पक्वे ऽल्पा वेदना म्लानिः
स्पृष्टे पूयस्य संचारो भवेद् वस्ताव् इवाम्भसः ।
शूलं नर्ते ऽनिलाद् दाहः पित्ताच् छोफः कफोदयात् ॥ ६ ॥

रागो रक्ताच् च पाकः स्याद् अतो दोषैः स-शोणितैः ।
पाके ऽतिवृत्ते सुषिरस् तनु-त्वग्-दोष-भक्षितः ॥ ७ ॥

वलीभिर् आचितः श्यावः शीर्यमाण-तनू-रुहः ।
कफ-जेषु तु शोफेषु गम्भीरं पाकम् एत्य् असृक् ॥ ८ ॥

२९.८av वलीभिर् आचितः श्यामः पक्व-लिङ्गं ततो ऽ-स्पष्टं यत्र स्याच् छीत-शोफ-ता ।
त्वक्-सावर्ण्यं रुजो ऽल्प-त्वं घन-स्पर्श-त्वम् अश्म-वत् ॥ ९ ॥

रक्त-पाकम् इति ब्रूयात् तं प्राज्ञो मुक्त-संशयः ।
अल्प-सत्-त्वे ऽ-बले बाले पाकाद् वात्य्-अर्थम् उद्धते ॥ १० ॥

२९.१०dv पाकाद् अत्य्-अर्थम् उद्धते २९.१०dv पाके वात्य्-अर्थम् उद्धते दारणं मर्म-संध्य्-आदि-स्थिते चान्य-त्र पाटनम् ।
आम-च्छेदे सिरा-स्नायु-व्यापदो ऽसृग्-अति-स्रुतिः ॥ ११ ॥

रुजो ऽति-वृद्धिर् दरणं विसर्पो वा क्षतोद्भवः ।
तिष्ठन्न् अन्तः पुनः पूयः सिरा-स्नाय्व्-असृग्-आमिषम् ॥ १२ ॥

विवृद्धो दहति क्षिप्रं तृणोलपम् इवानलः ।
यश् छिनत्त्य् आमम् अ-ज्ञानाद् यश् च पक्वम् उपेक्षते ॥ १३ ॥

२९.१३bv तृणोलुपम् इवानलः २९.१३bv तृणोपलम् इवानलः २९.१३bv तृणोच्चयम् इवानलः श्व-पचाव् इव विज्ञेयौ ताव् अ-निश्चित-कारिणौ ।
प्राक् शस्त्र-कर्मणश् चेष्टं भोजयेद् अन्नम् आतुरम् ॥ १४ ॥

२९.१४av श्व-पचाव् इव जानीयात् २९.१४bv द्वाव् अ-निश्चित-कारिणौ २९.१४cv प्राक् शस्त्र-कर्मणः श्रेष्ठं पान-पं पाययेन् मद्यं तीक्ष्णं यो वेदना-क्षमः ।
न मूर्छत्य् अन्न-संयोगान् मत्तः शस्त्रं न बुध्यते ॥ १५ ॥

अन्य-त्र मूढ-गर्भाश्म-मुख-रोगोदरातुरात् ।
अथाहृतोपकरणं वैद्यः प्राङ्-मुखम् आतुरम् ॥ १६ ॥

२९.१६cv अथाहृतोपकरणो संमुखो यन्त्रयित्वाशु न्यस्येन् मर्मादि वर्जयन् ।
अनुलोमं सु-निशितं शस्त्रम् आ-पूय-दर्शनात् ॥ १७ ॥

२९.१७av संमुखं यन्त्रयित्वाशु सकृद् एवाहरेच् तच् च पाके तु सु-महत्य् अपि ।
पाटयेद् द्व्य्-अङ्गुलं सम्यग् द्व्य्-अङ्गुल-त्र्य्-अङ्गुलान्तरम् ॥ १८ ॥

एषित्वा सम्यग् एषिण्या परितः सु-निरूपितम् ।
अङ्गुली-नाल-वालैर् वा यथा-देशं यथाशयम् ॥ १९ ॥

यतो गतां गतिं विद्याद् उत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्यात् सु-विभक्तं निर्-आशयम् ॥ २० ॥

२९.२०bv उत्सङ्गं यत्र यत्र च आयतं च विशालं च यथा दोषो न तिष्ठति ।
शौर्यम् आशु-क्रिया तीक्ष्णं शस्त्रम् अ-स्वेद-वेपथू ॥ २१ ॥

२९.२१cv शौर्यम् आशु-क्रिया तीक्ष्ण- २९.२१dv -शस्त्रम् अ-स्वेद-वेपथू अ-संमोहश् च वैद्यस्य शस्त्र-कर्मणि शस्यते ।
तिर्यक् छिन्द्याल् ललाट-भ्रू-दन्त-वेष्टक-जत्रुणि ॥ २२ ॥

कुक्षि-कक्षाक्षि-कूटौष्ठ-कपोल-गल-वङ्क्षणे ।
अन्य-त्र च्छेदनात् तिर्यक् सिरा-स्नायु-विपाटनम् ॥ २३ ॥

शस्त्रे ऽवचारिते वाग्भिः शीताम्भोभिश् च रोगिणम् ।
आश्वास्य परितो ऽङ्गुल्या परिपीड्य व्रणं ततः ॥ २४ ॥

क्षालयित्वा कषायेण प्लोतेनाम्भो ऽपनीय च ।
गुग्गुल्व्-अगुरु-सिद्धार्थ-हिङ्गु-सर्ज-रसान्वितैः ॥ २५ ॥

धूपयेच् पटु-षड्ग्रन्था-निम्ब-पत्त्रैर् घृत-प्लुतैः ।
तिल-कल्काज्य-मधुभिर् यथा-स्वं भेषजेन च ॥ २६ ॥

दिग्धां वर्तिं ततो दद्यात् तैर् एवाच्छादयेच् च ताम् ।
घृताक्तैः सक्तुभिश् चोर्ध्वं घनां कवलिकां ततः ॥ २७ ॥

२९.२७bv तैर् एवाच्छादयेच् च तम् निधाय युक्त्या बध्नीयात् पट्टेन सु-समाहितम् ।
पार्श्वे सव्ये ऽप-सव्ये वा नाधस्-तान् नैव चोपरि ॥ २८ ॥

२९.२८bv पट्टेन सु-समाहितः शुचि-सूक्ष्म-दृढाः पट्टाः कवल्यः स-विकेशिकाः ।
धूपिता मृदवः श्लक्ष्णा निर्-वलीका व्रणे हिताः ॥ २९ ॥

२९.२९bv कवल्यः सु-विकेशिकाः कुर्वीतान्-अन्तरं तस्य रक्षां रक्षो-निषिद्धये ।
बलिं चोपहरेत् तेभ्यः सदा मूर्ध्ना च धारयेत् ॥ ३० ॥

२९.३०av कुर्वीतान्-अन्तरं सम्यग्- २९.३०bv रक्षां रक्षो-निवृत्तये २९.३०bv -रक्षां रक्षो-निषिद्धये २९.३०dv सदा मूर्ध्नावधारयेत् लक्ष्मीं गुहाम् अतिगुहां जटिलां ब्रह्मचारिणीम् ।
वचां छत्त्राम् अतिच्छत्त्रां दूर्वां सिद्धार्थकान् अपि ॥ ३१ ॥

ततः स्नेह-दिनेहोक्तं तस्याचारं समादिशेत् ।
दिवा-स्वप्नो व्रणे कण्डू-राग-रुक्-शोफ-पूय-कृत् ॥ ३२ ॥

२९.३२av ततः स्नेह-विधानोक्तं स्त्रीणां तु स्मृति-संस्पर्श-दर्शनैश् चलित-स्रुते ।
शुक्रे व्यवाय-जान् दोषान् अ-संसर्गे ऽप्य् अवाप्नुयात् ॥ ३३ ॥

व्रणे श्वयथुर् आयासात् स च रागश् च जागरात् ।
तौ च रुक् च दिवा-स्वापात् ताश् च मृत्युश् च मैथुनात् ॥ ३३+(१) ॥
भोजनं च यथा-सात्म्यं यव-गोधूम-षष्टिकाः ।
मसूर-मुद्ग-तुबरी-जीवन्ती-सुनिषण्णकाः ॥ ३४ ॥

२९.३४av भोजनं तु यथा-सात्म्यं बाल-मूलक-वार्ताक-तण्डुलीयक-वास्तुकम् ।
कारवेल्लक-कर्कोट-पटोल-कटुका-फलम् ॥ ३५ ॥

सैन्धवं दाडिमं धात्री घृतं तप्त-हिमं जलम् ।
जीर्ण-शाल्य्-ओदनं स्निग्धम् अल्पम् उष्णोदकोत्तरम् ॥ ३६ ॥

२९.३६dv अल्पम् उष्णं द्रवोत्तरम् भुञ्जानो जाङ्गलैर् मांसैः शीघ्रं व्रणम् अपोहति ।
अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ ३७ ॥

अ-जीर्णात् त्व् अनिलादीनां विभ्रमो बल-वान् भवेत् ।
ततः शोफ-रुजा-पाक-दाहानाहान् अवाप्नुयात् ॥ ३८ ॥

२९.३८av अ-जीर्णे त्व् अनिलादीनां नवं धान्यं तिलान् माषान् मद्यं मांसम् अ-जाङ्गलम् ।
क्षीरेक्षु-विकृतीर् अम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥

२९.३९bv मद्यं मांसं त्व् अ-जाङ्गलम् यच् चान्यद् अपि विष्टम्भि विदाहि गुरु शीतलम् ।
वर्गो ऽयं नव-धान्यादिर् व्रणिनः सर्व-दोष-कृत् ॥ ४० ॥

२९.४०dv व्रणिनां सर्व-दोष-कृत् मद्यं तीक्ष्णोष्ण-रूक्षाम्लम् आशु व्यापादयेद् व्रणम् ।
वालोशीरैश् च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥

२९.४१cv बालोशीरैश् च वीज्येत न तुदेन् न च कण्डूयेच् चेष्टमानश् च पालयेत् ।
स्निग्ध-वृद्ध-द्वि-जातीनां कथाः शृण्वन् मनः-प्रियाः ॥ ४२ ॥

२९.४२bv छयानः परिपालयेत् २९.४२cv सिद्ध-वृद्ध-द्वि-जातीनां आशा-वान् व्याधि-मोक्षाय क्षिप्रं व्रणम् अपोहति ।
तृतीये ऽह्नि पुनः कुर्याद् व्रण-कर्म च पूर्व-वत् ॥ ४३ ॥

प्रक्षालनादि दिवसे द्वितीये नाचरेत् तथा ।
तीव्र-व्यथो विग्रथितश् चिरात् संरोहति व्रणः ॥ ४४ ॥

स्निग्धां रूक्षां श्लथां गाढां दुर्-न्यस्तां च विकेशिकाम् ।
व्रणे न दद्यात् कल्कं वा स्नेहात् क्लेदो विवर्धते ॥ ४५ ॥

मांस-च्छेदो ऽति-रुग्-रौक्ष्याद् दरणं शोणितागमः ।
श्लथाति-गाढ-दुर्-न्यासैर् व्रण-वर्त्मावघर्षणम् ॥ ४६ ॥

२९.४६cv श्लथाति-गाढ-दुर्-न्यस्तैर् स-पूति-मांसं सोत्सङ्गं स-गतिं पूय-गर्भिणम् ।
व्रणं विशोधयेच् छीघ्रं स्थिता ह्य् अन्तर् विकेशिका ॥ ४७ ॥

व्य्-अम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।
भोजनैर् उपनाहैश् च नाति-व्रण-विरोधिभिः ॥ ४८ ॥

२९.४८dv नाति-व्रण-विशोधिभिः सद्यः सद्यो-व्रणान् सीव्येद् विवृतान् अभिघात-जान् ।
मेदो-जाँ लिखितान् ग्रन्थीन् ह्रस्वाः पालीश् च कर्णयोः ॥ ४९ ॥

शिरो-ऽक्षि-कूट-नासौष्ठ-गण्ड-कर्णोरु-बाहुषु ।
ग्रीवा-ललाट-मुष्क-स्फिङ्-मेढ्र-पायूदरादिषु ॥ ५० ॥

गम्भीरेषु प्रदेशेषु मांसलेष्व् अ-चलेषु च ।
न तु वङ्क्षण-कक्षादाव् अल्प-मांसे चले व्रणान् ॥ ५१ ॥

२९.५१dv अल्प-मांस-चले व्रणान् २९.५१dv अल्प-मांस-चलान् व्रणान् वायु-निर्वाहिणः शल्य-गर्भान् क्षार-विषाग्नि-जान् ।
सीव्येच् चलास्थि-शुष्कास्र-तृण-रोमापनीय तु ॥ ५२ ॥

२९.५२dv -तृण-रोमापनीय च प्रलम्बि मांसं विच्छिन्नं निवेश्य स्व-निवेशने ।
संध्य्-अस्थि च स्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ॥ ५३ ॥

२९.५३cv संध्य्-अस्थ्य् अवस्थिते रक्ते २९.५३dv स्नाव्ना सूत्रेण वल्कलैः सीव्येन् न दूरे नासन्ने गृह्णन् नाल्पं न वा बहु ।
सान्त्वयित्वा ततश् चार्तं व्रणे मधु-घृत-द्रुतैः ॥ ५४ ॥

२९.५४dv व्रणे मधु-घृत-प्लुतैः अञ्जन-क्षौम-ज-मषी-फलिनी-शल्लकी-फलैः ।
२९.५४bv गृह्णन् स्व्-अल्पं न वा बहु २९.५४cv शान्तयित्वा ततश् चार्तं २९.५४cv सान्तयित्वा ततश् चार्तं स-लोध्र-मधुकैर् दिग्धे युञ्ज्याद् बन्धादि पूर्व-वत् ॥ ५५ ॥

व्रणो निः-शोणितौष्ठो यः किञ्-चिद् एवावलिख्य तम् ।
संजात-रुधिरं सीव्येत् संधानं ह्य् अस्य शोणितम् ॥ ५६ ॥

बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च ।
२९.५६bv किञ्-चिद् एव विलिख्य तम् आविकाजिन-कौशेयम् उष्णं क्षौमं तु शीतलम् ॥ ५७ ॥

शीतोष्णं तुला-संतान-कार्पास-स्नायु-वल्क-जम् ।
ताम्रायस्-त्रपु-सीसानि व्रणे मेदः-कफाधिके ॥ ५८ ॥

२९.५८bv -कार्पास-स्नाव-वल्क-जम् भङ्गे च युञ्ज्यात् फलकं चर्म-वल्क-कुशादि च ।
स्व-नामानुगताकारा बन्धास् तु दश पञ्च च ॥ ५९ ॥

कोश-स्वस्तिक-मुत्तोली-चीन-दामानुवेल्लितम् ।
खट्वा-विबन्ध-स्थगिका-वितानोत्सङ्ग-गोष्-फणाः ॥ ६० ॥

२९.६०dv -वितानोत्सङ्ग-गो-फणाः यमकं मण्डलाख्यं च पञ्चाङ्गी चेति योजयेत् ।
यो यत्र सु-निविष्टः स्यात् तं तेषां तत्र बुद्धि-मान् ॥ ६१ ॥

२९.६१cv यो यत्र संनिविष्टः स्यात् विदध्यात् तेषु तेष्व् एव कोशम् अङ्गुलि-पर्वसु ।
स्वस्तिकं कर्ण-कक्षादि-स्तनेषूक्तं च संधिषु ॥ ६१.१+(१) ॥
मुत्तोलीं मेढ्र-ग्रीवादौ युञ्ज्याच् चीनम् अपाङ्गयोः ।
संबाधे ऽङ्गे तथा दाम शाखास्व् एवानुवेल्लितम् ॥ ६१.१+(२) ॥
खट्वां गण्डे हनौ शङ्खे विबन्धं पृष्ठकोदरे ।
अङ्गुष्ठाङ्गुलिमेढ्राग्रे स्थगिकाम् अन्त्र-वृद्धिषु ॥ ६१.१+(३) ॥
वितानं पृथुलाङ्गादौ तथा शिरसि चेरयेत् ।
विलम्बिनि तथोत्सङ्गं नासौष्ठ-चिबुकादिषु ॥ ६१.१+(४) ॥
गोष्-फणं संधिषु तथा यमकं यमिके व्रणे ।
वृत्ते ऽङ्गे मण्डलाख्यं च पञ्चाङ्गीं चोर्ध्व-जत्रुषु ॥ ६१.१+(५) ॥
बध्नीयाद् गाढम् ऊरु-स्फिक्-कक्षा-वङ्क्षण-मूर्धसु ।
शाखा-वदन-कर्णोरः-पृष्ठ-पार्श्व-गलोदरे ॥ ६२ ॥

समं मेहन-मुष्के च नेत्रे संधिषु च श्लथम् ।
बध्नीयाच् छिथिल-स्थाने वात-श्लेष्मोद्भवे समम् ॥ ६३ ॥

गाढम् एव सम-स्थाने भृशं गाढं तद्-आशये ।
शीते वसन्ते ऽपि च तौ मोक्षणीयौ त्र्य्-अहात् त्र्य्-अहात् ॥ ६४ ॥

२९.६४bv भृशं गाढं तद्-आश्रये २९.६४cv शीते वसन्ते च तथा २९.६४dv मोक्षयेत् तौ त्र्य्-अहात् त्र्य्-अहात् २९.६४dv मोक्षणीयस् त्र्य्-अहात् त्र्य्-अहात् पित्त-रक्तोत्थयोर् बन्धो गाढ-स्थाने समो मतः ।
सम-स्थाने श्लथो नैव शिथिलस्याशये तथा ॥ ६५ ॥

सायं प्रातस् तयोर् मोक्षो ग्रीष्मे शरदि चेष्यते ।
अ-बद्धो दंश-मशक-शीत-वातादि-पीडितः ॥ ६६ ॥

दुष्टी-भवेच् चिरं चात्र न तिष्ठेत् स्नेह-भेषजम् ।
कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो वि-वर्ण-ताम् ॥ ६७ ॥

बद्धस् तु चूर्णितो भग्नो विश्लिष्टः पाटितो ऽपि वा ।
छिन्न-स्नायु-सिरो ऽप्य् आशु सुखं संरोहति व्रणः ॥ ६८ ॥

उत्थान-शयनाद्यासु सर्वेहासु न पीड्यते ।
उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनो ऽति-रुक् ॥ ६९ ॥

२९.६९bv सर्वेहासु न पीडयेत् २९.६९cv उद्वृतौष्ठः समुत्सन्नो समो मृदुर् अ-रुक् शीघ्रं व्रणः शुध्यति रोहति ।
स्थिराणाम् अल्प-मांसानां रौक्ष्याद् अन्-उपरोहताम् ॥ ७० ॥

प्रच्छाद्यम् औषधं पत्त्रैर् यथा-दोषं यथर्तु च ।
अ-जीर्ण-तरुणाच् छिद्रैः समन्तात् सु-निवेशितैः ॥ ७१ ॥

२९.७१cv अ-जीर्णा-तरुणाच् छिद्रैः धौतैर् अ-कर्कशैः क्षीरि-भूर्जार्जुन-कदम्ब-जैः ।
कुष्ठिनाम् अग्नि-दग्धानां पिटिका मधु-मेहिनाम् ॥ ७२ ॥

कर्णिकाश् चोन्दुरु-विषे क्षार-दग्धा विषान्विताः ।
बन्धनीया न मांस्-पाके गुद-पाके च दारुणे ॥ ७३ ॥

२९.७३cv न मांस्-पाके च बध्नीयाद् २९.७३cv मांस-पाके न बध्नीयाद् शीर्यमाणाः स-रुग्-दाहाः शोफावस्था-विसर्पिणः ।
अ-रक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत् कृमीन् ॥ ७४ ॥

ते भक्षयन्तः कुर्वन्ति रुजा-शोफास्र-संस्रवान् ।
सुरसादिं प्रयुञ्जीत तत्र धावन-पूरणे ॥ ७५ ॥

२९.७५bv रुजा-शोफास्र-विस्रुतीः सप्तपर्ण-करञ्जार्क-निम्ब-राजादन-त्वचः ।
गो-मूत्र-कल्कितो लेपः सेकः क्षाराम्बुना हितः ॥ ७६ ॥

२९.७६cv गो-मूत्र-कल्कितालेपः प्रच्छाद्य मांस-पेश्या वा व्रणं तान् आशु निर्हरेत् ।
न चैनं त्वरमाणो ऽन्तः स-दोषम् उपरोहयेत् ॥ ७७ ॥

सो ऽल्पेनाप्य् अपचारेण भूयो विकुरुते यतः ।
रूढे ऽप्य् अ-जीर्ण-व्यायाम-व्यवायादीन् विवर्जयेत् ॥ ७८ ॥

हर्षं क्रोधं भयं चापि यावद् आ-स्थैर्य-संभवात् ।
आदरेणानुवर्त्यो ऽयं मासान् षट् सप्त वा विधिः ॥ ७९ ॥

२९.७९av हर्षं क्रोधं भयं वापि उत्पद्यमानासु च तासु तासु वार्तासु दोषादि-बलानुसारी ।
तैस् तैर् उपायैः प्रयतश् चिकित्सेद् आलोचयन् विस्तरम् उत्तरोक्तम् ॥ ८० ॥

अध्यायः ३०

सर्व-शस्त्रानु-शस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।
छेद्य-भेद्यादि-कर्माणि कुरुते विषमेष्व् अपि ॥ १ ॥

दुःखावचार्य-शास्त्रेषु तेन सिद्धिम् अ-यात्सु च ।
अति-कृच्छ्रेषु रोगेषु यच् च पाने ऽपि युज्यते ॥ २ ॥

३०.२bv तेन सिद्धिं न यात्सु च स पेयो ऽर्शो-ऽग्नि-सादाश्म-गुल्मोदर-गरादिषु ।
योज्यः साक्षान् मष-श्वित्र-बाह्यार्शः-कुष्ठ-सुप्तिषु ॥ ३ ॥

भगन्दरार्बुद-ग्रन्थि-दुष्ट-नाडी-व्रणादिषु ।
न तूभयो ऽपि योक्तव्यः पित्ते रक्ते चले ऽ-बले ॥ ४ ॥

३०.४av भगन्दरापची-ग्रन्थि- ३०.४dv पित्ते रक्ते बले ऽ-बले ज्वरे ऽतीसारे हृन्-मूर्ध-रोगे पाण्ड्व्-आमये ऽ-रुचौ ।
तिमिरे कृत-संशुद्धौ श्वयथौ सर्व-गात्र-गे ॥ ५ ॥

३०.५dv श्वयथौ सर्व-गात्र-जे भीरु-गर्भिण्य्-ऋतु-मती-प्रोद्वृत्त-फल-योनिषु ।
अ-जीर्णे ऽन्ने शिशौ वृद्धे धमनी-संधि-मर्मसु ॥ ६ ॥

तरुणास्थि-सिरा-स्नायु-सेवनी-गल-नाभिषु ।
देशे ऽल्प-मांसे वृषण-मेढ्र-स्रोतो-नखान्तरे ॥ ७ ॥

३०.७cv देशे ऽल्प-मांसे वृषणे ३०.७dv मेढ्रे स्रोतो-नखान्तरे वर्त्म-रोगाद् ऋते ऽक्ष्णोश् च शीत-वर्षोष्ण-दुर्-दिने ।
काल-मुष्कक-शम्याक-कदली-पारिभद्रकान् ॥ ८ ॥

अश्वकर्ण-महावृक्ष-पलाशास्फोत-वृक्षकान् ।
इन्द्रवृक्षार्क-पूतीक-नक्तमालाश्वमारकान् ॥ ९ ॥

काकजङ्घाम् अपामार्गम् अग्निमन्थाग्नि-तिल्वकान् ।
सार्द्रान् स-मूल-शाखादीन् खण्ड-शः परिकल्पितान् ॥ १० ॥

कोशातकीस् चतस्रश् च शूकं नालं यवस्य च ।
निवाते निचयी-कृत्य पृथक् तानि शिला-तले ॥ ११ ॥

३०.११bv शूक-नालं यवस्य च प्रक्षिप्य मुष्कक-चये सुधाश्मानि च दीपयेत् ।
ततस् तिलानां कुतलैर् दग्ध्वाग्नौ विगते पृथक् ॥ १२ ॥

३०.१२cv ततस् तिलानां कुतिलैर् ३०.१२cv ततस् तिलानां कुन्तालैर् कृत्वा सुधाश्मनां भस्म द्रोणं त्व् इतर-भस्मनः ।
मुष्ककोत्तरम् आदाय प्रत्य्-एकं जल-मूत्रयोः ॥ १३ ॥

३०.१३bv द्रोणं चेतर-भस्मनः गालयेद् अर्ध-भारेण महता वाससा च तत् ।
यावत् पिच्छिल-रक्ताच्छस् तीक्ष्णो जातस् तदा च तम् ॥ १४ ॥

गृहीत्वा क्षार-निष्यन्दं पचेल् लौह्यां विघट्टयन् ।
पच्यमाने ततस् तस्मिंस् ताः सुधा-भस्म-शर्कराः ॥ १५ ॥

शुक्तीः क्षीर-पकं शङ्ख-नाभीश् चायस-भाजने ।
कृत्वाग्नि-वर्णान् बहु-शः क्षारोत्थे कुडवोन्मिते ॥ १६ ॥

३०.१६bv ंनाभींश् चायस-भाजने ३०.१६cv क्षाराच्छे कुडवोन्मिते निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद् दक्ष-शिखि-गृध्र-कङ्क-कपोत-जम् ॥ १७ ॥

चतुष्-पात्-पक्षि-पित्ताल-मनोह्वा-लवणानि च ।
परितः सु-तरां चातो दर्व्या तम् अवघट्टयेत् ॥ १८ ॥

स-बाष्पैश् च यदोत्तिष्ठेद् बुद्बुदैर् लेह-वद् घनः ।
अवतार्य तदा शीतो यव-राशाव् अयो-मये ॥ १९ ॥

३०.१९av स-बाष्पैश् च यदा तिष्ठेद् ३०.१९cv अवतार्य ततः शीते ३०.१९cv अवतार्य ततः शीतो ३०.१९cv अवतार्य तदा शीते स्थाप्यो ऽयं मध्यमः क्षारो न तु पिष्ट्वा क्षिपेन् मृदौ ।
निर्वाप्यापनयेत् तीक्ष्णे पूर्व-वत् प्रतिवापनम् ॥ २० ॥

तथा लाङ्गलिका-दन्ती-चित्रकातिविषा-वचाः ।
स्वर्जिका-कनकक्षीरी-हिङ्गु-पूतिक-पल्लवाः ॥ २१ ॥

तालपत्री विडं चेति सप्त-रात्रात् परं तु सः ।
योज्यस् तीक्ष्णो ऽनिल-श्लेष्म-मेदो-जेष्व् अर्बुदादिषु ॥ २२ ॥

३०.२२av तालपत्री विडङ्गं च मध्येष्व् एष्व् एव मध्यो ऽन्यः पित्तास्र-गुद-जन्मसु ।
बलार्थं क्षीण-पानीये क्षाराम्बु पुनर् आवपेत् ॥ २३ ॥

३०.२३av मध्येष्व् एव च मध्यो ऽन्यः ३०.२३av मध्येष्व् एषु च मध्यो ऽन्यः ३०.२३bv पित्तासृग्-गुद-जन्मसु नाति-तीक्ष्ण-मृदुः श्लक्ष्णः पिच्छिलः शीघ्र-गः सितः ।
शिखरी सुख-निर्वाप्यो न विष्यन्दी न चाति-रुक् ॥ २४ ॥

३०.२४av नाति-तीक्ष्णो मृदुः श्लक्ष्णः क्षारो दश-गुणः शस्त्र-तेजसोर् अपि कर्म-कृत् ।
आचूषन्न् इव संरम्भाद् गात्रम् आपीडयन्न् इव ॥ २५ ॥

सर्वतो ऽनुसरन् दोषान् उन्मूलयति मूलतः ।
कर्म कृत्वा गत-रुजः स्वयं एवोपशाम्यति ॥ २६ ॥

क्षार-साध्ये गदे छिन्ने लिखिते स्राविते ऽथ-वा ।
क्षारं शलाकया दत्त्वा प्लोत-प्रावृत-देहया ॥ २७ ॥

३०.२७dv प्लोत-प्लावित-देहया मात्रा-शतम् उपेक्षेत तत्रार्शःस्व् आवृताननम् ।
हस्तेन यन्त्रं कुर्वीत वर्त्म-रोगेषु वर्त्मनी ॥ २८ ॥

निर्भुज्य पिचुनाच्छाद्य कृष्ण-भागं विनिक्षिपेत् ।
पद्म-पत्त्र-तनुः क्षार-लेपो घ्राणार्बुदेषु च ॥ २९ ॥

३०.२९dv -लेपो घ्राणार्बुदेषु तु प्रत्य्-आदित्यं निषण्णस्य समुन्नम्याग्र-नासिकाम् ।
मात्रा विधार्यः पञ्चाशत् तद्-वद् अर्शसि कर्ण-जे ॥ ३० ॥

३०.३०bv समुन्नस्याग्र-नासिकाम् ३०.३०cv मात्रा विधार्य पञ्चाशत् ३०.३०cv मात्रा विधार्याः पञ्चाशत् क्षारं प्रमार्जनेनानु परिमृज्यावगम्य च ।
सु-दग्धं घृत-मध्व्-अक्तं तत् पयो-मस्तु-काञ्जिकैः ॥ ३१ ॥

३०.३१av क्षारं प्रमार्जनेनाशु निर्वापयेत् ततः साज्यैः स्वादु-शीतैः प्रदेहयेत् ।
अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ॥ ३२ ॥

यदि च स्थिर-मूल-त्वात् क्षार-दग्धं न शीर्यते ।
धान्याम्ल-बीज-यष्ट्य्-आह्व-तिलैर् आलेपयेत् ततः ॥ ३३ ॥

तिल-कल्कः स-मधुको घृताक्तो व्रण-रोपणः ।
पक्व-जम्ब्व्-असितं सन्नं सम्यग्-दग्धं विपर्यये ॥ ३४ ॥

३०.३४cv पक्व-जम्बू-निभं सन्नं ताम्र-ता-तोद-कण्ड्व्-आद्यैर् दुर्-दग्धं तं पुनर् दहेत् ।
अति-दग्धे स्रवेद् रक्तं मूर्छा-दाह-ज्वरादयः ॥ ३५ ॥

३०.३५bv दुर्-दग्धं तत् पुनर् दहेत् गुदे विशेषाद् विण्-मूत्र-संरोधो ऽति-प्रवर्तनम् ।
पुंस्-त्वोपघातो मृत्युर् वा गुदस्य शातनाद् ध्रुवम् ॥ ३६ ॥

३०.३६dv गुदस्य शातनं ध्रुवम् ३०.३६dv गुदस्य सदनाद् ध्रुवम् ३०.३६dv गुदस्य सदनं ध्रुवम् नासायां नासिका-वंश-दरणाकुञ्चनोद्भवः ।
भवेच् च विषया-ज्ञानं तद्-वच् छ्रोत्रादिकेष्व् अपि ॥ ३७ ॥

विशेषाद् अत्र सेको ऽम्लैर् लेपो मधु घृतं तिलाः ।
वात-पित्त-हरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥

अम्लो हि शीतः स्पर्शेन क्षारस् तेनोपसंहितः ।
यात्य् आशु स्वादु-तां तस्माद् अम्लैर् निर्वापयेत्-तराम् ॥ ३९ ॥

विषाग्नि-शस्त्राशनि-मृत्यु-तुल्यः क्षारो भवेद् अल्पम् अति-प्रयुक्तः ।
रोगान् निहन्याद् अ-चिरेण घोरान् स धी-मता सम्यग्-अनुप्रयुक्तो ॥ ३९+(१) ॥
अग्निः क्षाराद् अपि श्रेष्ठस् तद्-दग्धानाम् अ-संभवात् ।
भेषज-क्षार-शस्त्रैश् च न सिद्धानां प्रसाधनात् ॥ ४० ॥

त्वचि मांसे सिरा-स्नायु-संध्य्-अस्थिषु स युज्यते ।
मषाङ्ग-ग्लानि-मूर्धार्ति-मन्थ-कील-तिलादिषु ॥ ४१ ॥

३०.४१bv -संध्य्-अस्थिषु स योज्यते त्वग्-दाहो वर्ति-गो-दन्त-सूर्य-कान्त-शरादिभिः ।
अर्शो-भगन्दर-ग्रन्थि-नाडी-दुष्ट-व्रणादिषु ॥ ४२ ॥

मांस-दाहो मधु-स्नेह-जाम्बवौष्ठ-गुडादिभिः ।
श्लिष्ट-वर्त्मन्य् असृक्-स्राव-नील्य्-अ-सम्यग्-व्यधादिषु ॥ ४३ ॥

३०.४३cv श्लिष्ट-वर्त्मन्य् असृक्-स्रावे ३०.४३dv नील्य्-अ-सम्यग्-व्यधादिषु सिरादि-दाहस् तैर् एव न दहेत् क्षार-वारितान् ।
अन्तः-शल्यासृजो भिन्न-कोष्ठान् भूरि-व्रणातुरान् ॥ ४४ ॥

३०.४४bv न दहेत् क्षार-वर्जितान् सु-दग्धं घृत-मध्व्-अक्तं स्निग्ध-शीतैः प्रदेहयेत् ।
तस्य लिङ्गं स्थिते रक्ते शब्द-वल् लसिकान्वितम् ॥ ४५ ॥

पक्व-ताल-कपोताभं सु-रोहं नाति-वेदनम् ।
प्रमाद-दग्ध-वत् सर्वं दुर्-दग्धात्य्-अर्थ-दग्धयोः ॥ ४६ ॥

चतुर्-धा तत् तु तुच्छेन सह तुच्छस्य लक्षणम् ।
त्वग् वि-वर्णोष्यते ऽत्य्-अर्थं न च स्फोट-समुद्भवः ॥ ४७ ॥

३०.४७av चतुर्-धा तच् च तुच्छेन ३०.४७av चतुर्-धा तत् तु तुत्थेन ३०.४७av चतुर्-धा तत्र तुच्छेन ३०.४७bv सह तुत्थस्य लक्षणम् स-स्फोट-दाह-तीव्रोषं दुर्-दग्धम् अति-दाहतः ।
मांस-लम्बन-संकोच-दाह-धूपन-वेदनाः ॥ ४८ ॥

सिरादि-नाशस् तृण्-मूर्छा-व्रण-गाम्भीर्य-मृत्यवः ।
तुच्छस्याग्नि-प्रतपनं कार्यम् उष्णं च भेषजम् ॥ ४९ ॥

३०.४९av सिरादि-नाश-तृण्-मूर्छा- ३०.४९cv तुत्थस्याग्नि-प्रतपनं स्त्याने ऽस्रे वेदनात्य्-अर्थं विलीने मन्द-ता रुजः ।
दुर्-दग्धे शीतम् उष्णं च युञ्ज्याद् आदौ ततो हिमम् ॥ ५० ॥

सम्यग्-दग्धे तवक्षीरी-प्लक्ष-चन्दन-गैरिकैः ।
लिम्पेत् साज्यामृतैर् ऊर्ध्वं पित्त-विद्रधि-वत् क्रिया ॥ ५१ ॥

३०.५१av सम्यग्-दग्धे तुकाक्षीरी- ३०.५१dv पित्त-विद्रधि-वत् क्रियाम् ३०.५१dv पित्त-विद्रधि-वत् क्रियाः अति-दग्धे द्रुतं कुर्यात् सर्वं पित्त-विसर्प-वत् ।
स्नेह-दग्धे भृश-तरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥

शस्त्र-क्षाराग्नयो यस्मान् मृत्योः परमम् आयुधम् ।
अ-प्रमत्तो भिषक् तस्मात् तान् सम्यग् अवचारयेत् ॥ ५२+(१) ॥
३०.५२+(१)द्व् तत् सम्यग् अवचारयेत्

समाप्यते स्थानम् इदं हृदयस्य रहस्य-वत् ।
अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥ ५३ ॥

३०.५३cv अत्रार्थाः सूचिताः सूक्ष्माः

# अध्याय १

शुद्धे शुक्रार्तवे सत्-त्वः स्व-कर्म-क्लेश-चोदितः ।
गर्भः संपद्यते युक्ति-वशाद् अग्निर् इवारणौ ॥ १ ॥

१.१bv स्व-कर्म-फल-नोदितः बीजात्मकैर् महा-भूतैः सूक्ष्मैः सत्-त्वानुगैश् च सः ।
मातुश् चाहार-रस-जैः क्रमात् कुक्षौ विवर्धते ॥ २ ॥

तेजो यथार्क-रश्मीनां स्फटिकेन तिरस्-कृतम् ।
नेन्धनं दृश्यते गच्छत् सत्-त्वो गर्भाशयं तथा ॥ ३ ॥

कारणानुविधायि-त्वात् कार्याणां तत्-स्व-भाव-ता ।
नाना-योन्य्-आकृतीः सत्-त्वो धत्ते ऽतो द्रुत-लोह-वत् ॥ ४ ॥

अत एव च शुक्रस्य बाहुल्याज् जायते पुमान् ।
रक्तस्य स्त्री तयोः साम्ये क्लीबः शुक्रार्तवे पुनः ॥ ५ ॥

वायुना बहु-शो भिन्ने यथा-स्वं बह्व्-अपत्य-ता ।
वि-योनि-विकृताकारा जायन्ते विकृतैर् मलैः ॥ ६ ॥

मासि मासि रजः स्त्रीणां रस-जं स्रवति त्र्य्-अहम् ।
वत्सराद् द्वा-दशाद् ऊर्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥

पूर्ण-षो-डश-वर्षा स्त्री पूर्ण-विंशेन संगता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रे ऽनिले हृदि ॥ ८ ॥

वीर्य-वन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ।
रोग्य् अल्पायुर् अ-धन्यो वा गर्भो भवति नैव वा ॥ ९ ॥

वातादि-कुणप-ग्रन्थि-पूय-क्षीण-मलाह्वयम् ।
बीजा-समर्थं रेतो-ऽस्रं स्व-लिङ्गैर् दोष-जं वदेत् ॥ १० ॥

१.१०cv प्रजा-समर्थं रेतो-ऽस्रं रक्तेन कुणपं श्लेष्म-वाताभ्यां ग्रन्थि-संनिभम् ।
पूयाभं रक्त-पित्ताभ्यां क्षीणं मारुत-पित्ततः ॥ ११ ॥

कृच्छ्राण्य् एतान्य् अ-साध्यं तु त्रि-दोषं मूत्र-विट्-प्रभम् ।
कुर्याद् वातादिभिर् दुष्टे स्वौषधं कुणपे पुनः ॥ १२ ॥

धातकी-पुष्प-खदिर-दाडिमार्जुन-साधितम् ।
पाययेत् सर्पिर् अथ-वा विपक्वम् असनादिभिः ॥ १३ ॥

पलाश-भस्माश्मभिदा ग्रन्थ्य्-आभे पूय-रेतसि ।
परूषक-वटादिभ्यां क्षीणे शुक्र-करी क्रिया ॥ १४ ॥

स्निग्धं वान्तं विरिक्तं च निरूढम् अनुवासितम् ।
योजयेच् छुक्र-दोषार्तं सम्यग् उत्तर-वस्तिभिः ॥ १४+१ ॥

संशुद्धो विट्-प्रभे सर्पिर् हिङ्गु-सेव्यादि-साधितम् ।
पिबेद् ग्रन्थ्य्-आर्तवे पाठा-व्योष-वृक्षक-जं जलम् ॥ १५ ॥

१.१५bv हिङ्गु-सेव्याग्नि-साधितम् पेयं कुणप-पूयास्रे चन्दनं वक्ष्यते तु यत् ।
गुह्य-रोगे च तत् सर्वं कार्यं सोत्तर-वस्तिकम् ॥ १६ ॥

शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहलं बहु ।
घृत-माक्षिक-तैलाभं सद्-गर्भायार्तवं पुनः ॥ १७ ॥

१.१७av शुद्धं शुक्रं गुरु स्निग्धं लाक्षा-रस-शशास्राभं धौतं यच् च विरज्यते ।
शुद्ध-शुक्रार्तवं स्वस्थं संरक्तं मिथुनं मिथः ॥ १८ ॥

स्नेहैः पुं-सवनैः स्निग्धं शुद्धं शीलित-वस्तिकम् ।
नरं विशेषात् क्षीराज्यैर् मधुरौषध-संस्कृतैः ॥ १९ ॥

१.१९dv मधुरौषध-साधितैः नारीं तैलेन माषैश् च पित्तलैः समुपाचरेत् ।
क्षाम-प्रसन्न-वदनां स्फुरच्-छ्रोणि-पयो-धराम् ॥ २० ॥

१.२०cv क्षामां प्रसन्न-वदनां स्रस्ताक्षि-कुक्षिं पुंस्-कामां विद्याद् ऋतु-मतीं स्त्रियम् ।
पद्मं संकोचम् आयाति दिने ऽतीते यथा तथा ॥ २१ ॥

ऋताव् अतीते योनिः सा शुक्रं नातः प्रतीच्छति ।
मासेनोपचितं रक्तं धमनीभ्याम् ऋतौ पुनः ॥ २२ ॥

१.२२bv शुक्रं नान्तः प्रतीच्छति ईषत्-कृष्णं वि-गन्धं च वायुर् योनि-मुखान् नुदेत् ।
ततः पुष्पेक्षणाद् एव कल्याण-ध्यायिनी त्र्य्-अहम् ॥ २३ ॥

मृजालङ्कार-रहिता दर्भ-संस्तर-शायिनी ।
क्षैरेयं यावकं स्तोकं कोष्ठ-शोधन-कर्षणम् ॥ २४ ॥

१.२४dv कोष्ठ-शोधन-कर्शनम् पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्म-चारिणी ।
चतुर्थे ऽह्नि ततः स्नाता शुक्ल-माल्याम्बरा शुचिः ॥ २५ ॥

इच्छन्ती भर्तृ-सदृशं पुत्रं पश्येत् पुरः पतिम् ।
ऋतुस् तु द्वा-दश निशाः पूर्वास् तिस्रो ऽत्र निन्दिताः ॥ २६ ॥

१.२६dv पूर्वास् तिस्रश् च निन्दिताः एका-दशी च युग्मासु स्यात् पुत्रो ऽन्यासु कन्यका ।
उपाध्यायो ऽथ पुत्रीयं कुर्वीत विधि-वद् विधिम् ॥ २७ ॥

१.२७bv स्यात् पुत्रो ऽन्य-त्र कन्यका नमस्-कार-परायास् तु शूद्राया मन्त्र-वर्जितम् ।
अ-वन्ध्य एवं संयोगः स्याद् अपत्यं च कामतः ॥ २८ ॥

सन्तो ह्य् आहुर् अपत्यार्थं दम्-पत्योः संगतिं रहः ।
दुर्-अपत्यं कुलाङ्गारो गोत्रे जातं महत्य् अपि ॥ २९ ॥

१.२९bv दम्-पत्योः संगतं रहः १.२९cv दुर्-अपत्यं कुलाङ्गारं इच्छेतां यादृशं पुत्रं तद्-रूप-चरितांश् च तौ ।
चिन्तयेतां जन-पदांस् तद्-आचार-परिच्छदौ ॥ ३० ॥

कर्मान्ते च पुमान् सर्पिः-क्षीर-शाल्य्-ओदनाशितः ।
प्राग् दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३१ ॥

आरोहेत् स्त्री तु वामेन तस्य दक्षिण-पार्श्वतः ।
तैल-माषोत्तराहारा तत्र मन्त्र् अं प्रयोजयेत् ॥ ३२ ॥

१.३२av आरोहेत् स्त्री च वामेन आहिर् अस्य् आयुर् असि सर्वतः प्रतिष्ठासि ॥ ३२+१अ ॥
१.३२+१av अहिर् असि सर्वतः प्रतिष्ठासि धाता त्वां दधातु विधाता त्वां दधातु ॥ ३२+१ब् ॥
ब्रह्म-वर्चसा भवेति ॥ ३२+१च् ॥
१.३२+१cv ब्रह्म-वर्चसा भवेद् इति ब्रह्मा बृहस्पतिर् विष्णुः सोमः सूर्यस् तथाश्विनौ ।
भगो ऽथ मित्रा-वरुणौ वीरं ददतु मे सुतम् ॥ ३३ ॥

सान्त्वयित्वा ततो ऽन्य-न्यं संविशेतां मुदान्वितौ ।
उत्ताना तन्-मना योषित् तिष्ठेद् अङ्गैः सु-संस्थितैः ॥ ३४ ॥

१.३४av सान्तयित्वा ततो ऽन्यो-ऽन्यं १.३४bv संवसेतां मुदान्वितौ तथा हि बीजं गृह्णाति दोषैः स्व-स्थानम् आस्थितैः ।
लिङ्गं तु सद्यो-गर्भाया योन्या बीजस्य संग्रहः ॥ ३५ ॥

१.३५bv दोषैः स्व-स्थानम् आश्रितैः १.३५dv योन्यां बीजस्य संग्रहः तृप्तिर् गुरु-त्वं स्फुरणं शुक्रास्रान्-अनु बन्धनम् ।
हृदय-स्पन्दनं तन्द्रा तृड् ग्लानी रोम-हर्षणम् ॥ ३६ ॥

अ-व्यक्तः प्रथमे मासि सप्ताहात् कलली-भवेत् ।
गर्भः पुं-सवनान्य् अत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ३७ ॥

बली पुरुष-कारो हि दैवम् अप्य् अतिवर्तते ।
पुष्ये पुरुषकं हैमं राजतं वाथ-वायसम् ॥ ३८ ॥

कृत्वाग्नि-वर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ।
गौरदण्डम् अपामार्गं जीवकर्षभ-सैर्यकान् ॥ ३९ ॥

पिबेत् पुष्ये जले पिष्टान् एक-द्वि-त्रि-समस्त-शः ।
क्षीरेण श्वेत-बृहती-मूलं नासा-पुटे स्वयम् ॥ ४० ॥

पुत्रार्थं दक्षिणे सिञ्चेद् वामे दुहितृ-वाञ्छया ।
पयसा लक्ष्मणा-मूलं पुत्रोत्पाद-स्थिति-प्रदम् ॥ ४१ ॥

नासयास्येन वा पीतं वट-शुङ्गाष्टकं तथा ।
ओषधीर् जीवनीयाश् च बाह्यान्तर् उपयोजयेत् ॥ ४२ ॥

१.४२bv वट-शृङ्गाष्टकं तथा उपचारः प्रिय-हितैर् भर्त्रा भृत्यैश् च गर्भ-धृक् ।
नव-नीत-घृत-क्षीरैः सदा चैनाम् उपाचरेत् ॥ ४३ ॥

अति-व्यवायम् आयासं भारं प्रावरणं गुरु ।
अ-काल-जागर-स्वप्नं कठिनोत्कटकासनम् ॥ ४४ ॥

१.४४av अति-व्यवायं व्यायामं १.४४cv अ-काल-जागर-स्वप्न- १.४४dv -कठिनोत्कटकासनम् १.४४dv कठिनोत्कटुकासनम् १.४४dv -कठिनोत्कुटकासनम् शोक-क्रोध-भयोद्वेग-वेग-श्रद्धा-विधारणम् ।
उपवासाध्व-तीक्ष्णोष्ण-गुरु-विष्टम्भि-भोजनम् ॥ ४५ ॥

१.४५cv उपवासादि-तीक्ष्णोष्ण- रक्तं निवसनं श्वभ्र-कूपेक्षां मद्यम् आमिषम् ।
उत्तान-शयनं यच् च स्त्रियो नेच्छन्ति तत् त्यजेत् ॥ ४६ ॥

१.४६av रक्तं वि-वसनं श्वभ्र- तथा रक्त-स्रुतिं शुद्धिं वस्तिम् आ-मासतो ऽष्टमात् ।
एभिर् गर्भः स्रवेद् आमः कुक्षौ शुष्येन् म्रियेत वा ॥ ४७ ॥

१.४७cv एवं गर्भः स्रवेद् आमः वातलैश् च भवेद् गर्भः कुब्जान्ध-जड-वामनः ।
पित्तलैः खलतिः पिङ्गः श्वित्री पाण्डुः कफात्मभिः ॥ ४८ ॥

व्याधींश् चास्या मृदु-सुखैर् अ-तीक्ष्णैर् औषधैर् जयेत् ।
द्वितीये मासि कललाद् घनः पेश्य् अथ-वार्बुदम् ॥ ४९ ॥

पुं-स्त्री-क्लीबाः क्रमात् तेभ्यस् तत्र व्यक्तस्य लक्षणम् ।
क्षाम-ता गरिमा कुक्षेर् मूर्छा छर्दिर् अ-रोचकः ॥ ५० ॥

१.५०cv क्षाम-ता गरिमा कुक्षौ जृम्भा प्रसेकः सदनं रोम-राज्याः प्रकाशनम् ।
अम्लेष्ट-ता स्तनौ पीनौ स-स्तन्यौ कृष्ण-चूचुकौ ॥ ५१ ॥

पाद-शोफो विदाहो ऽन्ये श्रद्धाश् च विविधात्मिकाः ।
मातृ-जं ह्य् अस्य हृदयं मातुश् च हृदयेन तत् ॥ ५२ ॥

१.५२av पाद-शोफो विदाहो ऽन्ने संबद्धं तेन गर्भिण्या नेष्टं श्रद्धा-विमाननम् ।
देयम् अप्य् अ-हितं तस्यै हितोपहितम् अल्पकम् ॥ ५३ ॥

१.५३bv नेष्टं श्रद्धा-विधारणम् १.५३bv नेष्टं श्रद्धावमाननम् श्रद्धा-विघाताद् गर्भस्य विकृतिश् च्युतिर् एव वा ।
व्यक्ती-भवति मासे ऽस्य तृतीये गात्र-पञ्चकम् ॥ ५४ ॥

१.५४av श्रद्धाभिघाताद् गर्भस्य मूर्धा द्वे सक्थिनी बाहू सर्व-सूक्ष्माङ्ग-जन्म च ।
समम् एव हि मूर्धाद्यैर् ज्ञानं च सुख-दुःखयोः ॥ ५५ ॥

१.५५bv सर्व-सूक्ष्माङ्ग-जन्म तु १.५५dv विज्ञानं सुख-दुःखयोः गर्भस्य नाभौ मातुश् च हृदि नाडी निबध्यते ।
यया स पुष्टिम् आप्नोति केदार इव कुल्यया ॥ ५६ ॥

१.५६cv यया पुष्टिम् अवाप्नोति चतुर्थे व्यक्त-ताङ्गानां चेतनायाश् च पञ्चमे ।
षष्ठे स्नायु-सिरा-रोम-बल-वर्ण-नख-त्वचाम् ॥ ५७ ॥

सर्वैः सर्वाङ्ग-संपूर्णो भावैः पुष्यति सप्तमे ॥ ५८अब् ॥
गर्भेणोत्पीडिता दोषास् तस्मिन् हृदयम् आश्रिताः ॥ ५८च्द् ॥
कण्डूं विदाहं कुर्वन्ति गर्भिण्याः किक्किसानि च ॥ ५८एf ॥
नव-नीतं हितं तत्र कोलाम्बु-मधुरौषधैः ।
सिद्धम् अल्प-पटु-स्नेहं लघु स्वादु च भोजनम् ॥ ५९ ॥

चन्दनोशीर-कल्केन लिम्पेद् ऊरु-स्तनोदरम् ।
श्रेष्ठया वैण-हरिण-शश-शोणित-युक्तया ॥ ६० ॥

अश्वघ्न-पत्त्र-सिद्धेन तैलेनाभ्यज्य मर्दयेत् ।
पटोल-निम्ब-मञ्जिष्ठा-सुरसैः सेचयेत् पुनः ॥ ६१ ॥

दार्वी-मधुक-तोयेन मृजां च परिशीलयेत् ।
ओजो ऽष्टमे संचरति माता-पुत्रौ मुहुः क्रमात् ॥ ६२ ॥

तेन तौ म्लान-मुदितौ तत्र जातो न जीवति ।
शिशुर् ओजो-ऽन्-अवस्थानान् नारी संशयिता भवेत् ॥ ६३ ॥

१.६३bv स्याताम् अत्र न जीवति १.६३bv स्यातां जातो न जीवति क्षीर-पेया च पेयात्र स-घृतान्वासनं घृतम् ।
मधुरैः साधितं शुद्ध्यै पुराण-शकृतस् तथा ॥ ६४ ॥

१.६४bv स-घृतान्वासनं हितम् शुष्क-मूलक-कोलाम्ल-कषायेण प्रशस्यते ।
शताह्वा-कल्कितो वस्तिः स-तैल-घृत-सैन्धवः ॥ ६५ ॥

तस्मिंस् त्व् एकाह-याते ऽपि कालः सूतेर् अतः परम् ।
वर्षाद् विकार-कारी स्यात् कुक्षौ वातेन धारितः ॥ ६६ ॥

१.६६av तस्मिन्न् एकाह-याते ऽपि शस्तश् च नवमे मासि स्निग्धो मांस-रसौदनः ।
बहु-स्नेहा यवागूर् वा पूर्वोक्तं चानुवासनम् ॥ ६७ ॥

१.६७bv स्निग्ध-मांस-रसौदनः तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ।
वात-घ्न-पत्त्र-भङ्गाम्भः शीतं स्नाने ऽन्व्-अहं हितम् ॥ ६८ ॥

निः-स्नेहाङ्गी न नवमान् मासात् प्रभृति वासयेत् ।
प्राग् दक्षिण-स्तन-स्तन्या पूर्वं तत्-पार्श्व-चेष्टिनी ॥ ६९ ॥

पुं-नाम-दौर्हृद-प्रश्न-रता पुं-स्वप्न-दर्शिनी ।
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥ ७० ॥

पुत्रं सूते ऽन्य-था कन्यां या चेच्छति नृ-संगतिम् ।
नृत्य-वादित्र-गान्धर्व-गन्ध-माल्य-प्रिया च या ॥ ७१ ॥

क्लीबं तत्-संकरे तत्र मध्यं कुक्षेः समुन्नतम् ।
यमौ पार्श्व-द्वयोन्नामात् कुक्षौ द्रोण्याम् इव स्थिते ॥ ७२ ॥

प्राक् चैव नवमान् मासात् सा सूति-गृहम् आश्रयेत् ।
देशे प्रशस्ते संभारैः संपन्नं साधके ऽहनि ॥ ७३ ॥

१.७३bv सूतिका-गृहम् आश्रयेत् तत्रोदीक्षेत सा सूतिं सूतिका-परिवारिता ।
अद्य-श्वः-प्रसवे ग्लानिः कुक्ष्य्-अक्षि-श्लथ-ता क्लमः ॥ ७४ ॥

१.७४cv आसन्न-प्रसवे ग्लानिः अधो-गुरु-त्वम् अ-रुचिः प्रसेको बहु-मूत्र-ता ।
वेदनोरूदर-कटी-पृष्ठ-हृद्-वस्ति-वङ्क्षणे ॥ ७५ ॥

योनि-भेद-रुजा-तोद-स्फुरण-स्रवणानि च ।
आवीनाम् अनु जन्मातस् ततो गर्भोदक-स्रुतिः ॥ ७६ ॥

अथोपस्थित-गर्भां तां कृत-कौतुक-मगलाम् ।
हस्त-स्थ-पुं-नाम-फलां स्व्-अभ्यक्तोष्णाम्बु-सेचिताम् ॥ ७७ ॥

१.७७dv स्व्-अक्ताम् उष्णाम्बु-सेचिताम् पाययेत् स-घृतां पेयां तनौ भू-शयने स्थिताम् ।
आभुग्न-सक्थिम् उत्तानाम् अभ्यक्ताङ्गीं पुनः पुनः ॥ ७८ ॥

अधो नाभेर् विमृद्नीयात् कारयेज् जृम्भ-चङ्क्रमम् ।
गर्भः प्रयात्य् अवाग् एवं तल्-लिङ्गं हृद्-विमोक्षतः ॥ ७९ ॥

आविश्य जठरं गर्भो वस्तेर् उपरि तिष्ठति ।
आव्यो ऽभित्वरयन्त्य् एनां खट्वाम् आरोपयेत् ततः ॥ ८० ॥

१.८०cv आव्यो हि त्वरयन्त्य् एनां अथ संपीडिते गर्भे योनिम् अस्याः प्रसारयेत् ।
मृदु पूर्वं प्रवाहेत बाढम् आ-प्रसवाच् च सा ॥ ८१ ॥

१.८१bv योनिम् अस्याः प्रसाधयेत् हर्षयेत् तां मुहुः पुत्र-जन्म-शब्द-जलानिलैः ।
प्रत्यायान्ति तथा प्राणाः सूति-क्लेशावसादिताः ॥ ८२ ॥

धूपयेद् गर्भ-सङ्गे तु योनिं कृष्णाहि-कञ्चुकैः ।
हिरण्यपुष्पी-मूलं च पाणि-पादेन धारयेत् ॥ ८३ ॥

सुवर्चलां विशल्यां वा जराय्व्-अ-पतने ऽपि च ।
कार्यम् एतत् तथोत्क्षिप्य बाह्वोर् एनां विकम्पयेत् ॥ ८४ ॥

१.८४cv कार्यम् एतत् तथोत्कृष्य १.८४dv बाह्वोर् एतां विकम्पयेत् कटीम् आकोटयेत् पाष्ण्या स्फिजौ गाढं निपीडयेत् ।
तालु-कण्ठं स्पृशेद् वेण्या मूर्ध्नि दद्यात् स्नुही-पयः ॥ ८५ ॥

भूर्ज-लाङ्गलिकी-तुम्बी-सर्प-त्वक्-कुष्ठ-सर्षपैः ।
पृथग् द्वाभ्यां समस्तैर् वा योनि-लेपन-धूपनम् ॥ ८६ ॥

१.८६dv योनि-धूपं च लेपनम् कुष्ठ-तालीश-कल्कं वा सुरा-मण्डेन पाययेत् ।
यूषेण वा कुलत्थानां बाल्बजेनासवेन वा ॥ ८७ ॥

१.८७dv बिल्व-जेनासवेन वा शताह्वा-सर्षपाजाजी-शिग्रु-तीक्ष्णक-चित्रकैः ।
स-हिङ्गु-कुष्ठ-मदनैर् मूत्रे क्षीरे च सार्षपम् ॥ ८८ ॥

तैलं सिद्धं हितं पायौ योन्यां वाप्य् अनुवासनम् ।
शतपुष्पा-वचा-कुष्ठ-कणा-सर्षप-कल्कितः ॥ ८९ ॥

१.८९bv योन्यां वा ह्य् अनुवासनम् निरूहः पातयत्य् आशु स-स्नेह-लवणो ऽपराम् ।
तत्-सङ्गे ह्य् अनिलो हेतुः सा निर्यात्य् आशु तज्-जयात् ॥ ९० ॥

कुशला पाणिनाक्तेन हरेत् क्लृप्त-नखेन वा ।
मुक्त-गर्भापरां योनिं तैलेनाङ्गं च मर्दयेत् ॥ ९१ ॥

मक्कल्लाख्ये शिरो-वस्ति-कोष्ठ-शूले तु पाययेत् ।
सु-चूर्णितं यव-क्षारं घृतेनोष्ण-जलेन वा ॥ ९२ ॥

धान्याम्बु वा गुड-व्योष-त्रि-जातक-रजो-ऽन्वितम् ।
अथ बालोपचारेण बालं योषिद् उपाचरेद् ॥ ९३ ॥

सूतिका क्षुद्-वती तैलाद् घृताद् वा महतीं पिबेत् ।
पञ्च-कोलकिनीं मात्राम् अनु चोष्णं गुडोदकम् ॥ ९४ ॥

वात-घ्नौषध-तोयं वा तथा वायुर् न कुप्यति ।
विशुध्यति च दुष्टास्रं द्वि-त्रि-रात्रम् अयं क्रमः ॥ ९५ ॥

१.९५bv यथा वायुर् न कुप्यति स्नेहा-योग्या तु निः-स्नेहम् अमुम् एव विधिं भजेत् ।
पीत-वत्याश् च जठरं यमकाक्तं विवेष्टयेत् ॥ ९६ ॥

जीर्णे स्नाता पिबेत् पेयां पूर्वोक्तौषध-साधिताम् ।
त्र्य्-अहाद् ऊर्ध्वं विदार्य्-आदि-वर्ग-क्वाथेन साधिता ॥ ९७ ॥

हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाथ-वा ।
सप्त-रात्रात् परं चास्यै क्रम-शो बृंहणं हितम् ॥ ९८ ॥

१.९८cv सप्त-रात्रात् परं चास्याः १.९८cv सप्त-रात्रात् परं वास्याः द्वा-दशाहे ऽन्-अतिक्रान्ते पिशितं नोपयोजयेत् ।
यत्नेनोपचरेत् सूतां दुः-साध्यो हि तद्-आमयः ॥ ९९ ॥

१.९९bv पिशितं नैव योजयेत् गर्भ-वृद्धि-प्रसव-रुक्-क्लेदास्र-स्रुति-पीडनैः ।
एवं च मासाद् अध्य्-अर्धान् मुक्ताहारादि-यन्त्रणा ॥ १०० ॥

गत-सूताभिधाना स्यात् पुनर् आर्तव-दर्शनात् ॥ १००अब् ॥

# अध्याय २

गर्भिण्याः परिहार्याणां सेवया रोगतो ऽथ-वा ।
पुष्पे दृष्टे ऽथ-वा शूले बाह्यान्तः स्निग्ध-शीतलम् ॥ १ ॥

२.१bv सेवया रोगतो ऽपि वा सेव्याम्भो-ज-हिम-क्षीरि-वल्क-कल्काज्य-लेपितान् ।
धारयेद् योनि-वस्तिभ्याम् आर्द्रार्द्रान् पिचु-नक्तकान् ॥ २ ॥

२.२cv धारयेद् वस्ति-योनिभ्याम् शत-धौत-घृताक्तां स्त्रीं तद्-अम्भस्य् अवगाहयेत् ।
स-सिता-क्षौद्र-कुमुद-कमलोत्पल-केसरम् ॥ ३ ॥

लिह्यात् क्षीर-घृतं खादेच् छृङ्गाटक-कसेरुकम् ।
पिबेत् कान्ताब्-ज-शालूक-बालोदुम्बर-वत् पयः ॥ ४ ॥

शृतेन शालि-काकोली-द्वि-बला-मधुकेक्षुभिः ।
पयसा रक्त-शाल्य्-अन्नम् अद्यात् स-मधु-शर्करम् ॥ ५ ॥

रसैर् वा जाङ्गलैः शुद्धि-वर्जं चास्रोक्तम् आचरेत् ।
अ-संपूर्ण-त्रि-मासायाः प्रत्याख्याय प्रसाधयेत् ॥ ६ ॥

२.६bv -वर्जं वास्रोक्तम् आचरेत् आमान्वये च तत्रेष्टं शीतं रूक्षोपसंहितम् ।
उपवासो घनोशीर-गुडूच्य्-अरलु-धान्यकाः ॥ ७ ॥

दुरालभा-पर्पटक-चन्दनातिविषा-बलाः ।
क्वथिताः सलिले पानं तृण-धान्यानि भोजनम् ॥ ८ ॥

२.८dv तृण-धान्यादि भोजनम् मुद्गादि-यूषैर् आमे तु जिते स्निग्धादि पूर्व-वत् ।
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥

गर्भ-कोष्ठ-विशुद्ध्य्-अर्थम् अर्ति-विस्मरणाय च ।
लघुना पञ्च-मूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥

पेयाम् अ-मद्य-पा कल्के साधितां पाञ्चकौलिके ।
बिल्वादि-पञ्चक-क्वाथे तिलोद्दालक-तण्डुलैः ॥ ११ ॥

मास-तुल्य-दिनान्य् एवं पेयादिः पतिते क्रमः ।
लघुर् अ-स्नेह-लवणो दीपनीय-युतो हितः ॥ १२ ॥

२.१२dv दीपनीय-युतो हि सः दोष-धातु-परिक्लेद-शोषार्थं विधिर् इत्य् अयम् ।
स्नेहान्न-वस्तयश् चोर्ध्वं बल्य-दीपन-जीवनाः ॥ १३ ॥

संजात-सारे महति गर्भे योनि-परिस्रवात् ।
वृद्धिम् अ-प्राप्नुवन् गर्भः कोष्ठे तिष्ठति स-स्फुरः ॥ १४ ॥

उपविष्टकम् आहुस् तं वर्धते तेन नोदरम् ।
शोकोपवास-रूक्षाद्यैर् अथ-वा योन्य्-अति-स्रवात् ॥ १५ ॥

वाते क्रुद्धे कृशः शुष्येद् गर्भो नागोदरं तु तम् ।
उदरं वृद्धम् अप्य् अत्र हीयते स्फुरणं चिरात् ॥ १६ ॥

२.१६bv गर्भो नागोदरं तु तत् तयोर् बृंहण-वात-घ्न-मधुर-द्रव्य-संस्कृतैः ।
घृत-क्षीर-रसैस् तृप्तिर् आम-गर्भांश् च खादयेत् ॥ १७ ॥

तैर् एव च सु-भिक्षायाः क्षोभणं यान-वाहनैः ।
लीनाख्ये निस्फुरे श्येन-गो-मत्स्योत्क्रोश-बर्हि-जाः ॥ १८ ॥

२.१८av तैर् एव च सु-तृप्तायाः रसा बहु-घृता देया माष-मूलक-जा अपि ।
बाल-बिल्वं तिलान् माषान् सक्तूंश् च पयसा पिबेत् ॥ १९ ॥

स-मेद्य-मांसं मधु वा कट्य्-अभ्यङ्गं च शीलयेत् ।
हर्षयेत् सततं चैनाम् एवं गर्भः प्रवर्धते ॥ २० ॥

पुष्टो ऽन्य-था वर्ष-गणैः कृच्छ्राज् जायेत नैव वा ।
उदावर्तं तु गर्भिण्याः स्नेहैर् आशु-तरां जयेत् ॥ २१ ॥

योग्यैश् च वस्तिभिर् हन्यात् स-गर्भा स हि गर्भिणीम् ।
गर्भे ऽति-दोषोपचयाद् अ-पथ्यैर् दैवतो ऽपि वा ॥ २२ ॥

मृते ऽन्तर् उदरं शीतं स्तब्धं ध्मातं भृश-व्यथम् ।
गर्भा-स्पन्दो भ्रम-तृष्णा कृच्छ्राद् उच्छ्वसनं क्लमः ॥ २३ ॥

२.२३av मृते ऽन्तर् जठरं शीतं २.२३bv स्तब्धाध्मातं भृश-व्यथम् अ-रतिः स्रस्त-नेत्र-त्वम् आवीनाम् अ-समुद्भवः ।
तस्याः कोष्णाम्बु-सिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥ २४ ॥

गुडं किण्वं स-लवणं तथान्तः पूरयेन् मुहुः ।
घृतेन कल्की-कृतया शाल्मल्य्-अतसि-पिच्छया ॥ २५ ॥

मन्त्रैर् योगैर् जरायूक्तैर् मूढ-गर्भो न चेत् पतेत् ।
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तम् आहरेत् ॥ २६ ॥

२.२६cv अथ पृष्ट्वेश्वरं वैद्यो २.२६cv अथापृष्ट्वेश्वरं वैद्यो हस्तम् अभ्यज्य योनिं च साज्य-शाल्मलि-पिच्छया ।
हस्तेन शक्यं तेनैव गात्रं च विषमं स्थितम् ॥ २७ ॥

२.२७dv गात्रं च विषम-स्थितम् आञ्छनोत्पीड-संपीड-विक्षेपोत्क्षेपणादिभिः ।
आनुलोम्य समाकर्षेद् योनिं प्रत्य् आर्जवागतम् ॥ २८ ॥

२.२८cv आनुलोम्ये समाकर्षेद् हस्त-पाद-शिरोभिर् यो योनिं भुग्नः प्रपद्यते ।
पादेन योनिम् एकेन भुग्नो ऽन्येन गुदं च यः ॥ २९ ॥

विष्कम्भौ नाम तौ मूढौ शस्त्र-दारणम् अर्हतः ।
मण्डलाङ्गुलि-शस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ३० ॥

वृद्धि-पत्त्रं हि तीक्ष्णाग्रं न योनाव् अवचारयेत् ।
पूर्वं शिरः-कपालानि दारयित्वा विशोधयेत् ॥ ३१ ॥

कक्षोरस्-तालु-चिबुक-प्रदेशे ऽन्य-तमे ततः ।
समालम्ब्य दृढं कर्षेत् कुशलो गर्भ-शङ्कुना ॥ ३२ ॥

२.३२av कक्षोरस्-तालु-चिबुके २.३२bv प्रदेशे ऽन्य-तमे ततः अ-भिन्न-शिरसं त्व् अक्षि-कूटयोर् गण्डयोर् अपि ।
बाहुं छित्त्वांस-सक्तस्य वाताध्मातोदरस्य तु ॥ ३३ ॥

विदार्य कोष्ठम् अन्त्राणि बहिर् वा संनिरस्य च ।
कटी-सक्तस्य तद्-वच् च तत्-कपालानि दारयेत् ॥ ३४ ॥

यद् यद् वायु-वशाद् अङ्गं सज्जेद् गर्भस्य खण्ड-शः ।
तत् तच् छित्त्वाहरेत् सम्यग् रक्षेन् नारीं च यत्नतः ॥ ३५ ॥

२.३५cv तत् तच् छित्त्वाहरन् सम्यग् गर्भस्य हि गतिं चित्रां करोति वि-गुणो ऽनिलः ।
तत्रान्-अल्प-मतिस् तस्माद् अवस्थापेक्षम् आचरेत् ॥ ३६ ॥

छिन्द्याद् गर्भं न जीवन्तं मातरं स हि मारयेत् ।
सहात्मना न चोपेक्ष्यः क्षणम् अप्य् अस्त-जीवितः ॥ ३७ ॥

योनि-संवरण-भ्रंश-मक्कल्ल-श्वास-पीडिताम् ।
पूत्य्-उद्गारां हिमाङ्गीं च मूढ-गर्भां परित्यजेत् ॥ ३८ ॥

अथा-पतन्तीम् अपरां पातयेत् पूर्व-वद् भिषक् ।
एवं निर्हृत-शल्यां तु सिञ्चेद् उष्णेन वारिणा ॥ ३९ ॥

दद्याद् अभ्यक्त-देहायै योनौ स्नेह-पिचुं ततः ।
योनिर् मृदुर् भवेत् तेन शूलं चास्याः प्रशाम्यति ॥ ४० ॥

दीप्यकातिविषा-रास्ना-हिङ्ग्व्-एला-पञ्च-कोलकात् ।
चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत् ततः ॥ ४१ ॥

२.४१dv क्वाथं तां पाययेत् ततः कटुकातिविषा-पाठा-शाक-त्वग्-घिङ्गु-तेजिनीः ।
तद्-वच् च दोष-स्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥

२.४२bv -शाक-त्वग्-घिङ्गु-तेजनीः त्रि-रात्रम् एवं सप्ताहं स्नेहम् एव ततः पिबेत् ।
सायं पिबेद् अरिष्टं च तथा सु-कृतम् आसवम् ॥ ४३ ॥

शिरीष-ककुभ-क्वाथ-पिचून् योनौ विनिक्षिपेत् ।
उपद्रवाश् च ये ऽन्ये स्युस् तान् यथा-स्वम् उपाचरेत् ॥ ४४ ॥

पयो वात-हरैः सिद्धं दशाहं भोजने हितम् ।
रसो दशाहं च परं लघु-पथ्याल्प-भोजना ॥ ४५ ॥

स्वेदाभ्यङ्ग-परा स्नेहान् बला-तैलादिकान् भजेत् ।
ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ॥ ४६ ॥

बला-मूल-कषायस्य भागाः षट् पयसस् तथा ।
यव-कोल-कुलत्थानां दश-मूलस्य चैकतः ॥ ४७ ॥

निःक्वाथ-भागो भागश् च तैलस्य तु चतुर्-दशः ।
द्वि-मेदा-दारु-मञ्जिष्ठा-काकोली-द्वय-चन्दनैः ॥ ४८ ॥

२.४८bv तैलस्य च चतुर्-दशः शारिवा-कुष्ठ-तगर-जीवकर्षभ-सैन्धवैः ।
कालानुसार्या-शैलेय-वचागुरु-पुनर्नवैः ॥ ४९ ॥

२.४९cv कालानुसारी-शैलेय- २.४९cv कालानुसार्य-शैलेय- अश्वगन्धा-वरी-क्षीरशुक्ला-यष्टी-वरा-रसैः ।
शताह्वा-शूर्पपर्ण्य्-एला-त्वक्-पत्त्रैः श्लक्ष्ण-कल्कितैः ॥ ५० ॥

पक्वं मृद्व्-अग्निना तैलं सर्व-वात-विकार-जित् ।
सूतिका-बाल-मर्मास्थि-हत-क्षीणेषु पूजितम् ॥ ५१ ॥

२.५१dv -क्षत-क्षीणेषु पूजितम् ज्वर-गुल्म-ग्रहोन्माद-मूत्राघातान्त्र-वृद्धि-जित् ।
धन्वन्तरेर् अभिमतं योनि-रोग-क्षयापहम् ॥ ५२ ॥

वस्ति-द्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्म-काले ततः शीघ्रं पाटयित्वोद्धरेच् छिशुम् ॥ ५३ ॥

मधुकं शाक-बीजं च पयस्या सुरदारु च ।
अश्मन्तकः कृष्ण-तिलास् ताम्रवल्ली शतावरी ॥ ५४ ॥

२.५४bv पयस्यामरदारु च वृक्षादनी पयस्या च लता सोत्पल-शारिवा ।
अनन्ता शारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५ ॥

२.५५bv लता चोत्पल-शारिवा २.५५dv पद्माथ मधुयष्टिका २.५५dv पद्माह्व-मधुयष्टिका २.५५dv पद्मकं मधुयष्टिका बृहती-द्वय-काश्मर्य-क्षीरि-शुङ्ग-त्वचा घृतम् ।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥

२.५६av बृहती-द्वय-काश्मर्यः २.५६bv -क्षीरि-शृङ्ग-त्वचा घृतम् २.५६bv क्षीरि-शुङ्ग-त्वचा घृतम् शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ।
सप्तैतान् पयसा योगान् अर्ध-श्लोक-समापनान् ॥ ५७ ॥

क्रमात् सप्तसु मासेषु गर्भे स्रवति योजयेत् ।
कपित्थ-बिल्व-बृहती-पटोलेक्षु-निदिग्धिकात् ॥ ५८ ॥

२.५८dv -पटोलेक्षु-निदिग्धि-जैः मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाष्टमे ।
नवमे शारिवानन्ता-पयस्या-मधुयष्टिभिः ॥ ५९ ॥

योजयेद् दशमे मासि सिद्धं क्षीरं पयस्यया ।
अथ-वा यष्टिमधुक-नागरामरदारुभिः ॥ ६० ॥

अवस्थितं लोहितम् अङ्गनाया वातेन गर्भं ब्रुवते ऽन्-अभिज्ञाः ।
गर्भाकृति-त्वात् कटुकोष्ण-तीक्ष्णैः स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥

गर्भं जडा भूत-हृतं वदन्ति मूर्तेर् न दृष्टं हरणं यतस् तैः ।
ओजो-ऽशन-त्वाद् अथ-वा-व्यवस्थैर् भूतैर् उपेक्ष्येत न गर्भ-माता ॥ ६२ ॥

# अध्याय ३

शिरो ऽन्तर्-आधिर् द्वौ बाहू सक्थिनीति समासतः ।
षड्-अङ्गम् अङ्गं प्रत्यङ्गं तस्याक्षि-हृदयादिकम् ॥ १ ॥

३.१bv सक्थिनी च समासतः शब्दः स्पर्शश् च रूपं च रसो गन्धः क्रमाद् गुणाः ।
खानिलाग्न्य्-अब्-भुवाम् एक-गुण-वृद्ध्य्-अन्वयः परे ॥ २ ॥

३.२cv खानिलाग्न्य्-अम्बु-भूष्व् एक- ३.२dv -गुण-वृद्ध्यान्वयः परे तत्र खात् खानि देहे ऽस्मिन् श्रोत्रं शब्दो विविक्त-ता ।
वातात् स्पर्श-त्वग्-उच्छ्वासा वह्नेर् दृग्-रूप-पक्तयः ॥ ३ ॥

आप्या जिह्वा-रस-क्लेदा घ्राण-गन्धास्थि पार्थिवम् ।
मृद्व् अत्र मातृ-जं रक्त-मांस-मज्ज-गुदादिकम् ॥ ४ ॥

पैतृकं तु स्थिरं शुक्र-धमन्य्-अस्थि-कचादिकम् ।
चैतनं चित्तम् अक्षाणि नाना-योनिषु जन्म च ॥ ५ ॥

३.५cv आत्म-जं चित्तं अक्षाणि सात्म्य-जं त्व् आयुर् आरोग्यम् अन्-आलस्यं प्रभा बलम् ।
रस-जं वपुषो जन्म वृत्तिर् वृद्धिर् अ-लोल-ता ॥ ६ ॥

३.६av सात्म्य-जं चायुर् आरोग्यम् सात्त्विकं शौचम् आस्तिक्यं शुक्ल-धर्म-रुचिर् मतिः ।
राजसं बहु-भाषि-त्वं मान-क्रुद्-दम्भ-मत्सरम् ॥ ७ ॥

३.७dv मान-क्रुद्-दम्भ-मत्सराः तामसं भयम् अ-ज्ञानं निद्रालस्यं विषादि-ता ।
इति भूत-मयो देहस् तत्र सप्त त्वचो ऽसृजः ॥ ८ ॥

पच्यमानात् प्रजायन्ते क्षीरात् संतानिका इव ।
धात्व्-आशयान्तर-क्लेदो विपक्वः स्वं स्वम् ऊष्मणा ॥ ९ ॥

श्लेष्म-स्नाय्व्-अपराच्छन्नः कलाख्यः काष्ठ-सार-वत् ।
ताः सप्त सप्त चाधारा रक्तस्याद्यः क्रमात् परे ॥ १० ॥

३.१०अच् श्लेष्म-स्नाय्व्-अपरा-छन्नः ३.१०dv रक्तस्याधः क्रमात् परे कफाम-पित्त-पक्वानां वायोर् मूत्रस्य च स्मृताः ।
गर्भाशयो ऽष्टमः स्त्रीणां पित्त-पक्वाशयान्तरे ॥ ११ ॥

कोष्ठाङ्गानि स्थितान्य् एषु हृदयं क्लोम फुप्फुसम् ।
यकृत्-प्लीहोण्डुकं वृक्कौ नाभि-डिम्बान्त्र-वस्तयः ॥ १२ ॥

३.१२bv हृदयं क्लोम फुप्फुसः ३.१२bv हृदयं क्लोम-फुप्फुसे दश जीवित-धामानि शिरो-रसन-बन्धनम् ।
कण्ठो ऽस्रं हृदयं नाभिर् वस्तिः शुक्रौजसी गुदम् ॥ १३ ॥

३.१३dv वस्तिः शुक्रौजसी गुदः जालानि कण्डराश् चाङ्गे पृथक् षो-डश निर्दिशेत् ।
षट् कूर्चाः सप्त सीवन्यो मेढ्र-जिह्वा-शिरो-गताः ॥ १४ ॥

३.१४cv षट् कूर्चाः सप्त सेवन्यो ३.१४cv षट् कूर्चाः सप्त सेविन्यो शस्त्रेण ताः परिहरेच् चतस्रो मांस-रज्जवः ।
चतुर्-दशास्थि-संघाताः सीमन्ता द्वि-गुणा नव ॥ १५ ॥

३.१५av शस्त्रेणैताः परिहरेच् अस्थ्नां शतानि षष्टिश् च त्रीणि दन्त-नखैः सह ।
धन्वन्तरिस् तु त्रीण्य् आह संधीनां च शत-द्वयम् ॥ १६ ॥

३.१६av अस्थ्नां शतानि षष्ठीनि दशोत्तरं सहस्रे द्वे निजगादात्रि-नन्दनः ।
स्नाव्नां नव-शती पञ्च पुंसां पेशी-शतानि तु ॥ १७ ॥

३.१७cv स्नायोर् नव-शती पञ्च ३.१७dv पुंसां पेशी-शतानि च अधिका विंशतिः स्त्रीणां योनि-स्तन-समाश्रिताः ।
दश मूल-सिरा हृत्-स्थास् ताः सर्वं सर्वतो वपुः ॥ १८ ॥

३.१८bv योनि-स्तन-समाश्रयाः रसात्मकं वहन्त्य् ओजस् तन्-निबद्धं हि चेष्टितम् ।
स्थूल-मूलाः सु-सूक्ष्माग्राः पत्त्र-रेखा-प्रतान-वत् ॥ १९ ॥

भिद्यन्ते तास् ततः सप्त-शतान्य् आसां भवन्ति तु ।
तत्रैकैकं च शाखायां शतं तस्मिन् न वेधयेत् ॥ २० ॥

३.२०cv तत्रैकैक-त्र शाखायां सिरां जालन्-धरां नाम तिस्रश् चाभ्यन्तराश्रिताः ।
षो-डश-द्वि-गुणाः श्रोण्यां तासां द्वे द्वे तु वङ्क्षणे ॥ २१ ॥

द्वे द्वे कटीक-तरुणे शस्त्रेणाष्टौ स्पृशेन् न ताः ।
पार्श्वयोः षो-डशैकैकाम् ऊर्ध्व-गां वर्जयेत् तयोः ॥ २२ ॥

३.२२dv ऊर्ध्व-गां वर्जयेत् सिराम् द्वा-दश-द्वि-गुणाः पृष्ठे पृष्ठ-वंशस्य पार्श्वयोः ।
द्वे द्वे तत्रोर्ध्व-गामिन्यौ न शस्त्रेण परामृशेत् ॥ २३ ॥

३.२३bv पृष्ठ-वंशस्य पार्श्व-गे पृष्ठ-वज् जठरे तासां मेहनस्योपरि स्थिते ।
रोम-राजीम् उभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥

चत्वारिंशद् उरस्य् आसां चतुर्-दश न वेधयेत् ।
स्तन-रोहित-तन्-मूल-हृदये तु पृथग् द्वयम् ॥ २५ ॥

अपस्तम्भाख्ययोर् एकां तथापालापयोर् अपि ।
ग्रीवायां पृष्ठ-वत् तासां नीले मन्ये कृकाटिके ॥ २६ ॥

विधुरे मातृकाश् चाष्टौ षो-डशेति परित्यजेत् ।
हन्वोः षो-डश तासां द्वे संधि-बन्धन-कर्मणी ॥ २७ ॥

३.२७bv षो-डशैताः परित्यजेत् जिह्वायां हनु-वत् तासाम् अधो द्वे रस-बोधने ।
द्वे च वाचः-प्रवर्तिन्यौ नासायां चतुर्-उत्तरा ॥ २८ ॥

विंशतिर् गन्ध-वेदिन्यौ तासाम् एकां च तालु-गाम् ।
षट्-पञ्चाशन् नयनयोर् निमेषोन्मेष-कर्मणी ॥ २९ ॥

द्वे द्वे अपाङ्गयोर् द्वे च तासां षड् इति वर्जयेत् ।
नासा-नेत्राश्रिताः षष्टिर् ललाटे स्थपनी-श्रिताम् ॥ ३० ॥

तत्रैकां द्वे तथावर्तौ चतस्रश् च कचान्त-गाः ।
सप्तैवं वर्जयेत् तासां कर्णयोः षो-डशात्र तु ॥ ३१ ॥

द्वे शब्द-बोधने शङ्खौ सिरास् ता एव चाश्रिताः ।
द्वे शङ्ख-संधि-गे तासां मूर्ध्नि द्वा-दश तत्र तु ॥ ३२ ॥

एकैकां पृथग् उत्क्षेप-सीमन्ताधिपति-स्थिताम् ।
इत्य् अ-वेध्य-विभागार्थं प्रत्यङ्गं वर्णिताः सिराः ॥ ३३ ॥

अ-वेध्यास् तत्र कात्स्न्र्येन देहे ऽष्टा-नवतिस् तथा ।
संकीर्णा ग्रथिताः क्षुद्रा वक्राः संधिषु चाश्रिताः ॥ ३४ ॥

तासां शतानां सप्तानां पादो ऽस्रं वहते पृथक् ।
वात-पित्त-कफैर् जुष्टं शुद्धं चैवं स्थिता मलाः ॥ ३५ ॥

शरीरम् अनुगृह्णन्ति पीडयन्त्य् अन्य-था पुनः ।
तत्र श्यावारुणाः सूक्ष्माः पूर्ण-रिक्ताः क्षणात् सिराः ॥ ३६ ॥

प्रस्पन्दिन्यश् च वातास्रं वहन्ते पित्त-शोणितम् ।
स्पर्शोष्णाः शीघ्र-वाहिन्यो नील-पीताः कफं पुनः ॥ ३७ ॥

गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्ग-संकरे ।
गूढाः सम-स्थिताः स्निग्धा रोहिण्यः शुद्ध-शोणितम् ॥ ३८ ॥

धमन्यो नाभि-संबद्धा विंशतिश् चतुर्-उत्तरा ।
ताभिः परिवृता नाभिश् चक्र-नाभिर् इवारकैः ॥ ३९ ॥

३.३९cv ताभिः परिवृतो नाभिश् ताभिश् चोर्ध्वम् अधस् तिर्यग् देहो ऽयम् अनुगृह्यते ।
स्रोतांसि नासिके कर्णौ नेत्रे पाय्व्-आस्य-मेहनम् ॥ ४० ॥

स्तनौ रक्त-पथश् चेति नारीणाम् अधिकं त्रयम् ।
जीवितायतनान्य् अन्तः स्रोतांस्य् आहुस् त्रयो-दश ॥ ४१ ॥

प्राण-धातु-मलाम्भो-ऽन्न-वाहीन्य् अ-हित-सेवनात् ।
तानि दुष्टानि रोगाय विशुद्धानि सुखाय च ॥ ४२ ॥

स्व-धातु-सम-वर्णानि वृत्त-स्थूलान्य् अणूनि च ।
स्रोतांसि दीर्घाण्य् आकृत्या प्रतान-सदृशानि च ॥ ४३ ॥

आहारश् च विहारश् च यः स्याद् दोष-गुणैः समः ।
धातुभिर् वि-गुणो यश् च स्रोतसां स प्रदूषकः ॥ ४४ ॥

अति-प्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयो ऽपि वा ।
वि-मार्गतो वा गमनं स्रोतसां दुष्टि-लक्षणम् ॥ ४५ ॥

३.४५dv स्रोतसां दुष्ट-लक्षणम् बिसानाम् इव सूक्ष्माणि दूरं प्रविसृतानि च ।
द्वाराणि स्रोतसां देहे रसो यैर् उपचीयते ॥ ४६ ॥

व्यधे तु स्रोतसां मोह-कम्पाध्मान-वमि-ज्वराः ।
प्रलाप-शूल-विण्-मूत्र-रोधा मरणम् एव वा ॥ ४७ ॥

स्रोतो-विद्धम् अतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।
उद्धृत्य शल्यं यत्नेन सद्यः-क्षत-विधानतः ॥ ४८ ॥

अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।
दोष-धातु-मलादीनाम् ऊष्मेत्य् आत्रेय-शासनम् ॥ ४९ ॥

वाम-पार्श्वाश्रितं नाभेः किञ्-चित् सूर्यस्य मण्डलम् ।
तन्-मध्ये मण्डलं सौम्यं तन्-मध्ये ऽग्निर् व्यवस्थितः ॥ ४९+१ ॥

जरायु-मात्र-प्रच्छन्नः काच-कोश-स्थ-दीप-वत् ॥ ४९+२अब् ॥
तद्-अधिष्ठानम् अन्नस्य ग्रहणाद् ग्रहणी मता ।
सैव धन्वन्तरि-मते कला पित्त-धराह्वया ॥ ५० ॥

आयुर्-आरोग्य-वीर्यौजो-भूत-धात्व्-अग्नि-पुष्टये ।
स्थिता पक्वाशय-द्वारि भुक्त-मार्गार्गलेव सा ॥ ५१ ॥

३.५१dv भुक्त-मार्गार्गलेव या भुक्तम् आमाशये रुद्ध्वा सा विपाच्य नयत्य् अधः ।
बल-वत्य् अ-बला त्व् अन्नम् आमम् एव विमुञ्चति ॥ ५२ ॥

ग्रहण्या बलम् अग्निर् हि स चापि ग्रहणी-बलः ।
दूषिते ऽग्नाव् अतो दुष्टा ग्रहणी रोग-कारिणी ॥ ५३ ॥

यद् अन्नं देह-धात्व्-ओजो-बल-वर्णादि-पोषणम् ।
तत्राग्निर् हेतुर् आहारान् न ह्य् अ-पक्वाद् रसादयः ॥ ५४ ॥

अन्नं काले ऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् ।
द्रवैर् विभिन्न-संघातं नीतं स्नेहेन मार्दवम् ॥ ५५ ॥

३.५५bv कोष्ठे प्राणानिलाहृतम् संधुक्षितः समानेन पचत्य् आमाशय-स्थितम् ।
औदर्यो ऽग्निर् यथा बाह्यः स्थाली-स्थं तोय-तण्डुलम् ॥ ५६ ॥

आदौ षड्-रसम् अप्य् अन्नं मधुरी-भूतम् ईरयेत् ।
फेनी-भूतं कफं यातं विदाहाद् अम्ल-तां ततः ॥ ५७ ॥

३.५७cv फेन-भूतं कफं यातं पित्तम् आमाशयात् कुर्याच् च्यवमानं च्युतं पुनः ।
अग्निना शोषितं पक्वं पिण्डितं कटु मारुतम् ॥ ५८ ॥

भौमाप्याग्नेय-वायव्याः पञ्चोष्माणः स-नाभसाः ।
पञ्चाहार-गुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्य् अनु ॥ ५९ ॥

यथा-स्वं ते च पुष्णन्ति पक्वा भूत-गुणान् पृथक् ।
पार्थिवाः पार्थिवान् एव शेषाः शेषांश् च देह-गान् ॥ ६० ॥

३.६०av यथा-स्वं ते च पुष्यन्ति किट्टं सारश् च तत् पक्वम् अन्नं संभवति द्वि-धा ।
तत्राच्छं किट्टम् अन्नस्य मूत्रं विद्याद् घनम् शकृत् ॥ ६१ ॥

३.६१av किट्टं सारस् तथा पक्वम् सारस् तु सप्तभिर् भूयो यथा-स्वं पच्यते ऽग्निभिः ।
रसाद् रक्तं ततो मांसं मांसान् मेदस् ततो ऽस्थि च ॥ ६२ ॥

३.६२dv मांसान् मेदो ऽस्थि मेदसः अस्थ्नो मज्जा ततः शुक्रं शुक्राद् गर्भः प्रजायते ।
कफः पित्तं मलाः खेषु प्रस्वेदो नख-रोम च ॥ ६३ ॥

३.६३cv कफः पित्तं मलः खेषु स्नेहो ऽक्षि-त्वग्-विषाम् ओजो धातूनां क्रम-शो मलाः ।
प्रसाद-किट्टौ धातूनां पाकाद् एवं द्वि-धर्च्छतः ॥ ६४ ॥

परस्-परोपसंस्तम्भाद् धातु-स्नेह-परम्-परा ।
के-चिद् आहुर् अहो-रात्रात् षड्-अहाद् अपरे परे ॥ ६५ ॥

मासेन याति शुक्र-त्वम् अन्नं पाक-क्रमादिभिः ।
संतता भोज्य-धातूनां परिवृत्तिस् तु चक्र-वत् ॥ ६६ ॥

वृष्यादीनि प्रभावेण सद्यः शुक्रादि कुर्वते ।
प्रायः करोत्य् अहो-रात्रात् कर्मान्यद् अपि भेषजम् ॥ ६७ ॥

३.६७bv सद्यः शुक्रं प्रकुर्वते व्यानेन रस-धातुर् हि विक्षेपोचित-कर्मणा ।
युग-पत् सर्वतो ऽजस्रं देहे विक्षिप्यते सदा ॥ ६८ ॥

क्षिप्यमाणः ख-वैगुण्याद् रसः सज्जति यत्र सः ।
तस्मिन् विकारं कुरुते खे वर्षम् इव तोय-दः ॥ ६९ ॥

दोषाणाम् अपि चैवं स्याद् एक-देश-प्रकोपणम् ।
अन्न-भौतिक-धात्व्-अग्नि-कर्मेति परिभाषितम् ॥ ७० ॥

अन्नस्य पक्ता सर्वेषां पक्तॄणाम् अधिको मतः ।
तन्-मूलास् ते हि तद्-वृद्धि-क्षय-वृद्धि-क्षयात्मकाः ॥ ७१ ॥

तस्मात् तं विधि-वद् युक्तैर् अन्न-पानेन्धनैर् हितैः ।
पालयेत् प्रयतस् तस्य स्थितौ ह्य् आयुर्-बल-स्थितिः ॥ ७२ ॥

समः समाने स्थान-स्थे विषमो ऽग्निर् वि-मार्ग-गे ।
पित्ताभिमूर्छिते तीक्ष्णो मन्दो ऽस्मिन् कफ-पीडिते ॥ ७३ ॥

समो ऽग्निर् विषमस् तीक्ष्णो मन्दश् चैवं चतुर्-विधः ।
यः पचेत् सम्यग् एवान्नं भुक्तं सम्यक् समस् त्व् असौ ॥ ७४ ॥

३.७४dv भुक्तं सम्यक् समस् तु सः विषमो ऽ-सम्यग् अप्य् आशु सम्यग् वापि चिरात् पचेत् ।
तीक्ष्णो वह्निः पचेच् छीघ्रम् अ-सम्यग् अपि भोजनम् ॥ ७५ ॥

३.७५av विषमो ऽ-सम्यग् एवाशु ३.७५bv सम्यग् एव चिरात् पचेत् मन्दस् तु सम्यग् अप्य् अन्नम् उपयुक्तं चिरात् पचेत् ।
कृत्वास्य-शोषाटोपान्त्र-कूजनाध्मान-गौरवम् ॥ ७६ ॥

३.७६bv उपभुक्तं चिरात् पचेत् शान्ते ऽग्नौ म्रियते युक्ते चिरं जीवत्य् अन्-आमयः ।
रोगी स्याद् विकृते मूलम् अग्नि-स्तम्भान् निरुच्यते ॥ ७६+१ ॥

३.७६+१dv अग्नि-स्तम्भान् निरूप्यते सह-जं काल-जं युक्ति-कृतं देह-बलं त्रि-धा ।
तत्र सत्-त्व-शरीरोत्थं प्राकृतं सह-जं बलम् ॥ ७७ ॥

वयः-कृतम् ऋतूत्थं च काल-जं युक्ति-जं पुनः ।
विहाराहार-जनितं तथोर्जस्-कर-योग-जम् ॥ ७८ ॥

देशो ऽल्प-वारि-द्रु-नगो जाङ्गलः स्व्-अल्प-रोग-दः ।
आनूपो विपरीतो ऽस्मात् समः साधारणः स्मृतः ॥ ७९ ॥

मज्ज-मेदो-वसा-मूत्र-पित्त-श्लेष्म-शकृन्त्य् असृक् ।
रसो जलं च देहे ऽस्मिन्न् एकैकाञ्जलि-वर्धितम् ॥ ८० ॥

पृथक् स्व-प्रसृतं प्रोक्तम् ओजो-मस्तिष्क-रेतसाम् ।
द्वाव् अञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः ॥ ८१ ॥

सम-धातोर् इदं मानं विद्याद् वृद्धि-क्षयाव् अतः ॥ ८२अब् ॥
शुक्रासृग्-गर्भिणी-भोज्य-चेष्टा-गर्भाशयर्तुषु ।
यः स्याद् दोषो ऽधिकस् तेन प्रकृतिः सप्त-धोदिता ॥ ८३ ॥

३.८३dv प्रकृतिः सप्त-धा स्मृता विभु-त्वाद् आशु-कारि-त्वाद् बलि-त्वाद् अन्य-कोपनात् ।
स्वातन्त्र्याद् बहु-रोग-त्वाद् दोषाणां प्रबलो ऽनिलः ॥ ८४ ॥

प्रायो ऽत एव पवनाध्युषिता मनुष्या दोषात्मकाः स्फुटित-धूसर-केश-गात्राः ।
शीत-द्विषश् चल-धृति-स्मृति-बुद्धि-चेष्टा-सौहार्द-दृष्टि-गतयो ऽति-बहु-प्रलापाः ॥ ८५ ॥

अल्प-वित्त-बल-जीवित-निद्राः सन्न-सक्त-चल-जर्जर-वाचः ।
नास्तिका बहु-भुजः स-विलासा गीत-हास-मृगया-कलि-लोलाः ॥ ८६ ॥

३.८६av अल्प-पित्त-कफ-जीवित-निद्राः ३.८६av अल्प-वित्त-कफ-जीवित-निद्राः ३.८६av अल्प-पित्त-बल-जीवित-निद्राः मधुराम्ल-पटूष्ण-सात्म्य-काङ्क्षाः कृश-दीर्घाकृतयः स-शब्द-याताः ।
न दृढा न जितेन्द्रिया न चार्या न च कान्ता-दयिता बहु-प्रजा वा ॥ ८७ ॥

३.८७bv कृश-दीर्घाकृतयः स-शब्द-यानाः नेत्राणि चैषां खर-धूसराणि वृत्तान्य् अ-चारूणि मृतोपमानि ।
उन्मीलितानीव भवन्ति सुप्ते शैल-द्रुमांस् ते गगनं च यान्ति ॥ ८८ ॥

३.८८av नेत्राणि वैषां खर-धूसराणि अ-धन्या मत्सराध्माताः स्तेनाः प्रोद्बद्ध-पिण्डिकाः ।
श्व-शृगालोष्ट्र-गृध्राखु-काकानूकाश् च वातिकाः ॥ ८९ ॥

३.८९bv स्तेनाः प्रोद्वृत्त-पिण्डिकाः पित्तं वह्निर् वह्नि-जं वा यद् अस्मात् पित्तोद्रिक्तस् तीक्ष्ण-तृष्णा-बुभुक्षः ।
गौरोष्णाङ्गस् ताम्र-हस्ताङ्घ्रि-वक्त्रः शूरो मानी पिङ्ग-केशो ऽल्प-रोमा ॥ ९० ॥

३.९०bv पित्तोद्रिक्तस् तीव्र-तृष्णा-बुभुक्षः दयित-माल्य-विलेपन-मण्डनः सु-चरितः शुचिर् आश्रित-वत्सलः ।
विभव-साहस-बुद्धि-बलान्वितो भवति भीषु गतिर् द्विषताम् अपि ॥ ९१ ॥

मेधावी प्र-शिथिल-संधि-बन्ध-मांसो नारीणाम् अन्-अभिमतो ऽल्प-शुक्र-कामः ।
आवासः पलित-तरङ्ग-नीलिकानां भुङ्क्ते ऽन्नं मधुर-कषाय-तिक्त-शीतम् ॥ ९२ ॥

घर्म-द्वेषी स्वेदनः पूति-गन्धिर् भूर्य्-उच्चार-क्रोध-पानाशनेर्ष्यः ।
सुप्तः पश्येत् कर्णिकारान् पलाशान् दिग्-दाहोल्का-विद्युद्-अर्कानलांश् च ॥ ९३ ॥

तनूनि पिङ्गानि चलानि चैषां तन्व्-अल्प-पक्ष्माणि हिम-प्रियाणि ।
क्रोधेन मद्येन रवेश् च भासा रागं व्रजन्त्य् आशु विलोचनानि ॥ ९४ ॥

३.९४av तनूनि पिङ्गानि चलानि वैषां मध्यायुषो मध्य-बलाः पिण्डिताः क्लेश-भीरवः ।
व्याघ्रर्क्ष-कपि-मार्जार-यक्षानूकाश् च पैत्तिकाः ॥ ९५ ॥

३.९५dv -वृकानूकाश् च पैत्तिकाः श्लेष्मा सोमः श्लेष्मलस् तेन सौम्यो गूढ-स्निग्ध-श्लिष्ट-संध्य्-अस्थि-मांसः ।
क्षुत्-तृड्-दुःख-क्लेश-घर्मैर् अ-तप्तो बुद्ध्या युक्तः सात्त्विकः सत्य-संधः ॥ ९६ ॥

प्रियङ्गु-दूर्वा-शर-काण्ड-शस्त्र- गो-रोचना-पद्म-सुवर्ण-वर्णः ।
प्रलम्ब-बाहुः पृथु-पीन-वक्षा महा-ललाटो घन-नील-केशः ॥ ९७ ॥

मृद्व्-अङ्गः सम-सु-विभक्त-चारु-देहो बह्व्-ओजो-रति-रस-शुक्र-पुत्र-भृत्यः ।
धर्मात्मा वदति न निष्ठुरं च जातु प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ ९८ ॥
३.९८av मृद्व्-अङ्गः सम-सु-विभक्त-चारु-वर्ष्मा स-मद-द्वि-रदेन्द्र-तुल्य-यातो जल-दाम्भो-धि-मृदङ्ग-सिंह-घोषः ।
स्मृति-मान् अभियोग-वान् विनीतो न च बाल्ये ऽप्य् अति-रोदनो न लोलः ॥ ९९ ॥

३.९९bv जल-दाम्भो-धि-मृदङ्ग-शङ्ख-घोषः तिक्तं कषायं कटुकोष्ण-रूक्षम् अल्पं स भुङ्क्ते बल-वांस् तथापि ।
रक्तान्त-सु-स्निग्ध-विशाल-दीर्घ- सु-व्यक्त-शुक्लासित-पक्ष्मलाक्षः ॥ १०० ॥

अल्प-व्याहार-क्रोध-पानाशनेहः प्राज्यायुर्-वित्तो दीर्घ-दर्शी वदान्यः ।
श्राद्धो गम्भीरः स्थूल-लक्षः क्षमा-वान् आर्यो निद्रालुर् दीर्घ-सूत्रः कृत-ज्ञः ॥ १०१ ॥
३.१०१av अल्प-व्याहार-क्रोध-पानाशनेर्ष्यः ३.१०१bv प्राज्यायुर्-वृत्तो दीर्घ-दर्शी वदान्यः ३.१०१cv श्राद्धो गम्भीरः स्थूल-लक्ष्यः क्षमा-वान् ३.१०१dv आर्यो निद्रालुर् दीर्घ-सूत्री कृत-ज्ञः ऋजुर् विपश्चित् सु-भगः सु-लज्जो भक्तो गुरूणां स्थिर-सौहृदश् च ।
स्वप्ने स-पद्मान् स-विहङ्ग-मालांस् तोयाशयान् पश्यति तोय-दांश् च ॥ १०२ ॥

३.१०२av ऋजुर् विपश्चित् सु-भगः स-लज्जो ब्रह्म-रुद्रेन्द्र-वरुण-तार्क्ष्य-हंस-गजाधिपैः ।
श्लेष्म-प्रकृतयस् तुल्यास् तथा सिंहाश्व-गो-वृषैः ॥ १०३ ॥

प्रकृतीर् द्वय-सर्वोत्था द्वन्द्व-सर्व-गुणोदये ।
शौचास्तिक्यादिभिश् चैवं गुणैर् गुण-मयीर् वदेत् ॥ १०४ ॥

वयस् त्व् आ-षो-डशाद् बालं तत्र धात्व्-इन्द्रियौजसाम् ।
वृद्धिर् आ-सप्ततेर् मध्यं तत्रा-वृद्धिः परं क्षयः ॥ १०५ ॥

स्वं स्वं हस्त-त्रयं सार्धं वपुः पात्रं सुखायुषोः ।
न च यद् युक्तम् उद्रिक्तैर् अष्टाभिर् निन्दितैर् निजैः ॥ १०६ ॥

अ-रोमशासित-स्थूल-दीर्घ-त्वैः स-विपर्ययैः ।
सु-स्निग्धा मृदवः सूक्ष्मा नैक-मूलाः स्थिराः कचाः ॥ १०७ ॥

ललाटम् उन्नतं श्लिष्ट-शङ्खम् अर्धेन्दु-संनिभम् ।
कर्णौ नीचोन्नतौ पश्चान् महान्तौ श्लिष्ट-मांसलौ ॥ १०८ ॥

नेत्रे व्यक्तासित-सिते सु-बद्ध-घन-पक्ष्मणी ।
उन्नताग्रा महोच्छ्वासा पीनर्जुर् नासिका समा ॥ १०९ ॥

३.१०९bv सु-बद्धे घन-पक्ष्मणी ओष्ठौ रक्ताव् अन्-उद्वृत्तौ महत्यौ नोल्बणे हनू ।
महद् आस्यं घना दन्ताः स्निग्धाः श्लक्ष्णाः सिताः समाः ॥ ११० ॥

जिह्वा रक्तायता तन्वी मांसलं चिबुकं महत् ।
ग्रीवा ह्रस्वा घना वृत्ता स्कन्धाव् उन्नत-पीवरौ ॥ १११ ॥

उदरं दक्षिणावर्त-गूढ-नाभि समुन्नतम् ।
तनु-रक्तोन्नत-नखं स्निग्धं आ-ताम्र-मांसलम् ॥ ११२ ॥

दीर्घा-च्छिद्राङ्गुलि महत् पाणि-पादं प्रतिष्ठितम् ।
गूढ-वंशं बृहत् पृष्ठं निगूढाः संधयो दृढाः ॥ ११३ ॥

३.११३cv गूढ-वंशं महत् पृष्ठं धीरः स्वरो ऽनुनादी च वर्णः स्निग्धः स्थिर-प्रभः ।
स्व-भाव-जं स्थिरं सत्-त्वम् अ-विकारि विपत्स्व् अपि ॥ ११४ ॥

उत्तरोत्तर-सु-क्षेत्रं वपुर् गर्भादि-नी-रुजम् ।
आयाम-ज्ञान-विज्ञानैर् वर्धमानं शनैः शुभम् ॥ ११५ ॥

इति सर्व-गुणोपेते शरीरे शरदां शतम् ।
आयुर् ऐश्वर्यम् इष्टाश् च सर्वे भावाः प्रतिष्ठिताः ॥ ११६ ॥

त्वग्-रक्तादीनि सत्-त्वान्तान्य् अग्र्याण्य् अष्टौ यथोत्तरम् ।
बल-प्रमाण-ज्ञानार्थं साराण्य् उक्तानि देहिनाम् ॥ ११७ ॥

३.११७bv अग्राण्य् अष्टौ यथोत्तरम् सारैर् उपेतः सर्वैः स्यात् परं गौरव-संयुतः ।
सर्वारम्भेषु चाशा-वान् सहिष्णुः सन्-मतिः स्थिरः ॥ ११८ ॥

३.११८dv सहिष्णुः सु-मतिः स्थिरः अन्-उत्सेकं अ-दैन्यं च सुखं दुःखं च सेवते ।
सत्-त्व-वांस् तप्यमानस् तु राजसो नैव तामसः ॥ ११९ ॥

३.११९cv सत्-त्व-वान् स्तभ्यमानस् तु दान-शील-दया-सत्य-ब्रह्म-चर्य-कृत-ज्ञ-ताः ।
रसायनानि मैत्री च पुण्यायुर्-वृद्धि-कृद् गणः ॥ १२० ॥

# अध्याय ४

सप्तोत्तरं मर्म-शतं तेषाम् एका-दशादिशेत् ।
पृथक् सक्थ्नोस् तथा बाह्वोस् त्रीणि कोष्ठे नवोरसि ॥ १ ॥

पृष्ठे चतुर्-दशोर्ध्वं तु जत्रोस् त्रिंशच् च सप्त च ।
मध्ये पाद-तलस्याहुर् अभितो मध्यमाङ्गुलीम् ॥ २ ॥

तल-हृन् नाम रुजया तत्र विद्धस्य पञ्च-ता ।
अङ्गुष्ठाङ्गुलि-मध्य-स्थं क्षिप्रं आक्षेप-मारणम् ॥ ३ ॥

तस्योर्ध्वं द्व्य्-अङ्गुले कूर्चः पाद-भ्रमण-कम्प-कृत् ।
गुल्फ-संधेर् अधः कूर्च-शिरः शोफ-रुजा-करम् ॥ ४ ॥

जङ्घा-चरणयोः संधौ गुल्फो रुक्-स्तम्भ-मान्द्य-कृत् ।
जङ्घान्तरे त्व् इन्द्र-वस्तिर् मारयत्य् असृजः क्षयात् ॥ ५ ॥

४.५bv गुल्फो रुक्-स्तम्भ-षाण्ढ्य-कृत् ४.५bv गुल्फो रुक्-स्तम्भ-खाञ्ज्य-कृत् ४.५bv गुल्फो रुक्-स्तम्भ-जाड्य-कृत् जङ्घोर्वोः संगमे जानु खञ्ज-ता तत्र जीवतः ।
जानुनस् त्र्य्-अङ्गुलाद् ऊर्ध्वम् आण्य्-ऊरु-स्तम्भ-शोफ-कृत् ॥ ६ ॥

उर्व्य् ऊरु-मध्ये तद्-वेधात् सक्थि-शोषो ऽस्र-संक्षयात् ।
ऊरु-मूले लोहिताक्षं हन्ति पक्षम् असृक्-क्षयात् ॥ ७ ॥

४.७cv ऊरु-मूले लोहिताख्यं मुष्क-वङ्क्षणयोर् मध्ये विटपं षण्ढ-ता-करम् ।
इति सक्थ्नोस् तथा बाह्वोर् मणि-बन्धो ऽत्र गुल्फ-वत् ॥ ८ ॥

४.८bv विटिपं षण्ढ-ता-करम् कूर्परं जानु-वत् कौण्यं तयोर् विटप-वत् पुनः ।
कक्षाक्ष-मध्ये कक्षा-धृक् कुणि-त्वं तत्र जायते ॥ ९ ॥

स्थूलान्त्र-बद्धः सद्यो-घ्नो विड्-वात-वमनो गुदः ।
मूत्राशयो धनुर्-वक्रो वस्तिर् अल्पास्र-मांस-गः ॥ १० ॥

एकाधो-वदनो मध्ये कट्याः सद्यो निहन्त्य् असून् ।
ऋते ऽश्मरी-व्रणाद् विद्धस् तत्राप्य् उभयतश् च सः ॥ ११ ॥

४.११dv तत्राप्य् उभयतश् च यः मूत्र-स्राव्य् एकतो भिन्ने व्रणो रोहेच् च यत्नतः ।
देहाम-पक्व-स्थानानां मध्ये सर्व-सिराश्रयः ॥ १२ ॥

नाभिः सो ऽपि हि सद्यो-घ्नो द्वारम् आमाशयस्य च ।
सत्-त्वादि-धाम हृदयं स्तनोरः-कोष्ठ-मध्य-गम् ॥ १३ ॥

स्तन-रोहित-मूलाख्ये द्व्य्-अङ्गुले स्तनयोर् वदेत् ।
ऊर्ध्वाधो ऽस्र-कफापूर्ण-कोष्ठो नश्येत् तयोः क्रमात् ॥ १४ ॥

४.१४cv ऊर्ध्वाधो ऽसृक्-कफापूर्ण- अपस्तम्भाव् उरः-पार्श्वे नाड्याव् अनिल-वाहिनी ।
रक्तेन पूर्ण-कोष्ठो ऽत्र श्वासात् कासाच् च नश्यति ॥ १५ ॥

४.१५cv रक्तस्य पूर्ण-कोष्ठो ऽत्र पृष्ठ-वंशोरसोर् मध्ये तयोर् एव च पार्श्वयोः ।
अधो ऽंस-कूटयोर् विद्याद् अपालापाख्य-मर्मणी ॥ १६ ॥

तयोः कोष्ठे ऽसृजा पूर्णे नश्येद् यातेन पूय-ताम् ।
पार्श्वयोः पृष्ठ-वंशस्य श्रोणि-कर्णौ प्रति स्थिते ॥ १७ ॥

४.१७dv श्रोणि-कर्ण-प्रतिष्ठिते ४.१७dv श्रोणि-कर्णौ प्रतिष्ठितौ वंशाश्रिते स्फिजोर् ऊर्ध्वं कटीक-तरुणे स्मृते ।
तत्र रक्त-क्षयात् पाण्डुर् हीन-रूपो विनश्यति ॥ १८ ॥

पृष्ठ-वंशं ह्य् उभयतो यौ संधी कटि-पार्श्वयोः ।
जघनस्य बहिर्-भागे मर्मणी तौ कुकुन्दरौ ॥ १९ ॥

४.१९av पृष्ठ-वंशस्योभयतो चेष्टा-हानिर् अधः-काये स्पर्शा-ज्ञानं च तद्-व्यधात् ।
पार्श्वान्तर-निबद्धौ याव् उपरि श्रोणि-कर्णयोः ॥ २० ॥

आशय-च्छादनौ तौ तु नितम्बौ तरुणास्थि-गौ ।
अधः-शरीरे शोफो ऽत्र दौर्बल्यं मरणं ततः ॥ २१ ॥

४.२१av आशयाच्छादनौ तौ तु पार्श्वान्तर-निबद्धौ च मध्ये जघन-पार्श्वयोः ।
तिर्यग् ऊर्ध्वं च निर्दिष्टौ पार्श्व-संधी तयोर् व्यधात् ॥ २२ ॥

४.२२bv मध्यौ जघन-पार्श्वयोः ४.२२cv निर्दिष्टौ पार्श्व-संधी तौ ४.२२dv तिर्यग् ऊर्ध्वं तयोर् व्यधात् रक्त-पूरित-कोष्ठस्य शरीरान्तर-संभवः ।
स्तन-मूलार्जवे भागे पृष्ठ-वंशाश्रये सिरे ॥ २३ ॥

बृहत्यौ तत्र विद्धस्य मरणं रक्त-संक्षयात् ।
बाहु-मूलाभिसंबद्धे पृष्ठ-वंशस्य पार्श्वयोः ॥ २४ ॥

अंसयोः फलके बाहु-स्वाप-शोषौ तयोर् व्यधात् ।
ग्रीवाम् उभयतः स्नाव्नी ग्रीवा-बाहु-शिरो-ऽन्तरे ॥ २५ ॥

४.२५bv -स्वाप-शोषौ तयोर् व्यधे ४.२५bv -स्वाप-शोफौ तयोर् व्यधे ४.२५bv -स्वाप-शोफौ तयोर् व्यधात् स्कन्धांस-पीठ-संबन्धाव् अंसौ बाहु-क्रिया-हरौ ।
कण्ठ-नालीम् उभयतः सिरा हनु-समाश्रिताः ॥ २६ ॥

४.२६av स्कन्धांस-पीठ-बद्धार्थाव् ४.२६av स्कन्धांस-पीठ-बन्धार्थाव् ४.२६av स्कन्धांस-पीठ-संबद्धाव् चतस्रस् तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ।
स्वर-प्रणाश-वैकृत्यं रसा-ज्ञानं च तद्-व्यधे ॥ २७ ॥

४.२७cv स्वर-प्रणाश-वैकृत्य- ४.२७cv स्वर-प्रणाशो वैकृत्यं ४.२७dv -रसा-ज्ञानं च तद्-व्यधे कण्ठ-नालीम् उभयतो जिह्वा-नासा-गताः सिराः ।
पृथक् चतस्रस् ताः सद्यो घ्नन्त्य् असून् मातृकाह्वयाः ॥ २८ ॥

कृकाटिके शिरो-ग्रीवा-संधौ तत्र चलं शिरः ।
अधस्-तात् कर्णयोर् निम्ने विधुरे श्रुति-हारिणी ॥ २९ ॥

४.२९bv -संधी तत्र चलं शिरः फणाव् उभयतो घ्राण-मार्गं श्रोत्र-पथानुगौ ।
अन्तर्-गल-स्थितौ वेधाद् गन्ध-विज्ञान-हारिणौ ॥ ३० ॥

नेत्रयोर् बाह्यतो ऽपाङ्गौ भ्रुवोः पुच्छान्तयोर् अधः ।
तथोपरि भ्रुवोर् निम्नाव् आवर्ताव् आन्ध्यम् एषु तु ॥ ३१ ॥

अनु-कर्णं ललाटान्ते शङ्खौ सद्यो-विनाशनौ ।
केशान्ते शङ्खयोर् ऊर्ध्वम् उत्क्षेपौ स्थपनि पुनः ॥ ३२ ॥

भ्रुवोर् मध्ये त्रये ऽप्य् अत्र शल्ये जीवेद् अन्-उद्धृते ।
स्वयं वा पतिते पाकात् सद्यो नश्यति तूद्धृते ॥ ३३ ॥

जिह्वाक्षि-नासिका-श्रोत्र-ख-चतुष्टय-संगमे ।
तालून्य् आस्यानि चत्वारि स्रोतसां तेषु मर्मसु ॥ ३४ ॥

विद्धः शृङ्गाटकाख्येषु सद्यस् त्यजति जीवितम् ।
कपाले संधयः पञ्च सीमन्तास् तिर्यग्-ऊर्ध्व-गाः ॥ ३५ ॥

४.३५cv कपाल-संधयः पञ्च भ्रमोन्माद-मनो-नाशैस् तेषु विद्धेषु नश्यति ।
आन्तरो मस्तकस्योर्ध्वं सिरा-संधि-समागमः ॥ ३६ ॥

४.३६cv अन्तरे मस्तकस्योर्ध्वं रोमावर्तो ऽधिपो नाम मर्म सद्यो हरत्य् असून् ।
विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् ॥ ३७ ॥

मांसास्थि-स्नायु-धमनी-सिरा-संधि-समागमः ।
स्यान् मर्मेति च तेनात्र सु-तरां जीवितं स्थितम् ॥ ३८ ॥

बाहुल्येन तु निर्देशः षो-ढैवं मर्म-कल्पना ।
प्राणायतन-सामान्याद् ऐक्यं वा मर्मणां मतम् ॥ ३९ ॥

४.३९dv ऐक्यं वा मर्मणां स्मृतम् मांस-जानि दशेन्द्राख्य-तल-हृत्-स्तन-रोहिताः ।
शङ्खौ कटीक-तरुणे नितम्बाव् अंसयोः फले ॥ ४० ॥

अस्थ्न्य् अष्टौ स्नाव-मर्माणि त्रयो-विंशतिर् आणयः ।
कूर्च-कूर्च-शिरो-ऽपाङ्ग-क्षिप्रोत्क्षेपांस-वस्तयः ॥ ४१ ॥

४.४१av अस्थ्न्य् अष्टौ स्नायु-मर्माणि गुदापस्तम्भ-विधुर-शृङ्गाटानि नवादिशेत् ।
मर्माणि धमनी-स्थानि सप्त-त्रिंशत् सिराश्रयाः ॥ ४२ ॥

४.४२av गुदो ऽपस्तम्भ-विधुर- बृहत्यौ मातृका नीले मन्ये कक्षा-धरौ फणौ ।
विटपे हृदयं नाभिः पार्श्व-संधी स्तनाधरे ॥ ४३ ॥

४.४३dv पार्श्व-संधी स्तनान्तरे अपालापौ स्थपन्य् उर्व्यश् चतस्रो लोहितानि च ।
संधौ विंशतिर् आवर्तौ मणि-बन्धौ कुकुन्दरौ ॥ ४४ ॥

सीमन्ताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पतिः ।
मांस-मर्म गुदो ऽन्येषां स्नाव्नि कक्षा-धरौ तथा ॥ ४५ ॥

४.४५dv स्नाव्नी कक्षा-धरौ तथा विटपौ विधुराख्ये च शृङ्गाटानि सिरासु तु ।
अपस्तम्भाव् अपाङ्गौ च धमनी-स्थं न तैः स्मृतम् ॥ ४६ ॥

विद्धे ऽजस्रम् असृक्-स्रावो मांस-धावन-वत् तनुः ।
पाण्डु-त्वम् इन्द्रिया-ज्ञानं मरणम् चाशु मांस-जे ॥ ४७ ॥

४.४७dv मरणम् वाशु मांस-जे मज्जान्वितो ऽच्छो विच्छिन्नः स्रावो रुक् चास्थि-मर्मणि ।
आयामाक्षेपक-स्तम्भाः स्नाव-जे ऽभ्यधिकं रुजा ॥ ४८ ॥

४.४८dv स्नाव-जे ऽभ्यधिकं रुजः ४.४८dv स्नाव-जे ऽभ्यधिका रुजः ४.४८dv स्नायु-गे ऽभ्यधिकं रुजा यान-स्थानासना-शक्तिर् वैकल्यम् अथ वान्तकः ।
रक्तं स-शब्द-फेनोष्णं धमनी-स्थे वि-चेतसः ॥ ४९ ॥

सिरा-मर्म-व्यधे सान्द्रम् अजस्रं बहव् असृक् स्रवेत् ।
तत्-क्षयात् तृड्-भ्रम-श्वास-मोह-हिध्माभिर् अन्तकः ॥ ५० ॥

वस्तु शूकैर् इवाकीर्णं रूढे च कुणि-खञ्ज-ता ।
बल-चेष्टा-क्षयः शोषः पर्व-शोफश् च संधि-जे ॥ ५१ ॥

नाभि-शङ्खाधिपापान-हृच्-छृङ्गाटक-वस्तयः ।
अष्टौ च मातृकाः सद्यो निघ्नन्त्य् एकान्-न-विंशतिः ॥ ५२ ॥

४.५२dv निघ्नन्त्य् एकोन-विंशतिः सप्ताहः परमस् तेषां कालः कालस्य कर्षणे ।
त्रयस्-त्रिंशद्-अपस्तम्भ-तल-हृत्-पार्श्व-संधयः ॥ ५३ ॥

४.५३av सप्ताहः परमं तेषां कटी-तरुण-सीमन्त-स्तन-मूलेन्द्र-वस्तयः ।
क्षिप्रापालाप-बृहती-नितम्ब-स्तन-रोहिताः ॥ ५४ ॥

कालान्तर-प्राण-हरा मास-मासार्ध-जीविताः ।
उत्क्षेपौ स्थपनी त्रीणि वि-शल्य-घ्नानि तत्र हि ॥ ५५ ॥

४.५५dv वि-शल्य-घ्नानि तत्र तु वायुर् मांस-वसा-मज्ज-मस्तुलुङ्गानि शोषयेत् ।
शल्यापाये विनिर्गच्छन् श्वासात् कासाच् च हन्त्य् असून् ॥ ५६ ॥

फणाव् अपाङ्गौ विधुरे नीले मन्ये कृकाटिके ।
अंसांस-फलकावर्त-विटपोर्वी-कुकुन्दराः ॥ ५७ ॥

४.५७av फणाव् अपाङ्गौ विधुरौ स-जानु-लोहिताक्षाणि-कक्षा-धृक्-कूर्च-कूर्पराः ।
वैकल्यम् इति चत्वारि चत्वारिंशच् च कुर्वते ॥ ५८ ॥

४.५८av स-जानु-लोहिताख्यानि- हरन्ति तान्य् अपि प्राणान् कदा-चिद् अभिघाततः ।
अष्टौ कूर्च-शिरो-गुल्फ-मणि-बन्धा रुजा-कराः ॥ ५९ ॥

तेषां विटप-कक्षा-धृग्-उर्व्यः कूर्च-शिरांसि च ।
द्वा-दशाङ्गुल-मानानि द्व्य्-अङ्गुले मणि-बन्धने ॥ ६० ॥

४.६०bv -उर्वी-कूर्च-शिरांसि च गुल्फौ च स्तन-मूले च त्र्य्-अङ्गुलं जानु-कूर्परम् ।
अपान-वस्ति-हृन्-नाभि-नीलाः सीमन्त-मातृकाः ॥ ६१ ॥

४.६१bv त्र्य्-अङ्गुलौ जानु-कूर्परौ ४.६१dv -नीला-सीमन्त-मातृकाः कूर्च-शृङ्गाट-मन्याश् च त्रिंशद् एकेन वर्जिताः ।
आत्म-पाणि-तलोन्मानाः शेषाण्य् अर्धाङ्गुलं वदेत् ॥ ६२ ॥

पञ्चाशत् षट् च मर्माणि तिल-व्रीहि-समान्य् अपि ।
इष्टानि मर्माण्य् अन्येषां चतुर्-धोक्ताः सिरास् तु याः ॥ ६३ ॥

तर्पयन्ति वपुः कृत्स्नं ता मर्माण्य् आश्रितास् ततः ।
तत्-क्षतात् क्षत-जात्य्-अर्थ-प्रवृत्तेर् धातु-संक्षये ॥ ६४ ॥

४.६४cv तत्-क्षतात् क्षत-जात्य्-अर्थं ४.६४dv प्रवृत्तिर् धातु-संक्षये वृद्धश् चलो रुजस् तीव्राः प्रतनोति समीरयन् ।
तेजस् तद् उद्धृतं धत्ते तृष्णा-शोष-मद-भ्रमान् ॥ ६५ ॥

स्विन्न-स्रस्त-श्लथ-तनुं हरत्य् एनं ततो ऽन्तकः ।
वर्धयेत् संधितो गात्रं मर्मण्य् अभिहते द्रुतम् ॥ ६६ ॥

छेदनात् संधि-देशस्य संकुचन्ति सिरा ह्य् अतः ।
जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥

सु-विक्षतो ऽप्य् अतो जीवेद् अ-मर्मणि न मर्मणि ।
प्राण-घातिनि जीवेत् तु कश्-चिद् वैद्य-गुणेन चेत् ॥ ६८ ॥

अ-समग्राभिघाताच् च सो ऽपि वैकल्यम् अश्नुते ।
तस्मात् क्षार-विषाग्न्य्-आदीन् यत्नान् मर्मसु वर्जयेत् ॥ ६९ ॥

मर्माभिघातः स्व्-अल्पो ऽपि प्राय-शो बाधते-तराम् ।
रोगा मर्माश्रयास् तद्-वत् प्रक्रान्ता यत्नतो ऽपि च ॥ ७० ॥

४.७०cv रोगा मर्माश्रितास् तद्-वत्

# अध्याय 05

पुष्पं फलस्य धूमो ऽग्नेर् वर्षस्य जल-दोदयः ।
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस् तथा ध्रुवम् ॥ १ ॥

आयुष्-मति क्रियाः सर्वाः स-फलाः संप्रयोजिताः ।
भवन्ति भिषजां भूत्यै कृत-ज्ञ इव भू-भुजि ॥ १+(१) ॥
क्षीणायुषि कृतं कर्म व्यर्थं कृतम् इवाधमे ।
अ-यशो देह-संदेहं स्वार्थ-हानिं च यच्छति ॥ १+(२) ॥
५.१+(२)च्व् आयासाद् देह-संदेहं तर्हीदानीं गतासूनां लक्षणं संप्रचक्षते ।
विकृतिः प्रकृतेः प्राज्ञैः प्रदिष्टा रिष्ट-संज्ञया ॥ १+(३) ॥
५.१+(३)अव् तद् इदानीं गतासूनां अरिष्टं नास्ति मरणं दृष्ट-रिष्टं च जीवितम् ।
अरिष्टे रिष्ट-विज्ञानं न च रिष्टे ऽप्य् अ-नैपुणात् ॥ २ ॥

के-चित् तु तद् द्वि-धेत्य् आहुः स्थाय्य्-अ-स्थायि-विभेदतः ।
दोषाणाम् अपि बाहुल्याद् रिष्टाभासः समुद्भवेत् ॥ ३ ॥

स दोषाणां शमे शाम्येत् स्थाय्य् अवश्यं तु मृत्यवे ।
रूपेन्द्रिय-स्वर-च्छाया-प्रतिच्छाया-क्रियादिषु ॥ ४ ॥

५.४av तद् दोषाणां शमे शाम्येत् अन्येष्व् अपि च भावेषु प्राकृतेष्व् अ-निमित्ततः ।
विकृतिर् या समासेन रिष्टं तद् इति लक्षयेत् ॥ ५ ॥

केश-रोम-निर्-अभ्यङ्गं यस्याभ्यक्तम् इवेक्ष्यते ।
यस्यात्य्-अर्थं चले नेत्रे स्तब्धान्तर्-गत-निर्गते ॥ ६ ॥

जिह्मे विस्तृत-संक्षिप्ते संक्षिप्त-विनत-भ्रुणी ।
उद्भ्रान्त-दर्शने हीन-दर्शने नकुलोपमे ॥ ७ ॥

कपोताभे अलाताभे स्रुते लुलित-पक्ष्मणी ।
नासिकात्य्-अर्थ-विवृता संवृता पिटिकाचिता ॥ ८ ॥

उच्छूना स्फुटिता म्लाना यस्यौष्ठो यात्य् अधो ऽधरः ।
ऊर्ध्वं द्वितीयः स्यातां वा पक्व-जम्बू-निभाव् उभौ ॥ ९ ॥

दन्ताः स-शर्कराः श्यावास् ताम्राः पुष्पित-पङ्किताः ।
सहसैव पतेयुर् वा जिह्वा जिह्मा विसर्पिणी ॥ १० ॥

शूना शुष्का गुरुः श्यावा लिप्ता सुप्ता स-कण्टका ।
शिरः शिरो-धरा वोढुं पृष्ठं वा भारम् आत्मनः ॥ ११ ॥

हनू वा पिण्डम् आस्य-स्थं शक्नुवन्ति न यस्य च ।
यस्या-निमित्तम् अङ्गानि गुरूण्य् अति-लघूनि वा ॥ १२ ॥

विष-दोषाद् विना यस्य खेभ्यो रक्तं प्रवर्तते ।
उत्सिक्तं मेहनं यस्य वृषणाव् अति-निःसृतौ ॥ १३ ॥

अतो ऽन्य-था वा यस्य स्यात् सर्वे ते काल-चोदिताः ।
यस्या-पूर्वाः सिरा-लेखा बालेन्द्व्-आकृतयो ऽपि वा ॥ १४ ॥

५.१४bv सर्वे ते काल-नोदिताः ललाटे वस्ति-शीर्षे वा षण् मासान् न स जीवति ।
पद्मिनी-पत्त्र-वत् तोयं शरीरे यस्य देहिनः ॥ १५ ॥

प्लवते प्लवमानस्य षण् मासास् तस्य जीवितम् ।
हरिताभाः सिरा यस्य रोम-कूपाश् च संवृताः ॥ १६ ॥

५.१६bv षण्-मासं तस्य जीवितम् ५.१६bv षण्-मासात् तस्य जीवितम् ५.१६bv षण् मासांस् तस्य जीवितम् सो ऽम्लाभिलाषी पुरुषः पित्तान् मरणम् अश्नुते ।
यस्य गो-मय-चूर्णाभं चूर्णं मूर्ध्नि मुखे ऽपि वा ॥ १७ ॥

स-स्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम् ।
मूर्ध्नि भ्रुवोर् वा कुर्वन्ति सीमन्तावर्तका नवाः ॥ १८ ॥

५.१८cv मूर्ध्नि भ्रुवोर् वा यस्य स्युः मृत्युं स्वस्थस्य षड्-रात्रात् त्रि-रात्राद् आतुरस्य तु ।
जिह्वा श्यावा मुखं पूति सव्यम् अक्षि निमज्जति ॥ १९ ॥

५.१९bv त्रि-रात्राद् आतुरस्य च खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्य् उरो भृशम् ॥ २० ॥

आर्द्रेषु सर्व-गात्रेषु सो ऽर्ध-मासं न जीवति ।
अ-कस्माद् युग-पद् गात्रे वर्णौ प्राकृत-वैकृतौ ॥ २१ ॥

तथैवोपचय-ग्लानि-रौक्ष्य-स्नेहादि मृत्यवे ।
यस्य स्फुटेयुर् अङ्गुल्यो नाकृष्टा न स जीवति ॥ २२ ॥

क्षव-कासादिषु तथा यस्या-पूर्वो ध्वनिर् भवेत् ।
ह्रस्वो दीर्घो ऽति वोच्छ्वासः पूतिः सुरभिर् एव वा ॥ २३ ॥

आप्लुतान्-आप्लुते काये यस्य गन्धो ऽति-मानुषः ।
मल-वस्त्र-व्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥

५.२४cv मल-वस्त्र-व्रणाद्ये वा भजन्ते ऽत्य्-अङ्ग-सौरस्याद् यं यूका-मक्षिकादयः ।
त्यजन्ति वाति-वैरस्यात् सो ऽपि वर्षं न जीवति ॥ २५ ॥

सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशम् औष्ण्यं वा स्वेदः स्तम्भो ऽप्य् अ-हेतुकः ॥ २६ ॥

५.२६dv स्वेदः स्तम्भो ऽत्य् अ-हेतुकः यो जात-शीत-पिटिकः शीताङ्गो वा विदह्यते ।
उष्ण-द्वेषी च शितार्तः स प्रेताधिप-गो-चरः ॥ २७ ॥

५.२७bv शीताङ्गो वातिदह्यते ५.२७bv शीताङ्गो वापि दह्यते उरस्य् ऊष्मा भवेद् यस्य जठरे चाति-शीत-ता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस् तथैव सः ॥ २८ ॥

५.२८bv जठरे वाति-शीत-ता मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाप्सु निमज्जति ।
निष्ठ्यूतं बहु-वर्णं वा यस्य मासात् स नश्यति ॥ २९ ॥

घनी-भूतम् इवाकाशम् आकाशम् इव यो घनम् ।
अ-मूर्तम् इव मूर्तं च मूर्तं चा-मूर्त-वत् स्थितम् ॥ ३० ॥

तेजस्व्य् अ-तेजस् तद्-वच् च शुक्लं कृष्णम् अ-सच् च सत् ।
अ-नेत्र-रोगश् चन्द्रं च बहु-रूपम् अ-लाञ्छनम् ॥ ३१ ॥

५.३१av तेजस्य् अ-तेजस् तद्-वच् च ५.३१cv अ-नेत्र-रोगी चन्द्रं च जाग्रद् रक्षांसि गन्धर्वान् प्रेतान् अन्यांश् च तद्-विधान् ।
रूपं व्य्-आकृति तत् तच् च यः पश्यति स नश्यति ॥ ३२ ॥

५.३२cv रूपं व्य्-आकृति तद्-वच् च सप्तर्षीणां समीप-स्थां यो न पश्यत्य् अरुन्धतीम् ।
ध्रुवम् आकाश-गङ्गां वा स न पश्यति तां समाम् ॥ ३३ ॥

मेघ-तोयौघ-निर्घोष-वीणा-पणव-वेणु-जान् ।
शृणोत्य् अन्यांश् च यः शब्दान् अ-सतो न सतो ऽपि वा ॥ ३४ ॥

निष्पीड्य कर्णौ शृणुयान् न यो धुकधुका-स्वनम् ।
तद्-वद् गन्ध-रस-स्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥

५.३५bv न यो धुकधुक-स्वनम् सर्व-शो वा न यो यश् च दीप-गन्धं न जिघ्रति ।
विधिना यस्य दोषाय स्वास्थ्याया-विधिना रसाः ॥ ३६ ॥

यः पांसुनेव कीर्णाङ्गो यो ऽङ्गे घातं न वेत्ति वा ।
अन्तरेण तपस् तीव्रं योगं वा विधि-पूर्वकम् ॥ ३७ ॥

५.३७av यो भस्मनेव कीर्णाङ्गो जानात्य् अतीन्द्रियं यश् च तेषां मरणम् आदिशेत् ।
हीनो दीनः स्वरो ऽ-व्यक्तो यस्य स्याद् गद्गदो ऽपि वा ॥ ३८ ॥

सहसा यो विमुह्येद् वा विवक्षुर् न स जीवति ।
स्वरस्य दुर्-बली-भावं हानिं च बल-वर्णयोः ॥ ३९ ॥

रोग-वृद्धिम् अ-युक्त्या च दृष्ट्वा मरणम् आदिशेत् ।
अप-स्वरं भाषमाणं प्राप्तं मरणम् आत्मनः ॥ ४० ॥

श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ।
संस्थानेन प्रमाणेन वर्णेन प्रभयापि वा ॥ ४१ ॥

५.४१av श्रोतारं तस्य शब्दस्य ५.४१av श्रोतारं वास्य शब्दस्य छाया विवर्तते यस्य स्वप्ने ऽपि प्रेत एव सः ।
आतपादर्श-तोयादौ या संस्थान-प्रमाणतः ॥ ४२ ॥

छायाङ्गात् संभवत्य् उक्ता प्रतिच्छायेति सा पुनः ।
वर्ण-प्रभाश्रया या तु सा छायैव शरीर-गा ॥ ४३ ॥

भवेद् यस्य प्रतिच्छाया छिन्ना भिन्नाधिकाकुला ।
वि-शिरा द्वि-शिरा जिह्मा विकृता यदि वान्य-था ॥ ४४ ॥

तं समाप्तायुषं विद्यान् न चेल् लक्ष्य-निमित्त-जा ।
प्रतिच्छाया-मयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥ ४५ ॥

खादीनां पञ्च पञ्चानां छाया विविध-लक्षणाः ।
नाभसी निर्-मला-नीला स-स्नेहा स-प्रभेव च ॥ ४६ ॥

वाताद् रजो-ऽरुणा श्यावा भस्म-रूक्षा हत-प्रभा ।
विशुद्ध-रक्ता त्व् आग्नेयी दीप्ताभा दर्शन-प्रिया ॥ ४७ ॥

शुद्ध-वैडूर्य-वि-मला सु-स्निग्धा तोय-जा सुखा ।
स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥ ४८ ॥

५.४८bv सु-स्निग्धा तोय-जा हि सा वायवी रोग-मरण-क्लेशायान्याः सुखोदयाः ।
प्रभोक्ता तैजसी सर्वा सा तु सप्त-विधा स्मृता ॥ ४९ ॥

५.४९av वायव्या रोग-मरण- रक्ता पीता सिता श्यावा हरिता पाण्डुरासिता ।
तासां याः स्युर् विकासिन्यः स्निग्धाश् च वि-मलाश् च याः ॥ ५० ॥

५.५०av रक्ता पीता सिता श्यामा ताः शुभा मलिना रूक्षाः संक्षिप्ताश् चा-शुभोदयाः ।
वर्णम् आक्रामति च्छाया प्रभा वर्ण-प्रकाशिनी ॥ ५१ ॥

५.५१bv संक्षिप्ताश् चा-सुखोदयाः ५.५१dv प्रभा वर्ण-विकाशिनी आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ।
ना-च्छायो ना-प्रभः कश्-चिद् विशेषाश् चिह्नयन्ति तु ॥ ५२ ॥

नृणां शुभा-शुभोत्पत्तिं काले छाया-समाश्रयाः ।
निकषन्न् इव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥

५.५३bv काले छाया-समाश्रिताः हीयते बलतः शश्वद् यो ऽन्नम् अश्नन् हितं बहु ।
यो ऽल्पाशी बहु-विण्-मूत्रो बह्व्-आशी चाल्प-मूत्र-विट् ॥ ५४ ॥

५.५४dv बह्व्-आशी वाल्प-मूत्र-विट् यो वाल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते ।
दीर्घम् उच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति ॥ ५५ ॥

ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।
शिरो विक्षिपते कृच्छ्राद् यो ऽञ्चयित्वा प्रपाणिकौ ॥ ५६ ॥

यो ललाटात् स्रुत-स्वेदः श्लथ-संधान-बन्धनः ।
उत्थाप्यमानः संमुह्येद् यो बली दुर्-बलो ऽपि वा ॥ ५७ ॥

उत्तान एव स्वपिति यः पादौ विकरोति च ।
शयनासन-कुड्यादेर् यो ऽ-सद् एव जिघृक्षति ॥ ५८ ॥

५.५८cv शयनासन-कुड्यादौ ५.५८dv यः सदैव जिघृक्षति अ-हास्य-हासी संमुह्यन् यो लेढि दशन-च्छदौ ।
उत्तरौष्ठं परिलिहन् फूत्-कारांश् च करोति यः ॥ ५९ ॥

५.५९dv नोत्कारांश् च करोति यः यम् अभिद्रवति च्छाया कृष्णा पीतारुणापि वा ।
भिषग्-भेषज-पानान्न-गुरु-मित्र-द्विषश् च ये ॥ ६० ॥

५.६०bv कृष्णा पीतारुणापि च वश-गाः सर्व एवैते विज्ञेयाः सम-वर्तिनः ।
ग्रीवा-ललाट-हृदयं यस्य स्विद्यति शीतलम् ॥ ६१ ॥

उष्णो ऽपरः प्रदेशश् च शरणं तस्य देवताः ।
यो ऽणु-ज्योतिर् अनेकाग्रो दुश्-छायो दुर्-मनाः सदा ॥ ६२ ॥

पूर्व-रूपाणि सर्वाणि ज्वरादिष्व् अति-मात्रया ।
यं विशन्ति विशत्य् एनं मृत्युर् ज्वर-पुरः-सरः ॥ ६२.१+(१) ॥
बलिं बलि-भृतो यस्य प्रणीतं नोपभुञ्जते ।
निर्-निमित्तं च यो मेधां शोभाम् उपचयं श्रियम् ॥ ६३ ॥

५.६३av बलिं बलि-भुजो यस्य प्राप्नोत्य् अतो वा विभ्रंशं स प्राप्नोति यम-क्षयम् ।
गुण-दोष-मयी यस्य स्वस्थस्य व्याधितस्य वा ॥ ६४ ॥

५.६४cv गुणा-गुण-मयी यस्य यात्य् अन्य-था-त्वं प्रकृतिः षण् मासान् न स जीवति ।
भक्तिः शीलं स्मृतिस् त्यागो बुद्धिर् बलम् अ-हेतुकम् ॥ ६५ ॥

षड् एतानि निवर्तन्ते षड्भिर् मासैर् मरिष्यतः ।
मत्त-वद्-गति-वाक्-कम्प-मोहा मासान् मरिष्यतः ॥ ६६ ॥

नश्यत्य् अ-जानन् षड्-अहात् केश-लुञ्चन-वेदनाम् ।
न याति यस्य चाहारः कण्ठं कण्ठामयाद् ऋते ॥ ६७ ॥

प्रेष्याः प्रतीप-तां यान्ति प्रेताकृतिर् उदीर्यते ।
यस्य निद्रा भवेन् नित्या नैव वा न स जीवति ॥ ६८ ॥

५.६८cv यस्य निद्रा भवेन् नित्यं वक्त्रम् आपूर्यते ऽश्रूणां स्विद्यतश् चरणौ भृशम् ।
चक्षुश् चाकुल-तां याति यम-राज्यं गमिष्यतः ॥ ६९ ॥

५.६९dv यम-राष्ट्रं गमिष्यतः यैः पुरा रमते भावैर् अ-रतिस् तैर् न जीवति ।
सहसा जायते यस्य विकारः सर्व-लक्षणः ॥ ७० ॥

निवर्तते वा सहसा सहसा स विनश्यति ।
ज्वरो निहन्ति बल-वान् गम्भीरो दैर्घरात्रिकः ॥ ७१ ॥

स-प्रलाप-भ्रम-श्वासः क्षीणं शूनं हतानलम् ।
अ-क्षामं सक्त-वचनं रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥

स-शुष्क-कासः पूर्वाह्णे यो ऽपराह्णे ऽपि वा भवेत् ।
बल-मांस-विहीनस्य श्लेष्म-कास-समन्वितः ॥ ७३ ॥

५.७३av संशुष्क-कासः पूर्वाह्णे रक्त-पित्तं भृशं रक्तं कृष्णम् इन्द्र-धनुष्-प्रभम् ।
ताम्र-हारिद्र-हरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥

रोम-कूप-प्रविसृतं कण्ठास्य-हृदये सजत् ।
वाससो ऽ-रञ्जनं पूति वेग-वच् चाति भूरि च ॥ ७५ ॥

५.७५cv वाससो रञ्जनं पूति वृद्धं पाण्डु-ज्वर-च्छर्दि-कास-शोफातिसारिणम् ।
कास-श्वासौ ज्वर-च्छर्दि-तृष्णातीसार-शोफिनम् ॥ ७६ ॥

यक्ष्मा पार्श्व-रुजानाह-रक्त-च्छर्द्य्-अंस-तापिनम् ।
छर्दिर् वेग-वती मूत्र-शकृद्-गन्धिः स-चन्द्रिका ॥ ७७ ॥

५.७७bv -रक्त-च्छर्द्य्-अङ्ग-तापिनम् सास्र-विट्-पूय-रुक्-कास-श्वास-वत्य् अनुषङ्गिणी ।
तृष्णान्य-रोग-क्षपितं बहिर्-जिह्वं वि-चेतनम् ॥ ७८ ॥

५.७८dv बहिर्-जिह्वम् अ-चेतनम् ५.७८dv बहिर्-जिह्वं वि-चेतसम् मदात्ययो ऽति-शीतार्तं क्षीणं तैल-प्रभाननम् ।
अर्शांसि पाणि-पन्-नाभि-गुद-मुष्कास्य-शोफिनम् ॥ ७९ ॥

५.७९dv -गुद-मुष्कादि-शोफिनम् हृत्-पार्श्वाङ्ग-रुजा-छर्दि-पायु-पाक-ज्वरातुरम् ।
अतीसारो यकृत्-पिण्ड-मांस-धावन-मेचकैः ॥ ८० ॥

तुल्यस् तैल-घृत-क्षीर-दधि-मज्ज-वसासवैः ।
मस्तुलुङ्ग-मषी-पूय-वेसवाराम्बु-माक्षिकैः ॥ ८१ ॥

अति-रक्तासित-स्निग्ध-पूत्य्-अच्छ-घन-वेदनः ।
कर्बुरः प्रस्रवन् धातून् निष्-पुरीषो ऽथ-वाति-विट् ॥ ८२ ॥

तन्तु-मान् मक्षिकाक्रान्तो राजी-मांश् चन्द्रकैर् युतः ।
शीर्ण-पायु-वलिं मुक्त-नालं पर्वास्थि-शूलिनम् ॥ ८३ ॥

५.८३dv -तालं पर्वास्थि-शूलिनम् ५.८३dv -ताडं पर्वास्थि-शूलिनम् स्रस्त-पायुं बल-क्षीणम् अन्नम् एवोपवेशयन् ।
स-तृट्-श्वास-ज्वर-च्छर्दि-दाहानाह-प्रवाहिकः ॥ ८४ ॥

५.८४bv अन्नम् एवोपवेशयेत् अश्मरी शून-वृषणं बद्ध-मूत्रं रुजार्दितम् ।
मेहस् तृड्-दाह-पिटिका-मांस-कोथातिसारिणम् ॥ ८५ ॥

पिटिका मर्म-हृत्-पृष्ठ-स्तनांस-गुद-मूर्ध-गाः ।
पर्व-पाद-कर-स्था वा मन्दोत्साहं प्रमेहिणम् ॥ ८६ ॥

५.८६bv -स्तनांस-गुद-मूर्ध-जाः ५.८६cv पर्व-पाद-कर-स्थाश् च सर्वं च मांस-संकोथ-दाह-तृष्णा-मद-ज्वरैः ।
विसर्प-मर्म-संरोध-हिध्मा-श्वास-भ्रम-क्लमैः ॥ ८७ ॥

५.८७av सर्वं च मांस-संकोच- गुल्मः पृथु-परीणाहो घनः कूर्म इवोन्नतः ।
सिरा-नद्धो ज्वर-च्छर्दि-हिध्माध्मान-रुजान्वितः ॥ ८८ ॥

कास-पीनस-हृल्-लास-श्वासातीसार-शोफ-वान् ।
विण्-मूत्र-संग्रह-श्वास-शोफ-हिध्मा-ज्वर-भ्रमैः ॥ ८९ ॥

मूर्छा-छर्द्य्-अतिसारैश् च जठरं हन्ति दुर्-बलम् ।
शूनाक्षं कुटिलोपस्थम् उपक्लिन्न-तनु-त्वचम् ॥ ९० ॥

विरेचन-हतानाहम् आनह्यन्तं पुनः पुनः ।
पाण्डु-रोगः श्वयथु-मान् पीताक्षि-नख-दर्शनम् ॥ ९१ ॥

५.९१av विरेचन-हतानाहम् तन्द्रा-दाहा-रुचि-च्छर्दि-मूर्छाध्मानातिसार-वान् ।
अनेकोपद्रव-युतः पादाभ्यां प्रसृतो नरम् ॥ ९२ ॥

नारीं शोफो मुखाद् धन्ति कुक्षि-गुह्याद् उभाव् अपि ।
राजी-चितः स्रवंश् छर्दि-ज्वर-श्वासातिसारिणम् ॥ ९३ ॥

ज्वरातीसारौ शोफान्ते श्वयथुर् वा तयोः क्षये ।
दुर्-बलस्य विशेषेण जायन्ते ऽन्ताय देहिनः ॥ ९४ ॥

श्वयथुर् यस्य पाद-स्थः परिस्रस्ते च पिण्डिके ।
सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ ९५ ॥

आननं हस्त-पादं च विशेषाद् यस्य शुष्यतः ।
शूयेते वा विना देहात् स मासाद् याति पञ्च-ताम् ॥ ९६ ॥

५.९६bv विशेषाद् यस्य शुष्यति विसर्पः कास-वैवर्ण्य-ज्वर-मूर्छाङ्ग-भङ्ग-वान् ।
भ्रमास्य-शोफ-हृल्-लास-देह-सादातिसार-वान् ॥ ९७ ॥

५.९७cv भ्रमास्य-शोष-हृल्-लास- कुष्ठं विशीर्यमाणाङ्गं रक्त-नेत्रं हत-स्वरम् ।
मन्दाग्निं जन्तुभिर् जुष्टं हन्ति तृष्णातिसारिणम् ॥ ९८ ॥

वायुः सुप्त-त्वचं भुग्नं कम्प-शोफ-रुजातुरम् ।
वातास्रं मोह-मूर्छाय-मदा-स्वप्न-ज्वरान्वितम् ॥ ९९ ॥

५.९९av वायुः सुप्त-त्वचं भग्नं शिरो-ग्रहा-रुचि-श्वास-संकोच-स्फोट-कोथ-वत् ।
शिरो-रोगा-रुचि-श्वास-मोह-विड्-भेद-तृड्-भ्रमैः ॥ १०० ॥

घ्नन्ति सर्वामयाः क्षीण-स्वर-धातु-बलानलम् ।
वात-व्याधिर् अपस्मारी कुष्ठी रक्त्य् उदरी क्षयी ॥ १०१ ॥

गुल्मी मेही च तान् क्षीणान् विकारे ऽल्पे ऽपि वर्जयेत् ।
बल-मांस-क्षयस् तीव्रो रोग-वृद्धिर् अ-रोचकः ॥ १०२ ॥

यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान् न स जीवति ।
वाताष्ठीलाति-संवृद्धा तिष्ठन्ति दारुणा हृदि ॥ १०३ ॥

तृष्णयानुपरीतस्य सद्यो मुष्णाति जीवितम् ।
शैथिल्यं पिण्डिके वायुर् नीत्वा नासां च जिह्म-ताम् ॥ १०४ ॥

५.१०४av तृष्णया तु परीतस्य क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम् ।
नाभि-गुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन् ॥ १०५ ॥

५.१०५av क्षीणस्यायस्य मन्ये वा गृहीत्वा पायु-हृदये क्षीण-देहस्य वा बली ।
मलान् वस्ति-शिरो नाभिं विबध्य जनयन् रुजम् ॥ १०६ ॥

कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्न-पुरीष-ताम् ।
श्वासं वा जनयन् वायुर् गृहीत्वा गुद-वङ्क्षणम् ॥ १०७ ॥

५.१०७dv गृहीत्वा गुद-वङ्क्षणौ वितत्य पर्शुकाग्राणि गृहीत्वोरश् च मारुतः ।
स्तिमितस्यातताक्षस्य सद्यो मुष्णाति जीवितम् ॥ १०८ ॥

५.१०८av वितत्य पार्श्वकाग्राणि सहसा ज्वर-संतापस् तृष्णा मूर्छा बल-क्षयः ।
विश्लेषणं च संधीनां मुमूर्षोर् उपजायते ॥ १०९ ॥

गो-सर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम् ।
लेप-ज्वरोपतप्तस्य दुर्-लभं तस्य जीवितम् ॥ ११० ॥

प्रवाल-गुटिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पद्याशु विनश्यन्ति न चिरात् स विनश्यति ॥ १११ ॥

मसूर-विदल-प्रख्यास् तथा विद्रुम-संनिभाः ।
अन्तर्-वक्त्राः किणाभाश् च विस्फोटा देह-नाशनाः ॥ ११२ ॥

कामलाक्ष्णोर् मुखं पूर्णं शङ्खयोर् मुक्त-मांस-ता ।
संत्रासश् चोष्ण-ताङ्गे च यस्य तं परिवर्जयेत् ॥ ११३ ॥

अ-कस्माद् अनुधावच् च विघृष्टं त्वक्-समाश्रयम् ।
यो वात-जो न शूलाय स्यान् न दाहाय पित्त-जः ॥ ११४ ॥

चन्दनोशीर-मदिरा-कुणप-ध्वाङ्क्ष-गन्धयः ।
शैवाल-कुक्कुट-शिखा-कुङ्कुमाल-मषी-प्रभाः ॥ ११४.१+(१) ॥
५.११४.१+(१)द्व् -नक्तमाल-मषी-प्रभाः ५.११४.१+(१)द्व् -कुन्द-शालि-मय-प्रभाः अन्तर्-दाहा निर्-ऊष्मणः प्राण-नाश-करा व्रणाः ॥ ११४.१+(२)अब् ॥
कफ-जो न च पूयाय मर्म-जश् च रुजे न यः ।
अ-चूर्णश् चूर्ण-कीर्णाभो यत्राकस्माच् च दृश्यते ॥ ११५ ॥

रूपं शक्ति-ध्वजादीनां सर्वास् तान् वर्जयेद् व्रणान् ।
विण्-मूत्र-मारुत-वहं कृमिणं च भगन्दरम् ॥ ११६ ॥

घट्टयञ् जानुना जानु पादाव् उद्यम्य पातयन् ।
यो ऽपास्यति मुहुर् वक्त्रम् आतुरो न स जीवति ॥ ११७ ॥

दन्तैश् छिन्दन् नखाग्राणि तैश् च केशांस् तृणानि च ।
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥ ११८ ॥

५.११८bv तैश् च केशांस् तृणानि वा हृष्ट-रोमा सान्द्र-मूत्रः शुष्क-कासी ज्वरी च यः ।
मुहुर् हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ॥ ११९ ॥

५.११९dv शय्यां पादेन हन्ति च मुहुश् छिद्राणि विमृशन्न् आतुरो न स जीवति ।
मृत्यवे सहसार्तस्य तिलक-व्यङ्ग-विप्लवः ॥ १२० ॥

मुखे दन्त-नखे पुष्पं जठरे विविधाः सिराः ।
ऊर्ध्व-श्वासं गतोष्माणं शूलोपहत-वङ्क्षणम् ॥ १२१ ॥

शर्म चान्-अधिगच्छन्तं बुद्धि-मान् परिवर्जयेत् ।
विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ॥ १२२ ॥

५.१२२av शर्म वान्-अधिगच्छन्तं सहसा सहसा तस्य मृत्युर् हरति जीवितम् ।
यम् उद्दिश्यातुरं वैद्यः संपादयितुम् औषधम् ॥ १२३ ॥

यतमानो न शक्नोति दुर्-लभं तस्य जीवितम् ।
विज्ञातं बहु-शः सिद्धं विधि-वच् चावचारितम् ॥ १२४ ॥

न सिध्यत्य् औषधं यस्य नास्ति तस्य चिकित्सितम् ।
भवेद् यस्यौषधे ऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२५ ॥

अ-कस्माद् वर्ण-गन्धादेः स्वस्थो ऽपि न स जीवति ।
निवाते सेन्धनं यस्य ज्योतिश् चाप्य् उपशाम्यति ॥ १२६ ॥

आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अति-मात्रम् अमत्राणि दुर्-लभं तस्य जीवितम् ॥ १२७ ॥

यं नरं सहसा रोगो दुर्-बलं परिमुञ्चति ।
संशय-प्राप्तम् आत्रेयो जीवितं तस्य मन्यते ॥ १२८ ॥

५.१२८cv संशयं प्राप्तम् आत्रेयो कथयेन् न च पृष्टो ऽपि दुः-श्रवं मरणं भिषक् ।
गतासोर् बन्धु-मित्राणां न चेच्छेत् तं चिकित्सितुम् ॥ १२९ ॥

५.१२९av कथयेन् नैव पृष्टो ऽपि यम-दूत-पिशाचाद्यैर् यत् परासुर् उपास्यते ।
घ्नद्भिर् औषध-वीर्याणि तस्मात् तं परिवर्जयेत् ॥ १३० ॥

आयुर्-वेद-फलं कृत्स्नं यद् आयुर्-ज्ञे प्रतिष्ठितम् ।
रिष्ट-ज्ञानादृतस् तस्मात् सर्व-दैव भवेद् भिषक् ॥ १३१ ॥

मरणं प्राणिनां दृष्टम् आयुः-पुण्योभय-क्षयात् ।
तयोर् अप्य् अ-क्षयाद् दृष्टं विषमा-परिहारिणाम् ॥ १३२ ॥

# अध्याय ६

पाषण्डाश्रम-वर्णानां स-वर्णाः कर्म-सिद्धये ।
त एव विपरीताः स्युर् दूताः कर्म-विपत्तये ॥ १ ॥

दीनं भीतं द्रुतं त्रस्तं रूक्षा-मङ्गल-वादिनम् ।
शस्त्रिणं दण्डिनं षण्ढं मुण्ड-श्मश्रु-जटा-धरम् ॥ २ ॥

६.२cv शस्त्रिणं दण्डिनं खण्डं ६.२dv मुण्ड-श्मश्रुं जटा-धरम् ६.२dv मुण्डं श्मश्रु-जटा-धरम् अ-मङ्गलाह्वयं क्रूर-कर्माणं मलिनं स्त्रियम् ।
अनेकं व्याधितं व्यङ्गं रक्त-माल्यानुलेपनम् ॥ ३ ॥

तैल-पङ्काङ्कितं जीर्ण-वि-वर्णार्द्रैक-वाससम् ।
खरोष्ट्र-महिषारूढं काष्ठ-लोष्टादि-मर्दिनम् ॥ ४ ॥

६.४dv काष्ठ-लोहादि-मर्दिनम् नानुगच्छेद् भिषग् दूतम् आह्वयन्तं च दूरतः ।
अ-शस्त-चिन्ता-वचने नग्ने छिन्दति भिन्दति ॥ ५ ॥

जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्य् अपि ।
सुप्ते मुक्त-कचे ऽभ्यक्ते रुदत्य् अ-प्रयते तथा ॥ ६ ॥

६.६dv रुदत्य् अ-प्रयते ऽथ-वा वैद्ये दूता मनुष्याणाम् आगच्छन्ति मुमूर्षताम् ।
विकार-सामान्य-गुणे देशे काले ऽथ-वा भिषक् ॥ ७ ॥

दूतम् अभ्यागतं दृष्ट्वा नातुरं तम् उपाचरेत् ।
स्पृशन्तो नाभि-नासास्य-केश-रोम-नख-द्वि-जान् ॥ ८ ॥

६.८cv स्पृशन्तो नाभि-नासाक्षि- गुह्य-पृष्ठ-स्तन-ग्रीवा-जठरानामिकाङ्गुलीः ।
कार्पास-बुस-सीसास्थि-कपाल-मुसलोपलम् ॥ ९ ॥

६.९bv -जठरानामिकाङ्गुलि मार्जनी-शूर्प-चैलान्त-भस्माङ्गार-दशा-तुषान् ।
रज्जूपानत्-तुला-पाशम् अन्यद् वा भग्न-विच्युतम् ॥ १० ॥

६.१०dv अन्यद् वा भग्न-विद्युतम् तत्-पूर्व-दर्शने दूता व्याहरन्ति मरिष्यताम् ।
तथार्ध-रात्रे मध्याह्ने संध्ययोः पर्व-वासरे ॥ ११ ॥

षष्ठी-चतुर्थी-नवमी-राहु-केतूदयादिषु ।
भरणी-कृत्तिकाश्लेषा-पूर्वार्द्रा-पैत्र्य-नैरृते ॥ १२ ॥

यस्मिंश् च दूते ब्रुवति वाक्यम् आतुर-संश्रयम् ।
पश्येन् निमित्तम् अ-शुभं तं च नानुव्रजेद् भिषक् ॥ १३ ॥

तद् यथा विकलः प्रेतः प्रेतालङ्कार एव वा ।
छिन्नं दग्धं विनष्टं वा तद्-वादीनि वचांसि वा ॥ १४ ॥

६.१४bv प्रेतालङ्कार एव च रसो वा कटुकस् तीव्रो गन्धो वा कौणपो महान् ।
स्पर्शो वा विपुलः क्रूरो यद् वान्यद् अपि तादृशम् ॥ १५ ॥

६.१५cv स्पर्शो वा विपुल-क्रूरो तत् सर्वम् अभितो वाक्यं वाक्य-काले ऽथ-वा पुनः ।
दूतम् अभ्यागतं दृष्ट्वा नातुरं तम् उपाचरेत् ॥ १६ ॥

हाहा-क्रन्दितम् उत्क्रुष्टम् आक्रुष्टं स्खलनं क्षुतम् ।
वस्त्रातप-त्र-पाद-त्र-व्यसनं व्यसनीक्षणम् ॥ १७ ॥

चैत्य-ध्वजानां पात्राणां पूर्णानां च निमज्जनम् ।
हतान्-इष्ट-प्रवादाश् च दूषणं भस्म-पांसुभिः ॥ १८ ॥

पथश् छेदो ऽहि-मार्जार-गोधा-सरट-वानरैः ।
दीप्तां प्रति दिशं वाचः क्रूराणां मृग-पक्षिणाम् ॥ १९ ॥

कृष्ण-धान्य-गुडोदश्विल्-लवणासव-चर्मणाम् ।
सर्षपाणां वसा-तैल-तृण-पङ्केन्धनस्य च ॥ २० ॥

क्लीब-क्रूर-श्व-पाकानां जाल-वागुरयोर् अपि ।
छर्दितस्य पुरीषस्य पूति-दुर्-दर्शनस्य च ॥ २१ ॥

निः-सारस्य व्यवायस्य कार्पासादेर् अरेर् अपि ।
शयनासन-यानानाम् उत्तानानां तु दर्शनम् ॥ २२ ॥

६.२२dv उत्तानानां च दर्शनम् न्युब्जानाम् इतरेषां च पात्रादीनाम् अ-शोभनम् ।
पुं-संज्ञाः पक्षिणो वामाः स्त्री-संज्ञा दक्षिणाः शुभाः ॥ २३ ॥

प्रदक्षिणं खग-मृगा यान्तो नैवं श्व-जम्बुकाः ।
अ-युग्माश् च मृगाः शस्ताः शस्ता नित्यं च दर्शने ॥ २४ ॥

चाष-भास-भरद्वाज-नकुल-च्छाग-बर्हिणः ।
अ-शुभं सर्व-थोलूक-बिडाल-सरटेक्षणम् ॥ २५ ॥

प्रशस्ताः कीर्तने कोल-गोधाहि-शश-जाहकाः ।
न दर्शने न विरुते वानरर्क्षाव् अतो ऽन्य-था ॥ २६ ॥

धनुर् ऐन्द्रं च लालाटम् अ-शुभं शुभम् अन्यतः ।
अग्नि-पूर्णानि पात्राणि भिन्नानि वि-शिखानि च ॥ २७ ॥

दध्य्-अ-क्षतादि निर्गच्छद् वक्ष्यमाणं च मङ्गलम् ।
वैद्यो मरिष्यतां वेश्म प्रविशन्न् एव पश्यति ॥ २८ ॥

दूताद्य् अ-साधु दृष्ट्वैवं त्यजेद् आर्तम् अतो ऽन्य-था ।
करुणा-शुद्ध-संतानो यत्नतस् तम् उपाचरेत् ॥ २९ ॥

६.२९dv यत्नतः समुपाचरेत् दध्य्-अ-क्षतेक्षु-निष्पाव-प्रियङ्गु-मधु-सर्पिषाम् ।
यावकाञ्जन-भृङ्गार-घण्टा-दीप-सरो-रुहाम् ॥ ३० ॥

दूर्वार्द्र-मत्स्य-मांसानां लाजानां फल-भक्षयोः ।
रत्नेभ-पूर्ण-कुम्भानां कन्यायाः स्यन्दनस्य च ॥ ३१ ॥

नरस्य वर्धमानस्य देवतानां नृपस्य च ।
शुक्लानां सु-मनो-वाल-चामराम्बर-वाजिनाम् ॥ ३२ ॥

शङ्ख-साधु-द्वि-जोष्णीष-तोरण-स्वस्तिकस्य च ।
भूमेः समुद्धतायाश् च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥

मनो-ज्ञस्यान्न-पानस्य पूर्णस्य शकटस्य च ।
नृभिर् धेन्वाः स-वत्साया वडबायाः स्त्रिया अपि ॥ ३४ ॥

जीवञ्जीवक-सारङ्ग-सारस-प्रियवादिनाम् ।
हंसानां शतपत्त्राणां बद्धस्यैक-पशोस् तथा ॥ ३५ ॥

रुचकादर्श-सिद्धार्थ-रोचनानां च दर्शनम् ।
गन्धः सु-सुरभिर् वर्णः सु-शुक्लो मधुरो रसः ॥ ३६ ॥

गो-पतेर् अनुकूलस्य स्वनस् तद्-वद् गवाम् अपि ।
मृग-पक्षि-नराणां च शोभिनां शोभना गिरः ॥ ३७ ॥

६.३७av गो-पतेर् अनुलोमस्य छत्त्र-ध्वज-पताकानाम् उत्क्षेपणम् अभिष्टुतिः ।
भेरी-मृदङ्ग-शङ्खानां शब्दाः पुण्याह-निःस्वनाः ॥ ३८ ॥

वेदाध्ययन-शब्दाश् च सुखो वायुः प्रदक्षिणः ।
पथि वेश्म-प्रवेशे च विद्याद् आरोग्य-लक्षणम् ॥ ३९ ॥

इत्य् उक्तं दूत-शकुनं स्वप्नान् ऊर्ध्वं प्रचक्षते ।
स्वप्ने मद्यं सह प्रेतैर् यः पिबन् कृष्यते शुना ॥ ४० ॥

६.४०bv स्वप्नान् ऊर्ध्वं प्रचक्ष्यते ६.४०bv स्वप्नान् ऊर्ध्वं प्रवक्ष्यते स मर्त्यो मृत्युना शीघ्रं ज्वर-रूपेण नीयते ।
रक्त-माल्य-वपुर्-वस्त्रो यो हसन् ह्रियते स्त्रिया ॥ ४१ ॥

६.४१av स मर्त्यो मृत्युना तूर्णं सो ऽस्र-पित्तेन महिष-श्व-वराहोष्ट्र-गर्दभैः ।
यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ॥ ४२ ॥

लता कण्टकिनी वंशस् तालो वा हृदि जायते ।
यस्य तस्याशु गुल्मेन यस्य वह्निम् अन्-अर्चिषम् ॥ ४३ ॥

जुह्वतो घृत-सिक्तस्य नग्नस्योरसि जायते ।
पद्मं स नश्येत् कुष्ठेन चण्डालैः सह यः पिबेत् ॥ ४४ ॥

स्नेहं बहु-विधं स्वप्ने स प्रमेहेण नश्यति ।
उन्मादेन जले मज्जेद् यो नृत्यन् राक्षसैः सह ॥ ४५ ॥

अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ।
यानं खरोष्ट्र-मार्जार-कपि-शार्दूल-शूकरैः ॥ ४६ ॥

यस्य प्रेतैः शृगालैर् वा स मृत्योर् वर्तते मुखे ।
अपूप-शष्कुलीर् जग्ध्वा विबुद्धस् तद्-विधं वमन् ॥ ४७ ॥

न जीवत्य् अक्षि-रोगाय सूर्येन्दु-ग्रहणेक्षणम् ।
सूर्या-चन्द्रमसोः पात-दर्शनं दृग्-विनाशनम् ॥ ४८ ॥

मूर्ध्नि वंश-लतादीनां संभवो वयसां तथा ।
निलयो मुण्ड-ता काक-गृध्राद्यैः परिवारणम् ॥ ४९ ॥

तथा प्रेत-पिशाच-स्त्री-द्रविडान्ध्र-गवाशनैः ।
सङ्गो वेत्र-लता-वंश-तृण-कण्टक-संकटे ॥ ५० ॥

श्वभ्र-श्मशान-शयनं पतनं पांसु-भस्मनोः ।
मज्जनं जल-पङ्कादौ शीघ्रेण स्रोतसा हृतिः ॥ ५१ ॥

नृत्य-वादित्र-गीतानि रक्त-स्रग्-वस्त्र-धारणम् ।
वयो-ऽङ्ग-वृद्धिर् अभ्यङ्गो विवाहः श्मश्रु-कर्म च ॥ ५२ ॥

पक्वान्न-स्नेह-मद्याशः प्रच्छर्दन-विरेचने ।
हिरण्य-लोहयोर् लाभः कलिर् बन्ध-पराजयौ ॥ ५३ ॥

६.५३bv प्रच्छर्दन-विरेचनम् उपानद्-युग-नाशश् च प्रपातः पाद-चर्मणोः ।
हर्षो भृशं प्रकुपितैः पितृभिश् चावभर्त्सनम् ॥ ५४ ॥

प्रदीप-ग्रह-नक्षत्र-दन्त-दैवत-चक्षुषाम् ।
पतनं वा विनाशो वा भेदनं पर्वतस्य च ॥ ५५ ॥

६.५५dv भेदनं पर्वतस्य वा कानने रक्त-कुसुमे पाप-कर्म-निवेशने ।
चितान्ध-कार-संबाधे जनन्यां च प्रवेशनम् ॥ ५६ ॥

६.५६च्च् चिन्तान्ध-कार-संबाधे पातः प्रासाद-शैलादेर् मत्स्येन ग्रसनं तथा ।
काषायिणाम् अ-सौम्यानां नग्नानां दण्ड-धारिणाम् ॥ ५७ ॥

रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ।
कृष्णा पापाननाचारा दीर्घ-केश-नख-स्तनी ॥ ५८ ॥

वि-राग-माल्य-वसना स्वप्ने काल-निशा मता ।
मनो-वहानां पूर्ण-त्वात् स्रोतसां प्रबलैर् मलैः ॥ ५९ ॥

दृश्यन्ते दारुणाः स्वप्ना रोगी यैर् याति पञ्च-ताम् ।
अ-रोगः संशयं प्राप्य कश्-चिद् एव विमुच्यते ॥ ६० ॥

दृष्टः श्रुतो ऽनुभूतश् च प्रार्थितः कल्पितस् तथा ।
भाविको दोष-जश् चेति स्वप्नः सप्त-विधो मतः ॥ ६१ ॥

६.६१dv स्वप्नः सप्त-विधः स्मृतः तेष्व् आद्या निष्-फलाः पञ्च यथा-स्व-प्रकृतिर् दिवा ।
विस्मृतो दीर्घ-ह्रस्वो ऽति पूर्व-रात्रे चिरात् फलम् ॥ ६२ ॥

६.६२bv यथा-स्वं प्रकृतिर् दिवा ६.६२cv विस्मृतो दीर्घ-ह्रस्वो ऽपि ६.६२cv विस्मृतो दीर्घ-ह्रस्वो वा दृष्टः करोति तुच्छं च गो-सर्गे तद्-अहर् महत् ।
निद्रया वान्-उपहतः प्रतीपैर् वचनैस् तथा ॥ ६३ ॥

६.६३av दृष्टः करोति तुच्छं वा ६.६३cv निद्रया चान्-उपहतः याति पापो ऽल्प-फल-तां दान-होम-जपादिभिः ।
अ-कल्याणम् अपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ॥ ६४ ॥

६.६४av याति पापो ऽप्य् अ-फल-तां पश्येत् सौम्यं शुभं तस्य शुभम् एव फलं भवेत् ।
देवान् द्वि-जान् गो-वृषभान् जीवतः सुहृदो नृपान् ॥ ६५ ॥

साधून् यशस्विनो वह्निम् इद्धं स्वच्छान् जलाशयान् ।
कन्याः कुमारकान् गौरान् शुक्ल-वस्त्रान् सु-तेजसः ॥ ६६ ॥

६.६६cv कन्यां कुमारकान् गौरान् नराशनं दीप्त-तनुं समन्ताद् रुधिरोक्षितम् ।
यः पश्येल् लभते यो वा छत्त्रादर्श-विषामिषम् ॥ ६७ ॥

६.६७av नराशनं दीप्त-तनुः ६.६७bv समन्ताद् रुधिरोक्षितः शुक्लाः सु-मनसो वस्त्रम् अ-मेध्यालेपनं फलम् ।
शैल-प्रासाद-स-फल-वृक्ष-सिंह-नर-द्वि-पान् ॥ ६८ ॥

आरोहेद् गो-ऽश्व-यानं च तरेन् नद-ह्रदोद-धीन् ।
पूर्वोत्तरेण गमनम् अ-गम्यागमनं मृतम् ॥ ६९ ॥

६.६९bv तरेन् नद-महोद-धीन् संबाधान् निःसृतिर् देवैः पितृभिश् चाभिनन्दनम् ।
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥ ७० ॥

६.७०av संकटान् निःसृतिर् देवैः ६.७०dv द्विषतां चापमर्दनम् यस्य स्याद् आयुर् आरोग्यं वित्तं बहु च सो ऽश्नुते ।
मङ्गलाचार-संपन्नः परिवारस् तथातुरः ॥ ७१ ॥

६.७१bv वित्तं स बहु-शो ऽश्नुते श्रद्-दधानो ऽनुकूलश् च प्रभूत-द्रव्य-संग्रहः ।
सत्-त्व-लक्षण-संयोगो भक्तिर् वैद्य-द्वि-जातिषु ॥ ७२ ॥

चिकित्सायाम् अ-निर्वेदस् तद् आरोग्यस्य लक्षणम् ।
इत्य् अत्र जन्म-मरणं यतः सम्यग् उदाहृतम् ॥ ७३ ॥

शरीरस्य ततः स्थानं शारीरम् इदम् उच्यते ॥ ७३अब् ॥

# अध्याय 01

रोगः पाप्मा ज्वरो व्याधिर् विकारो दुःखम् आमयः ।
यक्ष्मातङ्क-गदाबाधाः शब्दाः पर्याय-वाचिनः ॥ १ ॥

निदानं पूर्व-रूपाणि रूपाण्य् उपशयस् तथा ।
संप्राप्तिश् चेति विज्ञानं रोगाणां पञ्च-धा स्मृतम् ॥ २ ॥

निमित्त-हेत्व्-आयतन-प्रत्ययोत्थान-कारणैः ।
निदानम् आहुः पर्यायैः प्राग्-रूपं येन लक्ष्यते ॥ ३ ॥

उत्पित्सुर् आमयो दोष-विशेषेणान्-अधिष्ठितः ।
लिङ्गम् अ-व्यक्तम् अल्प-त्वाद् व्याधीनां तद् यथा-यथम् ॥ ४ ॥

तद् एव व्यक्त-तां यातं रूपम् इत्य् अभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नम् आकृतिः ॥ ५ ॥

हेतु-व्याधि-विपर्यस्त-विपर्यस्तार्थ-कारिणाम् ।
औषधान्न-विहाराणाम् उपयोगं सुखावहम् ॥ ६ ॥

विद्याद् उपशयं व्याधेः स हि सात्म्यम् इति स्मृतः ।
विपरीतो ऽन्-उपशयो व्याध्य्-अ-सात्म्याभिसंज्ञितः ॥ ७ ॥

यथा-दुष्टेन दोषेण यथा चानुविसर्पता ।
निर्वृत्तिर् आमयस्यासौ संप्राप्तिर् जातिर् आगतिः ॥ ८ ॥

संख्या-विकल्प-प्राधान्य-बल-काल-विशेषतः ।
सा भिद्यते यथात्रैव वक्ष्यन्ते ऽष्टौ ज्वरा इति ॥ ९ ॥

दोषाणां समवेतानां विकल्पो ऽंशांश-कल्पना ।
स्वातन्त्र्य-पारतन्त्र्याभ्यां व्याधेः प्राधान्यम् आदिशेत् ॥ १० ॥

हेत्व्-आदि-कात्स्न्र्यावयवैर् बला-बल-विशेषणम् ।
नक्तन्-दिनर्तु-भुक्तांशैर् व्याधि-कालो यथा-मलम् ॥ ११ ॥

इति प्रोक्तो निदानार्थस् तं व्यासेनोपदेक्ष्यति ।
सर्वेषाम् एव रोगाणां निदानं कुपिता मलाः ॥ १२ ॥

१.१२av इति प्रोक्तो निदानार्थः १.१२bv तं व्यासेनोपदेक्ष्यते १.१२bv तं व्यासेनोपदिश्यते १.१२bv स व्यासेनोपदेक्ष्यति १.१२bv स व्यासेनोपदेक्ष्यते १.१२bv स व्यासेनोपदिश्यते तत्-प्रकोपस्य तु प्रोक्तं विविधा-हित-सेवनम् ।
अ-हितं त्रि-विधो योगस् त्रयाणां प्राग् उदाहृतः ॥ १३ ॥

१.१३cv अ-हितस् त्रि-विधो योगस् तिक्तोषण-कषायाल्प-रूक्ष-प्रमित-भोजनैः ।
धारणोदीरण-निशा-जागरात्य्-उच्च-भाषणैः ॥ १४ ॥

क्रियाति-योग-भी-शोक-चिन्ता-व्यायाम-मैथुनैः ।
ग्रीष्माहो-रात्रि-भुक्तान्ते प्रकुप्यति समीरणः ॥ १५ ॥

पित्तं कट्व्-अम्ल-तीक्ष्णोष्ण-पटु-क्रोध-विदाहिभिः ।
शरन्-मध्याहन-रात्र्य्-अर्ध-विदाह-समयेषु च ॥ १६ ॥

१.१६dv -निदाघ-समयेषु च स्वाद्व्-अम्ल-लवण-स्निग्ध-गुर्व्-अभिष्यन्दि-शीतलैः ।
आस्या-स्वप्न-सुखा-जीर्ण-दिवा-स्वप्नाति-बृंहणैः ॥ १७ ॥

१.१७cv अति-स्वप्न-सुखा-जीर्ण- प्रच्छर्दनाद्य-योगेन भुक्त-मात्र-वसन्तयोः ।
पूर्वाह्णे पूर्व-रात्रे च श्लेष्मा द्वन्द्वं तु संकरात् ॥ १८ ॥

मिश्री-भावात् समस्तानां संनिपातस् तथा पुनः ।
संकीर्णा-जीर्ण-विषम-विरुद्धाध्यशनादिभिः ॥ १९ ॥

व्यापन्न-मद्य-पानीय-शुष्क-शाकाम-मूलकैः ।
पिण्याक-मृद्-यव-सुरा-पूति-शुष्क-कृशामिषैः ॥ २० ॥

दोष-त्रय-करैस् तैस् तैस् तथान्न-परिवर्तनात् ।
ऋतोर् दुष्टात् पुरो-वाताद् ग्रहावेशाद् विषाद् गरात् ॥ २१ ॥

१.२१bv तथान्न-परिवर्ततः १.२१bv तथान्न-परिवृत्तितः दुष्टान्नात् पर्वताश्लेषाद् ग्रहैर् जन्मर्क्ष-पीडनात् ।
मिथ्या-योगाच् च विविधात् पापानां च निषेवणात् ॥ २२ ॥

१.२२av दुष्टामात् पर्वताश्लेषाद् स्त्रीणां प्रसव-वैषम्यात् तथा मिथ्योपचारतः ।
प्रति-रोगम् इति क्रुद्धा रोगाधिष्ठान-गामिनीः ॥ २३ ॥

रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ २३अब् ॥

# अध्याय 02

ज्वरो रोग-पतिः पाप्मा मृत्युर् ओजो-ऽशनो ऽन्तकः ।
क्रोधो दक्षाध्वर-ध्वंसी रुद्रोर्ध्व-नयनोद्भवः ॥ १ ॥

२.१bv मृत्युस् तेजो-ऽशनो ऽन्तकः जन्मान्तयोर् मोह-मयः संतापात्मापचार-जः ।
विविधैर् नामभिः क्रूरो नाना-योनिषु वर्तते ॥ २ ॥

स जायते ऽष्ट-धा दोषैः पृथङ् मिश्रैः समागतैः ।
आगन्तुश् च मलास् तत्र स्वैः स्वैर् दुष्टाः प्रदूषणैः ॥ ३ ॥

आमाशयं प्रविश्यामम् अनुगम्य पिधाय च ।
स्रोतांसि पक्ति-स्थानाच् च निरस्य ज्वलनं बहिः ॥ ४ ॥

सह तेनाभिसर्पन्तस् तपन्तः सकलं वपुः ।
कुर्वन्तो गात्रम् अत्य्-उष्णं ज्वरं निर्वर्तयन्ति ते ॥ ५ ॥

२.५cv कुर्वन्तो गात्रम् आ-शुष्कं स्रोतो-विबन्धात् प्रायेण ततः स्वेदो न जायते ।
तस्य प्राग्-रूपम् आलस्यम् अ-रतिर् गात्र-गौरवम् ॥ ६ ॥

आस्य-वैरस्यम् अ-रुचि-जृम्भा सास्राकुलाक्षि-ता ।
अङ्ग-मर्दो ऽ-विपाको ऽल्प-प्राण-ता बहु-निद्र-ता ॥ ७ ॥

२.७bv -जृम्भा सास्राकुलाक्ष-ता रोम-हर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः ।
हितोपदेशेष्व् अ-क्षान्तिः प्रीतिर् अम्ल-पटूषणे ॥ ८ ॥

द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तृड् भृशम् ।
शब्दाग्नि-शीत-वाताम्बु-च्छायोष्णेष्व् अ-निमित्ततः ॥ ९ ॥

इच्छा द्वेषश् च तद् अनु ज्वरस्य व्यक्त-ता भवेत् ।
आगमापगम-क्षोभ-मृदु-ता-वेदनोष्मणाम् ॥ १० ॥

वैषम्यं तत्र तत्राङ्गे तास् ताः स्युर् वेदनाश् चलाः ।
पादयोः सुप्त-ता स्तम्भः पिण्डिकोद्वेष्टनं शमः ॥ ११ ॥

२.११dv पिण्डिकोद्वेष्टनं क्लमः विश्लेष इव संधीनां साद ऊर्वोः कटी-ग्रहः ।
पृष्ठं क्षोदम् इवाप्नोति निष्पीड्यत इवोदरम् ॥ १२ ॥

छिद्यन्त इव चास्थीनि पार्श्व-गानि विशेषतः ।
हृदयस्य ग्रहस् तोदः प्राजनेनेव वक्षसः ॥ १३ ॥

स्कन्धयोर् मथनं बाह्वोर् भेदः पीडनम् अंसयोः ।
अ-शक्तिर् भक्षणे हन्वोर् जृम्भणं कर्णयोः स्वनः ॥ १४ ॥

निस्तोदः शङ्खयोर् मूर्ध्नि वेदना वि-रसास्य-ता ।
कषायास्य-त्वम् अथ-वा मलानाम् अ-प्रवर्तनम् ॥ १५ ॥

रूक्षारुण-त्वग्-आस्याक्षि-नख-मूत्र-पुरीष-ता ।
प्रसेका-रोचका-श्रद्धा-विपाका-स्वेद-जागराः ॥ १६ ॥

कण्ठौष्ठ-शोषस् तृट् शुष्कौ छर्दि-कासौ विषादि-ता ।
हर्षो रोमाङ्ग-दन्तेषु वेपथुः क्षवथोर् ग्रहः ॥ १७ ॥

२.१७dv श्वयथुः क्षवथोर् ग्रहः भ्रमः प्रलापो घर्मेच्छा विनामश् चानिल-ज्वरे ।
युग-पद् व्याप्तिर् अङ्गानां प्रलापः कटु-वक्त्र-ता ॥ १८ ॥

नासास्य-पाकः शीतेच्छा भ्रमो मूर्छा मदो ऽ-रतिः ।
विट्-स्रंसः पित्त-वमनं रक्त-ष्ठीवनम् अम्लकः ॥ १९ ॥

रक्त-कोठोद्गमः पीत-हरित-त्वं त्वग्-आदिषु ।
स्वेदो निःश्वास-वैगन्ध्यम् अति-तृष्णा च पित्त-जे ॥ २० ॥

विशेषाद् अ-रुचिर् जाड्यं स्रोतो-रोधो ऽल्प-वेग-ता ।
प्रसेको मुख-माधुर्यं हृल्-लेप-श्वास-पीनसाः ॥ २१ ॥

हृल्-लासश् छर्दनं कासः स्तम्भः श्वैत्यं त्वग्-आदिषु ।
अङ्गेषु शीत-पिटिकास् तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥

काले यथा-स्वं सर्वेषां प्रवृत्तिर् वृद्धिर् एव वा ॥ २३अब् ॥
निदानोक्तान्-उपशयो विपरीतोपशायि-ता ॥ २३च्द् ॥
यथा-स्वं लिङ्ग-संसर्गे ज्वरः संसर्ग-जो ऽपि च ॥ २३एf ॥
शिरो-ऽर्ति-मूर्छा-वमि-दाह-मोह-कण्ठास्य-शोषा-रति-पर्व-भेदाः ।
उन्निद्र-ता-तृड्-भ्रम-रोम-हर्षा जृम्भाति-वाक्-त्वं च चलात् स-पित्तात् ॥ २४ ॥

ताप-हान्य्-अ-रुचि-पर्व-शिरो-रुक्-पीनस-श्वसन-कास-विबन्धाः ।
शीत-जाड्य-तिमिर-भ्रम-तन्द्राः श्लेष्म-वात-जनित-ज्वर-लिङ्गम् ॥ २५ ॥

शीत-स्तम्भ-स्वेद-दाहा-व्यवस्था तृष्णा-कास-श्लेष्म-पित्त-प्रवृत्तिः ।
मोहस् तन्द्रा लिप्त-तिक्तास्य-ता च ज्ञेयं रूपं श्लेष्म-पित्त-ज्वरस्य ॥ २६ ॥

२.२६bv तृष्णा कासः श्लेष्म-पित्त-प्रवृत्तिः सर्व-जो लक्षणैः सर्वैर् दाहो ऽत्र च मुहुर् मुहुः ।
तद्-वच् छीतं महा-निद्रा दिवा जागरणं निशि ॥ २७ ॥

सदा वा नैव वा निद्रा महा-स्वेदो ऽति नैव वा ।
गीत-नर्तन-हास्यादि-विकृतेहा-प्रवर्तनम् ॥ २८ ॥

२.२८bv महान् स्वेदो ऽति नैव वा साश्रुणी कलुषे रक्ते भुग्ने लुलित-पक्ष्मणी ।
अक्षिणी पिण्डिका-पार्श्व-मूर्ध-पर्वास्थि-रुग्-भ्रमः ॥ २९ ॥

स-स्वनौ स-रुजौ कर्णौ कण्ठः शूकैर् इवाचितः ।
परिदग्धा खरा जिह्वा गुरु-स्रस्ताङ्ग-संधि-ता ॥ ३० ॥

२.३०dv गुरुः स्रस्ताङ्ग-संधि-ता रक्त-पित्त-कफ-ष्ठीवो लोलनं शिरसो ऽति-रुक् ।
कोठानां श्याव-रक्तानां मण्डलानां च दर्शनम् ॥ ३१ ॥

२.३१bv लोलनं शिरसो ऽति-तृट् हृद्-व्यथा मल-संसङ्गः प्रवृत्तिर् वाल्प-शो ऽति वा ।
स्निग्धास्य-ता बल-भ्रंशः स्वर-सादः प्रलापि-ता ॥ ३२ ॥

२.३२av हृद्-व्यथा मल-संसर्गः दोष-पाकश् चिरात् तन्द्रा प्रततं कण्ठ-कूजनम् ।
संनिपातम् अभिन्यासं तं ब्रूयाच् च हृतौजसम् ॥ ३३ ॥

२.३३dv तं ब्रूयाच् च हतौजसम् वायुना कफ-रुद्धेन पित्तम् अन्तः प्रपीडितम् ।
व्यवायि-त्वाच् च सूक्ष्म-त्वाद् बहिर्-मार्गं प्रवर्तते ॥ ३३+१ ॥

तेन हारिद्र-नेत्र-त्वं संनिपातोद्भवे ज्वरे ॥ ३३+२अब् ॥
दोषे विबद्धे नष्टे ऽग्नौ सर्व-संपूर्ण-लक्षणः ।
अ-साध्यः सो ऽन्य-था कृच्छ्रो भवेद् वैकल्य-दो ऽपि वा ॥ ३४ ॥

अन्यच् च संनिपातोत्थो यत्र पित्तं पृथक् स्थितम् ।
त्वचि कोष्ठे ऽथ-वा दाहं विदधाति पुरो ऽनु वा ॥ ३५ ॥

२.३५av अन्यश् च संनिपातोत्थो तद्-वद् वात-कफौ शीतं दाहादिर् दुस्-तरस् तयोः ।
शीतादौ तत्र पित्तेन कफे स्यन्दित-शोषिते ॥ ३६ ॥

शीते शान्ते ऽम्लको मूर्छा मदस् तृष्णा च जायते ।
दाहादौ पुनर् अन्ते स्युस् तन्द्रा-ष्ठीव-वमि-क्लमाः ॥ ३७ ॥

आगन्तुर् अभिघाताभिषङ्ग-शापाभिचारतः ।
चतुर्-धात्र क्षत-च्छेद-दाहाद्यैर् अभिघात-जः ॥ ३८ ॥

श्रमाच् च तस्मिन् पवनः प्रायो रक्तं प्रदूषयन् ।
स-व्यथा-शोफ-वैवर्ण्यं स-रुजं कुरुते ज्वरम् ॥ ३९ ॥

ग्रहावेशौषधि-विष-क्रोध-भी-शोक-काम-जः ।
अभिषङ्गाद् ग्रहेणास्मिन्न् अ-कस्माद् धास-रोदने ॥ ४० ॥

ओषधि-गन्ध-जे मूर्छा शिरो-रुग् वमथुः क्षवः ।
विषान् मूर्छातिसारास्य-श्याव-ता-दाह-हृद्-गदाः ॥ ४१ ॥

२.४१bv शिरो-रुक् श्वयथुः क्षवः २.४१bv शिरो-रुग् वेपथुः क्षवः २.४१dv -श्याव-ता-दाह-हृद्-ग्रहाः क्रोधात् कम्पः शिरो-रुक् च प्रलापो भय-शोक-जे ।
कामाद् भ्रमो ऽ-रुचिर् दाहो ह्री-निद्रा-धी-धृति-क्षयः ॥ ४२ ॥

२.४२dv भी-निद्रा-धी-धृति-क्षयः ग्रहादौ संनिपातस्य भयादौ मरुतस् त्रये ।
कोपः कोपे ऽपि पित्तस्य यौ तु शापाभिचार-जौ ॥ ४३ ॥

२.४३cv कोपः कोपे तु पित्तस्य २.४३cv कोपः क्रोधे तु पित्तस्य संनिपात-ज्वरौ घोरौ ताव् अ-सह्य-तमौ मतौ ।
तत्राभिचारिकैर् मन्त्रैर् हूयमानस्य तप्यते ॥ ४४ ॥

२.४४bv ताव् अ-साध्य-तमौ मतौ पूर्वं चेतस् ततो देहस् ततो विस्फोट-तृड्-भ्रमैः ।
स-दाह-मूर्छैर् ग्रस्तस्य प्रत्य्-अहं वर्धते ज्वरः ॥ ४५ ॥

इति ज्वरो ऽष्ट-धा दृष्टः समासाद् विविधस् तु सः ।
शारीरो मानसः सौम्यस् तीक्ष्णो ऽन्तर्-बहिर्-आश्रयः ॥ ४६ ॥

प्राकृतो वैकृतः साध्यो ऽ-साध्यः सामो निर्-आमकः ।
पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ ४७ ॥

पवने योग-वाहि-त्वाच् छीतं श्लेष्म-युते भवेत् ।
दाहः पित्त-युते मिश्रं मिश्रे ऽन्तः-संश्रये पुनः ॥ ४८ ॥

ज्वरे ऽधिकं विकाराः स्युर् अन्तः क्षोभो मल-ग्रहः ।
बहिर् एव बहिर्-वेगे तापो ऽपि च सु-साध्य-ता ॥ ४९ ॥

वर्षा-शरद्-वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतो ऽन्यः स दुः-साध्यः प्रायश् च प्राकृतो ऽनिलात् ॥ ५० ॥

वर्षासु मारुतो दुष्टः पित्त-श्लेष्मान्वितो ज्वरम् ।
कुर्यात् पित्तं च शरदि तस्य चानु-बलं कफः ॥ ५१ ॥

२.५१dv तस्य चानु-बलः कफः तत्-प्रकृत्या विसर्गाच् च तत्र नान्-अशनाद् भयम् ।
कफो वसन्ते तम् अपि वात-पित्तं भवेद् अनु ॥ ५२ ॥

२.५२av तत्-प्रकृत्या विसर्गस्य बल-वत्स्व् अल्प-दोषेषु ज्वरः साध्यो ऽन्-उपद्रवः ।
सर्व-था विकृति-ज्ञाने प्राग् अ-साध्य उदाहृतः ॥ ५३ ॥

ज्वरोपद्रव-तीक्ष्ण-त्वम् अ-ग्लानिर् बहु-मूत्र-ता ।
न प्रवृत्तिर् न विड् जीर्णा न क्षुत् साम-ज्वराकृतिः ॥ ५४ ॥

ज्वर-वेगो ऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।
मल-प्रवृत्तिर् उत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५५ ॥

२.५५av ज्वर-वेगो ऽधिकस् तृष्णा जीर्ण-ताम-विपर्यासात् सप्त-रात्रं च लङ्घनात् ।
ज्वरः पञ्च-विधः प्रोक्तो मल-काल-बला-बलात् ॥ ५६ ॥

प्राय-शः संनिपातेन भूयसा तूपदिश्यते ।
संततः सततो ऽन्ये-द्युस् तृतीयक-चतुर्थकौ ॥ ५७ ॥

२.५७av प्रायः स संनिपातेन धातु-मूत्र-शकृद्-वाहि-स्रोतसां व्यापिनो मलाः ।
तापयन्तस् तनुं सर्वां तुल्य-दूष्यादि-वर्धिताः ॥ ५८ ॥

बलिनो गुरवः स्तब्धा विशेषेण रसाश्रिताः ।
संततं निष्-प्रति-द्वन्द्वा ज्वरं कुर्युः सु-दुः-सहम् ॥ ५९ ॥

मलं ज्वरोष्मा धातून् वा स शीघ्रं क्षपयेत् ततः ।
सर्वाकारं रसादीनां शुद्ध्या-शुद्ध्यापि वा क्रमात् ॥ ६० ॥

२.६०av मलाञ् ज्वरोष्मा धातून् वा वात-पित्त-कफैः सप्त दश द्वा-दश वासरान् ।
प्रायो ऽनुयाति मर्यादां मोक्षाय च वधाय च ॥ ६१ ॥

२.६१dv विमोक्षाय वधाय वा इत्य् अग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ।
द्वि-गुणा सप्तमी यावन् नवम्य् एका-दशी तथा ॥ ६२ ॥

एषा त्रि-दोष-मर्यादा मोक्षाय च वधाय च ।
शुद्ध्य्-अ-शुद्धौ ज्वरः कालं दीर्घम् अप्य् अनुवर्तते ॥ ६३ ॥

२.६३cv शुद्ध्य्-अ-शुद्ध्योर् ज्वरः कालं कृशानां व्याधि-मुक्तानां मिथ्याहारादि-सेविनाम् ।
अल्पो ऽपि दोषो दूष्यादेर् लब्ध्वान्य-तमतो बलम् ॥ ६४ ॥

स-विपक्षो ज्वरं कुर्याद् विषमं क्षय-वृद्धि-भाक् ।
दोषः प्रवर्तते तेषां स्वे काले ज्वरयन् बली ॥ ६५ ॥

२.६५dv स्व-काले ज्वरयन् बली निवर्तते पुनश् चैष प्रत्य्-अनीक-बला-बलः ।
क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्व् एव लीयते ॥ ६६ ॥

लीन-त्वात् कार्श्य-वैवर्ण्य-जाड्यादीन् आदधाति सः ।
आसन्न-विवृतास्य-त्वात् स्रोतसां रस-वाहिनाम् ॥ ६७ ॥

आशु सर्वस्य वपुषो व्याप्तिर् दोषेण जायते ।
संततः सततस् तेन विपरीतो विपर्ययात् ॥ ६८ ॥

विषमो विषमारम्भ-क्रिया-कालो ऽनुषङ्ग-वान् ।
दोषो रक्ताश्रयः प्रायः करोति सततं ज्वरम् ॥ ६९ ॥

अहो-रात्रस्य स द्विः स्यात् सकृद् अन्ये-द्युर् आश्रितः ।
तस्मिन् मांस-वहा नाडीर् मेदो-नाडीस् तृतीयके ॥ ७० ॥

२.७०cv अस्मिन् मांस-वहा नाडीर् ग्राही पित्तानिलान् मूर्ध्नस् त्रिकस्य कफ-पित्ततः ।
स-पृष्ठस्यानिल-कफात् स चैकाहान्तरः स्मृतः ॥ ७१ ॥

२.७१dv स वैकाहान्तरः स्मृतः चतुर्थको मले मेदो-मज्जास्थ्य्-अन्य-तम-स्थिते ।
मज्ज-स्थ एवेत्य् अपरे प्रभावं स तु दर्शयेत् ॥ ७२ ॥

द्वि-धा कफेन जङ्घाभ्यां स पूर्वं शिरसो ऽनिलात् ।
अस्थि-मज्जोभय-गते चतुर्थक-विपर्ययः ॥ ७३ ॥

२.७३dv चातुर्थिक-विपर्ययः त्रि-धा द्व्य्-अहं ज्वरयति दिनम् एकं तु मुञ्चति ।
बला-बलेन दोषाणाम् अन्न-चेष्टादि-जन्मना ॥ ७४ ॥

२.७४av त्र्य्-अहाद् द्व्य्-अहं ज्वरयति २.७४bv दिनम् एकं विमुञ्चति ज्वरः स्यान् मनसस् तद्-वत् कर्मणश् च तदा तदा ।
दोष-दूष्यर्त्व्-अहो-रात्र-प्रभृतीनां बलाज् ज्वरः ॥ ७५ ॥

मनसो विषयाणां च कालं तं तं प्रपद्यते ।
धातून् प्रक्षोभयन् दोषो मोक्ष-काले विलीयते ॥ ७६ ॥

ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते ।
वेपते प्रलपत्य् उष्णैः शीतैश् चाङ्गैर् हत-प्रभः ॥ ७७ ॥

वि-संज्ञो ज्वर-वेगार्तः स-क्रोध इव वीक्षते ।
स-दोष-शब्दं च शकृद् द्रवं सृजति वेग-वत् ॥ ७८ ॥

देहो लघुर् व्यपगत-क्लम-मोह-तापः पाको मुखे करण-सौष्ठवम् अ-व्यथ-त्वम् । स्वेदः क्षवः प्रकृति-योगि मनो ऽन्न-लिप्सा कण्डूश् च मूर्ध्नि विगत-ज्वर-लक्षणानि ॥
७९ ॥

# अध्याय 03

भृशोष्ण-तीक्ष्ण-कट्व्-अम्ल-लवणादि-विदाहिभिः ।
कोद्रवोद्दालकैश् चान्नैस् तद्-युक्तैर् अति-सेवितैः ॥ १ ॥

कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्छिते ।
ते मिथस् तुल्य-रूप-त्वम् आगम्य व्याप्नुतस् तनुम् ॥ २ ॥

पित्तं रक्तस्य विकृतेः संसर्गाद् दूषणाद् अपि ।
गन्ध-वर्णानुवृत्तेश् च रक्तेन व्यपदिश्यते ॥ ३ ॥

३.३av पित्तं रक्तस्य विकृतिः प्रभवत्य् असृजः स्थानात् प्लीहतो यकृतश् च तत् ।
शिरो-गुरु-त्वम् अ-रुचिः शीतेच्छा धूमको ऽम्लकः ॥ ४ ॥

छर्दिश् छर्दित-बैभत्स्यं कासः श्वासो भ्रमः क्लमः ।
लोह-लोहित-मत्स्याम-गन्धास्य-त्वं स्वर-क्षयः ॥ ५ ॥

रक्त-हारिद्र-हरित-वर्ण-ता नयनादिषु ।
नील-लोहित-पीतानां वर्णानाम् अ-विवेचनम् ॥ ६ ॥

स्वप्ने तद्-वर्ण-दर्शि-त्वं भवत्य् अस्मिन् भविष्यति ।
ऊर्ध्वं नासाक्षि-कर्णास्यैर् मेढ्र-योनि-गुदैर् अधः ॥ ७ ॥

कुपितं रोम-कूपैश् च समस्तैस् तत् प्रवर्तते ।
ऊर्ध्वं साध्यं कफाद् यस्मात् तद् विरेचन-साधनम् ॥ ८ ॥

बह्व्-औषधं च पित्तस्य विरेको हि वरौषधम् ।
अनुबन्धी कफो यश् च तत्र तस्यापि शुद्धि-कृत् ॥ ९ ॥

कषायाः स्वादवो ऽप्य् अस्य विशुद्ध-श्लेष्मणो हिताः ।
किम् उ तिक्ताः कषाया वा ये निसर्गात् कफापहाः ॥ १० ॥

अधो याप्यं चलाद् यस्मात् तत् प्रच्छर्दन-साधनम् ।
अल्पौषधं च पित्तस्य वमनं न वरौषधम् ॥ ११ ॥

अनुबन्धी चलो यश् च शान्तये ऽपि न तस्य तत् ।
कषायाश् च हितास् तस्य मधुरा एव केवलम् ॥ १२ ॥

कफ-मारुत-संसृष्टम् अ-साध्यम् उभयायनम् ।
अ-शक्य-प्रातिलोम्य-त्वाद् अ-भावाद् औषधस्य च ॥ १३ ॥

न हि संशोधनं किञ्-चिद् अस्त्य् अस्य प्रतिलोम-गम् ।
शोधनं प्रतिलोमं च रक्त-पित्ते भिषग्-जितम् ॥ १४ ॥

३.१४bv अस्त्य् अस्य प्रतिलोमनम् ३.१४bv अस्त्य् अस्य प्रतिलोमकम् एवम् एवोपशमनं सर्व-शो नास्य विद्यते ।
संसृष्टेषु हि दोषेषु सर्व-जिच् छमनं हितम् ॥ १५ ॥

तत्र दोषानुगमनं सिरास्र इव लक्षयेत् ।
उपद्रवांश् च विकृति-ज्ञानतस् तेषु चाधिकम् ॥ १६ ॥

आशु-कारी यतः कासस् तम् एवातः प्रवक्ष्यति ।
पञ्च कासाः स्मृता वात-पित्त-श्लेष्म-क्षत-क्षयैः ॥ १७ ॥

३.१७bv तम् एवातः प्रचक्ष्यते ३.१७bv तम् एवातः प्रचक्षते क्षयायोपेक्षिताः सर्वे बलिनश् चोत्तरोत्तरम् ।
तेषां भविष्यतां रूपं कण्ठे कण्डूर् अ-रोचकः ॥ १८ ॥

३.१८bv बलिनश् च यथोत्तरम् शूक-पूर्णाभ-कण्ठ-त्वं तत्राधो विहतो ऽनिलः ।
ऊर्ध्वं प्रवृत्तः प्राप्योरस् तस्मिन् कण्ठे च संसजन् ॥ १९ ॥

शिरः-स्रोतांसि संपूर्य ततो ऽङ्गान्य् उत्क्षिपन्न् इव ।
क्षिपन्न् इवाक्षिणी पृष्ठम् उरः पार्श्वे च पीडयन् ॥ २० ॥

प्रवर्तते स वक्त्रेण भिन्न-कांस्योपम-ध्वनिः ।
हेतु-भेदात् प्रतीघात-भेदो वायोः स-रंहसः ॥ २१ ॥

यद् रुजा-शब्द-वैषम्यं कासानां जायते ततः ।
कुपितो वातलैर् वातः शुष्कोरः-कण्ठ-वक्त्र-ताम् ॥ २२ ॥

३.२२cv कुपितो वातलैर् वायुः हृत्-पार्श्वोरः-शिरः-शूलं मोह-क्षोभ-स्वर-क्षयान् ।
करोति शुष्कं कासं च महा-वेग-रुजा-स्वनम् ॥ २३ ॥

३.२३cv करोति शुष्क-कासं च सो ऽङ्ग-हर्षी कफं शुष्कं कृच्छ्रान् मुक्त्वाल्प-तां व्रजेत् ।
पित्तात् पीताक्षि-कफ-ता तिक्तास्य-त्वं ज्वरो भ्रमः ॥ २४ ॥

पित्तासृग्-वमनं तृष्णा वैस्वर्यं धूमको ऽम्लकः ।
प्रततं कास-वेगेन ज्योतिषाम् इव दर्शनम् ॥ २५ ॥

३.२५bv वैस्वर्यं धूमको मदः कफाद् उरो ऽल्प-रुङ् मूर्ध-हृदयं स्तिमितं गुरु ।
कण्ठोपलेपः सदनं पीनस-च्छर्द्य्-अ-रोचकाः ॥ २६ ॥

३.२६cv कण्ठास्य-लेपः सदनं रोम-हर्षो घन-स्निग्ध-श्वेत-श्लेष्म-प्रवर्तनम् ।
युद्धाद्यैः साहसैस् तैस् तैः सेवितैर् अ-यथा-बलम् ॥ २७ ॥

उरस्य् अन्तः-क्षते वायुः पित्तेनानुगतो बली ।
कुपितः कुरुते कासं कफं तेन स-शोणितम् ॥ २८ ॥

पीतं श्यावं च शुष्कं च ग्रथितं कुथितं बहु ।
ष्ठीवेत् कण्ठेन रुजता विभिन्नेनेव चोरसा ॥ २९ ॥

३.२९av पीतं श्यामं च शुष्कं च सूचीभिर् इव तीक्ष्णाभिस् तुद्यमानेन शूलिना ।
पर्व-भेद-ज्वर-श्वास-तृष्णा-वैस्वर्य-कम्प-वान् ॥ ३० ॥

पारावत इवाकूजन् पार्श्व-शूली ततो ऽस्य च ।
क्रमाद् वीर्यं रुचिः पक्ता बलं वर्णश् च हीयते ॥ ३१ ॥

क्षीणस्य सासृङ्-मूत्र-त्वं स्याच् च पृष्ठ-कटी-ग्रहः ।
वायु-प्रधानाः कुपिता धातवो राज-यक्ष्मिणः ॥ ३२ ॥

कुर्वन्ति यक्ष्मायतनैः कासं ष्ठीवेत् कफं ततः ।
पूति-पूयोपमं पीतं विस्रं हरित-लोहितम् ॥ ३३ ॥

लुच्येते इव पार्श्वे च हृदयं पततीव च ।
अ-कस्माद् उष्ण-शीतेच्छा बह्व्-आशि-त्वं बल-क्षयः ॥ ३४ ॥

३.३४av लुप्येते इव पार्श्वे च स्निग्ध-प्रसन्न-वक्त्र-त्वं श्री-मद्-दर्शन-नेत्र-ता ।
ततो ऽस्य क्षय-रूपाणि सर्वाण्य् आविर्-भवन्ति च ॥ ३५ ॥

३.३५bv श्री-मद्-दशन-नेत्र-ता इत्य् एष क्षय-जः कासः क्षीणानां देह-नाशनः ।
याप्यो वा बलिनां तद्-वत् क्षत-जो ऽभिनवौ तु तौ ॥ ३६ ॥

सिध्येताम् अपि सानाथ्यात् साध्या दोषैः पृथक् त्रयः ।
मिश्रा याप्या द्वयात् सर्वे जरसा स्थविरस्य च ॥ ३७ ॥

३.३७av सिध्येताम् अपि सामर्थ्यात् कासाच् छ्वास-क्षय-च्छर्दि-स्वर-सादादयो गदाः ।
भवन्त्य् उपेक्षया यस्मात् तस्मात् तं त्वरया जयेत् ॥ ३८ ॥

# अध्याय 04

कास-वृद्ध्या भवेच् छ्वासः पूर्वैर् वा दोष-कोपनैः ।
आमातीसार-वमथु-विष-पाण्डु-ज्वरैर् अपि ॥ १ ॥

रजो-धूमानिलैर् मर्म-घाताद् अति-हिमाम्बुना ।
क्षुद्रकस् तमकश् छिन्नो महान् ऊर्ध्वश् च पञ्चमः ॥ २ ॥

कफोपरुद्ध-गमनः पवनो विष्वग्-आस्थितः ।
प्राणोदकान्न-वाहीनि दुष्टः स्रोतांसि दूषयन् ॥ ३ ॥

उरः-स्थः कुरुते श्वासम् आमाशय-समुद्भवम् ।
प्राग्-रूपं तस्य हृत्-पार्श्व-शूलं प्राण-विलोम-ता ॥ ४ ॥

आनाहः शङ्ख-भेदश् च तत्रायासाति-भोजनैः ।
प्रेरितः प्रेरयेत् क्षुद्रं स्वयं संशमनं मरुत् ॥ ५ ॥

प्रतिलोमं सिरा गच्छन्न् उदीर्य पवनः कफम् ।
परिगृह्य शिरो-ग्रीवम् उरः पार्श्वे च पीडयन् ॥ ६ ॥

कासं घुर्घुरकं मोहम् अ-रुचिम् पीनसं तृषम् ।
करोति तीव्र-वेगं च श्वासं प्राणोपतापिनम् ॥ ७ ॥

प्रताम्येत् तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ।
कृच्छ्राच् छयानः श्वसिति निषण्णः स्वास्थ्यम् ऋच्छति ॥ ८ ॥

उच्छ्रिताक्षो ललाटेन स्विद्यता भृशम् अर्ति-मान् ।
विशुष्कास्यो मुहुः-श्वासी काङ्क्षत्य् उष्णं स-वेपथुः ॥ ९ ॥

मेघाम्बु-शीत-प्राग्-वातैः श्लेष्मलैश् च विवर्धते ।
स याप्यस् तमको साध्यो नवो वा बलिनो भवेत् ॥ १० ॥

ज्वर-मूर्छा-युतः शीतैः शाम्येत् प्रतमकस् तु सः ।
छिन्नाच् छ्वसिति विच्छिन्नं मर्म-च्छेद-रुजार्दितः ॥ ११ ॥

स-स्वेद-मूर्छः सानाहो वस्ति-दाह-निरोध-वान् ।
अधो-दृग् विप्लुताक्षश् च मुह्यन् रक्तैक-लोचनः ॥ १२ ॥

शुष्कास्यः प्रलपन् दीनो नष्ट-च्छायो वि-चेतनः ।
महता महता दीनो नादेन श्वसिति क्रथन् ॥ १३ ॥

४.१३cv महतो महता दीनो उद्धूयमानः संरब्धो मत्तर्षभ इवा-निशम् ।
प्रणष्ट-ज्ञान-विज्ञानो विभ्रान्त-नयनाननः ॥ १४ ॥

वक्षः समाक्षिपन् बद्ध-मूत्र-वर्चा विशीर्ण-वाक् ।
शुष्क-कण्ठो मुहुर् मुह्यन् कर्ण-शङ्ख-शिरो-ऽति-रुक् ॥ १५ ॥

दीर्घम् ऊर्ध्वं श्वसित्य् ऊर्ध्वान् न च प्रत्याहरत्य् अधः ।
श्लेष्मावृत-मुख-स्रोताः क्रुद्ध-गन्ध-वहार्दितः ॥ १६ ॥

ऊर्ध्व-दृग् वीक्षते भ्रान्तम् अक्षिणी परितः क्षिपन् ।
मर्मसु च्छिद्यमानेषु परिदेवी निरुद्ध-वाक् ॥ १७ ॥

एते सिध्येयुर् अ-व्यक्ता व्यक्ताः प्राण-हरा ध्रुवम् ।
श्वासैक-हेतु-प्राग्-रूप-संख्या-प्रकृति-संश्रयाः ॥ १८ ॥

४.१८dv -संख्या-प्रकृति-संश्रया हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च ।
गम्भीरा च मरुत् तत्र त्वरया-युक्ति-सेवितैः ॥ १९ ॥

रूक्ष-तीक्ष्ण-खरा-सात्म्यैर् अन्न-पानैः प्रपीडितः ।
करोति हिध्माम् अ-रुजां मन्द-शब्दां क्षवानुगाम् ॥ २० ॥

शमं सात्म्यान्न-पानेन या प्रयाति च सान्न-जा ।
आयासात् पवनः क्षुद्रः क्षुद्रां हिध्मां प्रवर्तयेत् ॥ २१ ॥

४.२१cv आयासात् पवनः क्रुद्धः जत्रु-मूल-प्रविसृताम् अल्प-वेगां मृदुं च सा ।
वृद्धिम् आयास्यतो याति भुक्त-मात्रे च मार्दवम् ॥ २२ ॥

चिरेण यमलैर् वेगैर् आहारे या प्रवर्तते ।
परिणामोन्-मुखे वृद्धिं परिणामे च गच्छति ॥ २३ ॥

कम्पयन्ती शिरो-ग्रीवम् आध्मातस्याति-तृष्यतः ।
प्रलाप-च्छर्द्य्-अतीसार-नेत्र-विप्लुति-जृम्भिणः ॥ २४ ॥

४.२४av कम्पयन्ती शिरो-ग्रीवाम् यमला वेगिनी हिध्मा परिणाम-वती च सा ।
स्तब्ध-भ्रू-शङ्ख-युग्मस्य सास्र-विप्लुत-चक्षुषः ॥ २५ ॥

४.२५cv ध्वस्त-भ्रू-शङ्ख-युग्मस्य ४.२५dv साश्रु-विप्लुत-चक्षुषः स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुष्णती ।
रुन्धती मार्गम् अन्नस्य कुर्वती मर्म-घट्टनम् ॥ २६ ॥

पृष्ठतो नमनं शोषं महा-हिध्मा प्रवर्तते ।
महा-मूला महा-शब्दा महा-वेगा महा-बला ॥ २७ ॥

पक्वाशयाद् वा नाभेर् वा पूर्व-वद् या प्रवर्तते ।
तद्-रूपा सा मुहुः कुर्याज् जृम्भाम् अङ्ग-प्रसारणम् ॥ २८ ॥

गम्भीरेणानुनादेन गम्भीरा तासु साधयेत् ।
आद्ये द्वे वर्जयेद् अन्त्ये सर्व-लिङ्गां च वेगिनीम् ॥ २९ ॥

सर्वाश् च संचितामस्य स्थविरस्य व्यवायिनः ।
व्याधिभिः क्षीण-देहस्य भक्त-च्छेद-क्षतस्य वा ॥ ३० ॥

सर्वे ऽपि रोगा नाशाय न त्व् एवं शीघ्र-कारिणः ।
हिध्मा-श्वासौ यथा तौ हि मृत्यु-काले कृतालयौ ॥ ३१ ॥

# अध्याय 05

अनेक-रोगानुगतो बहु-रोग-पुरो-गमः ।
राज-यक्ष्मा क्षयः शोषो रोग-राड् इति च स्मृतः ॥ १ ॥

नक्षत्राणां द्वि-जानां च राज्ञो ऽभूद् यद् अयं पुरा ।
यच् च राजा च यक्ष्मा च राज-यक्ष्मा ततो मतः ॥ २ ॥

देहौषध-क्षय-कृतेः क्षयस् तत्-संभवाच् च सः ।
रसादि-शोषणाच् छोषो रोग-राट् तेषु राजनात् ॥ ३ ॥

५.३dv रोग-राट् रोग-राजनात् साहसं वेग-संरोधः शुक्रौजः-स्नेह-संक्षयः ।
अन्न-पान-विधि-त्यागश् चत्वारस् तस्य हेतवः ॥ ४ ॥

तैर् उदीर्णो ऽनिलः पित्तं कफं चोदीर्य सर्वतः ।
शरीर-संधीन् आविश्य तान् सिराश् च प्रपीडयन् ॥ ५ ॥

मुखानि स्रोतसां रुद्ध्वा तथैवातिविवृत्य वा ।
सर्पन्न् ऊर्ध्वम् अधस् तिर्यग् यथा-स्वं जनयेद् गदान् ॥ ६ ॥

रूपं भविष्यतस् तस्य प्रतिश्यायो भृशं क्षवः ।
प्रसेको मुख-माधुर्यं सदनं वह्नि-देहयोः ॥ ७ ॥

स्थाल्य्-अमत्रान्न-पानादौ शुचाव् अप्य् अ-शुचीक्षणम् ।
मक्षिका-तृण-केशादि-पातः प्रायो ऽन्न-पानयोः ॥ ८ ॥

हृल्-लासश् छर्दिर् अ-रुचिर् अश्नतो ऽपि बल-क्षयः ।
पाण्योर् अवेक्षा पादास्य-शोफो ऽक्ष्णोर् अति-शुक्ल-ता ॥ ९ ॥

बाह्वोः प्रमाण-जिज्ञासा काये बैभत्स्य-दर्शनम् ।
स्त्री-मद्य-मांस-प्रिय-ता घृणि-त्वं मूर्ध-गुण्ठनम् ॥ १० ॥

नख-केशाति-वृद्धिश् च स्वप्ने चाभिभवो भवेत् ।
पतङ्ग-कृकलासाहि-कपि-श्वापद-पक्षिभिः ॥ ११ ॥

५.११dv -कपि-श्वापद-पत्त्रिभिः केशास्थि-तुष-भस्मादि-राशौ समधिरोहणम् ।
शून्यानां ग्राम-देशानां दर्शनं शुष्यतो ऽम्भसो ॥ १२ ॥

ज्योतिर् गिरीणां पततां ज्वलतां च मही-रुहाम् ।
पीनस-श्वास-कासांस-मूर्ध-स्वर-रुजो ऽ-रुचिः ॥ १३ ॥

ऊर्ध्वं विड्-भ्रंश-संशोषाव् अधश् छर्दिश् च कोष्ठ-गे ।
तिर्यक्-स्थे पार्श्व-रुग्-दोषे संधि-गे भवति ज्वरः ॥ १४ ॥

५.१४av ऊर्ध्वं विट्-स्रंस-संशोषाव् ५.१४bv अधश् छर्दिस् तु कोष्ठ-गे रूपाण्य् एका-दशैतानि जायन्ते राज-यक्ष्मिणः ।
तेषाम् उपद्रवान् विद्यात् कण्ठोद्ध्वंसम् उरो-रुजम् ॥ १५ ॥

जृम्भाङ्ग-मर्द-निष्ठीव-वह्नि-सादास्य-पूति-ताः ।
तत्र वाताच् छिरः-पार्श्व-शूलम् अंसाङ्ग-मर्दनम् ॥ १६ ॥

कण्ठोद्ध्वंसः स्वर-भ्रंशः पित्तात् पादांस-पाणिषु ।
दाहो ऽतीसारो ऽसृक्-छर्दिर् मुख-गन्धो ज्वरो मदः ॥ १७ ॥

कफाद् अ-रोचकश् छर्दिः कासो मूर्धाङ्ग-गौरवम् ।
प्रसेकः पीनसः श्वासः स्वर-सादो ऽल्प-वह्नि-ता ॥ १८ ॥

५.१८dv स्वर-भेदो ऽल्प-वह्नि-ता दोषैर् मन्दानल-त्वेन सोपलेपैः कफोल्बणैः ।
स्रोतो-मुखेषु रुद्धेषु धातूष्मस्व् अल्पकेषु च ॥ १९ ॥

विदह्यमानः स्व-स्थाने रसस् तांस् तान् उपद्रवान् ।
कुर्याद् अ-गच्छन् मांसादीन् असृक् चोर्ध्वं प्रधावति ॥ २० ॥

पच्यते कोष्ठ एवान्नम् अन्न-पक्त्रैव चास्य यत् ।
प्रायो ऽस्मान् मल-तां यातं नैवालं धातु-पुष्टये ॥ २१ ॥

रसो ऽप्य् अस्य न रक्ताय मांसाय कुत एव तु ।
उपस्तब्धः स शकृता केवलं वर्तते क्षयी ॥ २२ ॥

५.२२cv उपष्टब्धः स शकृता लिङ्गेष्व् अल्पेष्व् अपि क्षीणं व्याध्य्-औषध-बला-क्षमम् ।
वर्जयेत् साधयेद् एव सर्वेष्व् अपि ततो ऽन्य-था ॥ २३ ॥

५.२३cv वर्जयेत् साधयेद् एवं क्षीण-मांस-बलं जह्यात् पूर्व-लिङ्गैर् उपद्रुतम् ।
प्रत्याख्याय नरं चाशु द्रव्य-वन्तम् उपाचरेत् ॥ २३+१ ॥

दोषैर् व्यस्तैः समस्तैश् च क्षयात् षष्ठश् च मेदसा ।
स्वर-भेदो भवेत् तत्र क्षामो रूक्षश् चलः स्वरः ॥ २४ ॥

५.२४bv क्षयात् षष्ठश् च मेदसः शूक-पूर्णाभ-कण्ठ-त्वं स्निग्धोष्णोपशयो ऽनिलात् ।
पित्तात् तालु-गले दाहः शोष उक्तावसूयनम् ॥ २५ ॥

लिम्पन्न् इव कफात् कण्ठं मन्दः खुरखुरायते ।
स्वरो विबद्धः सर्वैस् तु सर्व-लिङ्गः क्षयात् कषेत् ॥ २६ ॥

धूमायतीव चात्य्-अर्थं मेदसा श्लेष्म-लक्षणः ।
कृच्छ्र-लक्ष्याक्षरश् चात्र सर्वैर् अन्त्यं च वर्जयेत् ॥ २७ ॥

अ-रोचको भवेद् दोषैर् जिह्वा-हृदय-संश्रयैः ।
संनिपातेन मनसः संतापेन च पञ्चमः ॥ २८ ॥

५.२८bv जिह्वा-हृदय-संश्रितैः कषाय-तिक्त-मधुरं वातादिषु मुखं क्रमात् ।
सर्वोत्थे वि-रसं शोक-क्रोधादिषु यथा-मलम् ॥ २९ ॥

छर्दिर् दोषैः पृथक् सर्वैर् द्विष्टैर् अर्थैश् च पञ्चमी ।
उदानो विकृतो दोषान् सर्वास्व् अप्य् ऊर्ध्वम् अस्यति ॥ ३० ॥

तासूत्क्लेशास्य-लावण्य-प्रसेका-रुचयो ऽग्र-गाः ।
नाभि-पृष्ठं रुजन् वायुः पार्श्वे चाहारम् उत्क्षिपेत् ॥ ३१ ॥

ततो विच्छिन्नम् अल्पाल्पं कषायं फेनिलं वमेत् ।
शब्दोद्गार-युतं कृष्णम् अच्छं कृच्छ्रेण वेग-वत् ॥ ३२ ॥

कासास्य-शोष-हृन्-मूर्ध-स्वर-पीडा-क्लमान्वितः ।
पित्तात् क्षारोदक-निभं धूम्रं हरित-पीतकम् ॥ ३३ ॥

सासृग् अम्लं कटूष्णं च तृण्-मूर्छा-ताप-दाह-वत् ।
कफात् स्निग्धं घनं शीतं श्लेष्म-तन्तु-गवाक्षितम् ॥ ३४ ॥

५.३४bv तृण्-मूर्छा-ताप-दाह-वान् मधुरं लवणं भूरि प्रसक्तं रोम-हर्षणम् ।
मुख-श्वयथु-माधुर्य-तन्द्रा-हृल्-लास-कास-वान् ॥ ३५ ॥

सर्व-लिङ्गा मलैः सर्वै रिष्टोक्ता या च तां त्यजेत् ।
पूत्य्-अ-मेध्या-शुचि-द्विष्ट-दर्शन-श्रवणादिभिः ॥ ३६ ॥

तप्ते चित्ते हृदि क्लिष्टे छर्दिर् द्विष्टार्थ-योग-जा ।
वातादीन् एव विमृशेत् कृमि-तृणाम-दौर्हृदे ॥ ३७ ॥

शूल-वेपथु-हृल्-लासैर् विशेषात् कृमि-जां वदेत् ।
कृमि-हृद्-रोग-लिङ्गैश् च स्मृताः पञ्च तु हृद्-गदाः ॥ ३८ ॥

तेषां गुल्म-निदानोक्तैः समुत्थानैश् च संभवः ।
वातेन शूल्यते ऽत्य्-अर्थं तुद्यते स्फुटतीव च ॥ ३९ ॥

५.३९bv समुत्थानैः समुद्भवः भिद्यते शुष्यति स्तब्धं हृदयं शून्य-ता द्रवः ।
अ-कस्माद् दीन-ता शोको भयं शब्दा-सहिष्णु-ता ॥ ४० ॥

५.४०bv हृदयं शून्य-ता-द्रवम् वेपथुर् वेष्टनं मोहः श्वास-रोधो ऽल्प-निद्र-ता ।
पित्तात् तृष्णा भ्रमो मूर्छा दाहः स्वेदो ऽम्लकः क्लमः ॥ ४१ ॥

छर्दनं चाम्ल-पित्तस्य धूमकः पीत-ता ज्वरः ।
श्लेष्मणा हृदयं स्तब्धं भारिकं साश्म-गर्भ-वत् ॥ ४२ ॥

५.४२bv तमकः पीत-ता ज्वरः कासाग्नि-साद-निष्ठीव-निद्रालस्या-रुचि-ज्वराः ।
सर्व-लिङ्गस् त्रिभिर् दोषैः कृमिभिः श्याव-नेत्र-ता ॥ ४३ ॥

५.४३cv सर्व-लिङ्गं त्रिभिर् दोषैः तमः-प्रवेशो हृल्-लासः शोषः कण्डूः कफ-स्रुतिः ।
हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ ४४ ॥

चिकित्सेद् आमयं घोरं तं शीघ्रं शीघ्र-कारिणम् ।
वातात् पित्तात् कफात् तृष्णा संनिपाताद् रस-क्षयात् ॥ ४५ ॥

षष्ठी स्याद् उपसर्गाच् च वात-पित्ते तु कारणम् ।
सर्वासु तत्-प्रकोपो हि सौम्य-धातु-प्रशोषणात् ॥ ४६ ॥

सर्व-देह-भ्रमोत्कम्प-ताप-तृड्-दाह-मोह-कृत् ।
जिह्वा-मूल-गल-क्लोम-तालु-तोय-वहाः सिराः ॥ ४७ ॥

संशोष्य तृष्णा जायन्ते तासां सामान्य-लक्षणम् ।
मुख-शोषो जला-तृप्तिर् अन्न-द्वेषः स्वर-क्षयः ॥ ४८ ॥

कण्ठौष्ठ-जिह्वा-कार्कश्यं जिह्वा-निष्क्रमणं क्लमः ।
प्रलापश् चित्त-विभ्रंशस् तृड्-ग्रहोक्तास् तथामयाः ॥ ४९ ॥

मारुतात् क्षाम-ता दैन्यं शङ्ख-तोदः शिरो-भ्रमः ।
गन्धा-ज्ञानास्य-वैरस्य-श्रुति-निद्रा-बल-क्षयाः ॥ ५० ॥

५.५०cv गन्धा-ज्ञानास्य-वैरस्यं ५.५०dv -श्रुति-निद्रा-बल-क्षयः ५.५०dv श्रुति-निद्रा-बल-क्षयः शीताम्बु-पानाद् वृद्धिश् च पित्तान् मूर्छास्य-तिक्त-ता ।
रक्तेक्षण-त्वं प्रततं शोषो दाहो ऽति-धूमकः ॥ ५१ ॥

कफो रुणद्धि कुपितस् तोय-वाहिषु मारुतम् ।
स्रोतःसु स कफस् तेन पङ्क-वच् छोष्यते ततः ॥ ५२ ॥

शूकैर् इवाचितः कण्ठो निद्रा मधुर-वक्त्र-ता ।
आध्मानं शिरसो जाड्यं स्तैमित्य-च्छर्द्य्-अ-रोचकाः ॥ ५३ ॥

आलस्यम् अ-विपाकश् च सर्वैः स्यात् सर्व-लक्षणा ।
आमोद्भवा च भक्तस्य संरोधाद् वात-पित्त-जा ॥ ५४ ॥

उष्ण-क्लान्तस्य सहसा शीताम्भो भजतस् तृषम् ।
ऊष्मा रुद्धो गतः कोष्ठं यां कुर्यात् पित्त-जैव सा ॥ ५५ ॥

या च पानाति-पानोत्था तीक्ष्णाग्नेः स्नेह-जा च या ।
स्निग्ध-गुर्व्-अम्ल-लवण-भोजनेन कफोद्भवा ॥ ५६ ॥

५.५६bv तीक्ष्णाग्नि-स्नेह-जा च या तृष्णा रस-क्षयोक्तेन लक्षणेन क्षयात्मिका ।
शोष-मेह-ज्वराद्य्-अन्य-दीर्घ-रोगोपसर्गतः ॥ ५७ ॥

५.५७cv शोष-मोह-ज्वराद्य्-अन्य- या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥ ५७अब् ॥

# अध्याय 06

तीक्ष्णोष्ण-रूक्ष-सूक्ष्माम्लं व्यवाय्य् आशु-करं लघु ।
विकाषि विशदं मद्यम् ओजसो ऽस्माद् विपर्ययः ॥ १ ॥

६.१av तीक्ष्णोष्ण-रूक्ष-सूक्ष्माम्ल- ६.१bv -व्यवाय्य् आशु-करं लघु ६.१cv विकाशि विशदं मद्यम् तीक्ष्णादयो विषे ऽप्य् उक्ताश् चित्तोपप्लाविनो गुणाः ।
जीवितान्ताय जायन्ते विषे तूत्कर्ष-वृत्तितः ॥ २ ॥

तीक्ष्णादिभिर् गुणैर् मद्यं मन्दादीन् ओजसो गुणान् ।
दशभिर् दश संक्षोभ्य चेतो नयति वि-क्रियाम् ॥ ३ ॥

आद्ये मदे द्वितीये तु प्रमादायतने स्थितः ।
दुर्-विकल्प-हतो मूढः सुखम् इत्य् अधिमुच्यते ॥ ४ ॥

६.४av आद्ये मदे द्वितीये च ६.४av आद्ये मदे द्वितीये स ६.४dv सुखम् इत्य् अभिमुच्यते ६.४dv सुखम् इत्य् अभिमन्यते ६.४dv सुखम् इत्य् अवमन्यते मध्यमोत्तमयोः संधिं प्राप्य राजस-तामसः ।
निर्-अङ्कुश इव व्यालो न किञ्-चिन् नाचरेज् जडः ॥ ५ ॥

६.५dv न किं किं वाचरेज् जडः इयं भूमिर् अ-वद्यानां दौःशील्यस्येदम् आस्पदम् ।
एको ऽयं बहु-मार्गाय दुर्-गतेर् देशिकः परम् ॥ ६ ॥

६.६av इयं भूमिर् अ-विद्यानां निश्-चेष्टः शव-वच् छेते तृतीये तु मदे स्थितः ।
मरणाद् अपि पापात्मा गतः पाप-तरां दशाम् ॥ ७ ॥

धर्मा-धर्मं सुखं दुःखम् अर्थान्-अर्थं हिता-हितम् ।
यद् आसक्तो न जानाति कथं तच् छीलयेद् बुधः ॥ ८ ॥

मद्ये मोहो भयं शोकः क्रोधो मृत्युश् च संश्रिताः ।
सोन्माद-मद-मूर्छायाः सापस्मारापतानकाः ॥ ९ ॥

यत्रैकः स्मृति-विभ्रंशस् तत्र सर्वम् अ-साधु यत् ।
अ-युक्ति-युक्तम् अन्नं हि व्याधये मरणाय वा ॥ १० ॥

मद्यं त्रि-वर्ग-धी-धैर्य-लज्जादेर् अपि नाशनम् ।
नातिमाद्यन्ति बलिनः कृताहारा महाशनाः ॥ ११ ॥

स्निग्धाः सत्-त्व-वयो-युक्ता मद्य-नित्यास् तद्-अन्वयाः ।
मेदः-कफाधिका मन्द-वात-पित्ता दृढाग्नयः ॥ १२ ॥

विपर्यये ऽतिमाद्यन्ति विश्रब्धाः कुपिताश् च ये ।
मद्येन चाम्ल-रूक्षेण सा-जीर्णे बहुनाति च ॥ १३ ॥

६.१३dv सा-जीर्णे बहुनापि च वातात् पित्तात् कफात् सर्वैश् चत्वारः स्युर् मदात्ययाः ।
सर्वे ऽपि सर्वैर् जायन्ते व्यपदेशस् तु भूयसा ॥ १४ ॥

सामान्यं लक्षणं तेषां प्रमोहो हृदय-व्यथा ।
विड्-भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरो ऽ-रुचिः ॥ १५ ॥

६.१५bv प्रमोहो हृदये व्यथा शिरः-पार्श्वास्थि-रुक्-कम्पो मर्म-भेदस् त्रिक-ग्रहः ।
उरो-विबन्धस् तिमिरं कासः श्वासः प्रजागरः ॥ १६ ॥

६.१६av शिरः-पार्श्वास्थि-रुक्-स्तम्भो स्वेदो ऽति-मात्रं विष्टम्भः श्वयथुश् चित्त-विभ्रमः ।
प्रलापश् छर्दिर् उत्क्लेशो भ्रमो दुः-स्वप्न-दर्शनम् ॥ १७ ॥

विशेषाज् जागर-श्वास-कम्प-मूर्ध-रुजो ऽनिलात् ।
स्वप्ने भ्रमत्य् उत्पतति प्रेतैश् च सह भाषते ॥ १८ ॥

पित्ताद् दाह-ज्वर-स्वेद-मोहातीसार-तृड्-भ्रमाः ।
देहो हरित-हारिद्रो रक्त-नेत्र-कपोल-ता ॥ १९ ॥

श्लेष्मणा छर्दि-हृल्-लास-निद्रोदर्दाङ्ग-गौरवम् ।
सर्व-जे सर्व-लिङ्ग-त्वं मुक्त्वा मद्यं पिबेत् तु यः ॥ २० ॥

६.२०av श्लेष्मणश् छर्दि-हृल्-लास- सहसान्-उचितं वान्यत् तस्य ध्वंसक-विक्षयौ ।
भवेतां मारुतात् कष्टौ दुर्-बलस्य विशेषतः ॥ २१ ॥

६.२१av सहसान्-उचितं चान्यत् ६.२१bv तस्य ध्वंसक-विट्-क्षयौ ध्वंसके श्लेष्म-निष्ठीवः कण्ठ-शोषो ऽति-निद्र-ता ।
शब्दा-सह-त्वं तन्द्रा च विक्षये ऽङ्ग-शिरो-ऽति-रुक् ॥ २२ ॥

६.२२dv विट्-क्षये ऽङ्ग-शिरो-ऽति-रुक् हृत्-कण्ठ-रोगः संमोहः कासस् तृष्णा वमिर् ज्वरः ।
निवृत्तो यस् तु मद्येभ्यो जितात्मा बुद्धि-पूर्व-कृत् ॥ २३ ॥

६.२३av हृत्-कण्ठ-रोधः संमोहः विकारैः स्पृश्यते जातु न स शारीर-मानसैः ।
रजो-मोहा-हिताहार-परस्य स्युस् त्रयो गदाः ॥ २४ ॥

रसासृक्-चेतना-वाहि-स्रोतो-रोध-समुद्भवाः ।
मद-मूर्छाय-संन्यासा यथोत्तर-बलोत्तराः ॥ २५ ॥

मदो ऽत्र दोषैः सर्वैश् च रक्त-मद्य-विषैर् अपि ।
सक्तान्-अल्प-द्रुताभाषश् चलः स्खलित-चेष्टितः ॥ २६ ॥

रूक्ष-श्यावारुण-तनुर् मदे वातोद्भवे भवेत् ।
पित्तेन क्रोधनो रक्त-पीताभः कलह-प्रियः ॥ २७ ॥

६.२७bv मदे वात-कृते भवेत् स्व्-अल्प-संबद्ध-वाक् पाण्डुः कफाद् ध्यान-परो ऽलसः ।
सर्वात्मा संनिपातेन रक्तात् स्तब्धाङ्ग-दृष्टि-ता ॥ २८ ॥

६.२८av स्व्-अल्पा-संबद्ध-वाक् पाण्डुः पित्त-लिङ्गं च मद्येन विकृतेह-स्वराङ्ग-ता ।
विषे कम्पो ऽति-निद्रा च सर्वेभ्यो ऽभ्यधिकस् तु सः ॥ २९ ॥

६.२९cv विषात् कम्पो ऽति-निद्रा च ६.२९dv सर्वेभ्यो ऽभ्यधिकश् च सः लक्षयेल् लक्षणोत्कर्षाद् वातादीन् शोणितादिषु ।
अरुणं कृष्ण-नीलं वा खं पश्यन् प्रविशेत् तमः ॥ ३० ॥

शीघ्रं च प्रतिबुध्येत हृत्-पीडा वेपथुर् भ्रमः ।
कार्श्यं श्यावारुणा छाया मूर्छाये मारुतात्मके ॥ ३१ ॥

६.३१cv कार्श्यं श्यावारुण-च्छाये पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत् तमः ।
विबुध्येत च स-स्वेदो दाह-तृट्-ताप-पीडितः ॥ ३२ ॥

भिन्न-विण् नील-पीताभो रक्त-पीताकुलेक्षणः ।
कफेन मेघ-संकाशं पश्यन्न् आकाशम् आविशेत् ॥ ३३ ॥

तमश् चिराच् च बुध्येत स-हृल्-लासः प्रसेक-वान् ।
गुरुभिः स्तिमितैर् अङ्गैर् आर्द्र-चर्मावनद्ध-वत् ॥ ३४ ॥

सर्वाकृतिस् त्रिभिर् दोषैर् अपस्मार इवापरः ।
पातयत्य् आशु निश्-चेष्टं विना बीभत्स-चेष्टितैः ॥ ३५ ॥

६.३५dv विना बैभत्स्य-चेष्टितैः दोषेषु मद-मूर्छायाः कृत-वेगेषु देहिनाम् ।
स्वयम् एवोपशाम्यन्ति संन्यासो नौषधैर् विना ॥ ३६ ॥

वाग्-देह-मनसां चेष्टाम् आक्षिप्याति-बला मलाः ।
संन्यासं संनिपतिताः प्राणायतन-संश्रयाः ॥ ३७ ॥

कुर्वन्ति तेन पुरुषः काष्ठी-भूतो मृतोपमः ।
म्रियेत शीघ्रं शीघ्रं चेच् चिकित्सा न प्रयुज्यते ॥ ३८ ॥

६.३८bv काष्ठ-भूतो मृतोपमः अ-गाधे ग्राह-बहुले सलिलौघ इवाटते ।
संन्यासे विनिमज्जन्तं नरम् आशु निवर्तयेत् ॥ ३९ ॥

६.३९cv अभिन्यासे च मज्जन्तं मद-मान-रोष-तोष-प्रभृतिभिर् अरिभिर् निजैः परिष्वङ्गः ।
युक्ता-युक्तं च समं युक्ति-वियुक्तेन मद्येन ॥ ४० ॥

बल-काल-देश-सात्म्य-प्रकृति-सहायामय-वयांसि ।
प्रविभज्य तद्-अनुरूपं यदि पिबति ततः पिबत्य् अमृतम् ॥ ४१ ॥

# अध्याय 07

अरि-वत् प्राणिनो मांस-कीलका विशसन्ति यत् ।
अर्शांसि तस्माद् उच्यन्ते गुद-मार्ग-निरोधतः ॥ १ ॥

दोषास् त्वङ्-मांस-मेदांसि संदूष्य विविधाकृतीन् ।
मांसाङ्कुरान् अपानादौ कुर्वन्त्य् अर्शांसि तान् जगुः ॥ २ ॥

सह-जन्मोत्तरोत्थान-भेदाद् द्वे-धा समासतः ।
शुष्क-स्रावि-विभेदाच् च गुदः स्थूलान्त्र-संश्रयः ॥ ३ ॥

अर्ध-पञ्चाङ्गुलस् तस्मिंस् तिस्रो ऽध्य्-अर्धाङ्गुलाः स्थिताः ।
बल्यः प्रवाहिणी तासाम् अन्तर् मध्ये विसर्जनी ॥ ४ ॥

बाह्या संवरणी तस्या गुदौष्ठो बहिर् अङ्गुले ।
यवाध्य्-अर्धः प्रमाणेन रोमाण्य् अत्र ततः परम् ॥ ५ ॥

७.५av बाह्या संवरणी तस्यां ७.५cv यवाध्य्-अर्ध-प्रमाणेन तत्र हेतुः सहोत्थानां वली-बीजोपतप्त-ता ।
अर्शसां बीज-तप्तिस् तु माता-पित्र्-अपचारतः ॥ ६ ॥

७.६bv वली-बीजोपतप्ति-ता दैवाच् च ताभ्यां कोपो हि संनिपातस्य तान्य् अतः ।
अ-साध्यान्य् एवम् आख्याताः सर्वे रोगाः कुलोद्भवाः ॥ ७ ॥

सह-जानि विशेषेण रूक्ष-दुर्-दर्शनानि च ।
अन्तर्-मुखानि पाण्डूनि दारुणोपद्रवाणि च ॥ ८ ॥

षो-ढान्यानि पृथग् दोष-संसर्ग-निचयास्रतः ।
शुष्काणि वात-श्लेष्मभ्याम् आर्द्राणि त्व् अस्र-पित्ततः ॥ ९ ॥

दोष-प्रकोप-हेतुस् तु प्राग् उक्तस् तेन सादिते ।
अग्नौ मले ऽति-निचिते पुनश् चाति-व्यवायतः ॥ १० ॥

यान-संक्षोभ-विषम-कठिनोत्कटकासनात् ।
वस्ति-नेत्राश्म-लोष्टोर्वी-तल-चैलादि-घट्टनात् ॥ ११ ॥

भृशं शीताम्बु-संस्पर्शात् प्रतताति-प्रवाहणात् ।
वात-मूत्र-शकृद्-वेग-धारणात् तद्-उदीरणात् ॥ १२ ॥

ज्वर-गुल्मातिसाराम-ग्रहणी-शोफ-पाण्डुभिः ।
कर्शनाद् विषमाभ्यश् च चेष्टाभ्यो योषितां पुनः ॥ १३ ॥

आम-गर्भ-प्रपतनाद् गर्भ-वृद्धि-प्रपीडनात् ।
ईदृशैश् चापरैर् वायुर् अपानः कुपितो मलम् ॥ १४ ॥

पायोर् वलीषु तं धत्ते तास्व् अभिष्यण्ण-मूर्तिषु ।
जायन्ते ऽर्शांसि तत्-पूर्व-लक्षणं मन्द-वह्नि-ता ॥ १५ ॥

७.१५av पायु-वलीषु तं धत्ते ७.१५av पायोर् वलीषु संधत्ते विष्टम्भः सक्थि-सदनं पिण्डिकोद्वेष्टनं भ्रमः ।
सादो ऽङ्गे नेत्रयोः शोफः शकृद्-भेदो ऽथ-वा ग्रहः ॥ १६ ॥

मारुतः प्रचुरो मूढः प्रायो नाभेर् अधश् चरन् ।
स-रुक् स-परिकर्तश् च कृच्छ्रान् निर्गच्छति स्वनम् ॥ १७ ॥

अन्त्र-कूजनम् आटोपः क्षाम-तोद्गार-भूरि-ता ।
प्रभूतं मूत्रम् अल्पा विड् अ-श्रद्धा धूमको ऽम्लकः ॥ १८ ॥

७.१८cv प्रभूत-मूत्र-ताल्पा विड् शिरः-पृष्ठोरसां शूलम् आलस्यं भिन्न-वर्ण-ता ।
तन्द्रेन्द्रियाणां दौर्बल्यं क्रोधो दुःखोपचार-ता ॥ १९ ॥

आशङ्का ग्रहणी-दोष-पाण्डु-गुल्मोदरेषु च ।
एतान्य् एव विवर्धन्ते जातेषु हत-नामसु ॥ २० ॥

७.२०cv एतान्य् एव च वर्धन्ते निवर्तमानो ऽपानो हि तैर् अधो-मार्ग-रोधतः ।
क्षोभयन्न् अनिलान् अन्यान् सर्वेन्द्रिय-शरीर-गान् ॥ २१ ॥

तथा मूत्र-शकृत्-पित्त-कफान् धातूंश् च साशयान् ।
मृद्नात्य् अग्निं ततः सर्वो भवति प्राय-शो ऽर्शसः ॥ २२ ॥

कृशो भृशं हतोत्साहो दीनः क्षामो ऽति-निष्-प्रभः ।
अ-सारो विगत-च्छायो जन्तु-जुष्ट इव द्रुमः ॥ २३ ॥

कृत्स्नैर् उपद्रवैर् ग्रस्तो यथोक्तैर् मर्म-पीडनैः ।
तथा कास-पिपासास्य-वैरस्य-श्वास-पीनसैः ॥ २४ ॥

क्लमाङ्ग-भङ्ग-वमथु-क्षवथु-श्वयथु-ज्वरैः ।
क्लैब्य-बाधिर्य-तैमिर्य-शर्कराश्मरि-पीडितः ॥ २५ ॥

क्षाम-भिन्न-स्वरो ध्यायन् मुहुः ष्ठीवन् अ-रोचकी ।
सर्व-पर्वास्थि-हृन्-नाभि-पायु-वङ्क्षण-शूल-वान् ॥ २६ ॥

गुदेन स्रवता पिच्छां पुलाकोदक-संनिभाम् ।
विबद्ध-मुक्तं शुष्कार्द्रं पक्वामं चान्तरान्तरा ॥ २७ ॥

पाण्डु पीतं हरिद् रक्तं पिच्छिलं चोपवेश्यते ।
गुदाङ्कुरा बह्व्-अनिलाः शुष्काश् चिमिचिमान्विताः ॥ २८ ॥

म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः ।
मिथो वि-सदृशा वक्रास् तीक्ष्णा विस्फुटिताननाः ॥ २९ ॥

बिम्बी-कर्कन्धु-खर्जूर-कार्पासी-फल-संनिभाः ।
के-चित् कदम्ब-पुष्पाभाः के-चित् सिद्धार्थकोपमाः ॥ ३० ॥

शिरः-पार्श्वांस-कट्य्-ऊरु-वङ्क्षणाभ्यधिक-व्यथाः ।
क्षवथूद्गार-विष्टम्भ-हृद्-ग्रहा-रोचक-प्रदाः ॥ ३१ ॥

७.३१dv -हृद्-रवा-रोचक-प्रदाः कास-श्वासाग्नि-वैषम्य-कर्ण-नाद-भ्रमावहाः ।
तैर् आर्तो ग्रथितं स्तोकं स-शब्दं स-प्रवाहिकम् ॥ ३२ ॥

रुक्-फेन-पिच्छानुगतं विबद्धम् उपवेश्यते ।
कृष्ण-त्वङ्-नख-विण्-मूत्र-नेत्र-वक्त्रश् च जायते ॥ ३३ ॥

गुल्म-प्लीहोदराष्ठीला-संभवस् तत एव च ।
पित्तोत्तरा नील-मुखा रक्त-पीतासित-प्रभाः ॥ ३४ ॥

तन्व्-अस्र-स्राविणो विस्रास् तनवो मृदवः श्लथाः ।
शुक-जिह्वा-यकृत्-खण्ड-जलौको-वक्त्र-संनिभाः ॥ ३५ ॥

दाह-पाक-ज्वर-स्वेद-तृण्-मूर्छा-रुचि-मोह-दाः ।
सोष्माणो द्रव-नीलोष्ण-पीत-रक्ताम-वर्चसः ॥ ३६ ॥

यव-मध्या हरित्-पीत-हारिद्र-त्वङ्-नखादयः ।
श्लेष्मोल्बणा महा-मूला घना मन्द-रुजः सिताः ॥ ३७ ॥

७.३७av यव-मध्या हरित्-पीता ७.३७bv हारिद्र-त्वङ्-नखादयः उच्छूनोपाचिताः स्निग्धाः स्तब्ध-वृत्त-गुरु-स्थिराः ।
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्व्-आढ्याः स्पर्शन-प्रियाः ॥ ३८ ॥

करीर-पनसास्थ्य्-आभास् तथा गो-स्तन-संनिभाः ।
वङ्क्षणानाहिनः पायु-वस्ति-नाभि-विकर्तिनः ॥ ३९ ॥

स-कास-श्वास-हृल्-लास-प्रसेका-रुचि-पीनसाः ।
मेह-कृच्छ्र-शिरो-जाड्य-शिशिर-ज्वर-कारिणः ॥ ४० ॥

क्लैब्याग्नि-मार्दव-च्छर्दिर्-आम-प्राय-विकार-दाः ।
वसाभ-स-कफ-प्राज्य-पुरीषाः स-प्रवाहिकाः ॥ ४१ ॥

७.४१cv वसाभाः स-कफ-प्राज्य- न स्रवन्ति न भिद्यन्ते पाण्डु-स्निग्ध-त्वग्-आदयः ।
संसृष्ट-लिङ्गाः संसर्गान् निचयात् सर्व-लक्षणाः ॥ ४२ ॥

रक्तोल्बणा गुदे-कीलाः पित्ताकृति-समन्विताः ।
वट-प्ररोह-सदृशा गुञ्जा-विद्रुम-संनिभाः ॥ ४३ ॥

ते ऽत्य्-अर्थं दुष्टम् उष्णं च गाढ-विट्-प्रतिपीडिताः ।
स्रवन्ति सहसा रक्तं तस्य चाति-प्रवृत्तितः ॥ ४४ ॥

भेकाभः पीड्यते दुःखैः शोणित-क्षय-संभवैः ।
हीन-वर्ण-बलोत्साहो हतौजः कलुषेन्द्रियः ॥ ४५ ॥

मुद्ग-कोद्रव-जूर्णाह्व-करीर-चणकादिभिः ।
रूक्षैः संग्राहिभिर् वायुः स्वे स्थाने कुपितो बली ॥ ४६ ॥

७.४६dv स्व-स्थाने कुपितो बली अधो-वहानि स्रोतांसि संरुध्याधः प्रशोषयन् ।
पुरीषं वात-विण्-मूत्र-सङ्गं कुर्वीत दारुणम् ॥ ४७ ॥

तेन तीव्रा रुजा कोष्ठ-पृष्ठ-हृत्-पार्श्व-गा भवेत् ।
आध्मानम् उदरावेष्टो हृल्-लासो परिकर्तनम् ॥ ४८ ॥

वस्तौ च सु-तरां शूलं गण्ड-श्वयथु-संभवः ।
पवनस्योर्ध्व-गामि-त्वं ततश् छर्द्य्-अ-रुचि-ज्वराः ॥ ४९ ॥

हृद्-रोग-ग्रहणी-दोष-मूत्र-सङ्ग-प्रवाहिकाः ।
बाधिर्य-तिमिर-श्वास-शिरो-रुक्-कास-पीनसाः ॥ ५० ॥

मनो-विकारस् तृष्णास्र-पित्त-गुल्मोदरादयः ।
ते ते च वात-जा रोगा जायन्ते भृश-दारुणाः ॥ ५१ ॥

दुर्-नाम्नाम् इत्य् उदावर्तः परमो ऽयम् उपद्रवः ।
वाताभिभूत-कोष्ठानां तैर् विनापि स जायते ॥ ५२ ॥

सह-जानि त्रि-दोषाणि यानि चाभ्यन्तरे वलौ ।
स्थितानि तान्य् अ-साध्यानि याप्यन्ते ऽग्नि-बलादिभिः ॥ ५३ ॥

द्वन्द्व-जानि द्वितीयायां वलौ यान्य् आश्रितानि च ।
कृच्छ्र-साध्यानि तान्य् आहुः परि-संवत्सराणि च ॥ ५४ ॥

बाह्यायां तु वलौ जातान्य् एक-दोषोल्बणानि च ।
अर्शांसि सुख-साध्यानि न चोत्पतितानि च ॥ ५५ ॥

मेढ्रादिष्व् अपि वक्ष्यन्ते यथा-स्वं नाभि-जानि तु ।
गण्डू-पदास्य-रूपाणि पिच्छिलानि मृदूनि च ॥ ५६ ॥

व्यानो गृहीत्वा श्लेष्माणं करोत्य् अर्शस् त्वचो बहिः ।
कीलोपमं स्थिर-खरं चर्म-कीलं तु तं विदुः ॥ ५७ ॥

वातेन तोदः पारुष्यं पित्ताद् असित-रक्त-ता ।
श्लेष्मणा स्निग्ध-ता तस्य ग्रथित-त्वं स-वर्ण-ता ॥ ५८ ॥

अर्शसां प्रशमे यत्नम् आशु कुर्वीत बुद्धि-मान् ।
तान्य् आशु हि गुदं बद्ध्वा कुर्युर् बद्ध-गुदोदरम् ॥ ५९ ॥

# अध्याय 08

दोषैर् व्यस्तैः समस्तैश् च भयाच् छोकाच् च षड्-विधः ।
अतीसारः स सु-तरां जायते ऽत्य्-अम्बु-पानतः ॥ १ ॥

कृश-शुष्कामिषा-सात्म्य-तिल-पिष्ट-विरूढकैः ।
मद्य-रूक्षाति-मात्रान्नैर् अर्शोभिः स्नेह-विभ्रमात् ॥ २ ॥

कृमिभ्यो वेग-रोधाच् च तद्-विधैः कुपितो ऽनिलः ।
विस्रंसयत्य् अधो ऽब्-धातुं हत्वा तेनैव चानलम् ॥ ३ ॥

व्यापद्यानु-शकृत् कोष्ठं पुरीषं द्रव-तां नयन् ।
प्रकल्पते ऽतिसाराय लक्षणं तस्य भाविनः ॥ ४ ॥

तोदो हृद्-गुद-कोष्ठेषु गात्र-सादो मल-ग्रहः ।
आध्मानम् अ-विपाकश् च तत्र वातेन विड्-जलम् ॥ ५ ॥

अल्पाल्पं शब्द-शूलाढ्यं विबद्धम् उपवेश्यते ।
रूक्षं स-फेनम् अच्छं च ग्रथितं वा मुहुर् मुहुः ॥ ६ ॥

तथा दग्ध-गुडाभासं स-पिच्छा-परिकर्तिकम् ।
शुष्कास्यो भ्रष्ट-पायुश् च हृष्ट-रोमा विनिष्टनन् ॥ ७ ॥

८.७dv हृष्ट-रोमा विनष्ट-वाक् पित्तेन पीतम् असितं हारिद्रं शाद्वल-प्रभम् ।
स-रक्तम् अति-दुर्-गन्धं -तृण्-मूर्छा-स्वेद-दाह-वान् ॥ ८ ॥

८.८dv -तृण्-मूर्छा-स्वेद-दाह-वत् स-शूलं पायु-संताप-पाक-वाञ् छलेष्मणा घनम् ।
पिच्छिलं तन्तु-मच् छवेतं स्निग्धम् आमं कफान्वितम् ॥ ९ ॥

८.९bv -पाक-वच् छलेष्मणा घनम् अभीक्ष्णम् गुरु दुर्-गन्धं विबद्धम् अनुबद्ध-रुक् ।
निद्रालुर् अलसो ऽन्न-द्विड् अल्पाल्पं स-प्रवाहिकम् ॥ १० ॥

स-रोम-हर्षं सोत्क्लेशो गुरु-वस्ति-गुदोदरः ।
कृते ऽप्य् अ-कृत-संज्ञश् च सर्वात्मा सर्व-लक्षणः ॥ ११ ॥

८.११bv गुरु-वस्तिर् गुरूदरः भयेन क्षोभिते चित्ते स-पित्तो द्रावयेच् छकृत् ।
वायुस् ततो ऽतिसार्येत क्षिप्रम् उष्णं द्रवं प्लवम् ॥ १२ ॥

वात-पित्त-समं लिङ्गैर् आहुस् तद्-वच् च शोकतः ।
अतीसारः समासेन द्वि-धा सामो निर्-आमकः ॥ १३ ॥

८.१३dv द्वे-धा सामो निर्-आमकः सासृङ् निर्-अस्रस् तत्राद्ये गौरवाद् अप्सु मज्जति ।
शकृद् दुर्-गन्धम् आटोप-विष्टम्भार्ति-प्रसेकिनः ॥ १४ ॥

विपरीतो निर्-आमस् तु कफात् पक्वो ऽपि मज्जति ।
अतीसारेषु यो नाति-यत्न-वान् ग्रहणी-गदः ॥ १५ ॥

तस्य स्याद् अग्नि-विध्वंस-करैर् अन्यस्य सेवितैः ।
सामं शकृन् निर्-आमं वा जीर्णे येनातिसार्यते ॥ १६ ॥

सो ऽतीसारो ऽति-सरणाद् आशु-कारी स्व-भावतः ।
सामं सान्नम् अ-जीर्णे ऽन्ने जीर्णे पक्वं तु नैव वा ॥ १७ ॥

अ-कस्माद् वा मुहुर् बद्धम् अ-कस्माच् छिथिलं मुहुः ।
चिर-कृद् ग्रहणी-दोषः संचयाच् चोपवेशयेत् ॥ १८ ॥

स चतुर्-धा पृथग् दोषैः संनिपाताच् च जायते ।
प्राग्-रूपं तस्य सदनं चिरात् पचनम् अम्लकः ॥ १९ ॥

प्रसेको वक्त्र-वैरस्यम् अ-रुचिस् तृट् क्लमो भ्रमः ।
आनद्धोदर-ता छर्दिः कर्ण-क्ष्वेडो ऽन्त्र-कूजनम् ॥ २० ॥

सामान्यं लक्षणं कार्श्यं धूमकस् तमको ज्वरः ।
मूर्छा शिरो-रुग् विष्टम्भः श्वयथुः कर-पादयोः ॥ २१ ॥

तत्रानिलात् तालु-शोषस् तिमिरं कर्णयोः स्वनः ।
पार्श्वोरु-वङ्क्षण-ग्रीवा-रुजाभीक्ष्णं विषूचिका ॥ २२ ॥

रसेषु गृद्धिः सर्वेषु क्षुत् तृष्णा परिकर्तिका ।
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ २३ ॥

वात-हृद्-रोग-गुल्मार्शः-प्लीह-पाण्डु-त्व-शङ्कितः ।
चिराद् दुःखं द्रवं शुष्कं तन्व् आमं शब्द-फेन-वत् ॥ २४ ॥

पुनः पुनः सृजेद् वर्चः पायु-रुक्-श्वास-कास-वान् ।
पित्तेन नील-पीताभं पीताभः सृजति द्रवम् ॥ २५ ॥

८.२५cv पित्तेन नीलं पीताभं ८.२५cv पित्तेन पीत-नीलाभं पूत्य्-अम्लोद्गार-हृत्-कण्ठ-दाहा-रुचि-तृड्-अर्दितः ।
श्लेष्मणा पच्यते दुःखम् अन्नं छर्दिर् अ-रोचकः ॥ २६ ॥

आस्योपदेह-निष्ठीव-कास-हृल्-लास-पीनसाः ।
हृदयं मन्यते स्त्यानम् उदरं स्तिमितं गुरु ॥ २७ ॥

८.२७av आस्योपदेह-माधुर्य- ८.२७bv -कास-ष्ठीवन-पीनसाः उद्गारो दुष्ट-मधुरः सदनं स्त्रीष्व् अ-हर्षणम् ।
भिन्नाम-श्लेष्म-संसृष्ट-गुरु-वर्चः-प्रवर्तनम् ॥ २८ ॥

अ-कृशस्यापि दौर्बल्यं सर्व-जे सर्व-संकरः ।
विभागे ऽङ्गस्य ये चोक्ता विषमाद्यास् त्रयो ऽग्नयः ॥ २९ ॥

ते ऽपि स्युर् ग्रहणी-दोषाः समस् तु स्वास्थ्य-कारणम् ॥ ३०अब् ॥
वात-व्याध्य्-अश्मरी-कुष्ठ-मेहोदर-भगन्दराः ॥ ३०च्द् ॥
अर्शांसि ग्रहणीत्य् अष्टौ महा-रोगाः सु-दुस्-तराः ॥ ३०एf ॥

# अध्याय 09

वस्ति-वस्ति-शिरो-मेढ्र-कटी-वृषण-पायवः ।
एक-संबन्धनाः प्रोक्ता गुदास्थि-विवराश्रयाः ॥ १ ॥

अधो-मुखो ऽपि वस्तिर् हि मूत्र-वाहि-सिरा-मुखैः ।
पार्श्वेभ्यः पूर्यते सूक्ष्मैः स्यन्दमानैर् अन्-आरतम् ॥ २ ॥

यैस् तैर् एव प्रविश्यैनं दोषाः कुर्वन्ति विंशतिम् ।
मूत्राघातान् प्रमेहांश् च कृच्छ्रान् मर्म-समाश्रयान् ॥ ३ ॥

वस्ति-वङ्क्षण-मेढ्रार्ति-युक्तो ऽल्पाल्पं मुहुर् मुहुः ।
मूत्रयेद् वात-जे कृच्छ्रे पैत्ते पीतं स-दाह-रुक् ॥ ४ ॥

रक्तं वा कफ-जे वस्ति-मेढ्र-गौरव-शोफ-वान् ।
स-पिच्छं स-विबन्धं च सर्वैः सर्वात्मकं मलैः ॥ ५ ॥

यदा वायुर् मुखं वस्तेर् आवृत्य परिशोषयेत् ।
मूत्रं स-पित्तं स-कफं स-शुक्रं वा तदा क्रमात् ॥ ६ ॥

संजायते ऽश्मरी घोरा पित्ताद् गोर् इव रोचना ।
श्लेष्माश्रया च सर्वा स्याद् अथास्याः पूर्व-लक्षणम् ॥ ७ ॥

वस्त्य्-आध्मानं तद्-आसन्न-देशेषु परितो ऽति-रुक् ।
मूत्रे च बस्त-गन्ध-त्वं मूत्र-कृच्छ्रं ज्वरो ऽ-रुचिः ॥ ८ ॥

९.८cv मूत्रे बस्त-स-गन्ध-त्वं सामान्य-लिङ्गं रुङ् नाभि-सेवनी-वस्ति-मूर्धसु ।
विशीर्ण-धारं मूत्रं स्यात् तया मार्ग-निरोधने ॥ ९ ॥

९.९dv तथा मार्ग-निरोधने तद्-व्यपायात् सुखं मेहेद् अच्छं गोमेदकोपमम् ।
तत्-संक्षोभात् क्षते सास्रम् आयासाच् चाति-रुग् भवेत् ॥ १० ॥

तत्र वाताद् भृशार्त्य्-आर्तो दन्तान् खादति वेपते ।
मृद्नाति मेहनं नाभिं पीडयत्य् अ-निशं क्वणन् ॥ ११ ॥

सानिलं मुञ्चति शकृन् मुहुर् मेहति बिन्दु-शः ।
श्यावा रूक्षाश्मरी चास्य स्याच् चिता कण्टकैर् इव ॥ १२ ॥

पित्तेन दह्यते वस्तिः पच्यमान इवोष्म-वान् ।
भल्लातकास्थि-संस्थाना रक्ता पीतासिताश्मरी ॥ १३ ॥

९.१३dv रक्त-पीतासिताश्मरी वस्तिर् निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ।
अश्मरी महती श्लक्ष्णा मधु-वर्णाथ-वा सिता ॥ १४ ॥

एता भवन्ति बालानां तेषाम् एव च भूयसा ।
आश्रयोपचयाल्प-त्वाद् ग्रहणाहरणे सुखाः ॥ १५ ॥

शुक्राश्मरी तु महतां जायते शुक्र-धारणात् ।
स्थानाच् च्युतम् अ-मुक्तं हि मुष्कयोर् अन्तरे ऽनिलः ॥ १६ ॥

शोषयत्य् उपसंगृह्य शुक्रं तच् छुष्कम् अश्मरी ।
वस्ति-रुक्-कृच्छ्र-मूत्र-त्व-मुष्क-श्वयथु-कारिणी ॥ १७ ॥

तस्याम् उत्पन्न-मात्रायां शुक्रम् एति विलीयते ।
पीडिते त्व् अवकाशे ऽस्मिन्न् अश्मर्य् एव च शर्करा ॥ १८ ॥

अणु-शो वायुना भिन्ना सा त्व् अस्मिन्न् अनुलोम-गे ।
निरेति सह मूत्रेण प्रतिलोमे विबध्यते ॥ १९ ॥

मूत्र-संधारिणः कुर्याद् रुद्ध्वा वस्तेर् मुखं मरुत् ।
मूत्र-सङ्गं रुजं कण्डूं कदा-चिच् च स्व-धामतः ॥ २० ॥

प्रच्याव्य वस्तिम् उद्वृत्तं गर्भाभं स्थूल-विप्लुतम् ।
करोति तत्र रुग्-दाह-स्पन्दनोद्वेष्टनानि च ॥ २१ ॥

बिन्दु-शश् च प्रवर्तेत मूत्रं वस्तौ तु पीडिते ।
धारया द्वि-विधो ऽप्य् एष वात-वस्तिर् इति स्मृतः ॥ २२ ॥

दुस्-तरो दुस्-तर-तरो द्वितीयः प्रबलानिलः ।
शकृन्-मार्गस्य वस्तेश् च वायुर् अन्तरम् आश्रितः ॥ २३ ॥

अष्ठीलाभं घनं ग्रन्थिं करोत्य् अ-चलम् उन्नतम् ।
वाताष्ठीलेति साध्मान-विण्-मूत्रानिल-सङ्ग-कृत् ॥ २४ ॥

वि-गुणः कुण्डली-भूतो वस्तौ तीव्र-व्यथो ऽनिलः ।
आविध्य मूत्रं भ्रमति स-स्तम्भोद्वेष्ट-गौरवः ॥ २५ ॥

९.२५cv आविश्य मूत्रं भ्रमति मूत्रम् अल्पाल्पम् अथ-वा विमुञ्चति शकृत् सृजन् ।
वात-कुण्डलिकेत्य् एषा मूत्रं तु विधृतं चिरम् ॥ २६ ॥

न निरेति विबद्धं वा मूत्रातीतं तद् अल्प-रुक् ।
विधारणात् प्रतिहतं वातोदावर्तितं यदा ॥ २७ ॥

नाभेर् अधस्-ताद् उदरं मूत्रम् आपूरयेत् तदा ।
कुर्यात् तीव्र-रुग् आध्मानम् अ-पक्तिं मल-संग्रहम् ॥ २८ ॥

तन् मूत्र-जठरं छिद्र-वैगुण्येनानिलेन वा ।
आक्षिप्तम् अल्पं मूत्रं तद् वस्तौ नाले ऽथ-वा मणौ ॥ २९ ॥

९.२९cv आक्षिप्तम् अल्पं मूत्रस्य स्थित्वा स्रवेच् छनैः पश्चात् स-रुजं वाथ नी-रुजम् ।
मूत्रोत्सङ्गः स विच्छिन्न-तच्-छेष-गुरु-शेफसः ॥ ३० ॥

९.३०bv स-रुजं वाथ-वा-रुजम् ९.३०cv मूत्रोत्सङ्गः स विच्छिन्नस् ९.३०cv मूत्रोत्सङ्गः स विच्छिन्नं ९.३०dv तच्-छेष-गुरु-शेफसः अन्तर्
वस्ति-मुखे वृत्तः स्थिरो ऽल्पः सहसा भवेत् ।
अश्मरी-तुल्य-रुग् ग्रन्थिर् मूत्र-ग्रन्थिः स उच्यते ॥ ३१ ॥

मूत्रितस्य स्त्रियं यातो वायुना शुक्रम् उद्धतम् ।
स्थानाच् च्युतं मूत्रयतः प्राक् पश्चाद् वा प्रवर्तते ॥ ३२ ॥

भस्मोदक-प्रतीकाशं मूत्र-शुक्रं तद् उच्यते ।
रूक्ष-दुर्-बलयोर् वाताद् उदावर्तं शकृद् यदा ॥ ३३ ॥

९.३३dv उदावृत्तं शकृद् यदा मूत्र-स्रोतो ऽनुपर्येति संसृष्टं शकृता तदा ।
मूत्रं विट्-तुल्य-गन्धं स्याद् विड्-विघातं तम् आदिशेत् ॥ ३४ ॥

पित्तं व्यायाम-तीक्ष्णोष्ण-भोजनाध्वातपादिभिः ।
प्रवृद्धं वायुना क्षिप्तं वस्त्य्-उपस्थार्ति-दाह-वत् ॥ ३५ ॥

मूत्रं प्रवर्तयेत् पीतं स-रक्तं रक्तम् एव वा ।
उष्णं पुनः पुनः कृच्छ्राद् उष्ण-वातं वदन्ति तम् ॥ ३६ ॥

रूक्षस्य क्लान्त-देहस्य वस्ति-स्थौ पित्त-मारुतौ ।
मूत्र-क्षयं स-रुग्-दाहं जनयेतां तद्-आह्वयम् ॥ ३७ ॥

पित्तं कफो द्वाव् अपि वा संहन्येते ऽनिलेन चेत् ।
कृच्छ्रान् मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ ३८ ॥

स-दाहं रोचना-शङ्ख-चूर्ण-वर्णं भवेच् च तत् ।
शुष्कं समस्त-वर्णं वा मूत्र-सादं वदन्ति तम् ॥ ३९ ॥

इति विस्तरतः प्रोक्ता रोगा मूत्रा-प्रवृत्ति-जाः ।
निदान-लक्षणैर् ऊर्ध्वं वक्ष्यन्ते ऽति-प्रवृत्ति-जाः ॥ ४० ॥

# अध्याय 10

प्रमेहा विंशतिस् तत्र श्लेष्मतो दश पित्ततः ।
षट् चत्वारो ऽनिलात् तेषां मेदो-मूत्र-कफावहम् ॥ १ ॥

अन्न-पान-क्रिया-जातं यत् प्रायस् तत् प्रवर्तकम् ।
स्वादु-अम्ल-लवण-स्निग्ध-गुरु-पिच्छिल-शीतलम् ॥ २ ॥

नव-धान्य-सुरानूप-मांसेक्षु-गुड-गो-रसम् ।
एक-स्थानासन-रतिः शयनं विधि-वर्जितम् ॥ ३ ॥

वस्तिम् आश्रित्य कुरुते प्रमेहान् दूषितः कफः ।
दूषयित्वा वपुः-क्लेद-स्वेद-मेदो-रसामिषम् ॥ ४ ॥

१०.४dv -स्वेद-मेदो-वसामिषम् पित्तं रक्तम् अपि क्षीणे कफादौ मूत्र-संश्रयम् ।
धातून् वस्तिम् उपानीय तत्-क्षये ऽपि च मारुतः ॥ ५ ॥

साध्य-याप्य-परित्याज्या मेहास् तेनैव तद्-भवाः ।
समासम् अ-क्रिय-तया महात्यय-तयापि च ॥ ६ ॥

सामान्यं लक्षणं तेषां प्रभूताविल-मूत्र-ता ।
दोष-दूष्या-विशेषे ऽपि तत्-संयोग-विशेषतः ॥ ७ ॥

१०.७bv प्रभूताकुल-मूत्र-ता मूत्र-वर्णादि-भेदेन भेदो मेहेषु कल्प्यते ।
अच्छं बहु सितं शीतं निर्-गन्धम् उदकोपमम् ॥ ८ ॥

मेहत्य् उदक-मेहेन किञ्-चिच् चाविल-पिच्छिलम् ।
इक्षो रसम् इवात्य्-अर्थं मधुरं चेक्षु-मेहतः ॥ ९ ॥

सान्द्री-भवेत् पर्युषितं सान्द्र-मेहेन मेहति ।
सुरा-मेही सुरा-तुल्यम् उपर्य् अच्छम् अधो घनम् ॥ १० ॥

संहृष्ट-रोमा पिष्टेन पिष्ट-वद् बहलं सितम् ।
शुक्राभं शुक्र-मिश्रं वा शुक्र-मेही प्रमेहति ॥ ११ ॥

१०.११bv पिष्ट-वद् बहुलं सितम् मूर्ताणून् सिकता-मेही सिकता-रूपिणो मलान् ।
शीत-मेही सु-बहु-शो मधुरं भृश-शीतलम् ॥ १२ ॥

१०.१२av मूत्राणून् सिकता-मेही १०.१२av मूत्रे ऽणून् सिकता-मेही शनैः शनैः शनैर्-मेही मन्दं मन्दं प्रमेहति ।
लाला-तन्तु-युतं मूत्रं लाला-मेहेन पिच्छिलम् ॥ १३ ॥

गन्ध-वर्ण-रस-स्पर्शैः क्षारेण क्षार-तोय-वत् ।
नील-मेहेन नीलाभं काल-मेही मषी-निभम् ॥ १४ ॥

हारिद्र-मेही कटुकं हरिद्रा-संनिभं दहत् ।
विस्रं माञ्जिष्ठ-मेहेन मञ्जिष्ठा-सलिलोपमम् ॥ १५ ॥

विस्रम् उष्णं स-लवणं रक्ताभं रक्त-मेहतः ।
वसा-मेही वसा-मिश्रं वसां वा मूत्रयेन् मुहुः ॥ १६ ॥

मज्जानं मज्ज-मिश्रं वा मज्ज-मेही मुहुर् मुहुः ।
हस्ती मत्त इवाजस्रं मूत्रं वेग-विवर्जितम् ॥ १७ ॥

१०.१७av मज्जाभं मज्ज-मिश्रं वा स-लसीकं विबद्धं च हस्ति-मेही प्रमेहति ।
मधु-मेही मधु-समं जायते स किल द्वि-धा ॥ १८ ॥

१०.१८cv मधु-मेहे मधु-समं क्रुद्धे धातु-क्षयाद् वायौ दोषावृत-पथे ऽथ-वा ।
आवृतो दोष-लिङ्गानि सो ऽ-निमित्तं प्रदर्शयेत् ॥ १९ ॥

१०.१९bv दोषावृत-पथे ऽपि वा क्षीणः क्षणात् क्षणात् पूर्णो भजते कृच्छ्र-साध्य-ताम् ।
कालेनोपेक्षिताः सर्वे यद् यान्ति मधु-मेह-ताम् ॥ २० ॥

मधुरं यच् च सर्वेषु प्रायो मध्व् इव मेहति ।
सर्वे ऽपि मधु-मेहाख्या माधुर्याच् च तनोर् अतः ॥ २१ ॥

अ-विपाको ऽ-रुचिश् छर्दिर् निद्रा कासः स-पीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफ-जन्मनाम् ॥ २२ ॥

वस्ति-मेहनयोस् तोदो मुष्कावदरणं ज्वरः ।
दाहस् तृष्णाम्लको मूर्छा विड्-भेदः पित्त-जन्मनाम् ॥ २३ ॥

वातिकानाम् उदावर्त-कम्प-हृद्-ग्रह-लोल-ताः ।
शूलम् उन्निद्र-ता शोषः कासः श्वासश् च जायते ॥ २४ ॥

१०.२४bv -कण्ठ-हृद्-ग्रह-लोल-ताः शराविका कच्छपिका जालिनी विनतालजी ।
मसूरिका सर्षपिका पुत्रिणी स-विदारिका ॥ २५ ॥

१०.२५dv पुत्रिणी च विदारिका विद्रधिश् चेति पिटिकाः प्रमेहोपेक्षया दश ।
संधि-मर्मसु जायन्ते मांसलेषु च धामसु ॥ २६ ॥

अन्तोन्नता मध्य-निम्ना श्यावा क्लेद-रुजान्विता ।
शराव-मान-संस्थाना पिटिका स्याच् छराविका ॥ २७ ॥

अवगाढार्ति-निस्तोदा महा-वस्तु-परिग्रहा ।
श्लक्ष्णा कच्छप-पृष्ठाभा पिटिका कच्छपी मता ॥ २८ ॥

स्तब्धा सिरा-जाल-वती स्निग्ध-स्रावा महाशया ।
रुजा-निस्तोद-बहुला सूक्ष्म-च्छिद्रा च जालिनी ॥ २९ ॥

१०.२९bv स्निग्ध-स्रावा महाश्रया अवगाढ-रुजा-क्लेदा पृष्ठे वा जठरे ऽपि वा ।
महती पिटिका नीला विनता विनता स्मृता ॥ ३० ॥

दहति त्वचम् उत्थाने भृशं कष्टा विसर्पिणी ।
रक्त-कृष्णाति-तृट्-स्फोट-दाह-मोह-ज्वरालजी ॥ ३१ ॥

मान-संस्थानयोस् तुल्या मसूरेण मसूरिका ।
सर्षपा-मान-संस्थाना क्षिप्र-पाका महा-रुजा ॥ ३२ ॥

सर्षपी सर्षपा-तुल्य-पिटिका-परिवारिता ।
पुत्रिणी महती भूरि-सु-सूक्ष्म-पिटिकाचिता ॥ ३३ ॥

१०.३३av सर्षपा सर्षपा-तुल्य- १०.३३dv -सु-सूक्ष्म-पिटिकावृता १०.३३dv -सु-सूक्ष्म-पिटिकान्विता विदारी-कन्द-वद् वृत्ता कठिना च विदारिका ।
विद्रधिर् वक्ष्यते ऽन्य-त्र तत्राद्यं पिटिका-त्रयम् ॥ ३४ ॥

पुत्रिणी च विदारी च दुः-सहा बहु-मेदसः ।
सह्याः पित्तोल्बणास् त्व् अन्याः संभवन्त्य् अल्प-मेदसः ॥ ३५ ॥

तासु मेह-वशाच् च स्याद् दोषोद्रेको यथा-यथम् ॥ ३६अब् ॥
प्रमेहेण विनाप्य् एता जायन्ते दुष्ट-मेदसः ॥ ३६च्द् ॥
तावच् च नोपलक्ष्यन्ते यावद् वस्तु-परिग्रहः ॥ ३६एf ॥
हारिद्र-वर्णं रक्तं वा मेह-प्राग्-रूप-वर्जितम् ।
यो मूत्रयेन् न तं मेहं रक्त-पित्तं तु तद् विदुः ॥ ३७ ॥

१०.३७dv रक्त-पित्तं तु तं विदुः १०.३७dv रक्त-पित्तं च तद् विदुः स्वेदो ऽङ्ग-गन्धः शिथिल-त्वम् अङ्गे शय्यासन-स्वप्न-सुखाभिषङ्गः ।
हृन्-नेत्र-जिह्वा-श्रवणोपदेहो घनाङ्ग-ता केश-नखाति-वृद्धिः ॥ ३८ ॥

१०.३८bv शय्यासन-स्थान-सुखाभिलाषः शीत-प्रिय-त्वं गल-तालु-शोषो माधुर्यम् आस्ये कर-पाद-दाहः ।
भविष्यतो मेह-गणस्य रूपं मूत्रे ऽभिधावन्ति पिपीलिकाश् च ॥ ३९ ॥

दृष्ट्वा प्रमेहं मधुरं स-पिच्छं मधूपमं स्याद् विविधो विचारः ।
संपूरणाद् वा कफ-संभवः स्यात् क्षीणेषु दोषेष्व् अनिलात्मको वा ॥ ४० ॥

१०.४०cv संतर्पणाद् वा कफ-संभवः स्यात् स-पूर्व-रूपाः कफ-पित्त-मेहाः क्रमेण ये वात-कृताश् च मेहाः ।
साध्या न ते पित्त-कृतास् तु याप्याः साध्यास् तु मेदो यदि नाति-दुष्टम् ॥ ४१ ॥

१०.४१dv साध्याश् च मेदो यदि नाति-दुष्टम्

# अध्याय 11

भुक्तैः पर्युषितात्य्-उष्ण-रूक्ष-शुष्क-विदाहिभिः ।
जिह्म-शय्या-विचेष्टाभिस् तैस् तैश् चासृक्-प्रदूषणैः ॥ १ ॥

दुष्ट-त्वङ्-मांस-मेदो-ऽस्थि-स्नाय्व्-असृक्-कण्डराश्रयः ।
यः शोफो बहिर् अन्तर् वा महा-मूलो महा-रुजः ॥ २ ॥

११.२av दुष्टस् त्वङ्-मांस-मेदो-ऽस्थि- वृत्तः स्याद् आयतो यो वा स्मृतः षो-ढा स विद्रधिः ।
दोषैः पृथक् समुदितैः शोणितेन क्षतेन च ॥ ३ ॥

बाह्यो ऽत्र तत्र तत्राङ्गे दारुणो ग्रथितोन्नतः ।
आन्तरो दारुण-तरो गम्भीरो गुल्म-वद् घनः ॥ ४ ॥

वल्मीक-वत् समुच्छ्रायी शीघ्र-घात्य् अग्नि-शस्त्र-वत् ।
नाभि-वस्ति-यकृत्-प्लीह-क्लोम-हृत्-कुक्षि-वङ्क्षणे ॥ ५ ॥

स्याद् वृक्कयोर् अपाने च वातात् तत्राति-तीव्र-रुक् ।
श्यावारुणश् चिरोत्थान-पाको विषम-संस्थितिः ॥ ६ ॥

११.६av स्याद् वृक्कयोर् अपाने वा व्यध-च्छेद-भ्रमानाह-स्पन्द-सर्पण-शब्द-वान् ।
रक्त-ताम्रासितः पित्तात् तृण्-मोह-ज्वर-दाह-वान् ॥ ७ ॥

क्षिप्रोत्थान-प्रपाकश् च पाण्डुः कण्डू-युतः कफात् ।
सोत्क्लेश-शीतक-स्तम्भ-जृम्भा-रोचक-गौरवः ॥ ८ ॥

चिरोत्थान-विपाकश् च संकीर्णः संनिपाततः ।
सामर्थ्याच् चात्र विभजेद् बाह्याभ्यन्तर-लक्षणम् ॥ ९ ॥

११.९av चिरोत्थान-प्रपाकश् च कृष्ण-स्फोटावृतः श्यावस् तीव्र-दाह-रुजा-ज्वरः ।
पित्त-लिङ्गो ऽसृजा बाह्यः स्त्रीणाम् एव तथान्तरः ॥ १० ॥

शस्त्राद्यैर् अभिघातेन क्षते वा-पथ्य-कारिणः ।
क्षतोष्मा वायु-विक्षिप्तः स-रक्तं पित्तम् ईरयन् ॥ ११ ॥

११.११dv स-रक्तं पित्तम् ईरयेत् पित्तासृग्-लक्षणं कुर्याद् विद्रधिं भूर्य्-उपद्रवम् ।
तेषूपद्रव-भेदश् च स्मृतो ऽधिष्ठान-भेदतः ॥ १२ ॥

नाभ्यां हिध्मा भवेद् वस्तौ मूत्रं कृच्छ्रेण पूति च ।
श्वासो यकृति रोधस् तु प्लीहन्य् उच्छ्वासस्य तृट् पुनः ॥ १३ ॥

गल-ग्रहश् च क्लोम्नि स्यात् सर्वाङ्ग-प्रग्रहो हृदि ।
प्रमोहस् तमकः कासो हृदये घट्टनं व्यथा ॥ १४ ॥

कुक्षि-पार्श्वान्तरांसार्तिः कुक्षाव् आटोप-जन्म च ।
सक्थ्नोर् ग्रहो वङ्क्षणयोर् वृक्कयोः कटि-पृष्ठयोः ॥ १५ ॥

पार्श्वयोश् च व्यथा पायौ पवनस्य निरोधनम् ।
आम-पक्व-विदग्ध-त्वं तेषां शोफ-वद् आदिशेत् ॥ १६ ॥

नाभेर् ऊर्ध्वं मुखात् पक्वाः प्रस्रवन्त्य् अधरे गुदात् ।
गुदास्यान् नाभि-जो विद्याद् दोषं क्लेदाच् च विद्रधौ ॥ १७ ॥

११.१७cv उभाभ्यां नाभि-जो विद्याद् यथा-स्वं व्रण-वत् तत्र विवर्ज्यः संनिपात-जः ।
पक्वो हृन्-नाभि-वस्ति-स्थो भिन्नो ऽन्तर् बहिर् एव वा ॥ १८ ॥

पक्वश् चान्तः स्रवन् वक्त्रात् क्षीणस्योपद्रवान्वितः ।
एवम् एव स्तन-सिरा विवृताः प्राप्य योषिताम् ॥ १९ ॥

सूतानां गर्भिणीनां वा संभवेच् छ्वयथुर् घनः ।
स्तने स-दुग्धे ऽ-दुग्धे वा बाह्य-विद्रधि-लक्षणः ॥ २० ॥

नाडीनां सूक्ष्म-वक्त्र-त्वात् कन्यानां न स जायते ।
क्रुद्धो रुद्ध-गतिर् वायुः शोफ-शूल-करश् चरन् ॥ २१ ॥

११.२१bv कन्यानां तु न जायते ११.२१cv क्रुद्धो ऽन्-ऊर्ध्व-गतिर् वायुः मुष्कौ वङ्क्षणतः प्राप्य फल-कोशाभिवाहिनीः ।
प्रपीड्य धमनीर् वृद्धिं करोति फल-कोशयोः ॥ २२ ॥

दोषास्र-मेदो-मूत्रान्त्रैः स वृद्धिः सप्त-धा गदः ।
मूत्रान्त्र-जाव् अप्य् अनिलाद् धेतु-भेदस् तु केवलम् ॥ २३ ॥

वात-पूर्ण-दृति-स्पर्शो रूक्षो वाताद् अ-हेतु-रुक् ।
पक्वोदुम्बर-संकाशः पित्ताद् दाहोष्म-पाक-वान् ॥ २४ ॥

कफाच् छीतो गुरुः स्निग्धः कण्डू-मान् कठिनो ऽल्प-रुक् ।
कृष्ण-स्फोटावृतः पित्त-वृद्धि-लिङ्गश् च रक्ततः ॥ २५ ॥

११.२५cv कृष्णः स्फोटावृतः पित्त- कफ-वन् मेदसा वृद्धिर् मृदुस् ताल-फलोपमः ।
मूत्र-धारण-शीलस्य मूत्र-जः स तु गच्छतः ॥ २६ ॥

अम्भोभिः पूर्ण-दृति-वत् क्षोभं याति स-रुङ् मृदुः ।
मूत्र-कृच्छ्रम् अधस्-ताच् च वलयं फल-कोशयोः ॥ २७ ॥

वात-कोपिभिर् आहारैः शीत-तोयावगाहनैः ।
धारणेरण-भाराध्व-विषमाङ्ग-प्रवर्तनैः ॥ २८ ॥

क्षोभणैः क्षुभितो ऽन्यैश् च क्षुद्रान्त्रावयवं यदा ।
पवनो वि-गुणी-कृत्य स्व-निवेशाद् अधो नयेत् ॥ २९ ॥

११.२९cv पवनो द्वि-गुणी-कृत्य कुर्याद् वङ्क्षण-संधि-स्थो ग्रन्थ्य्-आभं श्वयथुं तदा ॥ ३०अब् ॥
उपेक्ष्यमाणस्य च मुष्क-वृद्धिम् आध्मान-रुक्-स्तम्भ-वतीं स वायुः ॥ ३०च्द् ॥
प्रपीडितो ऽन्तः स्वन-वान् प्रयाति प्रध्मापयन्न् एति पुनश् च मुक्तः ॥ ३०ef ॥
अन्त्र-वृद्धिर् अ-साध्यो ऽयं वात-वृद्धि-समाकृतिः ॥ ३१ ॥

इति वृद्धि-निदानम् अथ गुल्म-निदानम् ॥ ३१+१ ॥

रूक्ष-कृष्णारुण-सिरा-तन्तु-जाल-गवाक्षितः ।
गुल्मो ऽष्ट-धा पृथग् दोषैः संसृष्टैर् निचयं गतैः ॥ ३२ ॥

आर्तवस्य च दोषेण नारीणां जायते ऽष्टमः ।
ज्वर-च्छर्द्य्-अतिसाराद्यैर् वमनाद्यैश् च कर्मभिः ॥ ३३ ॥

कर्शितो वातलान्य् अत्ति शीतं वाम्बु बुभुक्षितः ।
यः पिबत्य् अनु चान्नानि लङ्घन-प्लवनादिकम् ॥ ३४ ॥

११.३४bv शीतं चाम्बु बुभुक्षितः सेवते देह-संक्षोभि च्छर्दिं वा समुदीरयेत् ।
अन्-उदीर्णाम् उदीर्णान् वा वातादीन् न विमुञ्चति ॥ ३५ ॥

स्नेह-स्वेदाव् अन्-अभ्यस्य शोधनं वा निषेवते ।
शुद्धो वाशु विदाहीनि भजते स्यन्दनानि वा ॥ ३६ ॥

वातोल्बणास् तस्य मलाः पृथक् क्रुद्धा द्वि-शो ऽथ-वा ।
सर्वे वा रक्त-युक्ता वा महा-स्रोतो-ऽनुशायिनः ॥ ३७ ॥

ऊर्ध्वाधो-मार्गम् आवृत्य कुर्वते शूल-पूर्वकम् ।
स्पर्शोपलभ्यं गुल्माख्यम् उत्प्लुतं ग्रन्थि-रूपिणम् ॥ ३८ ॥

११.३८dv उन्नतं ग्रन्थि-रूपिणम् कर्शनात् कफ-विट्-पित्तैर् मार्गस्यावरणेन वा ।
वायुः कृताश्रयः कोष्ठे रौक्ष्यात् काठिन्यम् आगतः ॥ ३९ ॥

स्व-तन्त्रः स्वाश्रये दुष्टः पर-तन्त्रः पराश्रये ।
पिण्डित-त्वाद् अ-मूर्तो ऽपि मूर्त-त्वम् इव संश्रितः ॥ ४० ॥

गुल्म इत्य् उच्यते वस्ति-नाभि-हृत्-पार्श्व-संश्रयः ।
वातान् मन्या-शिरः-शूलं ज्वर-प्लीहान्त्र-कूजनम् ॥ ४१ ॥

व्यधः सूच्येव विट्-सङ्गः कृच्छ्राद् उच्छ्वसनं मुहुः ।
स्तम्भो गात्रे मुखे शोषः कार्श्यं विषम-वह्नि-ता ॥ ४२ ॥

रूक्ष-कृष्ण-त्वग्-आदि-त्वं चल-त्वाद् अनिलस्य च ।
अ-निरूपित-संस्थान-स्थान-वृद्धि-क्षय-व्यथः ॥ ४३ ॥

पिपीलिका-व्याप्त इव गुल्मः स्फुरति तुद्यते ।
पित्ताद् दाहो ऽम्लको मूर्छा-विड्-भेद-स्वेद-तृड्-ज्वराः ॥ ४४ ॥

हारिद्र-त्वं त्वग्-आद्येषु गुल्मश् च स्पर्शना-सहः ।
दूयते दीप्यते सोष्मा स्व-स्थानं दहतीव च ॥ ४५ ॥

कफात् स्तैमित्यम् अ-रुचिः सदनं शिशिर-ज्वरः ।
पीनसालस्य-हृल्-लास-कास-शुक्ल-त्वग्-आदि-ताः ॥ ४६ ॥

गुल्मो ऽवगाढः कठिनो गुरुः सुप्तः स्थिरो ऽल्प-रुक् ।
स्व-दोष-स्थान-धामानः स्वे स्वे काले च रुक्-कराः ॥ ४७ ॥

प्रायस् त्रयस् तु द्वन्द्वोत्था गुल्माः संसृष्ट-लक्षणाः ।
सर्व-जस् तीव्र-रुग्-दाहः शीघ्र-पाकी घनोन्नतः ॥ ४८ ॥

सो ऽ-साध्यो रक्त-गुल्मस् तु स्त्रिया एव प्रजायते ।
ऋतौ वा नव-सूता वा यदि वा योनि-रोगिणी ॥ ४९ ॥

सेवते वातलानि स्त्री क्रुद्धस् तस्याः समीरणः ।
निरुणद्ध्य् आर्तवं योन्यां प्रति-मासम् अवस्थितम् ॥ ५० ॥

कुक्षिं करोति तद्-गर्भ-लिङ्गम् आविष्-करोति च ।
हृल्-लास-दौर्हृद-स्तन्य-दर्शन-क्षाम-तादिकम् ॥ ५१ ॥

क्रमेण वायु-संसर्गात् पित्त-योनि-तया च तत् ।
शोणितं कुरुते तस्या वात-पित्तोत्थ-गुल्म-जान् ॥ ५२ ॥

रुक्-स्तम्भ-दाहातीसार-तृड्-ज्वरादीन् उपद्रवान् ।
गर्भाशये च सु-तरां शूलं दुष्टासृग्-आश्रये ॥ ५३ ॥

योन्याश् च स्राव-दौर्गन्ध्य-तोद-स्पन्दन-वेदनाः ।
न चाङ्गैर् गर्भ-वद् गुल्मः स्फुरत्य् अपि तु शूल-वान् ॥ ५४ ॥

११.५४bv -तोद-स्फुरण-वेदनाः ११.५४bv -क्लेद-स्वेदन-वेदनाः पिण्डी-भूतः स एवास्याः कदा-चित् स्पन्दते चिरात् ।
न चास्या वर्धते कुक्षिर् गुल्म एव तु वर्धते ॥ ५५ ॥

स्व-दोष-संश्रयो गुल्मः सर्वो भवति तेन सः ।
पाकं चिरेण भजते नैव वा विद्रधिः पुनः ॥ ५६ ॥

पच्यते शीघ्रम् अत्य्-अर्थं दुष्ट-रक्ताश्रय-त्वतः ।
अतः शीघ्र-विदाहि-त्वाद् विद्रधिः सो ऽभिधीयते ॥ ५७ ॥

गुल्मे ऽन्तर्-आश्रये वस्ति-कुक्षि-हृत्-प्लीह-वेदनाः ।
अग्नि-वर्ण-बल-भ्रंशो वेगानां चा-प्रवर्तनम् ॥ ५८ ॥

११.५८bv -कुक्षि-हृत्-पार्श्व-वेदनाः अतो विपर्ययो बाह्ये कोष्ठाङ्गेषु तु नाति-रुक् ।
वैवर्ण्यम् अवकाशस्य बहिर् उन्नत-ताधिकम् ॥ ५९ ॥

साटोपम् अत्य्-उग्र-रुजम् आध्मानम् उदरे भृशम् ।
ऊर्ध्वाधो-वात-रोधेन तम् आनाहं प्रचक्षते ॥ ६० ॥

घनो ऽष्ठीलोपमो ग्रन्थिर् अष्ठीलोर्ध्वं समुन्नतः ।
आनाह-लिङ्गस् तिर्यक् तु प्रत्यष्ठीला तद्-आकृतिः ॥ ६१ ॥

११.६१cv आनाह-लिङ्गस् तिर्यक् च पक्वाशयाद् गुदोपस्थं वायुस् तीव्र-रुजः प्रयान् ।
तूणी प्रतूणी तु भवेत् स एवातो विपर्यये ॥ ६२ ॥

उद्गार-बाहुल्य-पुरीष-बन्ध-तृप्त्य्-अ-क्षम-त्वान्त्र-विकूजनानि ।
आटोपम् आध्मानम् अ-पक्ति-शक्तिम् आसन्न-गुल्मस्य वदन्ति चिह्नम् ॥ ६३ ॥

११.६३cv आटोपम् आध्मानम् अ-पक्त्य्-अ-शक्तिम्

# अध्याय 12

रोगाः सर्वे ऽपि मन्दे ऽग्नौ सु-तराम् उदराणि तु ।
अ-जीर्णान् मलिनैश् चान्नैर् जायन्ते मल-संचयात् ॥ १ ॥

ऊर्ध्वाधो धातवो रुद्ध्वा वाहिनीर् अम्बु-वाहिनीः ।
प्राणाग्न्य्-अपानान् संदूष्य कुर्युस् त्वङ्-मांस-संधि-गाः ॥ २ ॥

आध्माप्य कुक्षिम् उदरम् अष्ट-धा तच् च भिद्यते ।
पृथग् दोषैः समस्तैश् च प्लीह-बद्ध-क्षतोदकैः ॥ ३ ॥

तेनार्ताः शुष्क-ताल्व्-ओष्ठाः शून-पाद-करोदराः ।
नष्ट-चेष्टा-बलाहाराः कृशाः प्रध्मात-कुक्षयः ॥ ४ ॥

स्युः प्रेत-रूपाः पुरुषा भाविनस् तस्य लक्षणम् ।
क्षुन्-नाशो ऽन्नं चिरात् सर्वं स-विदाहं च पच्यते ॥ ५ ॥

१२.५dv स-विदाहं विपच्यते जीर्णा-जीर्णं न जानाति सौहित्यं सहते न च ।
क्षीयते बलतः शश्वच् छ्वसित्य् अल्पे ऽपि चेष्टिते ॥ ६ ॥

वृद्धिर् विषो ऽ-प्रवृत्तिश् च किञ्-चिच् छोफश् च पादयोः ।
रुग्-वस्ति-संधौ तत-ता लघ्व्-अल्पा-भोजनैर् अपि ॥ ७ ॥

१२.७av वृद्धिर् विषो ऽ-प्रवृत्तिर् वा राजी-जन्म वली-नाशो जठरे जठरेषु तु ।
सर्वेषु तन्द्रा सदनं मल-सङ्गो ऽल्प-वह्नि-ता ॥ ८ ॥

दाहः श्वयथुर् आध्मानम् अन्ते सलिल-संभवः ।
सर्वं त्व् अ-तोयम् अरुणम् अ-शोफं नाति-भारिकम् ॥ ९ ॥

गवाक्षितं सिरा-जालैः सदा गुडगुडायते ।
नाभिम् अन्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ॥ १० ॥

मारुतो हृत्-कटी-नाभि-पायु-वङ्क्षण-वेदनाः ।
स-शब्दो निश्चरेद् वायुर् विड् बद्धा मूत्रम् अल्पकम् ॥ ११ ॥

१२.११bv -पायु-वङ्क्षण-वेदना नाति-मन्दो ऽनलो लौल्यं न च स्याद् वि-रसं मुखम् ।
तत्र वातोदरे शोफः पाणि-पान्-मुष्क-कुक्षिषु ॥ १२ ॥

कुक्षि-पार्श्वोदर-कटी-पृष्ठ-रुक् पर्व-भेदनम् ।
शुष्क-कासो ऽङ्ग-मर्दो ऽधो-गुरु-ता मल-संग्रहः ॥ १३ ॥

श्यावारुण-त्वग्-आदि-त्वम् अ-कस्माद् वृद्धि-ह्रास-वत् ।
स-तोद-भेदम् उदरं तनु-कृष्ण-सिरा-ततम् ॥ १४ ॥

१२.१४dv तनु कृष्ण-सिरा-ततम् आध्मात-दृति-वच् छब्दम् आहतं प्रकरोति च ।
वायुश् चात्र स-रुक्-शब्दो विचरेत् सर्वतो-गतिः ॥ १५ ॥

पित्तोदरे ज्वरो मूर्छा दाहस् तृट् कटुकास्य-ता ।
भ्रमो ऽतीसारः पीत-त्वं त्वग्-आदाव् उदरं हरित् ॥ १६ ॥

पीत-ताम्र-सिरानद्धं स-स्वेदं सोष्म दह्यते ।
धूमायति मृदु-स्पर्शं क्षिप्र-पाकं प्रदूयते ॥ १७ ॥

१२.१७cv धूमायते मृदु-स्पर्शं श्लेष्मोदरे ऽङ्ग-सदनं स्वापः श्वयथु-गौरवम् ।
निद्रोत्क्लेशा-रुचि-श्वास-कास-शुक्ल-त्वग्-आदि-ता ॥ १८ ॥

१२.१८bv स्वाप-श्वयथु-गौरवम् उदरं स्तिमितं श्लक्ष्णं शुक्ल-राजी-ततं महत् ।
चिराभिवृद्धि कठिनं शीत-स्पर्शं गुरु स्थिरम् ॥ १९ ॥

१२.१९av उदरं स्तिमितं स्निग्धं त्रि-दोष-कोपनैस् तैस् तैः स्त्री-दत्तैश् च रजो-मलैः ।
गर-दूषी-विषाद्यैश् च स-रक्ताः संचिता मलाः ॥ २० ॥

कोष्ठं प्राप्य विकुर्वाणाः शोष-मूर्छा-भ्रमान्वितम् ।
कुर्युस् त्रि-लिङ्गम् उदरं शीघ्र-पाकं सु-दारुणम् ॥ २१ ॥

बाधते तच् च सु-तरां शीत-वाताभ्र-दर्शने ।
अत्य्-आशितस्य संक्षोभाद् यान-यानादि-चेष्टितैः ॥ २२ ॥

१२.२२bv शीत-वाताभ्र-दर्शनैः अति-व्यवाय-कर्माध्व-वमन-व्याधि-कर्शनैः ।
वाम-पार्श्वाश्रितः प्लीहा च्युतः स्थानाद् विवर्धते ॥ २३ ॥

शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ।
सो ऽष्ठीलेवाति-कठिनः प्राक् ततः कूर्म-पृष्ठ-वत् ॥ २४ ॥

१२.२४dv प्राकृतः कूर्म-पृष्ठ-वत् क्रमेण वर्धमानश् च कुक्षाव् उदरम् आवहेत् ।
श्वास-कास-पिपासास्य-वैरस्याध्मान-रुग्-ज्वरैः ॥ २५ ॥

पाण्डु-त्व-मूर्छा-छर्दीभिर् दाह-मोहैश् च संयुतम् ।
अरुणाभं वि-वर्णं वा नील-हारिद्र-राजि-मत् ॥ २६ ॥

१२.२६av पाण्डु-त्व-मूर्छाति-छर्दि- १२.२६bv -दाह-मोहैश् च संयुतम् उदावर्त-रुजानाहैर् मोह-तृड्-दहन-ज्वरैः ।
गौरवा-रुचि-काठिन्यैर् विद्यात् तत्र मलान् क्रमात् ॥ २७ ॥

१२.२७av उदावर्त-रुग्-आनाहैर् प्लीह-वद् दक्षिणात् पार्श्वात् कुर्याद् यकृद् अपि च्युतम् ।
पक्ष्म-वालैः सहान्नेन भुक्तैर् बद्धायने गुदे ॥ २८ ॥

दुर्-नामभिर् उदावर्तैर् अन्यैर् वान्त्रोपलेपिभिः ।
वर्चः-पित्त-कफान् रुद्ध्वा करोति कुपितो ऽनिलः ॥ २९ ॥

१२.२९bv अन्नैर् वान्त्रोपलेपिभिः अपानो जठरं तेन स्युर् दाह-ज्वर-तृट्-क्षवाः ।
कास-श्वासोरु-सदनं शिरो-हृन्-नाभि-पायु-रुक् ॥ ३० ॥

१२.३०bv स्युर् दाह-ज्वर-तृट्-क्षुधाः १२.३०bv स्युर् दाह-ज्वर-तृट्-क्षुतः मल-सङ्गो ऽ-रुचिश् छर्दिर् उदरं मूढ-मारुतम् ।
स्थिरं नीलारुण-सिरा-राजी-नद्धम् अ-राजि वा ॥ ३१ ॥

नाभेर् उपरि च प्रायो गो-पुच्छाकृति जायते ।
अस्थ्य्-आदि-शल्यैः सान्नैश् चेद् भुक्तैर् अत्य्-अशनेन वा ॥ ३२ ॥

१२.३२cv अस्थ्य्-आदि-शल्यैः सान्नैश् च भिद्यते पच्यते वान्त्रं तच्-छिद्रैश् च स्रवन् बहिः ।
आम एव गुदाद् एति ततो ऽल्पाल्पं स-विड्-रसः ॥ ३३ ॥

१२.३३av भिद्यते पच्यते चान्त्रं १२.३३dv ऽल्पाल्पः स-विड्-रसः तुल्यः कुणप-गन्धेन पिच्छिलः पीत-लोहितः ।
शेषश् चापूर्य जठरं जठरं घोरम् आवहेत् ॥ ३४ ॥

वर्धयेत् तद् अधो नाभेर् आशु चैति जलात्म-ताम् ।
उद्रिक्त-दोष-रूपं च व्याप्तं च श्वास-तृड्-भ्रमैः ॥ ३५ ॥

१२.३५av वर्धते तद् अधो नाभेर् १२.३५dv व्याप्तं च श्वास-तृड्-ज्वरैः छिद्रोदरम् इदं प्राहुः परिस्रावीति चापरे ।
प्रवृत्त-स्नेह-पानादेः सहसामाम्बु-पायिनः ॥ ३६ ॥

अत्य्-अम्बु-पानान् मन्दाग्नेः क्षीणस्याति-कृशस्य वा ।
रुद्ध्वाम्बु-मार्गान् अनिलः कफश् च जल-मूर्छितः ॥ ३७ ॥

वर्धयेतां तद् एवाम्बु तत्-स्थानाद् उदराश्रितौ ।
ततः स्याद् उदरं तृष्णा-गुद-स्रुति-रुजान्वितम् ॥ ३८ ॥

१२.३८dv -गुद-स्रुति-रुजा-युतम् कास-श्वासा-रुचि-युतं नाना-वर्ण-सिरा-ततम् ।
तोय-पूर्ण-दृति-स्पर्श-शब्द-प्रक्षोभ-वेपथु ॥ ३९ ॥

१२.३९bv नाना-वर्ण-सिरान्वितम् १२.३९bv नाना-वर्ण-सिराचितम् १२.३९bv नाना-वर्ण-सिरावृतम् दकोदरं महत् स्निग्धं स्थिरम् आवृत्त-नाभि तत् ।
उपेक्षया च सर्वेषु दोषाः स्व-स्थानतश् च्युताः ॥ ४० ॥

पाकाद् द्रवा द्रवी-कुर्युः संधि-स्रोतो-मुखान्य् अपि ।
स्वेदश् च बाह्य-स्रोतःसु विहतस् तिर्यग्-आस्थितः ॥ ४१ ॥

१२.४१av पाकाद् द्रवाद् द्रवी-कुर्युः तद् एवोदकम् आप्याय्य पिच्छां कुर्यात् तदा भवेत् ।
गुरूदरं स्थिरं वृत्तम् आहतं च न शब्द-वत् ॥ ४२ ॥

मृदु व्यपेत-राजीकं नाभ्यां स्पृष्टं च सर्पति ।
तद् अनूदक-जन्मास्मिन् कुक्षि-वृद्धिस् ततो ऽधिकम् ॥ ४३ ॥

सिरान्तर्धानम् उदक-जठरोक्तं च लक्षणम् ।
वात-पित्त-कफ-प्लीह-संनिपातोदकोदरम् ॥ ४४ ॥

कृच्छ्रं यथोत्तरं पक्षात् परं प्रायो ऽपरे हतः ।
सर्वं च जात-सलिलं रिष्टोक्तोपद्रवान्वितम् ॥ ४५ ॥

जन्मनैवोदरं सर्वं प्रायः कृच्छ्र-तमं मतम् ।
बलिनस् तद् अ-जाताम्बु यत्न-साध्यं नवोत्थितम् ॥ ४६ ॥

# अध्याय 13

पित्त-प्रधानाः कुपिता यथोक्तैः कोपनैर् मलाः ।
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥ १ ॥

धमनीर् दश संप्राप्य व्याप्नुवत् सकलां तनुम् ।
श्लेष्म-त्वग्-रक्त-मांसानि प्रदूष्यान्तरम् आश्रितम् ॥ २ ॥

त्वङ्-मांसयोस् तत् कुरुते त्वचि वर्णान् पृथग्-विधान् ।
पाण्डु-हारिद्र-हरितान् पाण्डु-त्वं तेषु चाधिकम् ॥ ३ ॥

यतो ऽतः पाण्डुर् इत्य् उक्तः स रोगस् तेन गौरवम् ।
धातूनां स्याच् च शैथिल्यम् ओजसश् च गुण-क्षयः ॥ ४ ॥

ततो ऽल्प-रक्त-मेदस्को निः-सारः स्याच् छलथेन्द्रियः ।
मृद्यमानैर् इवाङ्गैर् ना द्रवता हृदयेन च ॥ ५ ॥

१३.५bv निः-सारः शिथिलेन्द्रियः १३.५dv द्रवता हृदयेन वा शूनाक्षि-कूटः सदनः कोपनः ष्ठीवनो ऽल्प-वाक् ।
अन्न-द्विट् शिशिर-द्वेषी शीर्ण-रोमा हतानलः ॥ ६ ॥

१३.६av शूनाक्षि-कूट-वदनः १३.६bv कोपनः स्वेदनो ऽल्प-वाक् १३.६bv कोपनः सदनो ऽल्प-वाक् सन्न-सक्थो ज्वरी श्वासी कर्ण-क्ष्वेडी भ्रमी श्रमी ।
स पञ्च-धा पृथग् दोषैः समस्तैर् मृत्तिकादनात् ॥ ७ ॥

१३.७av सन्न-सक्थी ज्वरी श्वासी प्राग्-रूपम् अस्य हृदय-स्पन्दनं रूक्ष-ता त्वचि ।
अ-रुचिः पीत-मूत्र-त्वं स्वेदा-भावो ऽल्प-वह्नि-ता ॥ ८ ॥

सादः श्रमो ऽनिलात् तत्र गात्र-रुक्-तोद-कम्पनम् ।
कृष्ण-रूक्षारुण-सिरा-नख-विण्-मूत्र-नेत्र-ता ॥ ९ ॥

शोफानाहास्य-वैरस्य-विट्-शोषाः पार्श्व-मूर्ध-रुक् ।
पित्ताद् धरित-पीताभ-सिरादि-त्वं ज्वरस् तमः ॥ १० ॥

तृट्-स्वेद-मूर्छा-शीतेच्छा दौर्गन्ध्यं कटु-वक्त्र-ता ।
वर्चो-भेदो ऽम्लको दाहः कफाच् छुक्ल-सिरादि-ता ॥ ११ ॥

तन्द्रा लवण-वक्त्र-त्वं रोम-हर्षः स्वर-क्षयः ।
कासश् छर्दिश् च निचयान् मिश्र-लिङ्गो ऽति-दुः-सहः ॥ १२ ॥

१३.१२bv हर्षो रोम्णां स्वर-क्षयः मृत् कषायानिलं पित्तम् ऊषरा मधुरा कफम् ।
दूषयित्वा रसादींश् च रौक्ष्याद् भुक्तं विरूक्ष्य च ॥ १३ ॥

स्रोतांस्य् अ-पक्वैवापूर्य कुर्याद् रुद्ध्वा च पूर्व-वत् ।
पाण्डु-रोगं ततः शून-नाभि-पादास्य-मेहनः ॥ १४ ॥

पुरीषं कृमि-मन् मुञ्चेद् भिन्नं सासृक् कफं नरः ।
यः पाण्डु-रोगी सेवेत पित्तलं तस्य कामलाम् ॥ १५ ॥

कोष्ठ-शाखाश्रयां पित्तं दग्ध्वासृङ्-मांसम् आवहेत् ।
हारिद्र-नेत्र-मूत्र-त्वङ्-नख-वक्त्र-शकृत्-तया ॥ १६ ॥

१३.१६av कोष्ठ-शाखाश्रयं पित्तं दाहा-विपाक-तृष्णा-वान् भेकाभो दुर्-बलेन्द्रियः ।
भवेत् पित्तोल्बणस्यासौ पाण्डु-रोगाद् ऋते ऽपि च ॥ १७ ॥

उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भ-कामला ।
हरित-श्याव-पीत-त्वं पाण्डु-रोगे यदा भवेत् ॥ १८ ॥

वात-पित्ताद् भ्रमस् तृष्णा स्त्रीष्व् अ-हर्षो मृदुर् ज्वरः ।
तन्द्रा बलानल-भ्रंशो लोढरं तं हलीमकम् ॥ १९ ॥

अलसं चेति शंसन्ति तेषां पूर्वम् उपद्रवाः ।
शोफ-प्रधानाः कथिताः स एवातो निगद्यते ॥ २० ॥

पित्त-रक्त-कफान् वायुर् दुष्टो दुष्टान् बहिः-सिराः ।
नीत्वा रुद्ध-गतिस् तैर् हि कुर्यात् त्वङ्-मांस-संश्रयम् ॥ २१ ॥

उत्सेधं संहतं शोफं तम् आहुर् निचयाद् अतः ।
सर्वं हेतु-विशेषैस् तु रूप-भेदान् नवात्मकम् ॥ २२ ॥

दोषैः पृथग् द्वयैः सर्वैर् अभिघाताद् विषाद् अपि ।
द्वि-धा वा निजम् आगन्तुं सर्वाङ्गैकाङ्ग-जं च तम् ॥ २३ ॥

पृथून्नत-ग्रथित-ता-विशेषैश् च त्रि-धा विदुः ।
सामान्य-हेतुः शोफानां दोष-जानां विशेषतः ॥ २४ ॥

व्याधि-कर्मोपवासादि-क्षीणस्य भजतो द्रुतम् ।
अति-मात्रम् अथान्यस्य गुर्व्-अम्ल-स्निग्ध-शीतलम् ॥ २५ ॥

१३.२५bv -क्षीणस्य भजतो द्रवम् १३.२५cv अति-मात्रम् अथान्नं च लवण-क्षार-तीक्ष्णोष्ण-शाकाम्बु स्वप्न-जागरम् ।
मृद्-ग्राम्य-मांस-वल्लूरम् अ-जीर्ण-श्रम-मैथुनम् ॥ २६ ॥

पदातेर् मार्ग-गमनं यानेन क्षोभिणापि वा ।
श्वास-कासातिसारार्शो-जठर-प्रदर-ज्वराः ॥ २७ ॥

विषूच्य्-अलसक-च्छर्दि-गर्भ-विसर्प-पाण्डवः ।
अन्ये च मिथ्योपक्रान्तास् तैर् दोषा वक्षसि स्थिताः ॥ २८ ॥

१३.२८bv -गर्भ-विसर्प-पाण्डु-ता ऊर्ध्वं शोफम् अधो वस्तौ मध्ये कुर्वन्ति मध्य-गाः ।
सर्वाङ्ग-गाः सर्व-गतं प्रत्यङ्गेषु तद्-आश्रयाः ॥ २९ ॥

तत्-पूर्व-रूपं दवथुः सिरायामो ऽङ्ग-गौरवम् ।
वाताच् छोफश् चलो रूक्षः खर-रोमारुणासितः ॥ ३० ॥

संकोच-स्पन्द-हर्षार्ति-तोद-भेद-प्रसुप्ति-मान् ।
क्षिप्रोत्थान-शमः शीघ्रम् उन्नमेत् पीडितस् तनुः ॥ ३१ ॥

स्निग्धोष्ण-मर्दनैः शाम्येद् रात्राव् अल्पो दिवा महान् ।
त्वक् च सर्षप-लिप्तेव तस्मिंश् चिमिचिमायते ॥ ३२ ॥

पीत-रक्तासिताभासः पित्ताद् आ-ताम्र-रोम-कृत् ।
शीघ्रानुसार-प्रशमो मध्ये प्राग् जायते तनुः ॥ ३३ ॥

स-तृड्-दाह-ज्वर-स्वेद-दव-क्लेद-मद-भ्रमः ।
शीताभिलाषी विड्-भेदी गन्धी स्पर्शा-सहो मृदुः ॥ ३४ ॥

कण्डू-मान् पाण्डु-रोम-त्वक् कठिनः शीतलो गुरुः ।
स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्रा-छर्द्य्-अग्नि-साद-कृत् ॥ ३५ ॥

आक्रान्तो नोन्नमेत् कृच्छ्र-शम-जन्मा निशा-बलः ।
स्रवेन् नासृक् चिरात् पिच्छां कुश-शस्त्रादि-विक्षतः ॥ ३६ ॥

स्पर्शोष्ण-काङ्क्षी च कफाद् यथा-स्वं द्वन्द्व-जास् त्रयः ।
संकराद् धेतु-लिङ्गानां निचयान् निचयात्मकः ॥ ३७ ॥

अभिघातेन शस्त्रादि-च्छेद-भेद-क्षतादिभिः ।
हिमानिलोद-ध्य्-अनिलैर् भल्लात-कपिकच्छु-जैः ॥ ३८ ॥

१३.३८cv हिमानलोद-ध्य्-अनिलैर् रसैः शूकैश् च संस्पर्शाच् छवयथुः स्याद् विसर्प-वान् ।
भृशोष्मा लोहिताभासः प्राय-शः पित्त-लक्षणः ॥ ३९ ॥

विष-जः स-विष-प्राणि-परिसर्पण-मूत्रणात् ।
दंष्ट्रा-दन्त-नखापाताद् अ-विष-प्राणिनाम् अपि ॥ ४० ॥

१३.४०cv दंष्ट्रा-दन्त-नखाघाताद् विण्-मूत्र-शुक्रोपहत-मल-वद्-वस्त्र-संकरात् ।
विष-वृक्षानिल-स्पर्शाद् गर-योगावचूर्णनात् ॥ ४१ ॥

१३.४१bv -मल-वद्-वस्त्र-धारणात् मृदुश् चलो ऽवलम्बी च शीघ्रो दाह-रुजा-करः ।
नवो ऽन्-उपद्रवः शोफः साध्यो ऽ-साध्यः पुरेरितः ॥ ४२ ॥

स्याद् विसर्पो ऽभिघातान्तैर् दोषैर् दूष्यैश् च शोफ-वत् ।
त्र्य्-अधिष्ठानं च तं प्राहुर् बाह्यान्तर्-उभयाश्रयात् ॥ ४३ ॥

यथोत्तरं च दुः-साध्यास् तत्र दोषा यथा-यथम् ।
प्रकोपणैः प्रकुपिता विशेषेण विदाहिभिः ॥ ४४ ॥

देहे शीघ्रं विसर्पन्ति ते ऽन्तर् अन्तः-स्थिता बहिः ।
बहिः-स्था द्वितये द्वि-स्था विद्यात् तत्रान्तर्-आश्रयम् ॥ ४५ ॥

मर्मोपतापात् संमोहाद् अयनानां विघट्टनात् ।
तृष्णाति-योगाद् वेगानां विषमं च प्रवर्तनात् ॥ ४६ ॥

१३.४६av मर्मोपघातात् संमोहाद् १३.४६dv विषमाच् च प्रवर्तनात् आशु चाग्नि-बल-भ्रंशाद् अतो बाह्यं विपर्ययात् ।
तत्र वातात् परीसर्पो वात-ज्वर-सम-व्यथः ॥ ४७ ॥

शोफ-स्फुरण-निस्तोद-भेदायामार्ति-हर्ष-वान् ।
पित्ताद् द्रुत-गतिः पित्त-ज्वर-लिङ्गो ऽति-लोहितः ॥ ४८ ॥

कफात् कण्डू-युतः स्निग्धः कफ-ज्वर-समान-रुक् ।
स्व-दोष-लिङ्गैश् चीयन्ते सर्वे स्फोटैर् उपेक्षिताः ॥ ४९ ॥

ते पक्व-भिन्नाः स्वं स्वं च बिभ्रति व्रण-लक्षणम् ।
वात-पित्ताज् ज्वर-च्छर्दि-मूर्छातीसार-तृड्-भ्रमैः ॥ ५० ॥

अस्थि-भेदाग्नि-सदन-तमका-रोचकैर् युतः ।
करोति सर्वम् अङ्गं च दीप्ताङ्गारावकीर्ण-वत् ॥ ५१ ॥

यं यं देशं विसर्पश् च विसर्पति भवेत् स सः ।
शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते ॥ ५२ ॥

अग्नि-दग्ध इव स्फोटैः शीघ्र-ग-त्वाद् द्रुतं च सः ।
मर्मानुसारी वीसर्पः स्याद् वातो ऽति-बलस् ततः ॥ ५३ ॥

व्यथेताङ्गं हरेत् संज्ञां निद्रां च श्वासम् ईरयेत् ।
हिध्मां च स गतो ऽवस्थाम् ईदृशीं लभते न ना ॥ ५४ ॥

क्व-चिच् छर्मा-रति-ग्रस्तो भूमि-शय्यासनादिषु ।
चेष्टमानस् ततः क्लिष्टो मनो-देह-श्रमोद्भवाम् ॥ ५५ ॥

दुष्-प्रबोधो ऽश्नुते निद्रां सो ऽग्नि-विसर्प उच्यते ।
कफेन रुद्धः पवनो भित्त्वा तं बहु-धा कफम् ॥ ५६ ॥

रक्तं वा वृद्ध-रक्तस्य त्वक्-सिरा-स्नाव-मांस-गम् ।
दूषयित्वा च दीर्घाणु-वृत्त-स्थूल-खरात्मनाम् ॥ ५७ ॥

ग्रन्थीनां कुरुते मालां रक्तानां तीव्र-रुग्-ज्वराम् ।
श्वास-कासातिसारास्य-शोष-हिध्मा-वमि-भ्रमैः ॥ ५८ ॥

मोह-वैवर्ण्य-मूर्छाङ्ग-भङ्गाग्नि-सदनैर् युताम् ।
इत्य् अयं ग्रन्थि-वीसर्पः कफ-मारुत-कोप-जः ॥ ५९ ॥

कफ-पित्ताज् ज्वरः स्तम्भो निद्रा-तन्द्रा-शिरो-रुजः ।
अङ्गावसाद-विक्षेप-प्रलापा-रोचक-भ्रमाः ॥ ६० ॥

मूर्छाग्नि-हानिर् भेदो ऽस्थ्नां पिपासेन्द्रिय-गौरवम् ।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६१ ॥

प्रायेणामाशये गृह्णन्न् एक-देशं न चाति-रुक् ।
पिटिकैर् अवकीर्णो ऽति-पीत-लोहित-पाण्डुरैः ॥ ६२ ॥

मेचकाभो ऽसितः स्निग्धो मलिनः शोफ-वान् गुरुः ।
गम्भीर-पाकः प्राज्योष्मा स्पृष्टः क्लिन्नो ऽवदीर्यते ॥ ६३ ॥

१३.६३av मेचकाभो ऽसित-स्निग्धो पङ्क-वच्-छीर्ण-मांसश् च स्पष्ट-स्नायु-सिरा-गणः ।
शव-गन्धिश् च वीसर्पं कर्दमाख्यम् उशन्ति तम् ॥ ६४ ॥

सर्व-जो लक्षणैः सर्वैः सर्व-धात्व्-अतिसर्पणः ।
बाह्य-हेतोः क्षतात् क्रुद्धः स-रक्तं पित्तम् ईरयन् ॥ ६५ ॥

१३.६५bv सर्व-धात्व्-अभिसर्पणः विसर्पं मारुतः कुर्यात् कुलत्थ-सदृशैश् चितम् ।
स्फोटैः शोफ-ज्वर-रुजा-दाहाढ्यं श्याव-लोहितम् ॥ ६६ ॥

पृथग् दोषैस् त्रयः साध्या द्वन्द्व-जाश् चान्-उपद्रवाः ।
अ-साध्यौ क्षत-सर्वोत्थौ सर्वे चाक्रान्त-मर्मकाः ॥ ६७ ॥

शीर्ण-स्नायु-सिरा-मांसाः प्रक्लिन्नाः शव-गन्धयः ॥ ६७अब् ॥

# अध्याय 14

मिथ्याहार-विहारेण विशेषेण विरोधिना ।
साधु-निन्दा-वधान्य-स्व-हरणाद्यैश् च सेवितैः ॥ १ ॥

पाप्मभिः कर्मभिः सद्यः प्राक्तनैर् वेरिता मलाः ।
सिराः प्रपद्य तिर्यग्-गास् त्वग्-लसीकासृग्-आमिषम् ॥ २ ॥

१४.२bv प्राक्तनैः प्रेरिता मलाः दूषयन्ति श्लथी-कृत्य निश्चरन्तस् ततो बहिः ।
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठम् उशन्ति तत् ॥ ३ ॥

१४.३av दूषयन्तः श्लथी-कृत्य कालेनोपेक्षितं यस्मात् सर्वं कुष्णाति तद् वपुः ।
प्रपद्य धातून् व्याप्यान्तः सर्वान् संक्लेद्य चावहेत् ॥ ४ ॥

स-स्वेद-क्लेद-संकोथान् कृमीन् सूक्ष्मान् सु-दारुणान् ।
रोम-त्वक्-स्नायु-धमनी-तरुणास्थीनि यैः क्रमात् ॥ ५ ॥

भक्षयेच् छ्वित्रम् अस्माच् च कुष्ठ-बाह्यम् उदाहृतम् ।
कुष्ठानि सप्त-धा दोषैः पृथङ् मिश्रैः समागतैः ॥ ६ ॥

१४.६dv पृथग् द्वन्द्वैः समागतैः सर्वेष्व् अपि त्रि-दोषेषु व्यपदेशो ऽधिक-त्वतः ।
वातेन कुष्ठं कापालं पित्ताद् औदुम्बरं कफात् ॥ ७ ॥

मण्डलाख्यं विचर्चो च ऋक्षाख्यं वात-पित्त-जम् ।
चर्मैक-कुष्ठ-किटिभ-सिध्मालस-विपादिकाः ॥ ८ ॥

१४.८bv ऋक्षाक्षं वात-पित्त-जम् वात-श्लेष्मोद्भवाः श्लेष्म-पित्ताद् दद्रू-शतारुषी ।
पुण्डरीकं स-विस्फोटं पामा चर्म-दलं तथा ॥ ९ ॥

सर्वैः स्यात् काकणं पूर्वं त्रिकं दद्रु स-काकणम् ।
पुण्डरीकर्क्ष-जिह्वे च महा-कुष्ठानि सप्त तु ॥ १० ॥

१४.१०bv त्रिकं दद्रूः स-काकणा १४.१०cv पुण्डरीकर्श्य-जिह्वे च अति-श्लक्ष्ण-खर-स्पर्श-खेदा-स्वेद-वि-वर्ण-ताः ।
दाहः कण्डूस् त्वचि स्वापस् तोदः कोठोन्नतिः श्रमः ॥ ११ ॥

व्रणानाम् अधिकं शूलं शीघ्रोत्पत्तिश् चिर-स्थितिः ।
रूढानाम् अपि रूक्ष-त्वं निमित्ते ऽल्पे ऽपि कोपनम् ॥ १२ ॥

रोम-हर्षो ऽसृजः कार्ष्ण्यम् कुष्ठ-लक्षणम् अग्र-जम् ।
कृष्णारुण-कपालाभं रूक्षं सुप्तं खरं तनु ॥ १३ ॥

विस्तृता-सम-पर्य्-अन्तं हृषितैर् रोमभिश् चितम् ।
तोदाढ्यम् अल्प-कण्डूकं कापालं शीघ्र-सर्पि च ॥ १४ ॥

१४.१४bv दूषितैर् रोमभिश् चितम् पक्वोदुम्बर-ताम्र-त्वग्-रोम गौर-सिरा-चितम् ।
बहलं बहल-क्लेद-रक्तं दाह-रुजाधिकम् ॥ १५ ॥

१४.१५bv -रोम गौर-सिरा-ततम् १४.१५cv बहुलं बहुल-क्लेद- आशूत्थानावदरण-कृमि विद्याद् उदुम्बरम् ।
स्थिरं स्त्यानं गुरु स्निग्धं श्वेत-रक्तम् अन्-आशु-गम् ॥ १६ ॥

अन्यो-ऽन्य-सक्तम् उत्सन्नं बहु-कण्डू-स्रुति-क्रिमि ।
श्लक्ष्ण-पीताभ-पर्य्-अन्तं मण्डलं परिमण्डलम् ॥ १७ ॥

१४.१७av अन्यो-ऽन्य-सक्तम् उच्छूनं १४.१७av अन्यो-ऽन्य-सक्तम् उत्सङ्गं स-कण्डू-पिटिका श्यावा लसीकाढ्या विचर्चिका ।
परुषं तनु रक्तान्तम् अन्तः-श्यावं समुन्नतम् ॥ १८ ॥

स-तोद-दाह-रुक्-क्लेदं कर्कशैः पिटिकैश् चितम् ।
ऋक्ष-जिह्वाकृति प्रोक्तम् ऋक्ष-जिह्वं बहु-क्रिमि ॥ १९ ॥

१४.१९cv ऋश्य-जिह्वाकृति प्रोक्तम् १४.१९dv ऋश्य-जिह्वं बहु-क्रिमि हस्ति-चर्म-खर-स्पर्शं चर्मैकाख्यं महाश्रयम् ।
अ-स्वेदं मत्स्य-शकल-संनिभं किटिभं पुनः ॥ २० ॥

रूक्षं किण-खर-स्पर्शं कण्डू-मत् परुषासितम् ।
सिध्मं रूक्षं बहिः स्निग्धम् अन्तर् घृष्टं रजः किरेत् ॥ २१ ॥

श्लक्ष्ण-स्पर्शं तनु श्वेत-ताम्रं दौग्धिक-पुष्प-वत् ।
प्रायेण चोर्ध्व-काये स्याद् गण्डैः कण्डू-युतैश् चितम् ॥ २२ ॥

रक्तैर् अलसकं पाणि-पाद-दार्यो विपादिकाः ।
तीव्रार्त्यो मन्द-कण्ड्वश् च स-राग-पिटिकाचिताः ॥ २३ ॥

दीर्घ-प्रताना दूर्वा-वद् अतसी-कुसुम-च्छविः ।
उत्सन्न-मण्डला दद्रूः कण्डू-मत्य् अनुषङ्गिणी ॥ २४ ॥

स्थूल-मूलं स-दाहार्ति रक्त-श्यावं बहु-व्रणम् ।
शतारुः क्लेद-जन्त्व्-आढ्यं प्राय-शः पर्व-जन्म च ॥ २५ ॥

रक्तान्तम् अन्तरा पाण्डु कण्डू-दाह-रुजान्वितम् ।
सोत्सेधम् आचितं रक्तैः पद्म-पत्त्रम् इवांशुभिः ॥ २६ ॥

घन-भूरि-लसीकासृक्-प्रायम् आशु विभेदि च ।
पुण्डरीकं तनु-त्वग्भिश् चितं स्फोटैः सितारुणैः ॥ २७ ॥

विस्फोटं पिटिकाः पामा कण्डू-क्लेद-रुजाधिकाः ।
सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्-पाणि-कूर्परे ॥ २८ ॥

स-स्फोटम् अ-स्पर्श-सहं कण्डूषा-तोद-दाह-वत् ।
रक्तं दलच् चर्म-दलं काकणं तीव्र-दाह-रुक् ॥ २९ ॥

पूर्वं रक्तं च कृष्णं च काकणन्ती-फलोपमम् ।
कुष्ठ-लिङ्गैर् युतं सर्वैर् नैक-वर्णं ततो भवेत् ॥ ३० ॥

दोष-भेदीय-विहितैर् आदिशेल् लिङ्ग-कर्मभिः ।
कुष्ठेषु दोषोल्बण-तां सर्व-दोषोल्बणं त्यजेत् ॥ ३१ ॥

रिष्टोक्तं यच् च यच् चास्थि-मज्ज-शुक्र-समाश्रयम् ।
याप्यं मेदो-गतं कृच्छ्रं पित्त-द्वन्द्वास्र-मांस-गम् ॥ ३२ ॥

अ-कृच्छ्रं कफ-वाताढ्यं त्वक्-स्थम् एक-मलं च यत् ।
तत्र त्वचि स्थिते कुष्ठे तोद-वैवर्ण्य-रूक्ष-ताः ॥ ३३ ॥

स्वेद-स्वाप-श्वयथवः शोणिते पिशिते पुनः ।
पाणि-पादाश्रिताः स्फोटाः क्लेदः संधिषु चाधिकम् ॥ ३४ ॥

कौण्यं गति-क्षयो ऽङ्गानां दलनं स्याच् च मेदसि ।
नासा-भङ्गो ऽस्थि-मज्ज-स्थे नेत्र-रागः स्वर-क्षयः ॥ ३५ ॥

क्षते च कृमयः शुक्रे स्व-दारापत्य-बाधनम् ।
यथा-पूर्वं च सर्वाणि स्युर् लिङ्गान्य् असृग्-आदिषु ॥ ३६ ॥

१४.३६bv स्व-दारापत्य-धावनम् कुष्ठैक-संभवं श्वित्रं किलासं दारुणं च तत् ।
निर्दिष्टम् अ-परिस्रावि त्रि-धातूद्भव-संश्रयम् ॥ ३७ ॥

१४.३७bv किलासं चारुणं च तत् वाताद् रूक्षारुणं पित्तात् ताम्रं कमल-पत्त्र-वत् ।
स-दाहं रोम-विध्वंसि कफाच् छ्वेतं घनं गुरु ॥ ३८ ॥

स-कण्डु च क्रमाद् रक्त-मांस-मेदःसु चादिशेत् ।
वर्णेनैवेदृग् उभयं कृच्छ्रं तच् चोत्तरोत्तरम् ॥ ३९ ॥

अ-शुक्ल-रोमा-बहलम् अ-संसृष्टं मिथो नवम् ।
अन्-अग्नि-दग्ध-जं साध्यं श्वित्रं वर्ज्यम् अतो ऽन्य-था ॥ ४० ॥

१४.४०av अ-शुक्ल-रोमा-बहुलम् १४.४०bv अ-संसृष्टम् अथो नवम् गुह्य-पाणि-तलौष्ठेषु जातम् अप्य् अ-चिरन्-तनम् ।
स्पर्शैकाहार-शय्यादि-सेवनात् प्राय-शो गदाः ॥ ४१ ॥

सर्वे संचारिणो नेत्र-त्वग्-विकारा विशेषतः ।
कृमयस् तु द्वि-धा प्रोक्ता बाह्याभ्यन्तर-भेदतः ॥ ४२ ॥

बहिर्-मल-कफासृग्-विड्-जन्म-भेदाच् चतुर्-विधाः ।
नामतो विंशति-विधा बाह्यास् तत्रा-मृजोद्भवाः ॥ ४३ ॥

१४.४३dv बाह्यास् तत्र मलोद्भवाः १४.४३dv बाह्यास् तत्रासृग्-उद्भवाः तिल-प्रमाण-संस्थान-वर्णाः केशाम्बराश्रयाः ।
बहु-पादाश् च सूक्ष्माश् च यूका लिक्षाश् च नामतः ॥ ४४ ॥

द्वि-धा ते कोठ-पिटिका-कण्डू-गण्डान् प्रकुर्वते ।
कुष्ठैक-हेतवो ऽन्तर्-जाः श्लेष्म-जास् तेषु चाधिकम् ॥ ४५ ॥

मधुरान्न-गुड-क्षीर-दधि-सक्तु-नवौदनैः ।
शकृज्-जा बहु-विड्-धान्य-पर्ण-शाकोलकादिभिः ॥ ४६ ॥

१४.४६av मधुराम्ल-गुड-क्षीर- १४.४६dv -पर्ण-शाकौकुलादिभिः कफाद् आमाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथु-ब्रध्न-निभाः के-चित् के-चिद् गण्डू-पदोपमाः ॥ ४७ ॥

रूढ-धान्याङ्कुराकारास् तनु-दीर्घास् तथाणवः ।
श्वेतास् ताम्रावभासाश् च नामतः सप्त-धा तु ते ॥ ४८ ॥

अन्त्रादा उदरावेष्टा हृदयादा महा-कुहाः ।
कुरवो दर्भ-कुसुमाः सु-गन्धास् ते च कुर्वते ॥ ४९ ॥

१४.४९av अन्त्रादा उदराविष्टा १४.४९bv हृदयादा महा-रुहाः १४.४९cv चुरवो दर्भ-कुसुमाः हृल्-लासम् आस्य-स्रवणम् अ-विपाकम् अ-रोचकम् ।
मूर्छा-छर्दि-ज्वरानाह-कार्श्य-क्षवथु-पीनसान् ॥ ५० ॥

रक्त-वाहि-सिरोत्थाना रक्त-जा जन्तवो ऽणवः ।
अ-पादा वृत्त-ताम्राश् च सौक्ष्म्यात् के-चिद् अ-दर्शनाः ॥ ५१ ॥

१४.५१av रक्त-वाहि-सिरा-स्थानाद् १४.५१av रक्त-वाहि-सिरा-स्थाना केशादा रोम-विध्वंसा रोम-द्वीपा उदुम्बराः ।
षट् ते कुष्ठैक-कर्माणः सह-सौरस-मातरः ॥ ५२ ॥

१४.५२द्च् सह-जा रस-मातरः पक्वाशये पुरीषोत्था जायन्ते ऽधो-विसर्पिणः ।
वृद्धाः सन्तो भवेयुश् च ते यदामाशयोन्-मुखाः ॥ ५३ ॥

१४.५३cv वृद्धास् ते स्युर् भवेयुश् च तदास्योद्गार-निःश्वासा विड्-गन्धानुविधायिनः ।
पृथु-वृत्त-तनु-स्थूलाः श्याव-पीत-सितासिताः ॥ ५४ ॥

ते पञ्च नाम्ना कृमयः ककेरुक-मकेरुकाः ।
सौसुरादाः सुलूनाख्या लेलिहा जनयन्ति च ॥ ५५ ॥

१४.५५av सौसुरादाः शलूनाख्या विड्-भेद-शूल-विष्टम्भ-कार्श्य-पारुष्य-पाण्डु-ताः ।
रोम-हर्षाग्नि-सदन-गुद-कण्डूर् विनिर्गमात् ॥ ५६ ॥

१४.५६dv -गुद-कण्डूर् विनिर्गताः १४.५६dv -गुद-कण्डूर् वि-मार्ग-गाः

# अध्याय 15

सर्वार्थान्-अर्थ-करणे विश्वस्यास्यैक-कारणम् ।
अ-दुष्ट-दुष्टः पवनः शरीरस्य विशेषतः ॥ १ ॥

स विश्व-कर्मा विश्वात्मा विश्व-रूपः प्रजापतिः ।
स्रष्टा धाता विभुर् विष्णुः संहर्ता मृत्युर् अन्तकः ॥ २ ॥

तद्-अ-दुष्टौ प्रयत्नेन यतितव्यम् अतः सदा ।
तस्योक्तं दोष-विज्ञाने कर्म प्राकृत-वैकृतम् ॥ ३ ॥

समासाद् व्यासतो दोष-भेदीये नाम धाम च ।
प्रत्य्-एकं पञ्च-धा चारो व्यापारश् चेह वैकृतम् ॥ ४ ॥

तस्योच्यते विभागेन स-निदानं स-लक्षणम् ।
धातु-क्षय-करैर् वायुः कुप्यत्य् अति-निषेवितैः ॥ ५ ॥

अ-संख्यम् अपि संख्याय यद् अशीत्या पुरेरितम् ५.१+(१)अब् ॥
१५.५.१+(१)ब्व् यथाशीत्य् अपरेरितम् चरन् स्रोतःसु रिक्तेषु भृशं तान्य् एव पूरयन् ।
तेभ्यो ऽन्य-दोष-पूर्णेभ्यः प्राप्य वावरणं बली ॥ ६ ॥

तत्र पक्वाशये क्रुद्धः शूलानाहान्त्र-कूजनम् ।
मल-रोधाश्म-वर्ध्मार्शस्-त्रिक-पृष्ठ-कटी-ग्रहम् ॥ ७ ॥

करोत्य् अधर-काये च तांस् तान् कृच्छ्रान् उपद्रवान् ।
आमाशये तृड्-वमथु-श्वास-कास-विषूचिकाः ॥ ८ ॥

१५.८av करोत्य् अधर-कायेषु कण्ठोपरोधम् उद्गारान् व्याधीन् ऊर्ध्वं च नाभितः ।
श्रोत्रादिष्व् इन्द्रिय-वधं त्वचि स्फुटन-रूक्ष-ते ॥ ९ ॥

रक्ते तीव्रा रुजः स्वापं तापं रागं वि-वर्ण-ताम् ।
अरूंष्य् अन्नस्य विष्टम्भम् अ-रुचिं कृश-तां भ्रमम् ॥ १० ॥

१५.१०cv अरूंष्य् अङ्गस्य विष्टम्भम् मांस-मेदो-गतो ग्रन्थींस् तोदाढ्यान् कर्कशाञ् छ्रमम् ।
गुर्व् अङ्गं चाति-रुक् स्तब्धं मुष्टि-दण्ड-हतोपमम् ॥ ११ ॥

१५.११bv तोदाढ्यान् कर्कशाञ् छ्रमान् १५.११bv तोदाढ्यान् कर्कशान् भृशम् अस्थि-स्थः सक्थि-संध्य्-अस्थि-शूलं तीव्रं बल-क्षयम् ।
मज्ज-स्थो ऽस्थिषु सौषिर्यम् अ-स्वप्नं संततां रुजम् ॥ १२ ॥

१५.१२dv अ-स्वप्नं स्तब्ध-तां रुजम् शुक्रस्य शीघ्रम् उत्सर्गं सङ्गं विकृतिम् एव वा ।
तद्-वद् गर्भस्य शुक्र-स्थः सिरास्व् आध्मान-रिक्त-ते ॥ १३ ॥

तत्-स्थः स्नाव-स्थितः कुर्याद् गृध्रस्य्-आयाम-कुब्ज-ताः ।
वात-पूर्ण-दृति-स्पर्शं शोफं संधि-गतो ऽनिलः ॥ १४ ॥

१५.१४bv गृध्रस्य्-आयाम-कुब्ज-ताम् प्रसारणाकुञ्चनयोः प्रवृत्तिं च स-वेदनाम् ।
सर्वाङ्ग-संश्रयस् तोद-भेद-स्फुरण-भञ्जनम् ॥ १५ ॥

स्तम्भनाक्षेपण-स्वाप-संध्य्-आकुञ्चन-कम्पनम् ।
यदा तु धमनीः सर्वाः क्रुद्धो ऽभ्येति मुहुर् मुहुः ॥ १६ ॥

तदाङ्गम् आक्षिपत्य् एष व्याधिर् आक्षेपकः स्मृतः ।
अधः प्रतिहतो वायुर् व्रजन्न् ऊर्ध्वं हृद्-आश्रिताः ॥ १७ ॥

१५.१७dv व्रजन्न् ऊर्ध्वं हृद्-आश्रयाः नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् ।
आक्षिपेत् परितो गात्रं धनुर्-वच् चास्य नामयेत् ॥ १८ ॥

१५.१८bv शिरः शङ्खौ च पीडयेत् कृच्छ्राद् उच्छ्वसिति स्तब्ध-स्रस्त-मीलित-दृक् ततः ।
कपोत इव कूजेच् च निः-संज्ञः सो ऽपतन्त्रकः ॥ १९ ॥

स एव चापतानाक्य्हो मुक्ते तु मरुता हृदि ।
अश्नुवीत मुहुः स्वास्थ्यं मुहुर् अ-स्वास्थ्यम् आवृते ॥ २० ॥

१५.२०cv अश्नुवीत इव स्वास्थ्यं गर्भ-पात-समुत्पन्नः शोणितातिस्रवोत्थितः ।
अभिघात-समुत्थश् च दुश्-चिकित्स्य-तमो हि सः ॥ २१ ॥

मन्ये संस्तभ्य वातो ऽन्तर् आयच्छन् धमनीर् यदा ।
व्याप्नोति सकलं देहं जत्रुर् आयम्यते तदा ॥ २२ ॥

१५.२२bv आगच्छन् धमनीर् यदा अन्तर् धनुर् इवाङ्गं च वेगैः स्तम्भं च नेत्रयोः ।
करोति जृम्भां दशनं दशनानां कफोद्वमम् ॥ २३ ॥

पार्श्वयोर् वेदनां वाक्य-हनु-पृष्ठ-शिरो-ग्रहम् ।
अन्तर्-आयाम इत्य् एष बाह्यायामश् च तद्-विधः ॥ २४ ॥

देहस्य बहिर्-आयामात् पृष्ठतो नीयते शिरः ।
उरश् चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते ॥ २५ ॥

१५.२५bv पृष्ठतो ह्रियते शिरः दन्तेष्व् आस्ये च वैवर्ण्यं प्रस्वेदः स्रस्त-गात्र-ता ।
बाह्यायामं धनुः-ष्कम्भं ब्रुवते वेगिनं च तम् ॥ २६ ॥

१५.२६cv बाह्यायामं धनुः-स्तम्भं व्रणं मर्माश्रितं प्राप्य समीरण-समीरणात् ।
व्यायच्छन्ति तनुं दोषाः सर्वाम् आ-पाद-मस्तकम् ॥ २७ ॥

१५.२७av व्रणं मर्माश्रयं प्राप्य तृष्यतः पाण्डु-गात्रस्य व्रणायामः स वर्जितः ।
गते वेगे भवेत् स्वास्थ्यं सर्वेष्व् आक्षेपकेषु च ॥ २८ ॥

१५.२८dv सर्वेष्व् आक्षेपकेषु तु जिह्वाति-लेखनाच् छुष्क-भक्षणाद् अभिघाततः ।
कुपितो हनु-मूल-स्थः स्रंसयित्वानिलो हनू ॥ २९ ॥

करोति विवृतास्य-त्वम् अथ-वा संवृतास्य-ताम् ।
हनु-स्रंसः स तेन स्यात् कृच्छ्राच् चर्वण-भाषणम् ॥ ३० ॥

वाग्-वाहिनी-सिरा-संस्थो जिह्वां स्तम्भयते ऽनिलः ।
जिह्वा-स्तम्भः स तेनान्न-पान-वाक्येष्व् अन्-ईश-ता ॥ ३१ ॥

शिरसा भार-हरणाद् अति-हास्य-प्रभाषणात् ।
उत्त्रास-वक्त्र-क्षवथोः खर-कार्मुक-कर्षणात् ॥ ३२ ॥

१५.३२cv उच्छ्वास-वक्र-क्षवथु- १५.३२cv उत्त्रास-वक्त्र-क्षवथु- १५.३२dv -खर-कार्मुक-कर्षणात् विषमाद् उपधानाच् च कठिनानां च चर्वणात् ।
वायुर् विवृद्धस् तैस् तैश् च वातलैर् ऊर्ध्वम् आस्थितः ॥ ३३ ॥

वक्री-करोति वक्त्रार्धम् उक्तं हसितम् ईक्षितम् ।
ततो ऽस्य कम्पते मूर्धा वाक्-सङ्गः स्तब्ध-नेत्र-ता ॥ ३४ ॥

१५.३४dv वाग्-भङ्गः स्तब्ध-नेत्र-ता दन्त-चालः स्वर-भ्रंशः श्रुति-हानिः क्षव-ग्रहः ।
गन्धा-ज्ञानं स्मृतेर् मोहस् त्रासः सुप्तस्य जायते ॥ ३५ ॥

निष्ठीवः पार्श्वतो यायाद् एकस्याक्ष्णो निमीलनम् ।
जत्रोर् ऊर्ध्वं रुजा तीव्रा शरीरार्धे ऽधरे ऽपि वा ॥ ३६ ॥

तम् आहुर् अर्दितं के-चिद् एकायामम् अथापरे ।
रक्तम् आश्रित्य पवनः कुर्यान् मूर्ध-धराः सिराः ॥ ३७ ॥

रूक्षाः स-वेदनाः कृष्णाः सो ऽ-साध्यः स्यात् सिरा-ग्रहः ।
गृहीत्वार्धं तनोर् वायुः सिराः स्नायूर् विशोष्य च ॥ ३८ ॥

पक्षम् अन्य-तरं हन्ति संधि-बन्धान् विमोक्षयन् ।
कृत्स्नो ऽर्ध-कायस् तस्य स्याद् अ-कर्मण्यो वि-चेतनः ॥ ३९ ॥

एकाङ्ग-रोगं तं के-चिद् अन्ये पक्ष-वधं विदुः ।
सर्वाङ्ग-रोगं तद्-वच् च सर्व-कायाश्रिते ऽनिले ॥ ४० ॥

शुद्ध-वात-हतः पक्षः कृच्छ्र-साध्य-तमो मतः ।
कृच्छ्रस् त्व् अन्येन संसृष्टो विवर्ज्यः क्षय-हेतुकः ॥ ४१ ॥

आम-बद्धायनः कुर्यात् संस्थभ्याङ्गं कफान्वितः ।
अ-साध्यं हत-सर्वेहं दण्ड-वद् दण्डकं मरुत् ॥ ४२ ॥

अंस-मूल-स्थितो वायुः सिराः संकोच्य तत्र-गाः ।
बाहु-प्रस्पन्दित-हरं जनयत्य् अव-बाहुकम् ॥ ४३ ॥

तलं प्रत्य् अङ्गुलीनां या कण्डरा बाहु-पृष्ठतः ।
बाहु-चेष्टापहरणी विश्वाची नाम सा स्मृता ॥ ४४ ॥

१५.४४cv बाह्वोः कर्म-क्षय-करी वायुः कट्यां स्थितः सक्थ्नः कण्डराम् आक्षिपेद् यदा ।
तदा खञ्जो भवेज् जन्तुः पङ्गुः सक्थ्नोर् द्वयोर् अपि ॥ ४५ ॥

कम्पते गमनारम्भे खञ्जन्न् इव च याति यः ।
कलाय-खञ्जं तं विद्यान् मुक्त-संधि-प्रबन्धनम् ॥ ४६ ॥

शीतोष्ण-द्रव-संशुष्क-गुरु-स्निग्धैर् निषेवितैः ।
जीर्णा-जीर्णे तथायास-संक्षोभ-स्वप्न-जागरैः ॥ ४७ ॥

स-श्लेष्म-मेदः-पवनम् आमम् अत्य्-अर्थ-संचितम् ।
अभिभूयेतरं दोषम् ऊरू चेत् प्रतिपद्यते ॥ ४८ ॥

सक्थ्य्-अस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेन तत् ।
तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ४९ ॥

१५.४९cv तदा स्कन्दति तेनोरू १५.४९cv तदा स्कन्नाति तेनोरू परकीयाव् इव गुरू स्याताम् अति-भृश-व्यथौ ।
ध्यानाङ्ग-मर्द-स्तैमित्य-तन्द्रा-छर्द्य्-अ-रुचि-ज्वरैः ॥ ५० ॥

संयुतौ पाद-सदन-कृच्छ्रोद्धरण-सुप्तिभिः ।
तम् ऊरु-स्तम्भम् इत्य् आहुर् आढ्य-वातम् अथापरे ॥ ५१ ॥

१५.५१av संयुक्तौ पाद-सदन- वात-शोणित-जः शोफो जानु-मध्ये महा-रुजः ।
ज्ञेयः क्रोष्टुक-शीर्षश् च स्थूलः क्रोष्टुक-शीर्ष-वत् ॥ ५२ ॥

१५.५२dv स्थूलः क्रोष्टुक-मूर्ध-वत् रुक् पादे विषम-न्यस्ते श्रमाद् वा जायते यदा ।
वातेन गुल्फम् आश्रित्य तम् आहुर् वात-कण्टकम् ॥ ५३ ॥

पार्ष्णिं प्रत्य् अङ्गुलीनां या कण्डरा मारुतार्दिता ।
सक्थ्य्-उत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५४ ॥

विश्वाची गृध्रसी चोक्ता खल्लिस् तीव्र-रुजान्विते ।
हृष्येते चरणौ यस्य भवेतां च प्रसुप्त-वत् ॥ ५५ ॥

१५.५५bv खल्लिस् तीव्र-रुजान्विता पाद-हर्षः स विज्ञेयः कफ-मारुत-कोप-जः ।
पादयोः कुरुते दाहं पित्तासृक्-सहितो ऽनिलः ॥ ५६ ॥

विशेषतश् चङ्क्रमिते पाद-दाहं तम् आदिशेत् ॥ ५६□अब् ॥
१५.५६□अव् विशेषतश् चङ्क्रमतः

# अध्याय 16

विदाह्य् अन्नं विरुद्धं च तत् तच् चासृक्-प्रदूषणम् ।
भजतां विधि-हीनं च स्वप्न-जागर-मैथुनम् ॥ १ ॥

१६.१bv तत् तथासृक्-प्रदूषणम् प्रायेण सु-कुमाराणाम् अ-चङ्क्रमण-शीलिनाम् ।
अभिघाताद् अ-शुद्धेश् च नृणाम् असृजि दूषिते ॥ २ ॥

वातलैः शीतलैर् वायुर् वृद्धः क्रुद्धो वि-मार्ग-गः ।
तादृशैवासृजा रुद्धः प्राक् तद् एव प्रदूषयेत् ॥ ३ ॥

१६.३cv तादृशेनासृजा रुद्धः आढ्य-रोगं खुडं वात-बलासं वात-शोणितम् ।
तद् आहुर् नामभिस् तच् च पूर्वं पादौ प्रधावति ॥ ४ ॥

१६.४bv -पलाशं वात-शोणितम् विशेषाद् यान-यानाद् यैः प्रलम्बौ तस्य लक्षणम् ।
भविष्यतः कुष्ठ-समं तथा सादः श्लथाङ्ग-ता ॥ ५ ॥

जानु-जङ्घोरु-कट्य्-अंस-हस्त-पादाङ्ग-संधिषु ।
कण्डू-स्फुरण-निस्तोद-भेद-गौरव-सुप्त-ताः ॥ ६ ॥

भूत्वा भूत्वा प्रणश्यन्ति मुहुर् आविर्-भवन्ति च ।
पादयोर् मूलम् आस्थाय कदा-चिद् धस्तयोर् अपि ॥ ७ ॥

आखोर् इव विषं क्रुद्धं कृत्स्नं देहं विधावति ।
त्वङ्-मांसाश्रयम् उत्तानं तत् पूर्वं जायते ततः ॥ ८ ॥

कालान्तरेण गम्भीरं सर्वान् धातून् अभिद्रवत् ।
कण्ड्व्-आदि-संयुतोत्ताने त्वक् ताम्रा श्याव-लोहिता ॥ ९ ॥

सायामा भृश-दाहोषा गम्भीरे ऽधिक-पूर्व-रुक् ।
श्वयथुर् ग्रथितः पाकी वायुः संध्य्-अस्थि-मज्जसु ॥ १० ॥

छिन्दन्न् इव चरत्य् अन्तर् वक्री-कुर्वंश् च वेग-वान् ।
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश् चरन् ॥ ११ ॥

१६.११av छिन्दन्न् इव चरन्न् अन्तर् वाते ऽधिके ऽधिकं तत्र शूल-स्फुरण-तोदनम् ।
शोफस्य रौक्ष्य-कृष्ण-त्व-श्याव-ता-वृद्धि-हानयः ॥ १२ ॥

धमन्य्-अङ्गुलि-संधीनां संकोचो ऽङ्ग-ग्रहो ऽति-रुक् ।
शीत-द्वेषान्-उपशयौ स्तम्भ-वेपथु-सुप्तयः ॥ १३ ॥

रक्ते शोफो ऽति-रुक् तोदस् ताम्रश् चिमिचिमायते ।
स्निग्ध-रूक्षैः शमं नैति कण्डू-क्लेद-समन्वितः ॥ १४ ॥

पित्ते विदाहः संमोहः स्वेदो मूर्छा मदः स-तृट् ।
स्पर्शा-क्षम-त्वं रुग् रागः शोफः पाको भृशोष्म-ता ॥ १५ ॥

कफे स्तैमित्य-गुरु-ता-सुप्ति-स्निग्ध-त्व-शित-ताः ।
कण्डूर् मन्दा च रुग् द्वन्द्व-सर्व-लिङ्गं च संकरे ॥ १६ ॥

एक-दोषानुगं साध्यं नवं याप्यं द्वि-दोष-जम् ।
त्रि-दोष-जं त्यजेत् स्रावि स्तब्धम् अर्बुद-कारि च ॥ १७ ॥

१६.१७cv त्रि-दोषं तत् त्यजेत् स्रावि रक्त-मार्गं निहत्याशु शाखा-संधिषु मारुतः ।
निविश्यान्यो-ऽन्यम् आवार्य वेदनाभिर् हरत्य् असून् ॥ १८ ॥

१६.१८av रक्त-मार्गं निहन्त्य् आशु वायौ पञ्चात्मके प्राणो रौक्ष्य-व्यायाम-लङ्घनैः ।
अत्य्-आहाराभिघाताध्व-वेगोदीरण-धारणैः ॥ १९ ॥

१६.१९bv रूक्ष-व्यायाम-लङ्घनैः कुपितश् चक्षुर्-आदीनाम् उपघातं प्रवर्तयेत् ।
पीनसार्दित-तृट्-कास-श्वासादींश् चामयान् बहून् ॥ २० ॥

उदानः क्षवथूद्गार-च्छर्दि-निद्रा-विधारणैः ।
गुरु-भाराति-रुदित-हास्याद्यैर् विकृतो गदान् ॥ २१ ॥

१६.२१bv -च्छर्दि-निद्रावधारणैः कण्ठ-रोध-मनो-भ्रंश-च्छर्द्य्-अ-रोचक-पीनसान् ।
कुर्याच् च गल-गण्डादींस् तांस् ताञ् जत्रूर्ध्व-संश्रयान् ॥ २२ ॥

व्यानो ऽति-गमन-ध्यान-क्रीडा-विषम-चेष्टितैः ।
विरोधि-रूक्ष-भी-हर्ष-विषादाद्यैश् च दूषितः ॥ २३ ॥

१६.२३av व्यानो ऽति-गमन-स्थान- पुंस्-त्वोत्साह-बल-भ्रंश-शोफ-चित्तोत्प्लव-ज्वरान् ।
सर्वाङ्ग-रोग-निस्तोद-रोम-हर्षाङ्ग-सुप्त-ताः ॥ २४ ॥

१६.२४dv -रोम-हर्षाङ्ग-सुप्ति-ताः कुष्ठं विसर्पम् अन्यांश् च कुर्यात् सर्वाङ्ग-गान् गदान् ।
समानो विषमा-जीर्ण-शीत-संकीर्ण-भोजनैः ॥ २५ ॥

करोत्य् अ-काल-शयन-जागराद्यैश् च दूषितः ।
शूल-गुल्म-ग्रहण्य्-आदीन् पक्वामाशय-जान् गदान् ॥ २६ ॥

अपानो रूक्ष-गुर्व्-अन्न-वेगाघाताति-वाहनैः ।
यान-यानासन-स्थान-चङ्क्रमैश् चाति-सेवितैः ॥ २७ ॥

१६.२७bv -वेग-घाताति-वाहनैः कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान् ।
मूत्र-शुक्र-प्रदोषार्शो-गुद-भ्रंशादिकान् बहून् ॥ २८ ॥

सर्वं च मारुतं सामं तन्द्रा-स्तैमित्य-गौरवैः ।
स्निग्ध-त्वा-रोचकालस्य-शैत्य-शोफाग्नि-हानिभिः ॥ २९ ॥

कटु-रूक्षाभिलाषेण तद्-विधोपशयेन च ।
युक्तं विद्यान् निर्-आमं तु तन्द्रादीनां विपर्ययात् ॥ ३० ॥

वायोर् आवरणं चातो बहु-भेदं प्रवक्ष्यते ।
लिङ्गं पित्तावृते दाहस् तृष्णा शूलं भ्रमस् तमः ॥ ३१ ॥

१६.३१bv बहु-भेदं प्रचक्ष्यते कटुकोष्णाम्ल-लवणैर् विदाहः शीत-काम-ता ।
शैत्य-गौरव-शूलानि कट्व्-आद्य्-उपशयो ऽधिकम् ॥ ३२ ॥

लङ्घनायास-रूक्षोष्ण-काम-ता च कफावृते ।
रक्तावृते स-दाहार्तिस् त्वङ्-मांसान्तर-जा भृशम् ॥ ३३ ॥

भवेच् च रागी श्वयथुर् जायन्ते मण्डलानि च ।
मांसेन कठिनः शोफो वि-वर्णः पिटिकास् तथा ॥ ३४ ॥

हर्षः पिपीलिकानां च संचार इव जायते ।
चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्व् अ-रोचकः ॥ ३५ ॥

१६.३५av हर्षः पिपीलिकादीनां आढ्य-वात इति ज्ञेयः स कृच्छ्रो मेदसावृते ।
स्पर्शम् अस्थ्य्-आवृते ऽत्य्-उष्णं पीडनं चाभिनन्दति ॥ ३६ ॥

सूच्येव तुद्यते ऽत्य्-अर्थम् अङ्गं सीदति शूल्यते ।
मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ॥ ३७ ॥

शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम् ।
शुक्रावृते ऽति-वेगो वा न वा निष्-फल-तापि वा ॥ ३८ ॥

१६.३८av शूलं च पीड्यमाने च १६.३८av शूलं च पीड्यमाने तु १६.३८dv न वा निष्-फल-तापि च भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्य् अन्नावृते ऽनिले ।
मूत्रा-प्रवृत्तिर् आध्मानं वस्तेर् मूत्रावृते भवेत् ॥ ३९ ॥

१६.३९dv वस्तौ मूत्रावृते भवेत् विड्-आवृते विबन्धो ऽधः स्व-स्थाने परिकृन्तति ।
व्रजत्य् आशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ ४० ॥

१६.४०av विड्-आवृते ऽति-विड्-रोधः १६.४०bv स्वे स्थाने परिकृन्तति शकृत् पीडितम् अन्नेन दुःखं शुष्कं चिरात् सृजेत् ।
सर्व-धात्व्-आवृते वायौ श्रोणि-वङ्क्षण-पृष्ठ-रुक् ॥ ४१ ॥

विलोमो मारुतो ऽ-स्वस्थं हृदयं पीड्यते ऽति च ।
भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते ॥ ४२ ॥

१६.४२av विलोमो मारुतो ऽ-स्वास्थ्यं १६.४२cv भ्रमो मूर्छा रुजानाहः विदग्धे ऽन्ने च वमनम् उदाने ऽपि भ्रमादयः ।
दाहो ऽन्तर् ऊर्जा-भ्रंशश् च दाहो व्याने च सर्व-गः ॥ ४३ ॥

१६.४३dv दाहो व्याने तु सर्व-गः क्लमो ऽङ्ग-चेष्टा-सङ्गश् च स-संतापः स-वेदनः ।
समान ऊष्मोपहतिर् अति-स्वेदो ऽ-रतिः स-तृट् ॥ ४४ ॥

१६.४४av क्लमो ऽङ्ग-चेष्टा-भङ्गश् च दाहश् च स्याद् अपाने तु मले हारिद्र-वर्ण-ता ।
रजो-ऽतिवृत्तिस् तापश् च योनि-मेहन-पायुषु ॥ ४५ ॥

१६.४५cv रजो-ऽति-वृद्धिस् तापश् च श्लेष्मणा त्व् आवृते प्राणे सादस् तन्द्रा-रुचिर् वमिः ।
ष्ठीवनं क्षवथूद्गार-निःश्वासोच्छ्वास-संग्रहः ॥ ४६ ॥

उदाने गुरु-गात्र-त्वम् अ-रुचिर् वाक्-स्वर-ग्रहः ।
बल-वर्ण-प्रणाशश् च व्याने पर्वास्थि-वाग्-ग्रहः ॥ ४७ ॥

१६.४७dv व्याने पार्श्वास्थि-वाग्-ग्रहः गुरु-ताङ्गेषु सर्वेषु स्खलितं च गतौ भृशम् ।
समाने ऽति-हिमाङ्ग-त्वम् अ-स्वेदो मन्द-वह्नि-ता ॥ ४८ ॥

अपाने स-कफं मूत्र-शकृतः स्यात् प्रवर्तनम् ।
इति द्वा-विंशति-विधं वायोर् आवरणं विदुः ॥ ४९ ॥

१६.४९av अपाने स-कफं मूत्रं १६.४९bv शकृतः स्यात् प्रवर्तनम् प्राणादयस् तथान्यो-ऽन्यम् आवृण्वन्ति यथा-क्रमम् ।
सर्वे ऽपि विंशति-विधं विद्याद् आवरणं च तत् ॥ ५० ॥

१६.५०bv आवृण्वन्ति यथा-यथम् निःश्वासोच्छ्वास-संरोधः प्रतिश्यायः शिरो-ग्रहः ।
हृद्-रोगो मुख-शोषश् च प्राणेनोदान आवृते ॥ ५१ ॥

१६.५१cv हृद्-रोगो मुख-रोगश् च उदानेनावृते प्राणे वर्णौजो-बल-संक्षयः ।
दिशानया च विभजेत् सर्वम् आवरणं भिषक् ॥ ५२ ॥

स्थानान्य् अवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम् ।
प्राणादीनां च पञ्चानां मिश्रम् आवरणं मिथः ॥ ५३ ॥

पित्तादिभिर् द्वा-दशभिर् मिश्राणां मिश्रितैश् च तैः ।
मिश्रैः पित्तादिभिस् तद्-वन् मिश्रणाभिर् अनेक-धा ॥ ५४ ॥

तारतम्य-विकल्पाच् च यात्य् आवृतिर् अ-संख्य-ताम् ।
तां लक्षयेद् अवहितो यथा-स्वं लक्षणोदयात् ॥ ५५ ॥

शनैः शनैश् चोपशयाद् गूढाम् अपि मुहुर् मुहुः ।
विशेषाज् जीवितं प्राण उदानो बलम् उच्यते ॥ ५६ ॥

स्यात् तयोः पीडनाद् धानिर् आयुषश् च बलस्य च ।
आवृता वायवो ऽ-ज्ञाता ज्ञाता वा वत्सरं स्थिताः ॥ ५७ ॥

प्रयत्नेनापि दुः-साध्या भवेयुर् वान्-उपक्रमाः ।
विद्रधि-प्लीह-हृद्-रोग-गुल्माग्नि-सदनादयः ॥ ५८ ॥

भवन्त्य् उपद्रवास् तेषाम् आवृतानाम् उपेक्षणात् ॥ ५८□ॅअब् ॥
व्याधीनां संशयं छेत्तुम् अन्यतो यो ऽ-प्रमत्त-वान् ।
निदानं सततं तेन चिन्तनीयं विपश्चिता ॥ ५८□ॅ+१ ॥

# अध्याय 01

आमाशय-स्थो हत्वाग्निं सामो मार्गान् पिधाय यत् ।
विदधाति ज्वरं दोषस् तस्मात् कुर्वीत लङ्घनम् ॥ १ ॥

प्राग्-रूपेषु ज्वरादौ वा बलं यत्नेन पालयन् ।
बलाधिष्ठानम् आरोग्यम् आरोग्यार्थः क्रिया-क्रमः ॥ २ ॥

१.२dv आरोग्यार्थं क्रिया-क्रमः लङ्घनैः क्षपिते दोषे दीप्ते ऽग्नौ लाघवे सति ।
स्वास्थ्यं क्षुत् तृड् रुचिः पक्तिर् बलम् ओजश् च जायते ॥ ३ ॥

तत्रोत्कृष्टे समुत्क्लिष्टे कफ-प्राये चले मले ।
स-हृल्-लास-प्रसेकान्न-द्वेष-कास-विषूचिके ॥ ४ ॥

सद्यो-भुक्तस्य संजाते ज्वरे सामे विशेषतः ।
वमनं वमनार्हस्य शस्तं कुर्यात् तद् अन्य-था ॥ ५ ॥

श्वासातीसार-संमोह-हृद्-रोग-विषम-ज्वरान् ।
पिप्पलीभिर् युतान् गालान् कलिङ्गैर् मधुकेन वा ॥ ६ ॥

उष्णाम्भसा स-मधुना पिबेत् स-लवणेन वा ।
पटोल-निम्ब-कर्कोट-वेत्र-पत्त्रोदकेन वा ॥ ७ ॥

तर्पणेन रसेनेक्षोर् मद्यैः कल्पोदितानि वा ।
वमनानि प्रयुञ्जीत बल-काल-विभाग-वित् ॥ ८ ॥

कृते ऽ-कृते वा वमने ज्वरी कुर्याद् विशोषणम् ।
दोषाणां समुदीर्णानां पाचनाय शमाय च ॥ ९ ॥

दोषेण भस्मनेवाग्नौ छन्ने ऽन्नं न विपच्यते ।
तस्माद् आ-दोष-पचनाज् ज्वरितान् उपवासयेत् ॥ १० ॥

१.१०av आमेन भस्मनेवाग्नौ तृष्णग् अल्पाल्पम् उष्णाम्बु पिबेद् वात-कफ-ज्वरे ।
तत् कफं विलयं नीत्वा तृष्णाम् आशु निवर्तयेत् ॥ ११ ॥

१.११av तृष्यन्न् अल्पाल्पम् उष्णाम्बु उदीर्य चाग्निं स्रोतांसि मृदू-कृत्य विशोधयेत् ।
लीन-पित्तानिल-स्वेद-शकृन्-मूत्रानुलोमनम् ॥ १२ ॥

निद्रा-जाड्या-रुचि-हरं प्राणानाम् अवलम्बनम् ।
विपरीतम् अतः शीतं दोष-संघात-वर्धनम् ॥ १३ ॥

उष्णम् एवङ्-गुण-त्वे ऽपि युञ्ज्यान् नैकान्त-पित्तले ।
उद्रिक्त-पित्ते दवथु-दाह-मोहातिसारिणि ॥ १४ ॥

विष-मद्योत्थिते ग्रीष्मे क्षत-क्षीणे ऽस्र-पित्तिनि ।
घन-चन्दन-शुण्ठ्य्-अम्बु-पर्पटोशीर-साधितम् ॥ १५ ॥

शीतं तेभ्यो हितं तोयं पाचनं तृड्-ज्वरापहम् ।
ऊष्मा पित्ताद् ऋते नास्ति ज्वरो नास्त्य् ऊष्मणा विना ॥ १६ ॥

तस्मात् पित्त-विरुद्धानि त्यजेत् पित्ताधिके ऽधिकम् ।
स्नानाभ्यङ्ग-प्रदेहांश् च परिशेषं च लङ्घनम् ॥ १७ ॥

अ-जीर्ण इव शूल-घ्नं सामे तीव्र-रुजि ज्वरे ।
न पिबेद् औषधं तद् धि भूय एवामम् आवहेत् ॥ १८ ॥

आमाभिभूत-कोष्ठस्य क्षीरं विषम् अहेर् इव ।
सोदर्द-पीनस-श्वासे जङ्घा-पर्वास्थि-शूलिनि ॥ १९ ॥

१.१९dv जङ्घा-पार्श्वास्थि-शूलिनि वात-श्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत् ।
स्वेद-मूत्र-शकृद्-वातान् कुर्याद् अग्नेश् च पाटवम् ॥ २० ॥

स्नेहोक्तम् आचार-विधिं सर्व-शश् चानुपालयेत् ।
लङ्घनं स्वेदनं कालो यवाग्वस् तिक्तको रसः ॥ २१ ॥

१.२१dv यवागूस् तिक्तको रसः मलानां पाचनानि स्युर् यथावस्थं क्रमेण वा ।
शुद्ध-वात-क्षयागन्तु-जीर्ण-ज्वरिषु लङ्घनम् ॥ २२ ॥

नेष्यते तेषु हि हितं शमनं यन् न कर्शनम् ।
तत्र साम-ज्वराकृत्या जानीयाद् अ-विशोषितम् ॥ २३ ॥

१.२३bv शमनं यन् न कर्षणम् द्वि-विधोपक्रम-ज्ञानम् अवेक्षेत च लङ्घने ।
युक्तं लङ्घित-लिङ्गैस् तु तं पेयाभिर् उपाचरेत् ॥ २४ ॥

यथा-स्वौषध-सिद्धाभिर् मण्ड-पूर्वाभिर् आदितः ।
षड्-अहं वा मृदु-त्वं वा ज्वरो यावद् अवाप्नुयात् ॥ २५ ॥

तस्याग्निर् दीप्यते ताभिः समिद्भिर् इव पावकः ।
प्राग् लाज-पेयां सु-जरां स-शुण्ठी-धान्य-पिप्पलीम् ॥ २६ ॥

स-सैन्धवां तथाम्लार्थी तां पिबेत् सह-दाडिमाम् ।
सृष्ट-विड् बहु-पित्तो वा स-शुण्ठी-माक्षिकां हिमाम् ॥ २७ ॥

वस्ति-पार्श्व-शिरः-शूली व्याघ्री-गोक्षुर-साधिताम् ।
पृश्निपर्णी-बला-बिल्व-नागरोत्पल-धान्यकैः ॥ २८ ॥

सिद्धां ज्वरातिसार्य् अम्लां पेयां दीपन-पाचनीम् ।
ह्रस्वेन पञ्च-मूलेन हिक्का-रुक्-श्वास-कास-वान् ॥ २९ ॥

पञ्च-मूलेन महता कफार्तो यव-साधिताम् ।
विबद्ध-वर्चाः स-यवां पिप्पल्य्-आमलकैः कृतां ॥ ३० ॥

१.३०dv पिप्पल्य्-आमलकैः शृतां यवागूं सर्पिषा भृष्टां मल-दोषानुलोमनीम् ।
चविका-पिप्पली-मूल-द्राक्षामलक-नागरैः ॥ ३१ ॥

कोष्ठे विबद्धे स-रुजि पिबेत् तु परिकर्तिनि ।
कोल-वृक्षाम्ल-कलशी-धावनी-श्रीफलैः कृताम् ॥ ३२ ॥

१.३२dv -धावनी-श्री-बला-कृताम् अ-स्वेद-निद्रस् तृष्णार्तः सितामलक-नागरैः ।
सिता-बदर-मृद्वीका-शारिवा-मुस्त-चन्दनैः ॥ ३३ ॥

१.३३av अ-स्वेद-निद्रा-तृष्णार्तः तृष्णा-छर्दि-परीदाह-ज्वर-घ्नीं क्षौद्र-संयुताम् ।
कुर्यात् पेयौषधैर् एव रस-यूषादिकान् अपि ॥ ३४ ॥

१.३४av तृष्णा-छर्दि-परीवार- १.३४av तृष्णा-छर्दि-परो दाह- मद्योद्भवे मद्य-नित्ये पित्त-स्थान-गते कफे ।
ग्रीष्मे तयोर् वाधिकयोस् तृट्-छर्दिर्-दाह-पीडिते ॥ ३५ ॥

१.३५dv तृट्-छर्दि-दाह-पीडिते ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति तेषु तु ।
ज्वरापहैः फल-रसैर् अद्भिर् वा लाज-तर्पणात् ॥ ३६ ॥

१.३६dv अद्भिर् वा लाज-तर्पणम् पिबेत् स-शर्करा-क्षौद्रान् ततो जीर्णे तु तर्पणे ।
यवाग्वां वौदनं क्षुद्-वान् अश्नीयाद् भृष्ट-तण्डुलम् ॥ ३७ ॥

१.३७av पिबेत् स-शर्करा-क्षौद्रं १.३७bv ततो जीर्णे च तर्पणे १.३७cv यवाग्वाम् ओदनं क्षुद्-वान् १.३७cv यवाग्वां चौदनं क्षुद्-वान् दक-लावणिकैर् यूषै रसैर् वा मुद्ग-लाव-जैः ।
इत्य् अयं षड्-अहो नेयो बलं दोषं च रक्षता ॥ ३८ ॥

ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते ।
कषायो दोष-शेषस्य पाचनः शमनो ऽथ-वा ॥ ३९ ॥

तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे ।
पित्त-श्लेष्म-हर-त्वे ऽपि कषायः स न शस्यते ॥ ४० ॥

१.४०dv कषायस् तु न शस्यते नव-ज्वरे मल-स्तम्भात् कषायो विषम-ज्वरम् ।
कुरुते ऽ-रुचि-हृल्-लास-हिध्माध्मानादिकान् अपि ॥ ४१ ॥

सप्ताहाद् औषधं के-चिद् आहुर् अन्ये दशाहतः ।
के-चिल् लघ्व्-अन्न-भुक्तस्य योज्यम् आमोल्बणे न तु ॥ ४२ ॥

१.४२bv आहुश् चान्ये दशाहतः तीव्र-ज्वर-परीतस्य दोष-वेगोदये यतः ।
दोषे ऽथ-वाति-निचिते तन्द्रा-स्तैमित्य-कारिणि ॥ ४३ ॥

अ-पच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम् ।
मृदुर् ज्वरो लघुर् देहश् चलिताश् च मला यदा ॥ ४४ ॥

अ-चिर-ज्वरितस्यापि भेषजं योजयेत् तदा ।
मुस्तया पर्पटं युक्तं शुण्ठ्या दुःस्पर्शयापि वा ॥ ४५ ॥

पाक्यं शीत-कषायं वा पाठोशीरं स-वालकम् ।
पिबेत् तद्-वच् च भूनिम्ब-गुडूची-मुस्त-नागरम् ॥ ४६ ॥

यथा-योगम् इमे योज्याः कषाया दोष-पाचनाः ।
ज्वरा-रोचक-तृष्णास्य-वैरस्या-पक्ति-नाशनाः ॥ ४७ ॥

कलिङ्गकाः पटोलस्य पत्त्रं कटुक-रोहिणी ॥ ४८अब् ॥
पटोलं शारिवा मुस्ता पाठा कटुक-रोहिणी ।
पटोल-निम्ब-त्रि-फला-मृद्वीका-मुस्त-वत्सकाः ॥ ४९ ॥

किराततिक्तम् अमृता चन्दनं विश्व-भेषजम् ।
धात्री-मुस्तामृता-क्षौद्रम् अर्ध-श्लोक-समापनाः ॥ ५० ॥

पञ्चैते संततादीनां पञ्चानां शमना मताः ।
दुरालभामृता-मुस्ता-नागरं वात-जे ज्वरे ॥ ५१ ॥

अथ-वा पिप्पली-मूल-गुडूची-विश्व-भेषजम् ।
कनीयः पञ्च-मूलं च पित्ते शक्रयवा घनम् ॥ ५२ ॥

१.५२dv पित्ते क्षौद्र-समन्विताः कटुका चेति स-क्षौद्रं मुस्ता-पर्पटकं तथा ।
स-धन्वयास-भूनिम्बं वत्सकाद्यो गणः कफे ॥ ५३ ॥

१.५३av कलिङ्ग-मुस्त-कटुका अथ-वा वृष-गाङ्गेयी-शृङ्गवेर-दुरालभाः ।
रुग्-विबन्धानिल-श्लेष्म-युक्ते दीपन-पाचनम् ॥ ५४ ॥

अभया-पिप्पली-मूल-शम्याक-कटुका-घनम् ।
द्राक्षा-मधूक-मधुक-लोध्र-काश्मर्य-शारिवाः ॥ ५५ ॥

मुस्तामलक-ह्रीवेर-पद्म-केसर-पद्मकम् ।
मृणाल-चन्दनोशीर-नीलोत्पल-परूषकम् ॥ ५६ ॥

फाण्टो हिमो वा द्राक्षादिर् जाती-कुसुम-वासितः ।
युक्तो मधु-सिता-लाजैर् जयत्य् अनिल-पित्त-जम् ॥ ५७ ॥

ज्वरं मदात्ययं छर्दिं मूर्छां दाहं श्रमं भ्रमम् ।
ऊर्ध्व-गं रक्त-पित्तं च पिपासां कामलाम् अपि ॥ ५८ ॥

१.५८av ज्वरं मदात्ययं छर्दिर् पाचयेत् कटुकां पिष्ट्वा कर्परे ऽभिनवे शुचौ ।
निष्पीडितो घृत-युतस् तद्-रसो ज्वर-दाह-जित् ॥ ५९ ॥

कफ-वाते वचा-तिक्ता-पाठारग्वध-वत्सकाः ।
पिप्पली-चूर्ण-युक्तो वा क्वाथश् छिन्नोद्भवोद्भवः ॥ ६० ॥

व्याघ्री-शुण्ठ्य्-अमृता-क्वाथः पिप्पली-चूर्ण-संयुतः ।
वात-श्लेष्म-ज्वर-श्वास-कास-पीनस-शूल-जित् ॥ ६१ ॥

पथ्या-कुस्तुम्बुरी-मुस्ता-शुण्ठी-कट्तृण-पर्पटम् ।
स-कट्फल-वचा-भार्गी-देवाह्वं मधु-हिङ्गु-मत् ॥ ६२ ॥

कफ-वात-ज्वर-ष्ठीव-कुक्षि-हृत्-पार्श्व-वेदनाः ।
कण्ठामयास्य-श्वयथु-कास-श्वासान् नियच्छति ॥ ६३ ॥

१.६३av कफ-वात-ज्वरे ष्ठेव- आरग्वधादिः स-क्षौद्रः कफ-पित्त-ज्वरं जयेत् ।
तथा तिक्ता-वृषोशीर-त्रायन्ती-त्रि-फलामृताः ॥ ६४ ॥

पटोलातिविषा-निम्ब-मूर्वा-धन्वयवासकाः ।
संनिपात-ज्वरे व्याघ्री-देवदारु-निशा-घनम् ॥ ६५ ॥

पटोल-पत्त्र-निम्ब-त्वक्-त्रि-फला-कटुका-युतम् ।
नागरं पौष्करं मूलं गुडूची कण्टकारिका ॥ ६६ ॥

स-कास-श्वास-पार्श्वार्तौ वात-श्लेष्मोत्तरे ज्वरे ।
मधूक-पुष्प-मृद्वीका-त्रायमाणा-परूषकम् ॥ ६७ ॥

सोशीर-तिक्ता-त्रि-फला-काश्मर्यं कल्पयेद् धिमम् ।
कषायं तं पिबन् काले ज्वरान् सर्वान् अपोहति ॥ ६८ ॥

१.६८dv ज्वरान् सर्वान् व्यपोहति जात्य्-आमलक-मुस्तानि तद्-वद् धन्वयवासकम् ।
बद्ध-विट् कटुका-द्राक्षा-त्रायन्ती-त्रि-फला-गुडम् ॥ ६९ ॥

१.६९dv -त्रायन्ती-त्रि-फला-गुडान् १.६९dv -त्रायन्ती-त्रि-फला-गुडाः जीर्णौषधो ऽन्नं पेयाद्यम् आचरेच् छलेष्म-वान् न तु ।
पेया कफं वर्धयति पङ्कं पांसुषु वृष्टि-वत् ॥ ७० ॥

श्लेष्माभिष्यण्ण-देहानाम् अतः प्राग् अपि योजयेत् ।
यूषान् कुलत्थ-चणक-कलायादि-कृतान् लघून् ॥ ७१ ॥

१.७१av श्लेष्माभिषव-देहानाम् १.७१av श्लेष्माभिस्पन्द-देहानाम् रूक्षांस् तिक्त-रसोपेतान् हृद्यान् रुचि-करान् पटून् ।
रक्ताद्याः शालयो जीर्णाः षष्टिकाश् च ज्वरे हिताः ॥ ७२ ॥

श्लेष्मोत्तरे वीत-तुषास् तथा वाटी-कृता यवाः ।
ओदनस् तैः स्रुतो द्विस् त्रिः प्रयोक्तव्यो यथा-यथम् ॥ ७३ ॥

दोष-दूष्यादि-बलतो ज्वर-घ्न-क्वाथ-साधितः ।
मुद्गाद्यैर् लघुभिर् यूषाः कुलत्थैश् च ज्वरापहाः ॥ ७४ ॥

कारवेल्लक-कर्कोट-बाल-मूलक-पर्पटैः ।
वार्ताक-निम्ब-कुसुम-पटोल-फल-पल्लवैः ॥ ७५ ॥

अत्य्-अन्त-लघुभिर् मांसैर् जाङ्गलैश् च हिता रसाः ।
व्याघ्री-परूष-तर्कारी-द्राक्षामलक-दाडिमैः ॥ ७६ ॥

संस्कृताः पिप्पली-शुण्ठी-धान्य-जीरक-सैन्धवैः ।
सिता-मधुभ्यां प्रायेण संयुता वा कृता-कृताः ॥ ७७ ॥

अन्-अम्ल-तक्र-सिद्धानि रुच्यानि व्यञ्जनानि च ।
अच्छान्य् अनल-संपन्नान्य् अनु-पाने ऽपि योजयेत् ॥ ७८ ॥

तानि क्वथित-शीतं च वारि मद्यं च सात्म्यतः ।
स-ज्वरं ज्वर-मुक्तं वा दिनान्ते भोजयेल् लघु ॥ ७९ ॥

श्लेष्म-क्षय-विवृद्धोष्मा बल-वान् अनलस् तदा ।
यथोचिते ऽथ-वा काले देश-सात्म्यानुरोधतः ॥ ८० ॥

प्राग् अल्प-वह्निर् भुञ्जानो न ह्य् अ-जीर्णेन पीड्यते ।
कषाय-पान-पथ्यान्नैर् दशाह इति लङ्घिते ॥ ८१ ॥

सर्पिर् दद्यात् कफे मन्दे वात-पित्तोत्तरे ज्वरे ।
पक्वेषु दोषेष्व् अमृतं तद् विषोपमम् अन्य-था ॥ ८२ ॥

दशाहे स्याद् अतीते ऽपि ज्वरोपद्रव-वृद्धि-कृत् ।
लङ्घनादि-क्रमं तत्र कुर्याद् आ-कफ-संक्षयात् ॥ ८३ ॥

देह-धात्व्-अ-बल-त्वाच् च ज्वरो जीर्णो ऽनुवर्तते ।
रूक्षं हि तेजो ज्वर-कृत् तेजसा रूक्षितस्य च ॥ ८४ ॥

वमन-स्वेद-कालाम्बु-कषाय-लघु-भोजनैः ।
यः स्याद् अति-बलो धातुः सह-चारी सदा-गतिः ॥ ८५ ॥

तस्य संशमनं सर्पिर् दीप्तस्येवाम्बु वेश्मनः ।
वात-पित्त-जिताम् अग्र्यं संस्कारं चानुरुध्यते ॥ ८६ ॥

१.८६dv संस्कारम् अनुरुध्यते सु-तरां तद् ध्य् अतो दद्याद् यथा-स्वौषध-साधितम् ।
विपरीतं ज्वरोष्माणं जयेत् पित्तं च शैत्यतः ॥ ८७ ॥

स्नेहाद् वातं घृतं तुल्यं योग-संस्कारतः कफम् ।
पूर्वे कषायाः स-घृताः सर्वे योज्या यथा-मलम् ॥ ८८ ॥

त्रि-फला-पिचुमन्द-त्वङ्-मधुकं बृहती-द्वयम् ।
स-मसूर-दलं क्वाथः स-घृतो ज्वर-कास-हा ॥ ८९ ॥

पिप्पलीन्द्रयव-धावनि-तिक्ता-शारिवामलक-तामलकीभिः ।
बिल्व-मुस्त-हिम-पालनि-सेव्यैर् द्राक्षयातिविषया स्थिरया च ॥ ९० ॥

घृतम् आशु निहन्ति साधितं ज्वरम् अग्निं विषमं हलीमकम् ।
अ-रुचिं भृश-तापम् अंसयोर् वमथुं पार्श्व-शिरो-रुजं क्षयम् ॥ ९१ ॥

१.९१bv ज्वरम् उग्रं विषमं हलीमकम् तैल्वकं पवन-जन्मनि ज्वरे योजयेत् त्रिवृतया वियोजितम् ।
तिक्तकं वृष-घृतं च पैत्तिके यच् च पालनिकया शृतं हविः ॥ ९२ ॥

विडङ्ग-सौवर्चल-चव्य-पाठा-व्योषाग्नि-सिन्धूद्भव-याव-शूकैः ।
पलांशकैः क्षीर-समं घृतस्य प्रस्थं पचेज् जीर्ण-कफ-ज्वर-घ्नम् ॥ ९३ ॥

१.९३cv पलांशिकैः क्षीर-समं घृतस्य गुडूच्या रस-कल्काभ्यां त्रि-फलाया वृषस्य वा ।
मृद्वीकाया बलायाश् च स्नेहाः सिद्धा ज्वर-च्छिदः ॥ ९४ ॥

जीर्णे घृते च भुञ्जीत मृदु-मांस-रसौदनम् ।
बलं ह्य् अलं दोष-हरं परं तच् च बल-प्रदम् ॥ ९५ ॥

१.९५bv मृदु-मांस-रसाशनम् कफ-पित्त-हरा मुद्ग-कारवेल्लादि-जा रसाः ।
प्रायेण तस्मान् न हिता जीर्णे वातोत्तरे ज्वरे ॥ ९६ ॥

शूलोदावर्त-विष्टम्भ-जनना ज्वर-वर्धनाः ।
न शाम्यत्य् एवम् अपि चेज् ज्वरः कुर्वीत शोधनम् ॥ ९७ ॥

शोधनार्हस्य वमनं प्राग् उक्तं तस्य योजयेत् ।
आमाशय-गते दोषे बलिनः पालयन् बलम् ॥ ९८ ॥

पक्वे तु शिथिले दोषे ज्वरे वा विष-मद्य-जे ।
मोदकं त्रि-फला-श्यामा-त्रिवृत्-पिप्पलि-केसरैः ॥ ९९ ॥

स-सिता-मधुभिर् दद्याद् व्योषाद्यं वा विरेचनम् ।
द्राक्षा-धात्री-रसं तद्-वत् स-द्राक्षां वा हरीतकीम् ॥ १०० ॥

लिह्याद् वा त्रैवृतं चूर्णं संयुक्तं मधु-सर्पिषा ॥ १००.१+१अब् ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रि-फलां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ १०१ ॥

विरिक्तानां च संसर्गी मण्ड-पूर्वा यथा-क्रमम् ।
च्यवमानं ज्वरोत्क्लिष्टम् उपेक्षेत मलं सदा ॥ १०२ ॥

पक्वो ऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः ।
अतिप्रवर्तमानं वा पाचयन् संग्रहं नयेत् ॥ १०३ ॥

आम-संग्रहणे दोषा दोषोपक्रम ईरिताः ।
पाययेद् दोष-हरणं मोहाद् आम-ज्वरे तु यः ॥ १०४ ॥

१.१०४av आम-संग्रहणाद् दोषो १.१०४bv दोषोपक्रम ईरितः प्रसुप्तं कृष्ण-सर्पं स कराग्रेण परामृशेत् ।
ज्वर-क्षीणस्य न हितं वमनं न विरेचनम् ॥ १०५ ॥

कामं तु पयसा तस्य निरूहैर् वा हरेन् मलान् ।
क्षीरोचितस्य प्रक्षीण-श्लेष्मणो दाह-तृड्-वतः ॥ १०६ ॥

क्षीरं पित्तानिलार्तस्य पथ्यम् अप्य् अतिसारिणः ।
तद् वपुर् लङ्घनोत्तप्तं प्लुष्टं वनम् इवाग्निना ॥ १०७ ॥

दिव्याम्बु जीवयेत् तस्य ज्वरं चाशु नियच्छति ।
संस्कृतं शीतम् उष्णं वा तस्माद् धारोष्णम् एव वा ॥ १०८ ॥

१.१०८dv तद्-वद् धारोष्णम् एव वा विभज्य काले युञ्जीत ज्वरिणं हन्त्य् अतो ऽन्य-था ।
पयः स-शुण्ठी-खर्जूर-मृद्वीका-शर्करा-घृतम् ॥ १०९ ॥

शृत-शीतं मधु-युतं तृड्-दाह-ज्वर-नाशनम् ।
तद्-वद् द्राक्षा-बला-यष्टी-शारिवा-कण-चन्दनैः ॥ ११० ॥

चतुर्-गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत् ।
कासाच् छ्वासाच् छिरः-शूलात् पार्श्व-शूलाच् चिर-ज्वरात् ॥ १११ ॥

मुच्यते ज्वरितः पीत्वा पञ्च-मूली-शृतं पयः ।
शृतम् एरण्ड-मूलेन बाल-बिल्वेन वा ज्वरात् ॥ ११२ ॥

धारोष्णं वा पयः पीत्वा विबद्धानिल-वर्चसः ।
स-रक्त-पिच्छातिसृतेः स-तृट्-शूल-प्रवाहिकात् ॥ ११३ ॥

सिद्धं शुण्ठी-बला-व्याघ्री-गोकण्टक-गुडैः पयः ।
शोफ-मूत्र-शकृद्-वात-विबन्ध-ज्वर-कास-जित् ॥ ११४ ॥

वृश्चीव-बिल्व-वर्षाभू-साधितं ज्वर-शोफ-नुत् ।
शिंशिपा-सार-सिद्धं च क्षीरम् आशु ज्वरापहम् ॥ ११५ ॥

१.११५cv शिंशिपा-सार-सिद्धं वा निरूहस् तु बलं वह्निं वि-ज्वर-त्वं मुदं रुचिम् ।
दोषे युक्तः करोत्य् आशु पक्वे पक्वाशयं गते ॥ ११६ ॥

पित्तं वा कफ-पित्तं वा पक्वाशय-गतं हरेत् ।
स्रंसनं त्रीन् अपि मलान् वस्तिः पक्वाशयाश्रयान् ॥ ११७ ॥

१.११७dv वस्तिः पक्वाशयाश्रितान् प्रक्षीण-कफ-पित्तस्य त्रिक-पृष्ठ-कटी-ग्रहे ।
दीप्ताग्नेर् बद्ध-शकृतः प्रयुञ्जीतानुवासनम् ॥ ११८ ॥

पटोल-निम्ब-च्छदन-कटुका-चतुरङ्गुलैः ।
स्थिरा-बला-गोक्षुरक-मदनोशीर-वालकैः ॥ ११९ ॥

पयस्य् अर्धोदके क्वाथं क्षीर-शेषं विमिश्रितम् ।
कल्कितैर् मुस्त-मदन-कृष्णा-मधुक-वत्सकैः ॥ १२० ॥

वस्तिं मधु-घृताभ्यां च पीडयेज् ज्वर-नाशनम् ।
चतस्रः पर्णिनीर् यष्टी-फलोशीर-नृपद्रुमान् ॥ १२१ ॥

क्वाथयेत् कल्कयेद् यष्टी-शताह्वा-फलिनी-फलम् ।
मुस्तं च वस्तिः स-गुड-क्षौद्र-सर्पिर् ज्वरापहः ॥ १२२ ॥

जीवन्तीं मदनं मेदां पिप्पलीं मधुकं वचाम् ।
ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीम् ॥ १२३ ॥

पिष्ट्वा क्षीरं जलं सर्पिस् तैलं चैक-त्र साधितम् ।
ज्वरे ऽनुवासनं दद्याद् यथा-स्नेहं यथा-मलम् ॥ १२४ ॥

१.१२४cv ज्वरे ऽनुवासनं दद्यात् १.१२४dv तथा स्नेहं यथा मलम् १.१२४dv यथा-दोषं यथा-बलम् ये च सिद्धिषु वक्ष्यन्ते वस्तयो ज्वर-नाशनाः ।
शिरो-रुग्-गौरव-श्लेष्म-हरम् इन्द्रिय-बोधनम् ॥ १२५ ॥

जीर्ण-ज्वरे रुचि-करं दद्यान् नस्यं विरेचनम् ।
स्नैहिकं शून्य-शिरसो दाहार्ते पित्त-नाशनम् ॥ १२६ ॥

धूम-गण्डूष-कवडान् यथा-दोषं च कल्पयेत् ।
प्रतिश्यायास्य-वैरस्य-शिरः-कण्ठामयापहान् ॥ १२७ ॥

अ-रुचौ मातुलुङ्गस्य केसरं साज्य-सैन्धवम् ।
धात्री-द्राक्षा-सितानां वा कल्कम् आस्येन धारयेत् ॥ १२८ ॥

यथोपशय-संस्पर्शान् शीतोष्ण-द्रव्य-कल्पितान् ।
अभ्यङ्गालेप-सेकादीञ् ज्वरे जीर्णे त्वग्-आश्रिते ॥ १२९ ॥

कुर्याद् अञ्जन-धूमांश् च तथैवागन्तु-जे ऽपि तान् ।
दाहे सहस्र-धौतेन सर्पिषाभ्यङ्गम् आचरेत् ॥ १३० ॥

सूत्रोक्तैश् च गणैस् तैस् तैर् मधुराम्ल-कषायकैः ।
दूर्वादिभिर् वा पित्त-घ्नैः शोधनादि-गणोदितैः ॥ १३१ ॥

शीत-वीर्यैर् हिम-स्पर्शैः क्वाथ-कल्की-कृतैः पचेत् ।
तैलं स-क्षीरम् अभ्यङ्गात् सद्यो दाह-ज्वरोपहम् ॥ १३२ ॥

शिरो गात्रं च तैर् एव नाति-पिष्टैः प्रलेपयेत् ।
तत्-क्वाथेन परीषेकम् अवगाहं च योजयेत् ॥ १३३ ॥

तथारनाल-सलिल-क्षीर-शुक्त-घृतादिभिः ।
कपित्थ-मातुलुङ्गाम्ल-विदारी-लोध्र-दाडिमैः ॥ १३४ ॥

बदरी-पल्लवोत्थेन फेनेनारिष्टकस्य वा ।
लिप्ते ऽङ्गे दाह-रुङ्-मोहाश् छर्दिस् तृष्णा च शाम्यति ॥ १३५ ॥

१.१३५bv फेनेनारिष्टकस्य च १.१३५bv फेनेनारिष्ट-जेन वा यो वर्णितः पित्त-हरो दोषोपक्रमणे क्रमः ।
तं च शीलयतः शीघ्रं स-दाहो नश्यति ज्वरः ॥ १३६ ॥

वीर्योष्णैर् उष्ण-संस्पर्शैस् तगरागुरु-कुङ्कुमैः ।
कुष्ठ-स्थौणेय-शैलेय-सरलामरदारुभिः ॥ १३७ ॥

नख-रास्ना-पुर-वचा-चण्डैला-द्वय-चोरकैः ।
पृथ्वीका-शिग्रु-सुरसा-हिंस्रा-ध्यामक-सर्षपैः ॥ १३८ ॥

१.१३८av नख-रास्ना-मुख-वचा- दश-मूलामृतैरण्ड-द्वय-पत्तूर-रोहिषैः ।
तमाल-पत्त्र-भूतीक-शल्लकी-धान्य-दीप्यकैः ॥ १३९ ॥

१.१३९cv तमाल-पत्त्र-पूतीक- मिशि-माष-कुलत्थाग्नि-प्रकीर्या-नाकुली-द्वयैः ।
अन्यैश् च तद्-विधैर् द्रव्यैः शीते तैलं ज्वरे पचेत् ॥ १४० ॥

क्वथितैः कल्कितैर् युक्तैः सुरा-सौवीरकादिभिः ।
तेनाभ्यञ्ज्यात् सुखोष्णेन तैः सु-पिष्टैश् च लेपयेत् ॥ १४१ ॥

१.१४१cv तेनाभ्यज्य सुखोष्णेन कवोष्णैस् तैः परीषेकम् अवगाहं च कल्पयेत् ।
केवलैर् अपि तद्-वच् च शुक्त-गो-मूत्र-मस्तुभिः ॥ १४२ ॥

आरग्वधादि-वर्गं च पानाभ्यञ्जन-लेपने ।
धूपान् अगुरु-जान् यांश् च वक्ष्यन्ते विषम-ज्वरे ॥ १४३ ॥

१.१४३cv धूपान् अगुरु-जान् ये च अग्न्य्-अन्-अग्नि-कृतान् स्वेदान् स्वेदि भेषज-भोजनन् ।
गर्भ-भू-वेश्म-शयनं कुथ-कम्बल-रल्लकान् ॥ १४४ ॥

निर्-धूम-दीप्तैर् अङ्गारैर् हसन्तीश् च हसन्तिकाः ।
मद्यं स-त्र्य्-ऊषणं तक्रं कुलत्थ-व्रीहि-कोद्रवान् ॥ १४५ ॥

संशीलयेद् वेपथु-मान् यच् चान्यद् अपि पित्तलम् ।
दयिताः स्तन-शालिन्यः पीना विभ्रम-भूषणाः ॥ १४६ ॥

१.१४६av भजेच् छीतार्दितो युक्त्या यौवनासव-मत्ताश् च तम् आलिङ्गेयुर् अङ्गनाः ।
वीत-शीतं च विज्ञाय तास् ततो ऽपनयेत् पुनः ॥ १४७ ॥

१.१४७cv वीत-शीतं तु वियतास् वर्धनेनैक-दोषस्य क्षपणेनोच्छ्रितस्य वा ।
कफ-स्थानानुपूर्व्या वा तुल्य-कक्षाञ् जयेन् मलान् ॥ १४८ ॥

१.१४८bv क्षपणेनोच्छ्रितस्य च शमयेत् पित्तम् एवादौ ज्वरेषु समवायिषु ।
दुर्-निवार-तरं तद् धि ज्वरार्तानां विशेषतः ॥ १४८+१ ॥

छर्दि-मूर्छा-पिपासादीन् अ-विरोधाज् ज्वरस्य तु ॥ १४८+२अब् ॥
संनिपात-ज्वरस्यान्ते कर्ण-मूले सु-दारुणः ।
शोफः संजायते येन कश्-चिद् एव विमुच्यते ॥ १४९ ॥

१.१४९cv शोफः संजायते तेन १.१४९dv कश्-चिद् एव प्रमुच्यते रक्तावसेचनैः शीघ्रं सर्पिः-पानैश् च तं जयेत् ।
प्रदेहैः कफ-पित्त-घ्नैर् नावनैः कवड-ग्रहैः ॥ १५० ॥

१.१५०cv प्रदेहैः कफ-वात-घ्नैर् शीतोष्ण-स्निग्ध-रूक्षाद्यैर् ज्वरो यस्य न शाम्यति ।
शाखानुसारी तस्याशु मुञ्चेद् बाह्वोः क्रमात् सिराम् ॥ १५१ ॥

अयम् एव विधिः कार्यो विषमे ऽपि यथा-यथम् ।
ज्वरे विभज्य वातादीन् यश् चान्-अन्तरम् उच्यते ॥ १५२ ॥

१.१५२bv विषमे च यथा-यथम् पटोल-कटुका-मुस्ता-प्राणदा-मधुकैः कृताः ।
त्रि-चतुः-पञ्च-शः क्वाथा विषम-ज्वर-नाशनाः ॥ १५३ ॥

योजयेत् त्रि-फलां पथ्यां गुडूचीं पिप्पलीं पृथक् ।
तैस् तैर् विधानैः स-गुडं भल्लातकम् अथापि वा ॥ १५४ ॥

लङ्घनं बृंहणं वादौ ज्वरागमन-वासरे ।
प्रातः स-तैलं लशुनं प्राग्-भक्तं वा तथा घृतम् ॥ १५५ ॥

१.१५५av लङ्घनं बृंहणं वापि जीर्णं तद्-वद् दधि पयस् तक्रं सर्पिश् च षट्-पलम् ।
कल्याणकं पञ्च-गव्यं तिक्ताख्यं वृष-साधितम् ॥ १५६ ॥

त्रि-फला-कोल-तर्कारी-क्वाथे दध्ना शृतं घृतम् ।
तिल्वक-त्वक्-कृतावापं विषम-ज्वर-जित् परम् ॥ १५७ ॥

सुरां तीक्ष्णं च यन् मद्यं शिखि-तित्तिरि-दक्ष-जम् ।
मांसं मेद्योष्ण-वीर्यं च सहान्नेन प्र-कामतः ॥ १५८ ॥

१.१५८bv शिखि-तित्तिरि-कुक्कुटात् १.१५८cv मांसं मध्योष्ण-वीर्यं च १.१५८cv मांसं मेध्योष्ण-वीर्यं च सेवित्वा तद्-अहः स्वप्याद् अथ-वा पुनर् उल्लिखेत् ।
सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः ॥ १५९ ॥

नीलिनीम् अजगन्धां च त्रिवृतां कटु-रोहिणीम् ।
पिबेज् ज्वरस्यागमने स्नेह-स्वेदोपपादितः ॥ १६० ॥

मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम् ।
योज्यं हिङ्गु-समा व्याघ्री-वसा नस्यं स-सैन्धवम् ॥ १६१ ॥

पुराण-सर्पिः सिंहस्य वसा तद्-वत् स-सैन्धवा ।
पलङ्कषा निम्ब-पत्त्रं वचा कुष्ठं हरीतकी ॥ १६२ ॥

सर्षपाः स-यवाः सर्पिर् धूपो विड् वा बिडाल-जा ।
पुर-ध्याम-वचा-सर्ज-निम्बार्कागुरु-दारुभिः ॥ १६३ ॥

धूपो ज्वरेषु सर्वेषु कार्यो ऽयम् अ-पराजितः ।
धूप-नस्याञ्जनोत्त्रासा ये चोक्ताश् चित्त-वैकृते ॥ १६४ ॥

१.१६४bv प्रयोक्तव्यो ऽ-पराजितः १.१६४cv धूप-नस्याञ्जन-त्रासा दैवाश्रयं च भैषज्यं ज्वरान् सर्वान् व्यपोहति ।
विशेषाद् विषमान् प्रायस् ते ह्य् आगन्त्व्-अनुबन्ध-जाः ॥ १६५ ॥

यथा-स्वं च सिरां विध्येद् अ-शान्तौ विषम-ज्वरे ।
केवलानिल-वीसर्प-विस्फोटाभिहत-ज्वरे ॥ १६६ ॥

१.१६६bv अ-शान्ते विषम-ज्वरे १.१६६dv -विस्फोटाभिहते ज्वरे सर्पिः-पान-हिमालेप-सेक-मांस-रसाशनम् ।
कुर्याद् यथा-स्वम् उक्तं च रक्त-मोक्षादि साधनम् ॥ १६७ ॥

१.१६७av सर्पिः-पानं हिमालेप- १.१६७bv -सेकान् मांस-रसाशनम् ग्रहोत्थे भूत-विद्योक्तं बलि-मन्त्रादि साधनम् ।
ओषधि-गन्ध-जे पित्त-शमनं विष-जिद् विषे ॥ १६८ ॥

१.१६८cv औषधि-गन्ध-जे पित्त- इष्टैर् अर्थैर् मनो-ज्ञैश् च यथा-दोष-शमेन च ।
हिता-हित-विवेकैश् च ज्वरं क्रोधादि-जं जयेत् ॥ १६९ ॥

क्रोध-जो याति कामेन शान्तिं क्रोधेन काम-जः ।
भय-शोकोद्भवौ ताभ्यां भी-शोकाभ्यां तथेतरौ ॥ १७० ॥

शापाथर्वण-मन्त्रोत्थे विधिर् दैव-व्यपाश्रयः ।
ते ज्वराः केवलाः पूर्वं व्याप्यन्ते ऽन्-अन्तरम् मलैः ॥ १७१ ॥

तस्माद् दोषानुसारेण तेष्व् आहारादि कल्पयेत् ।
न हि ज्वरो ऽनुबध्नाति मारुताद्यैर् विना कृतः ॥ १७२ ॥

ज्वर-काल-स्मृतिं चास्य हारिभिर् विषयैर् हरेत् ।
करुणार्द्रं मनः शुद्धं सर्व-ज्वर-विनाशनम् ॥ १७३ ॥

१.१७३dv सर्व-ज्वर-विमोक्षणम् त्यजेद् आ-बल-लाभाच् च व्यायाम-स्नान-मैथुनम् ।
गुर्व्-अ-सात्म्य-विदाह्य् अन्नं यच् चान्यज् ज्वर-कारणम् ॥ १७४ ॥

न वि-ज्वरो ऽपि सहसा सर्वान्नीनो भवेत् तथा ।
निवृत्तो ऽपि ज्वरः शीघ्रं व्यापादयति दुर्-बलम् ॥ १७५ ॥

१.१७५bv सर्वान्नीनो भवेत् तदा १.१७५cv निवृत्तो हि ज्वरः शीघ्रं सद्यः प्राण-हरो यस्मात् तस्मात् तस्य विशेषतः ।
तस्यां तस्याम् अवस्थायां तत् तत् कुर्याद् भिषग्-जितम् ॥ १७६ ॥

१.१७६dv तत् तत् कुर्याच् चिकित्सितम् ओषधयो मणयश् च सु-मन्त्राः साधु-गुरु-द्वि-ज-दैवत-पूजाः ।
प्रीति-करा मनसो विषयाश् च घ्नन्त्य् अपि विष्णु-कृतं ज्वरम् उग्रम् ॥ १७७ ॥

१.१७७av औषधयो मणयश् च सु-मन्त्राः

# अध्याय 02

ऊर्ध्व-गं बलिनो ऽ-वेगम् एक-दोषानुगं नवम् ।
रक्त-पित्तं सुखे काले साधयेन् निर्-उपद्रवम् ॥ १ ॥

अधो-गं यापयेद् रक्तं यच् च दोष-द्वयानुगम् ।
शान्तं शान्तं पुनः कुप्यन् मार्गान् मार्गान्तरं च यत् ॥ २ ॥

अति-प्रवृत्तं मन्दाग्नेस् त्रि-दोषं द्वि-पथं त्यजेत् ।
ज्ञात्वा निदानम् अयनं मलाव् अनु-बलौ बलम् ॥ ३ ॥

देश-कालाद्य्-अवस्थां च रक्त-पित्ते प्रयोजयेत् ।
लङ्घनं बृंहणं वादौ शोधनं शमनं तथा ॥ ४ ॥

२.४cv लङ्घनं बृंहणं चादौ संतर्पणोत्थं बलिनो बहु-दोषस्य साधयेत् ।
ऊर्ध्व-भागं विरेकेण वमनेन त्व् अधो-गतम् ॥ ५ ॥

२.५dv वमनेन त्व् अधो-गमम् शमनैर् बृंहणैश् चान्यल् लङ्घ्य-बृंहयान् अवेक्ष्य च ।
ऊर्ध्वं प्रवृत्ते शमनौ रसौ तिक्त-कषायकौ ॥ ६ ॥

२.६bv लङ्घ्य-बृंहयान् अपेक्ष्य च उपवासश् च निः-शुण्ठी-षड्-अङ्गोदक-पायिनः ।
अधो-गे रक्त-पित्ते तु बृंहणो मधुरो रसः ॥ ७ ॥

ऊर्ध्व-गे तर्पणं योज्यं प्राक् च पेया त्व् अधो-गते ।
अश्नतो बलिनो ऽ-शुद्धं न धार्यं तद् धि रोग-कृत् ॥ ८ ॥

२.८bv पेया पूर्वम् अधो-गते २.८bv प्राक् च पेया त्व् अधो-गमे २.८bv वा प्राक् पेया त्व् अधो-गमे धारयेद् अन्य-था शीघ्रम् अग्नि-वच् छीघ्र-कारि तत् ।
त्रिवृच्-छ्यामा-कषायेण कल्केन च स-शर्करम् ॥ ९ ॥

गल-ग्रहं पूति-नस्यं मूर्छायम् अ-रुचिं ज्वरम् ।
गुल्मं प्लीहानम् आनाहं किलासं मूत्र-कृच्छ्र-ताम् ॥ ९.१+१ ॥

कुष्ठान्य् अर्शांसि वीसर्पं वर्ण-नाशं भगन्दरम् ।
बुद्धीन्द्रियोपरोधं च कुर्यात् स्तम्भितम् आदितः ॥ ९.१+२ ॥

साधयेद् विधि-वल् लेहं लिह्यात् पाणि-तलं ततः ।
त्रिवृता त्रि-फला श्यामा पिप्पली शर्करा मधु ॥ १० ॥

मोदकः संनिपातोर्ध्व-रक्त-शोफ-ज्वरापहः ।
त्रिवृत् सम-सिता तद्-वत् पिप्पली-पाद-संयुता ॥ ११ ॥

२.११bv -रक्त-पित्त-ज्वरापहः वमनं फल-संयुक्तं तर्पणं स-सिता-मधु ।
स-सितं वा जलं क्षौद्र-युक्तं वा मधुकोदकम् ॥ १२ ॥

क्षीरं वा रसम् इक्षोर् वा शुद्धस्यान्-अन्तरो विधिः ।
यथा-स्वं मन्थ-पेयादिः प्रयोज्यो रक्षता बलम् ॥ १३ ॥

मन्थो ज्वरोक्तो द्राक्षादिः पित्त-घ्नैर् वा फलैः कृतः ।
मधु-खर्जूर-मृद्वीका-परूषक-सिताम्भसा ॥ १४ ॥

मन्थो वा पञ्च-सारेण स-घृतैर् लाज-सक्तुभिः ।
दाडिमामलकाम्लो वा मन्दाग्न्य्-अम्लाभिलाषिणाम् ॥ १५ ॥

२.१५dv मन्दाग्न्य्-अम्लाभिलाषिणः कमलोत्पल-किञ्जल्क-पृश्निपर्णी-प्रियङ्गुकाः ।
उशीरं शबरं लोध्रं शृङ्गवेरं कु-चन्दनम् ॥ १६ ॥

ह्रीवेरं धातकी-पुष्पं बिल्व-मध्यं दुरालभा ।
अर्धार्धैर् विहिताः पेया वक्ष्यन्ते पाद-यौगिकाः ॥ १७ ॥

२.१७cv अर्धचैर् विहिताः पेया २.१७cv अर्धार्ध-विहिताः पेया भूनिम्ब-सेव्य-जलदा मसूराः पृश्निपर्ण्य् अपि ।
विदारिगन्धा मुद्गाश् च बला सर्पिर् हरेणुकाः ॥ १८ ॥

२.१८dv बला सर्पिः प्रियङ्गुकाः जाङ्गलानि च मांसानि शीत-वीर्याणि साधयेत् ।
पृथक् पृथग् जले तेषां यवागूः कल्पयेद् रसे ॥ १९ ॥

शीताः स-शर्करा-क्षौद्रास् तद्-वन् मांस-रसान् अपि ।
ईषद्-अम्लान् अन्-अम्लान् वा घृत-भृष्टान् स-शर्करान् ॥ २० ॥

शूक-शिम्बी-भवं धान्यं रक्ते शाकं च शस्यते ।
अन्न-स्व-रूप-विज्ञाने यद् उक्तं लघु-शीतलम् ॥ २१ ॥

पूर्वोक्तम् अम्बु पानीयं पञ्च-मूलेन वा शृतम् ।
लघुना शृत-शीतं वा मध्व्-अम्भो वा फलाम्बु वा ॥ २२ ॥

शशः स-वास्तुकः शस्तो विबन्धे तित्तिरिः पुनः ।
उदुम्बरस्य निर्यूहे साधितो मारुते ऽधिके ॥ २३ ॥

प्लक्षस्य बर्हिणस् तद्-वन् न्यग्रोधस्य च कुक्कुटः ।
यत् किञ्-चिद् रक्त-पित्तस्य निदानं तच् च वर्जयेत् ॥ २४ ॥

वासा-रसेन फलिनी-मृल्-लोध्राञ्जन-माक्षिकम् ।
पित्तासृक् शमयेत् पीतं निर्यासो वाटरूषकात् ॥ २५ ॥

शर्करा-मधु-संयुक्तः केवलो वा शृतो ऽपि वा ।
वृषः सद्यो जयत्य् अस्रं स ह्य् अस्य परम् औषधम् ॥ २६ ॥

पटोल-मालती-निम्ब-चन्दन-द्वय-पद्मकम् ।
लोध्रो वृषस् तण्डुलीयः कृष्णा मृन् मदयन्तिका ॥ २७ ॥

२.२७av पटोलामलकी-निम्ब- शतावरी गोपकन्या काकोल्यौ मधुयष्टिका ।
रक्त-पित्त-हराः क्वाथास् त्रयः स-मधु-शर्कराः ॥ २८ ॥

पलाश-वल्क-क्वाथो वा सु-शीतः शर्करान्वितः ।
लिह्याद् वा मधु-सर्पिर्भ्यां गवाश्व-शकृतो रसम् ॥ २९ ॥

२.२९cv पिबेद् वा मधु-सर्पिर्भ्यां स-क्षौद्रं ग्रथिते रक्ते लिह्यात् पारावताच् छकृत् ।
अति-निःस्रुत-रक्तश् च क्षौद्रेण रुधिरं पिबेत् ॥ ३० ॥

२.३०bv लिह्यात् पारावतं शकृत् २.३०cv अति-निःसृत-रक्तश् च २.३०cv अति-निःसृत-रक्तो वा २.३०cv अति-निःस्रुत-रक्तो वा जाङ्गलं भक्षयेद् वाजम् आमं पित्त-युतं यकृत् ।
चन्दनोशीर-जलद-लाज-मुद्ग-कणा-यवैः ॥ ३१ ॥

बला-जले पर्युषितैः कषायो रक्त-पित्त-हा ।
प्रसादश् चन्दनाम्भो-ज-सेव्य-मृद्-भृष्ट-लोष्ट-जः ॥ ३२ ॥

सु-शीतः स-सिता-क्षौद्रः शोणितातिप्रवृत्ति-जित् ।
आपोथ्य वा नवे कुम्भे प्लावयेद् इक्षु-गण्डिकाः ॥ ३३ ॥

स्थितं तद् गुप्तम् आकाशे रात्रिं प्रातः स्रुतं जलम् ।
मधु-मद् विकचाम्भो-ज-कृतोत्तंसं च तद्-गुणम् ॥ ३४ ॥

ये च पित्त-ज्वरे चोक्ताः कषायास् तांश् च योजयेत् ।
कषायैर् विविधैर् एभिर् दीप्ते ऽग्नौ विजिते कफे ॥ ३५ ॥

रक्त-पित्तं न चेच् छाम्येत् तत्र वातोल्बणे पयः ।
युञ्ज्याच् छागं शृतं तद्-वद् गव्यं पञ्च-गुणे ऽम्भसि ॥ ३६ ॥

पञ्च-मूलेन लघुना शृतं वा स-सिता-मधु ।
जीवकर्षभक-द्राक्षा-बला-गोक्षुर-नागरैः ॥ ३७ ॥

पृथक् पृथक् शृतं क्षीरं स-घृतं सितयाथ-वा ।
गोकण्टकाभीरु-शृतं पर्णिनीभिस् तथा पयः ॥ ३८ ॥

हन्त्य् आशु रक्तं स-रुजं विशेषान् मूत्र-मार्ग-गम् ।
विण्-मार्ग-गे विशेषेण हितं मोच-रसेन तु ॥ ३९ ॥

वट-प्ररोहैर् शुङ्गैर् वा शुण्ठ्य्-उदीच्योत्पलैर् अपि ।
रक्तातीसार-दुर्-नाम-चिकित्सां चात्र कल्पयेत् ॥ ४० ॥

२.४०av वट-प्ररोहैर् शृङ्गैर् वा पीत्वा कषायान् पयसा भुञ्जीत पयसैव च ।
कषाय-योगैर् एभिर् वा विपक्वं पाययेद् घृतम् ॥ ४१ ॥

स-मूल-मस्तकं क्षुण्णं वृषम् अष्ट-गुणे ऽम्भसि ।
पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ ४२ ॥

तत्-पुष्प-गर्भं तच् छीतं स-क्षौद्रं पित्त-शोणितम् ।
पित्त-गुल्म-ज्वर-श्वास-कास-हृद्-रोग-कामलाः ॥ ४३ ॥

तिमिर-भ्रम-वीसर्प-स्वर-सादांश् च नाशयेत् ।
पलाश-वृन्त-स्व-रसे तद्-गर्भं च घृतं पचेत् ॥ ४४ ॥

स-क्षौद्रं तच् च रक्त-घ्नं तथैव त्रायमाणया ।
रक्ते स-पिच्छे स-कफे ग्रथिते कण्ठ-मार्ग-गे ॥ ४५ ॥

लिह्यान् माक्षिक-सर्पिर्भ्यां क्षारम् उत्पल-नाल-जम् ।
पृथक् पृथक् तथाम्भो-ज-रेणु-श्यामा-मधूक-जम् ॥ ४६ ॥

गुदागमे विशेषेण शोणिते वस्तिर् इष्यते ।
घ्राण-गे रुधिरे शुद्धे नावनं चानुषेचयेत् ॥ ४७ ॥

कषाय-योगान् पूर्वोक्तान् क्षीरेक्ष्व्-आदि-रसाप्लुतान् ।
क्षीरादीन् स-सितांस् तोयं केवलं वा जलं हितं ॥ ४८ ॥

२.४८bv क्षीरेक्ष्व्-आदि-रस-प्लुतान् रसो दाडिम-पुष्पाणाम् आम्रास्थ्नः शाद्वलस्य वा ।
कल्पयेच् छीत-वर्गं च प्रदेहाभ्यञ्जनादिषु ॥ ४९ ॥

२.४९bv आम्रास्थ्नः शाद्वलस्य च सु-सूक्ष्मा माष-पिष्टी च घृत-भृष्टा शिवस्य च ।
रुणद्धि मूर्ध-लेपेन नासा-रक्तं न संशयः ॥ ४९.१+१ ॥

यच् च पित्त-ज्वरे प्रोक्तं बहिर् अन्तश् च भेषजम् ।
रक्त-पित्ते हितं तच् च क्षत-क्षीणे हितं च यत् ॥ ५० ॥

# अध्याय 03

केवलानिल-जं कासं स्नेहैर् आदाव् उपाचरेत् ।
वात-घ्न-सिद्धैः स्निग्धैश् च पेया-यूष-रसादिभिः ॥ १ ॥

लेहैर् धूमैस् तथाभ्यङ्ग-स्वेद-सेकावगाहनैः ।
वस्तिभिर् बद्ध-विड्-वातं स-पित्तं तूर्ध्व-भक्तिकैः ॥ २ ॥

३.२dv स-पित्तं वोर्ध्व-भक्तिकैः ३.२dv स-पित्तं वोर्ध्व-भक्तिकैः घृतैः क्षीरैश् च स-कफं जयेत् स्नेह-विरेचनैः ।
गुडूची-कण्टकारीभ्यां पृथक् त्रिंशत्-पलाद् रसे ॥ ३ ॥

प्रस्थः सिद्धो घृताद् वात-कास-नुद् वह्नि-दीपनः ।
क्षार-रास्ना-वचा-हिङ्गु-पाठा-यष्ट्य्-आह्व-धान्यकैः ॥ ४ ॥

द्वि-शाणैः सर्पिषः प्रस्थं पञ्च-कोल-युतैः पचेत् ।
दश-मूलस्य निर्यूहे पीतो मण्डानुपायिना ॥ ५ ॥

स कास-श्वास-हृत्-पार्श्व-ग्रहणी-रोग-गुल्म-नुत् ।
द्रोणे ऽपां साधयेद् रास्ना-दश-मूल-शतावरीः ॥ ६ ॥

पलोन्मिता द्वि-कुडवं कुलत्थं बदरं यवं ।
तुलार्धं चाज-मांसस्य तेन साध्यं घृताढकम् ॥ ७ ॥

सम-क्षीरं पलांशैश् च जीवनीयैः समीक्ष्य तत् ।
प्रयुक्तं वात-रोगेषु पान-नावन-वस्तिभिः ॥ ८ ॥

पञ्च-कासाञ् छिरः-कम्पं योनि-वङ्क्षण-वेदनाम् ।
सर्वाङ्गैकाङ्ग-रोगांश् च स-प्लीहोर्ध्वानिलाञ् जयेत् ॥ ९ ॥

विदार्य्-आदि-गण-क्वाथ-कल्क-सिद्धं च कास-जित् ।
अशोक-बीज-क्षवक-जन्तुघ्नाञ्जन-पद्मकैः ॥ १० ॥

स-विडैश् च घृतं सिद्धं तच्-चूर्णं वा घृत-प्लुतम् ।
लिह्यात् पयश् चानुपिबेद् आजं कासाति-पीडितः ॥ ११ ॥

३.११dv आजं कासाभिपीडितः ३.११dv आजं कासादि-पीडितः विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ।
भार्गी क्षारश् च तच् चूर्णं पिबेद् वा घृत-मात्रया ॥ १२ ॥

स-कफे ऽनिल-जे कासे श्वास-हिध्मा-हताग्निषु ।
दुरालभां शृङ्गवेरं शठीं द्राक्षां सितोपलाम् ॥ १३ ॥

३.१३dv शुण्ठीं द्राक्षां सितोपलाम् लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वात-जे ।
दुःस्पर्शां पिप्पलीं मुस्तां भार्गीं कर्कटकीं शठीम् ॥ १४ ॥

पुराण-गुड-तैलाभ्यां चूर्णितान्य् अवलेहयेत् ।
तद्-वत् स-कृष्णां शुण्ठीं च स-भार्गीं तद्-वद् एव च ॥ १५ ॥

पिबेच् च कृष्णां कोष्णेन सलिलेन स-सैन्धवाम् ।
मस्तुना स-सितां शुण्ठीं दध्ना वा कण-रेणुकाम् ॥ १६ ॥

३.१६dv दध्ना वा कण-रेणुकम् पिबेद् बदर-मज्ज्ञो वा मदिरा-दधि-मस्तुभिः ।
अथ-वा पिप्पली-कल्कं घृत-भृष्टं स-सैन्धवम् ॥ १७ ॥

३.१७av पिबेद् बदर-मज्जां वा कासी स-पीनसो धूमं स्नैहिकं विधिना पिबेत् ।
हिध्मा-श्वासोक्त-धूमांश् च क्षीर-मांस-रसाशनः ॥ १८ ॥

ग्राम्यानूपौदकैः शालि-यव-गोधूम-षष्टिकान् ।
रसैर् माषात्मगुप्तानां यूषैर् वा भोजयेद् धितान् ॥ १९ ॥

३.१९av ग्राम्यानूपोद्भवैः शालि- यवानी-पिप्पली-बिल्व-मध्य-नागर-चित्रकैः ।
रास्नाजाजी-पृथक्पर्णी-पलाश-शठि-पौष्करैः ॥ २० ॥

सिद्धां स्निग्धाम्ल-लवणां पेयाम् अनिल-जे पिबेत् ।
कटी-हृत्-पार्श्व-कोष्ठार्ति-श्वास-हिध्मा-प्रणाशनीम् ॥ २१ ॥

दश-मूल-रसे तद्-वत् पञ्च-कोल-गुडान्विताम् ।
पिबेत् पेयां सम-तिलां क्षैरेयीं वा स-सैन्धवाम् ॥ २२ ॥

मात्स्य-कौक्कुट-वाराहैर् मांसैर् वा साज्य-सैन्धवाम् ।
वास्तुको वायसी-शाकं कासघ्नः सुनिषण्णकः ॥ २३ ॥

कण्टकार्याः फलं पत्त्रं बालं शुष्कं च मूलकम् ।
स्नेहास् तैलादयो भक्ष्याः क्षीरेक्षु-रस-गौडिकाः ॥ २४ ॥

दधि-मस्त्व्-आरनालाम्ल-फलाम्बु-मदिराः पिबेत् ।
पित्त-कासे तु स-कफे वमनं सर्पिषा हितम् ॥ २५ ॥

तथा मदन-काश्मर्य-मधुक-क्वथितैर् जलैः ।
फल-यष्ट्य्-आह्व-कल्कैर् वा विदारीक्षु-रसाप्लुतैः ॥ २६ ॥

पित्त-कासे तनु-कफे त्रिवृतां मधुरैर् युताम् ।
युञ्ज्याद् विरेकाय युतां घन-श्लेष्मणि तिक्तकैः ॥ २७ ॥

हृत-दोषो हिमं स्वादु स्निग्धं संसर्जनं भजेत् ।
घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥ २८ ॥

लेहः पैत्ते सिता-धात्री-क्षौद्र-द्राक्षा-हिमोत्पलैः ।
स-घृतः सानिले हितः स-कफे साब्द-मरिचः ॥ २९ ॥

३.२९av लेहः पित्ते सिता-धात्री- मृद्वीकार्ध-शतं त्रिंशत् पिप्पलीः शर्करा-पलम् ।
लेहयेन् मधुना गोर् वा क्षीर-पस्य शकृद्-रसम् ॥ ३० ॥

त्वग्-एला-व्योष-मृद्वीका-पिप्पली-मूल-पौष्करैः ।
लाज-मुस्ता-शठी-रास्ना-धात्री-फल-विभीतकैः ॥ ३१ ॥

शर्करा-क्षौद्र-सर्पिर्भिर् लेहो हृद्-रोग-कास-हा ।
मधुरैर् जाङ्गल-रसैर् यव-श्यामाक-कोद्रवाः ॥ ३२ ॥

मुद्गादि-यूषैः शाकैश् च तिक्तकैर् मात्रया हिताः ।
घन-श्लेष्मणि लेहाश् च तिक्तका मधु-संयुताः ॥ ३३ ॥

शालयः स्युस् तनु-कफे षष्टिकाश् च रसादिभिः ।
शर्कराम्भो ऽनु-पानार्थं द्राक्षेक्षु-स्व-रसाः पयः ॥ ३४ ॥

काकोली-बृहती-मेदा-द्वयैः स-वृष-नागरैः ।
पित्त-कासे रस-क्षीर-पेया-यूषान् प्रकल्पयेत् ॥ ३५ ॥

द्राक्षां कणां पञ्च-मूलं तृणाख्यं च पचेज् जले ।
तेन क्षीरं शृतं शीतं पिबेत् स-मधु-शर्करम् ॥ ३६ ॥

साधितां तेन पेयां वा सु-शीतां मधुनान्विताम् ।
शठी-ह्रीवेर-बृहती-शर्करा-विश्व-भेषजम् ॥ ३७ ॥

पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृत-मूर्छितम् ।
मेदां विदारीं काकोलीं स्वयङ्गुप्ता-फलं बलाम् ॥ ३८ ॥

शर्करां जीवकं मुद्ग-माषपर्ण्यौ दुरालभाम् ।
कल्की-कृत्य पचेत् सर्पिः क्षीरेणाष्ट-गुणेन तत् ॥ ३९ ॥

पान-भोजन-लेहेषु प्रयुक्तं पित्त-कास-जित् ।
लिह्याद् वा चूर्णम् एतेषां कषायम् अथ-वा पिबेत् ॥ ४० ॥

कफ-कासी पिबेद् आदौ सुरकाष्ठात् प्रदीपितात् ।
स्नेहं परिस्रुतं व्योष-यव-क्षारावचूर्णितम् ॥ ४१ ॥

३.४१av कफ-कासे पिबेद् आदौ स्निग्धं विरेचयेद् ऊर्ध्वम् अधो मूर्ध्नि च युक्तितः ।
तीक्ष्णैर् विरेकैर् बलिनं संसर्गीं चास्य योजयेत् ॥ ४२ ॥

यव-मुद्ग-कुलत्थान्नैर् उष्ण-रूक्षैः कटूत्कटैः ।
कासमर्दक-वार्ताक-व्याघ्री-क्षार-कणान्वितैः ॥ ४३ ॥

धान्व-बैल-रसैः स्नेहैस् तिल-सर्षप-निम्ब-जैः ।
दश-मूलाम्बु घर्माम्बु मद्यं मध्व्-अम्बु वा पिबेत् ॥ ४४ ॥

३.४४av धान्व-बैल-रसैर् लेहैस् ३.४४bv तिल-सर्षप-बिल्व-जैः मूलैः पौष्कर-शम्याक-पटोलैः संस्थितं निशाम् ।
पिबेद् वारि सह-क्षौद्रं कालेष्व् अन्नस्य वा त्रिषु ॥ ४५ ॥

३.४५bv -पटोलैर् अन्वितं निशाम् पिप्पली पिप्पली-मूलं शृङ्गवेरं विभीतकम् ।
शिखि-कुक्कुट-पिच्छानां मषी क्षारो यवोद्भवः ॥ ४६ ॥

विशाला पिप्पली-मूलं त्रिवृता च मधु-द्रवाः ।
कफ-कास-हरा लेहास् त्रयः श्लोकार्ध-योजिताः ॥ ४७ ॥

मधुना मरिचं लिह्यान् मधुनैव च जोङ्गकम् ।
पृथग् रसांश् च मधुना व्याघ्री-वार्ताक-भृङ्ग-जान् ॥ ४८ ॥

कासघ्नस्याश्व-शकृतः सुरसस्यासितस्य च ।
देवदारु-शठी-रास्ना-कर्कटाख्या-दुरालभाः ॥ ४९ ॥

३.४९bv सुरसस्यासितस्य वा पिप्पली नागरं मुस्तं पथ्या धात्री सितोपला ।
लाजाः सितोपला सर्पिः शृङ्गी धात्री-फलोद्भवा ॥ ५० ॥

३.५०dv शृङ्गी धात्री-फलाद् रजः मधु-तैल-युता लेहास् त्रयो वातानुगे कफे ।
द्वे पले दाडिमाद् अष्टौ गुडाद् व्योषात् पल-त्रयम् ॥ ५१ ॥

रोचनं दीपनं स्वर्यं पीनस-श्वास-कास-जित् ।
गुड-क्षारोषण-कणा-दाडिमं श्वास-कास-जित् ॥ ५२ ॥

३.५२dv -दाडिमाच् छ्वास-कास-जित् क्रमात् पल-द्वयार्धाक्ष-कर्षार्धाक्ष-पलोन्मितम् ।
पिबेज् ज्वरोक्तं पथ्यादि स-शृङ्गीकं च पाचनम् ॥ ५३ ॥

३.५३bv -कर्षाक्षार्ध-पलोन्मितम् अथ-वा दीप्यक-त्रिवृद्-विशाला-घन-पौष्करम् ।
स-कणं क्वथितं मूत्रे कफ-कासी जले ऽपि वा ॥ ५४ ॥

तैल-भृष्टं च वैदेही-कल्काक्षं स-सितोपलम् ।
पाययेत् कफ-कास-घ्नं कुलत्थ-सलिलाप्लुतम् ॥ ५५ ॥

दश-मूलाढके प्रस्थं घृतस्याक्ष-समैः पचेत् ।
पुष्कराह्व-शठी-बिल्व-सुरसा-व्योष-हिङ्गुभिः ॥ ५६ ॥

३.५६cv पुष्कराख्य-शठी-बिल्व- पेयानु-पानं तत् सर्व-वात-श्लेष्मामयापहम् ।
निर्गुण्डी-पत्त्र-निर्यास-साधितं कास-जिद् घृतम् ॥ ५७ ॥

घृतं रसे विडङ्गानां व्योष-गर्भं च साधितम् ॥ ५७अब् ॥
पुनर्नव-शिवातिका-सरल-कासमर्दामृता- ॥ ५८अ ॥
पटोल-बृहती-फणिज्जक-रसैः पयः-संयुतैः ॥ ५८ब् ॥
घृतं त्रि-कटुना च सिद्धम् उपयुज्य संजायते ॥ ५८च् ॥
न कास-विषम-ज्वर-क्षय-गुदाङ्कुरेभ्यो भयम् ॥ ५८द् ॥
स-मूल-फल-पत्त्रायाः कण्टकार्या रसाढके ॥ ५९अब् ॥
३.५९av स-मूल-फल-शाखायाः घृत-प्रस्थं बला-व्योष-विडङ्ग-शठि-दाडिमैः ।
सौवर्चल-यव-क्षार-मूलामलक-पौष्करैः ॥ ६० ॥

वृश्चीव-बृहती-पथ्या-यवानी-चित्रकर्द्धिभिः ।
मृद्वीका-चव्य-वर्षाभू-दुरालभाम्ल-वेतसैः ॥ ६१ ॥

शृङ्गी-तामलकी-भार्गी-रास्ना-गोक्षुरकैः पचेत् ।
कल्कैस् तत् सर्व-कासेषु श्वास-हिध्मासु चेष्यते ॥ ६२ ॥

कण्टकारी-घृतं चैतत् कफ-व्याधि-विनाशनम् ।
पचेद् व्याघ्री-तुलां क्षुण्णां वहे ऽपाम् आढक-स्थिते ॥ ६३ ॥

क्षिपेत् पूते तु संचूर्ण्य व्योष-रास्नामृताग्निकान् ।
शृङ्गी-भार्गी-घन-ग्रन्थि-धन्वयासान् पलार्धकान् ॥ ६४ ॥

३.६४av क्षिपेत् पूते च संचूर्ण्य सर्पिषः षो-डश-पलं चत्वारिंशत् पलानि च ।
मत्स्यण्डिकायाः शुद्धायाः पुनश् च तद् अधिश्रयेत् ॥ ६५ ॥

दर्वी-लेपिनि शीते च पृथग् द्वि-कुडवं क्षिपेत् ।
पिप्पलीनां तवक्षीर्या माक्षिकस्या-नवस्य च ॥ ६६ ॥

३.६६cv पिप्पलीनां तुकाक्षीर्या लेहो ऽयं गुल्म-हृद्-रोग-दुर्-नाम-श्वास-कास-जित् ।
शमनं च पिबेद् धूमं शोधनं बहले कफे ॥ ६७ ॥

३.६७dv शोधनं बहुले कफे मनःशिलाल-मधुक-मांसी-मुस्तेङ्गुदी-त्वचः ।
धूमं कास-घ्न-विधिना पीत्वा क्षीरं पिबेद् अनु ॥ ६८ ॥

निष्ठ्यूतान्ते गुड-युतं कोष्णं धूमो निहन्ति सः ।
वात-श्लेष्मोत्तरान् कासान् अ-चिरेण चिरन्-तनान् ॥ ६९ ॥

तमकः कफ-कासे तु स्याच् चेत् पित्तानुबन्ध-जः ।
पित्त-कास-क्रियां तत्र यथावस्थं प्रयोजयेत् ॥ ७० ॥

कफानुबन्धे पवने कुर्यात् कफ-हरां क्रियाम् ।
पित्तानुबन्धयोर् वात-कफयोः पित्त-नाशिनीम् ॥ ७१ ॥

वात-श्लेष्मात्मके शुष्के स्निग्धम् आर्द्रे विरूक्षणम् ।
कासे कर्म स-पित्ते तु कफ-जे तिक्त-संयुतम् ॥ ७२ ॥

३.७२bv स्निग्धं चार्द्रे विरूक्षणम् उरस्य् अन्तः-क्षते सद्यो लाक्षां क्षौद्र-युतां पिबेत् ।
क्षीरेण शालीन् जीर्णे ऽद्यात् क्षीरेणैव स-शर्करान् ॥ ७३ ॥

पार्श्व-वस्ति-स-रुक् चाल्प-पित्ताग्निस् तां सुरा-युताम् ।
भिन्न-विट्कः स-मुस्तातिविषा-पाठां स-वत्सकाम् ॥ ७४ ॥

लाक्षां सर्पिर् मधूच्छिष्टं जीवनीयं गणं सिताम् ।
त्वक्क्षीरीं समितं क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥ ७५ ॥

३.७५cv त्वक्क्षीरीं संमितं क्षीरे इक्ष्वारिका-बिस-ग्रन्थि-पद्म-केसर-चन्दनैः ।
शृतं पयो मधु-युतं संधानार्थं पिबेत् क्षती ॥ ७६ ॥

यवानां चूर्णम् आमानां क्षीरे सिद्धं घृतान्वितम् ।
ज्वर-दाहे सिता-क्षौद्र-सक्तून् वा पयसा पिबेत् ॥ ७७ ॥

३.७७bv क्षीर-सिद्धं घृतान्वितम् कास-वांस् तु पिबेत् सर्पिर् मधुरौषध-साधितम् ।
गुडोदकं वा क्वथितं स-क्षौद्र-मरिचं हितम् ॥ ७८ ॥

३.७८av कास-वांश् च पिबेत् सर्पिर् चूर्णम् आमलकानां वा क्षीरे पक्वं घृतान्वितम् ।
रसायन-विधानेन पिप्पलीर् वा प्रयोजयेत् ॥ ७९ ॥

३.७९bv क्षीर-पक्वं घृतान्वितम् कासी पर्वास्थि-शूली च लिह्यात् स-घृत-माक्षिकाः ।
मधूक-मधुक-द्राक्षा-त्वक्क्षीरी-पिप्पली-बलाः ॥ ८० ॥

३.८०bv लिह्यात् स-घृत-माक्षिकान् ३.८०dv -त्वक्क्षीरी-पिप्पली-बलान् त्रि-जातम् अर्ध-कर्षांशं पिप्पल्य्-अर्ध-पलं सिता ।
द्राक्षा मधूकं खर्जूरं पलाशं श्लक्ष्ण-चूर्णितम् ॥ ८१ ॥

मधुना गुटिका घ्नन्ति ता वृष्याः पित्त-शोणितम् ।
कास-श्वासा-रुचि-च्छर्दि-मूर्छा-हिध्मा-मद-भ्रमान् ॥ ८२ ॥

३.८२dv -मूर्छा-हिध्मा-वमि-भ्रमान् क्षत-क्षय-स्वर-भ्रंश-प्लीह-शोषाढ्य-मारुतान् ।
रक्त-निष्ठीव-हृत्-पार्श्व-रुक्-पिपासा-ज्वरान् अपि ॥ ८३ ॥

३.८३bv -प्लीह-शोफाढ्य-मारुतान् वर्षाभू-शर्करा-रक्त-शालि-तण्डुल-जं रजः ।
रक्त-ष्ठीवी पिबेत् सिद्धं द्राक्षा-रस-पयो-घृतैः ॥ ८४ ॥

मधूक-मधुक-क्षीर-सिद्धं वा तण्डुलीयकम् ।
यथा-स्वं मार्ग-विसृते रक्ते कुर्याच् च भेषजम् ॥ ८५ ॥

मूढ-वातस् त्व् अजा-मेदः सुरा-भृष्टं स-सैन्धवम् ।
क्षामः क्षीणः क्षतोरस्को मन्द-निद्रो ऽग्नि-दीप्ति-मान् ॥ ८६ ॥

शृत-क्षीर-सरेणाद्यात् स-घृत-क्षौद्र-शर्करम् ।
शर्करा-यव-गोधूमं जीवकर्षभकौ मधु ॥ ८७ ॥

३.८७cv शर्करां यव-गोधूमं शृत-क्षीरानु-पानं वा लिह्यात् क्षीणः क्षतः कृशः ।
क्रव्यात्-पिशित-निर्यूहं घृत-भृष्टं पिबेच् च सः ॥ ८८ ॥

पिप्पली-क्षौद्र-संयुक्तं मांस-शोणित-वर्धनम् ।
न्यग्रोधोदुम्बराश्वत्थ-प्लक्ष-शाल-प्रियङ्गुभिः ॥ ८९ ॥

ताल-मस्तक-जम्बू-त्वक्-प्रियालैश् च स-पद्मकैः ।
साश्वकर्णैः शृतात् क्षीराद् अद्याज् जातेन सर्पिषा ॥ ९० ॥

शाल्य्-ओदनं क्षतोरस्कः क्षीण-शुक्र-बलेन्द्रियः ।
वात-पित्तार्दिते ऽभ्यङ्गो गात्र-भेदे घृतैर् मतः ॥ ९१ ॥

तैलैश् चानिल-रोग-घ्नैः पीडिते मातरिश्वना ।
हृत्-पार्श्वार्तिषु पानं स्याज् जीवनीयस्य सर्पिषः ॥ ९२ ॥

३.९२cv हृत-पार्श्वार्तौ तु पानं स्याज् कुर्याद् वा वात-रोग-घ्नं पित्त-रक्ता-विरोधि यत् ।
यष्ट्य्-आह्व-नागबलयोः क्वाथे क्षीर-समे घृतम् ॥ ९३ ॥

पयस्या-पिप्पली-वांशी-कल्कैः सिद्धं क्षते हितम् ।
जीवनीयो गणः शुण्ठी वरी वीरा पुनर्नवा ॥ ९४ ॥

बला-भार्गी-स्वगुप्तर्द्धि-शठी-तामलकी-कणाः ।
शृङ्गाटकं पयस्या च पञ्च-मूलं च यल् लघु ॥ ९५ ॥

द्राक्षाक्षोटादि च फलं मधुर-स्निग्ध-बृंहणम् ।
तैः पचेत् सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्ण-कल्कितैः ॥ ९६ ॥

क्षीर-धात्री-विदारीक्षु-च्छाग-मांस-रसान्वितम् ।
प्रस्थार्धं मधुनः शीते शर्करार्ध-तुला-रजः ॥ ९७ ॥

पलार्धकं च मरिच-त्वग्-एला-पत्त्र-केसरम् ।
विनीय प्रसृतं तस्माल् लिह्यान् मात्रां यथा-बलम् ॥ ९८ ॥

३.९८dv लिह्यान् मात्रां यथानलम् अमृत-प्राशम् इत्य् एतन् नराणाम् अमृतं घृतम् ।
सुधामृत-रसं प्राश्यं क्षीर-मांस-रसाशिना ॥ ९९ ॥

नष्ट-शुक्र-क्षत-क्षीण-दुर्-बल-व्याधि-कर्शितान् ।
स्त्री-प्रसक्तान् कृशान् वर्ण-स्वर-हीनांश् च बृंहयेत् ॥ १०० ॥

३.१००bv -दुर्-बल-व्याधि-कर्षितान् कास-हिध्मा-ज्वर-श्वास-दाह-तृष्णास्र-पित्त-नुत् ।
पुत्र-दं छर्दि-मूर्छा-हृद्-योनि-मूत्रामयापहम् ॥ १०१ ॥

श्वदंष्ट्रोशीर-मञ्जिष्ठा-बला-काश्मर्य-कट्तृणम् ।
दर्भ-मूलं पृथक्पर्णीं पलाशर्षभकौ स्थिराम् ॥ १०२ ॥

पालिकानि पचेत् तेषां रसे क्षीर-चतुर्-गुणे ।
कल्कैः स्वगुप्ता-जीवन्ती-मेदर्षभक-जीवकैः ॥ १०३ ॥

शतावर्य्-ऋद्धि-मृद्वीका-शर्करा-श्रावणी-बिसैः ।
प्रस्थः सिद्धो घृताद् वात-पित्त-हृद्-रोग-शूल-नुत् ॥ १०४ ॥

३.१०४dv -पित्त-हृद्-द्रव-शूल-नुत् मूत्र-कृच्छ्र-प्रमेहार्शः-कास-शोष-क्षयापहः ।
धनुः-स्त्री-मद्य-भाराध्व-खिन्नानां बल-मांस-दः ॥ १०५ ॥

मधुकाष्ट-पल-द्राक्षा-प्रस्थ-क्वाथे पचेद् घृतम् ।
पिप्पल्य्-अष्ट-पले कल्के प्रस्थं सिद्धे च शीतले ॥ १०६ ॥

पृथग् अष्ट-पलं क्षौद्र-शर्कराभ्यां विमिश्रयेत् ।
सम-सक्तु क्षत-क्षीण-रक्त-गुल्मेषु तद् धितम् ॥ १०७ ॥

धात्री-फल-विदारीक्षु-जीवनीय-रसाद् घृतात् ।
गव्याजयोश् च पयसोः प्रस्थं प्रस्थं विपाचयेत् ॥ १०८ ॥

सिद्ध-शीते सिता-क्षौद्रं द्वि-प्रस्थं विनयेत् ततः ।
यक्ष्मापस्मार-पित्तासृक्-कास-मेह-क्षयापहम् ॥ १०९ ॥

३.१०९av सिद्ध-पूते सिता-क्षौद्रं ३.१०९dv -कास-मेह-ज्वरापहम् वयः-स्थापनम् आयुष्यं मांस-शुक्र-बल-प्रदम् ।
घृतं तु पित्ते ऽभ्यधिके लिह्याद् वाते ऽधिके पिबेत् ॥ ११० ॥

३.११०dv लिह्याद् वाताधिके पिबेत् लीढं निर्वापयेत् पित्तम् अल्प-त्वाद् धन्ति नानलम् ।
आक्रामत्य् अनिलं पीतम् ऊष्माणं निरुणद्धि च ॥ १११ ॥

क्षाम-क्षीण-कृशाङ्गानाम् एतान्य् एव घृतानि तु ।
त्वक्क्षीरी-शर्करा-लाज-चूर्णैः स्त्यानानि योजयेत् ॥ ११२ ॥

३.११२cv त्वक्क्षीरी-पिप्पली-लाज- ३.११२dv -चूर्णैः पानानि योजयेत् सर्पिर्-गुडान् स-मध्व्-अंशान् कृत्वा दद्यात् पयो ऽनु च ।
रेतो वीर्यं बलं पुष्टिं तैर् आशु-तरम् आप्नुयात् ॥ ११३ ॥

वीत-त्वग्-अस्थि-कूष्माण्ड-तुलां स्विन्नां पुनः पचेत् ।
घट्टयन् सर्पिषः प्रस्थे क्षौद्र-वर्णे ऽत्र च क्षिपेत् ॥ ११४ ॥

३.११४dv क्षौद्र-वर्णे तु निक्षिपेत् खण्डाच् छतं कणा-शुण्ठ्योर् द्वि-पलं जीरकाद् अपि ।
त्रि-जात-धान्य-मरिचं पृथग् अर्ध-पलांशकम् ॥ ११५ ॥

अवतारित-शीते च दत्त्वा क्षौद्रं घृतार्धकम् ।
खजेनामथ्य च स्थाप्यं तन् निहन्त्य् उपयोजितम् ॥ ११६ ॥

कास-हिध्मा-ज्वर-श्वास-रक्त-पित्त-क्षत-क्षयान् ।
उरः-संधान-जननं मेधा-स्मृति-बल-प्रदम् ॥ ११७ ॥

अश्विभ्यां विहितं हृद्यं कूष्माण्डक-रसायनम् ।
पिबेन् नागबला-मूलस्यार्ध-कर्षाभिवर्धितम् ॥ ११८ ॥

३.११८dv ंयार्ध-कर्षादि-वर्धितम् ३.११८dv ंयार्ध-कर्ष-विवर्धितम् पलं क्षीर-युतं मासं क्षीर-वृत्तिर् अन्-अन्न-भुक् ।
एष प्रयोगः पुष्ट्य्-आयुर्-बल-वर्ण-करः परम् ॥ ११९ ॥

मण्डूकपर्ण्याः कल्पो ऽयं यष्ट्या विश्वौषधस्य च ।
पाद-शेषं जल-द्रोणे पचेन् नागबला-तुलाम् ॥ १२० ॥

तेन क्वाथेन तुल्यांशं घृतं क्षीरं च साधयेत् ।
पलार्धिकैश् चातिबला-बला-यष्टी-पुनर्नवैः ॥ १२१ ॥

प्रपौण्डरीक-काश्मर्य-प्रियाल-कपिकच्छुभिः ।
अश्वगन्धा-सिताभीरु-मेदा-युग्म-त्रिकण्टकैः ॥ १२२ ॥

काकोली-क्षीर-काकोली-क्षीरशुक्ला-द्वि-जीरकैः ।
मृणाल-बिस-खर्जूर-शृङ्गाटक-कसेरुकैः ॥ १२३ ॥

३.१२३bv -क्षीरशुक्ला-द्वि-जीवकैः एतन् नागबला-सर्पिः पित्त-रक्त-क्षत-क्षयान् ।
जयेत् तृड्-भ्रम-दाहांश् च बल-पुष्टि-करं परम् ॥ १२४ ॥

वर्ण्यम् आयुष्यम् ओजस्यं वली-पलित-नाशनम् ।
उपयुज्य च षण् मासान् वृद्धो ऽपि तरुणायते ॥ १२५ ॥

३.१२५cv उपयुज्य तु षण्-मासाद् दीप्ते ऽग्नौ विधिर् एष स्यान् मन्दे दीपन-पाचनः ।
यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे ॥ १२६ ॥

दश-मूलं स्वयङ्गुप्तां शङ्खपुष्पीं शठीं बलाम् ।
हस्ति-पिप्पल्य्-अपामार्ग-पिप्पली-मूल-चित्रकान् ॥ १२७ ॥

भार्गीं पुष्कर-मूलं च द्वि-पलांशं यवाढकम् ।
हरीतकी-शतं चैकं जल-पञ्चाढके पचेत् ॥ १२८ ॥

३.१२८bv द्वि-पलांशान् यवाढकम् ३.१२८dv जले पञ्चाढके पचेत् यव-स्वेदे कषायं तं पूतं तच् चाभया-शतम् ।
पचेद् गुड-तुलां दत्त्वा कुडवं च पृथग् घृतात् ॥ १२९ ॥

३.१२९av यवे स्विन्ने कषायं तं तैलात् स-पिप्पली-चूर्णात् सिद्ध-शीते च माक्षिकात् ।
लेहं द्वे चाभये नित्यम् अतः खादेद् रसायनात् ॥ १३० ॥

३.१३०cv लेहे द्वे चाभये नित्यम् तद् वली-पलितं हन्याद् वर्णायुर्-बल-वर्धनम् ।
पञ्च-कासान् क्षयं श्वासं स-हिध्मं विषम-ज्वरम् ॥ १३१ ॥

मेह-गुल्म-ग्रहण्य्-अर्शो-हृद्-रोगा-रुचि-पीनसान् ।
अगस्त्य-विहितं धन्यम् इदं श्रेष्ठं रसायनम् ॥ १३२ ॥

दश-मूलं बलां मूर्वां हरिद्रे पिप्पली-द्वयम् ।
पाठाश्वगन्धापामार्ग-स्वगुप्तातिविषामृताः ॥ १३३ ॥

३.१३३bv हरिद्रा-पिप्पली-द्वयम् ३.१३३dv -स्वगुप्तातिविषामृतम् बाल-बिल्वं त्रिवृद्-दन्ती-मूलं पत्त्रं च चित्रकात् ।
पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात् ॥ १३४ ॥

बोट-स्थविर-भल्लात-विकङ्कत-शतावरीः ।
पूति-करञ्ज-शम्याक-चन्द्रलेखा-सहाचरम् ॥ १३५ ॥

३.१३५dv -चन्द्रलेखा-सहाचरात् शौभाञ्जनक-निम्ब-त्वग्-इक्षुरं च पलांशकम् ।
पथ्या-सहस्रं स-शतं यवानां चाढक-द्वयम् ॥ १३६ ॥

पचेद् अष्ट-गुणे तोये यव-स्वेदे ऽवतारयेत् ।
पूते क्षिपेत् स-पथ्ये च तत्र जीर्ण-गुडात् तुलाम् ॥ १३७ ॥

३.१३७cv पूते क्षिपेत् स-पथ्यां च तैलाज्य-धात्री-रसतः प्रस्थं प्रस्थं ततः पुनः ।
अधिश्रयेन् मृदाव् अग्नौ दर्वी-लेपे ऽवतार्य च ॥ १३८ ॥

शीते प्रस्थ-द्वयं क्षौद्रात् पिप्पली-कुडवं क्षिपेत् ।
चूर्णी-कृतं त्रि-जाताच् च त्रि-पलं निखनेत् ततः ॥ १३९ ॥

धान्ये पुराण-कुम्भ-स्थं मासं खादेच् च पूर्व-वत् ।
रसायनं वसिष्ठोक्तम् एतत् पूर्व-गुणाधिकम् ॥ १४० ॥

स्वस्थानां निष्-परीहारं सर्वर्तुषु च शस्यते ।
पालिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले ॥ १४१ ॥

कुडवांशानि वृक्षाम्लं दाडिमं पत्त्रम् आर्जकात् ।
एकैकां मरिचाजाज्योर् धान्यकाद् द्वे चतुर्थिके ॥ १४२ ॥

३.१४२bv दाडिमं पत्त्रम् आर्जकम् शर्करायाः पलान्य् अत्र दश द्वे च प्रदापयेत् ।
कृत्वा चूर्णम् अतो मात्राम् अन्न-पानेषु दापयेत् ॥ १४३ ॥

रुच्यं तद् दीपनं बल्यं पार्श्वार्ति-श्वास-कास-जित् ।
एकां षो-डशिकां धान्याद् द्वे द्वे चाजाजि-दीप्यकात् ॥ १४४ ॥

३.१४४bv पार्श्वार्ति-श्वास-कास-नुत् ताभ्यां दाडिम-वृक्षाम्ले द्विर् द्विः सौवर्चलात् पलम् ।
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च ॥ १४५ ॥

३.१४५cv शुण्ठ्याः कर्षं कपित्थस्य तच् चूर्णं षो-डश-पलैः शर्कराया विमिश्रयेत् ।
षाडवो ऽयं प्रदेयः स्याद् अन्न-पानेषु पूर्व-वत् ॥ १४६ ॥

विधिश् च यक्ष्म-विहितो यथावस्थं क्षते हितः ।
निवृत्ते क्षत-दोषे तु कफे वृद्ध उरः शिरः ॥ १४७ ॥

दाल्यते कासिनो यस्य स ना धूमान् पिबेद् इमान् ।
द्वि-मेदा-द्वि-बला-यष्टी-कल्कैः क्षौमे सु-भाविते ॥ १४८ ॥

३.१४८av दाल्येते कासिनो यस्य ३.१४८bv स धूमान् ना पिबेद् इमान् वर्तिं कृत्वा पिबेद् धूमं जीवनीय-घृतानुपः ।
मनःशिला-पलाशाजगन्धा-त्वक्क्षीरि-नागरैः ॥ १४९ ॥

तद्-वद् एवानु-पानं तु शर्करेक्षु-गुडोदकम् ।
पिष्ट्वा मनःशिलां तुल्याम् आर्द्रया वट-शुङ्गया ॥ १५० ॥

स-सर्पिष्कं पिबेद् धूमं तित्तिरि-प्रतिभोजनम् ।
क्षय-जे बृंहणं पूर्वं कुर्याद् अग्नेश् च वर्धनम् ॥ १५१ ॥

३.१५१bv तित्तिरि-प्रतिभोजितम् बहु-दोषाय स-स्नेहं मृदु दद्याद् विरेचनम् ।
शम्याकेन त्रिवृतया मृद्वीका-रस-युक्तया ॥ १५२ ॥

तिल्वकस्य कषायेण विदारी-स्व-रसेन च ।
सर्पिः सिद्धं पिबेद् युक्त्या क्षीण-देहो विशोधनम् ॥ १५३ ॥

पित्ते कफे धातुषु च क्षीणेषु क्षय-कास-वान् ।
घृतं कर्कटकी-क्षीर-द्वि-बला-साधितं पिबेत् ॥ १५४ ॥

विदारीभिः कदम्बैर् वा ताल-सस्यैश् च साधितम् ।
घृतं पयश् च मूत्रस्य वैवर्ण्ये कृच्छ्र-निर्गमे ॥ १५५ ॥

शूने स-वेदने मेढ्रे पायौ स-श्रोणि-वङ्क्षणे ।
घृत-मण्डेन लघुनानुवास्यो मिश्रकेण वा ॥ १५६ ॥

जाङ्गलैर् प्रतिभुक्तस्य वर्तकाद्या बिले-शयाः ।
क्रम-शः प्रसहास् तद्-वत् प्रयोज्याः पिशिताशिनः ॥ १५७ ॥

औष्ण्यात् प्रमाथि-भावाच् च स्रोतोभ्यश् च्यावयन्ति ते ।
कफं शुद्धैश् च तैः पुष्टिं कुर्यात् सम्यग् वहन् रसः ॥ १५८ ॥

चविका-त्रि-फला-भार्गी-दश-मूलैः स-चित्रकैः ।
कुलत्थ-पिप्पली-मूल-पाठा-कोल-यवैर् जले ॥ १५९ ॥

शृतैर् नागर-दुःस्पर्शा-पिप्पली-शठि-पौष्करैः ।
पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर् विपाचयेत् ॥ १६० ॥

सिद्धे ऽस्मिंश् चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च ।
दत्त्वा युक्त्या पिबेन् मात्रां क्षय-कास-निपीडितः ॥ १६१ ॥

३.१६१bv द्वौ पञ्च लवणानि तु कासमर्दाभया-मुस्ता-पाठा-कट्फल-नागरैः ।
पिप्पल्या कटु-रोहिण्या काश्मर्या सुरसेन च ॥ १६२ ॥

अक्ष-मात्रैर् घृत-प्रस्थं क्षीर-द्राक्षा-रसाढके ।
पचेच् छोष-ज्वर-प्लीह-सर्व-कास-हरं शिवम् ॥ १६३ ॥

वृष-व्याघ्री-गुडूचीनां पत्त्र-मूल-फलाङ्कुरात् ।
रस-कल्कैर् घृतं पक्वं हन्ति कास-ज्वरा-रुचीः ॥ १६४ ॥

द्वि-गुणे दाडिम-रसे सिद्धं वा व्योष-संयुतम् ।
पिबेद् उपरि भुक्तस्य यव-क्षार-युतं नरः ॥ १६५ ॥

३.१६५cv पिबेद् उपरि भक्तस्य ३.१६५dv यव-क्षार-घृतं नरः ३.१६५dv यव-क्षार-युतं घृतम् पिप्पली-गुड-सिद्धं वा छाग-क्षीर-युतं घृतम् ।
एतान्य् अग्नि-विवृद्ध्य्-अर्थं सर्पींषि क्षय-कासिनाम् ॥ १६६ ॥

स्युर् दोष-बद्ध-कण्ठोरः-स्रोतसां च विशुद्धये ।
प्रस्थोन्मिते यव-क्वाथे विंशतिं विजयाः पचेत् ॥ १६७ ॥

स्विन्ना मृदित्वा तास् तस्मिन् पुराणात् षट्-पलं गुडात् ।
पिप्पल्या द्वि-पलं कर्षं मनोह्वाया रसाञ्जनात् ॥ १६८ ॥

दत्त्वार्धाक्षं पचेद् भूयः स लेहः श्वास-कास-जित् ।
श्वाविधां सूचयो दग्धाः स-घृत-क्षौद्र-शर्कराः ॥ १६९ ॥

३.१६९bv स लेहः श्वास-कास-नुत् श्वास-कास-हरा बर्हि-पादौ वा मधु-सर्पिषा ।
एरण्ड-पत्त्र-क्षारं वा व्योष-तैल-गुडान्वितम् ॥ १७० ॥

लेहयेत् क्षारम् एवं वा सुरसैरण्ड-पत्त्र-जम् ।
लिह्यात् त्र्य्-ऊषण-चूर्णं वा पुराण-गुड-सर्पिषा ॥ १७१ ॥

पद्मकं त्रि-फला व्योषं विडङ्गं देवदारु च ।
बला रास्ना च तच्-चूर्णं समस्तं सम-शर्करम् ॥ १७२ ॥

३.१७२dv समस्त-सम-शर्करम् खादेन् मधु-घृताभ्यां वा लिह्यात् कास-हरं परम् ।
तद्-वन् मरिच-चूर्णं वा स-घृत-क्षौद्र-शर्करम् ॥ १७३ ॥

३.१७३cv तद्-वन् मरिच-चूर्णं च पथ्या-शुण्ठी-घन-गुडैर् गुटिकां धारयेन् मुखे ।
सर्वेषु श्वास-कासेषु केवलं वा विभीतकम् ॥ १७४ ॥

पत्त्र-कल्कं घृत-भृष्टं तिल्वकस्य स-शर्करम् ।
पेया वोत्कारिका छर्दि-तृट्-कासामातिसार-जित् ॥ १७५ ॥

३.१७५cv पेया चोत्कारिका छर्दि- ३.१७५dv -तृट्-कासामातिसार-नुत् कण्टकारी-रसे सिद्धो क्षीरं यूषान् रसान् अपि ।
स-गौरामलकः साम्लः सर्व-कास-भिषग्-जितम् ॥ १७६ ॥

वात-घ्नौषध-निःक्वाथे क्षीरं यूषान् रसान् अपि ।
वैष्किरान् प्रातुदान् बैलान् दापयेत् क्षय-कासिने ॥ १७७ ॥

क्षत-कासे च ये धूमाः सानु-पाना निदर्शिताः ।
क्षय-कासे ऽपि ते योज्या वक्ष्यते यच् च यक्ष्मणि ॥ १७८ ॥

३.१७८dv वक्ष्यन्ते ये च यक्ष्मणि बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ।
व्यत्यासात् क्षय-कासिभ्यो बल्यं सर्वं प्रशस्यते ॥ १७९ ॥

संनिपातोद्भवो घोरः क्षय-कासो यतस् ततः ।
यथा-दोष-बलं तस्य संनिपात-हितं हितम् ॥ १८० ॥

## अध्याय 04

श्वास-हिध्मा यतस् तुल्य-हेत्व्-आद्याः साधनं ततः ।
तुल्यम् एव तद्-आर्तं च पूर्वं स्वेदैर् उपाचरेत् ॥ १ ॥

स्निग्धैर् लवण-तैलाक्तं तैः खेषु ग्रथितः कफः ।
सु-लीनो ऽपि विलीनो ऽस्य कोष्ठं प्राप्तः सु-निर्हरः ॥ २ ॥

स्रोतसां स्यान् मृदु-त्वं च मरुतश् चानुलोम-ता ।
स्विन्नं च भोजयेद् अन्नं स्निग्धम् आनूप-जै रसैः ॥ ३ ॥

४.३bv मारुतस्यानुलोम-ता दध्य्-उत्तरेण वा दद्यात् ततो ऽस्मै वमनं मृदु ।
विशेषात् कास-वमथु-हृद्-ग्रह-स्वर-सादिने ॥ ४ ॥

पिप्पली-सैन्धव-क्षौद्र-युक्तं वाता-विरोधि यत् ।
निर्हृते सुखम् आप्नोति स कफे दुष्ट-विग्रहे ॥ ५ ॥

स्रोतःसु च विशुद्धेषु चरत्य् अ-विहतो ऽनिलः ।
ध्मानोदावर्त-तमके मातुलुङ्गाम्ल-वेतसैः ॥ ६ ॥

हिङ्गु-पीलु-विडैर् युक्तम् अन्नं स्याद् अनुलोमनम् ।
स-सैन्धवं फलाम्लं वा कोष्णं दद्याद् विरेचनम् ॥ ७ ॥

एते हि कफ-संरुद्ध-गति-प्राण-प्रकोप-जाः ।
तस्मात् तन्-मार्ग-शुद्ध्य्-अर्थम् ऊर्ध्वाधः शोधनं हितम् ॥ ८ ॥

उदीर्यते भृश-तरं मार्ग-रोधाद् वहज् जलम् ।
यथा तथानिलस् तस्य मार्गम् अस्माद् विशोधयेत् ॥ ९ ॥

अ-शान्तौ कृत-संशुद्धेर् धूमैर् लीनं मलं हरेत् ।
हरिद्रा-पत्त्रम् एरण्ड-मूलं लाक्षां मनःशिलाम् ॥ १० ॥

४.१०dv -मूलं द्राक्षां मनःशिलाम् स-देवदार्व् अलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद् धूमं यवान् वा घृत-संयुतान् ॥ ११ ॥

मधूच्छिष्टं सर्ज-रसं घृतं वा गुरु वागुरु ।
चन्दनं वा तथा शृङ्गं वालान् वा स्नाव वा गवाम् ॥ १२ ॥

४.१२dv वालान् वा स्नायु वा गवाम् ऋक्ष-गोधा-कुरङ्गैण-चर्म-शृङ्ग-खुराणि वा ।
गुग्गुलुं वा मनोह्वां वा शाल-निर्यासम् एव वा ॥ १३ ॥

४.१३av ऋश्य-गोधा-कुरङ्गैण- ४.१३bv -चर्म-शृङ्ग-खुराणि च शल्लकीं गुग्गुलुं लोहं पद्मकं वा घृताप्लुतम् ।
अवश्यं स्वेदनीयानाम् अ-स्वेद्यानाम् अपि क्षणम् ॥ १४ ॥

४.१४bv पद्मकं वा घृत-प्लुतम् स्वेदयेत् स-सिता-क्षीर-सुखोष्ण-स्नेह-सेचनैः ।
उत्कारिकोपनाहैश् च स्वेदाध्यायोक्त-भेषजैः ॥ १५ ॥

उरः कण्ठं च मृदुभिः सामे त्व् आम-विधिं चरेत् ।
अति-योगोद्धतं वातं दृष्ट्वा पवन-नाशनैः ॥ १६ ॥

स्निग्धै रसाद्यैर् नात्य्-उष्णैर् अभ्यङ्गैश् च शमं नयेत् ।
अन्-उत्क्लिष्ट-कफा-स्विन्न-दुर्-बलानां हि शोधनात् ॥ १७ ॥

वायुर् लब्धास्पदो मर्म संशोष्याशु हरेद् असून् ।
कषाय-लेह-स्नेहाद्यैस् तेषां संशमयेद् अतः ॥ १८ ॥

क्षीण-क्षतातिसारासृक्-पित्त-दाहानुबन्ध-जान् ।
मधुर-स्निग्ध-शीताद्यैर् हिध्मा-श्वासान् उपाचरेत् ॥ १९ ॥

कुलत्थ-दश-मूलानां क्वाथे स्युर् जाङ्गला रसाः ।
यूषाश् च शिग्रु-वार्ताक-कासघ्न-वृष-मूलकैः ॥ २० ॥

पल्लवैर् निम्ब-कुलक-बृहती-मातुलुङ्ग-जैः ।
व्याघ्री-दुरालभा-शृङ्गी-बिल्व-मध्य-त्रिकण्टकैः ॥ २१ ॥

सामृताग्नि-कुलत्थैश् च यूषः स्यात् क्वथितैर् जले ।
तद्-वद् रास्ना-बृहत्य्-आदि-बला-मुद्गैः स-चित्रकैः ॥ २२ ॥

४.२२bv यूषः स्यात् क्वथितैर् जलैः पेया च चित्रकाजाजी-शृङ्गी-सौवर्चलैः कृता ।
दश-मूलेन वा कास-श्वास-हिध्मा-रुजापहा ॥ २३ ॥

दश-मूल-शठी-रास्ना-भार्गी-बिल्वर्द्धि-पौष्करैः ।
कुलीरशृङ्गी-चपला-तामलक्य्-अमृतौषधैः ॥ २४ ॥

पिबेत् कषायं जीर्णे ऽस्मिन् पेयां तैर् एव साधिताम् ।
शालि-षष्टिक-गोधूम-यव-मुद्ग-कुलत्थ-भुक् ॥ २५ ॥

कास-हृद्-ग्रह-पार्श्वार्ति-हिध्मा-श्वास-प्रशान्तये ।
सक्तून् वार्काङ्कुर-क्षीर-भावितानां स-माक्षिकान् ॥ २६ ॥

यवानां दश-मूलादि-निःक्वाथ-लुलितान् पिबेत् ।
अन्ने च योजयेत् क्षार-हिङ्ग्व्-आज्य-विड-दाडिमान् ॥ २७ ॥

स-पौष्कर-शठी-व्योष-मातुलुङ्गाम्ल-वेतसान् ।
दश-मूलस्य वा क्वाथम् अथ-वा देवदारुणः ॥ २८ ॥

४.२८cv दश-मूलस्य निःक्वाथम् पिबेद् वा वारुणी-मण्डं हिध्मा-श्वासी पिपासितः ।
पिप्पली-पिप्पली-मूल-पथ्या-जन्तुघ्न-चित्रकैः ॥ २९ ॥

कल्कितैर् लेपिते रूढे निःक्षिपेद् घृत-भाजने ।
तक्रं मास-स्थितं तद् धि दीपनं श्वास-कास-जित् ॥ ३० ॥

पाठां मधुरसां दारु सरलं च निशि स्थितम् ।
सुरा-मण्डे ऽल्प-लवणं पिबेत् प्रसृत-संमितम् ॥ ३१ ॥

४.३१bv सरलं निशि संस्थितम् ४.३१dv पिबेत् प्रसृति-संमितम् भार्गी-शुण्ठ्यौ सुखाम्भोभिः क्षारं वा मरिचान्वितम् ।
स्व-क्वाथ-पिष्टां लुलितां बाष्पिकां पाययेत वा ॥ ३२ ॥

स्व-रसः सप्तपर्णस्य पुष्पाणां वा शिरीषतः ।
हिध्मा-श्वासे मधु-कणा-युक्तः पित्त-कफानुगे ॥ ३३ ॥

उत्कारिका तुगा-कृष्णा-मधूली-घृत-नागरैः ।
पित्तानुबन्धे योक्तव्या पवने त्व् अनुबन्धिनि ॥ ३४ ॥

श्वाविच्-छशामिष-कणा-घृत-शल्यक-शोणितैः ।
सुवर्चला-रस-व्योष-सर्पिर्भिः सहितं पयः ॥ ३५ ॥

अनु शाल्य्-ओदनं पेयम् वात-पित्तानुबन्धिनि ।
चतुर्-गुणाम्बु-सिद्धं वा छागं स-गुड-नागरम् ॥ ३६ ॥

पिप्पली-मूल-मधुक-गुड-गो-ऽश्व-शकृद्-रसान् ।
हिध्माभिष्यन्द-कास-घ्नाँ लिह्यान् मधु-घृतान्वितान् ॥ ३७ ॥

गो-गजाश्व-वराहोष्ट्र-खर-मेषाज-विड्-रसम् ।
स-मध्व् एकैक-शो लिह्याद् बहु-श्लेष्माथ-वा पिबेत् ॥ ३८ ॥

चतुष्-पाच्-चर्म-रोमास्थि-खुर-शृङ्गोद्भवां मषीम् ।
तथैव वाजिगन्धाया लिह्याच् छ्वासी कफोल्बणः ॥ ३९ ॥

शठी-पौष्कर-धात्रीर् वा पौष्करं वा कणान्वितम् ।
गैरिकाञ्जन-कृष्णा वा स्व-रसं वा कपित्थ-जम् ॥ ४० ॥

रसेन वा कपित्थस्य धात्री-सैन्धव-पिप्पलीः ।
घृत-क्षौद्रेण वा पथ्या-विडङ्गोषण-पिप्पलीः ॥ ४१ ॥

कोल-लाजामल-द्राक्षा-पिप्पली-नागराणि वा ।
गुड-तैल-निशा-द्राक्षा-कणा-रास्नोषणानि वा ॥ ४२ ॥

पिबेद् रसाम्बु-मद्याम्लैर् लेहौषध-रजांसि वा ।
जीवन्ती-मुस्त-सुरस-त्वग्-एला-द्वय-पौष्करम् ॥ ४३ ॥

चण्डा-तामलकी-लोह-भार्गी-नागर-वालकम् ।
कर्कटाख्या-शठी-कृष्णा-नागकेसर-चोरकम् ॥ ४४ ॥

उपयुक्तं यथा-कामं चूर्णं द्वि-गुण-शर्करम् ।
पार्श्व-रुग्-ज्वर-कास-घ्नं हिध्मा-श्वास-हरं परम् ॥ ४५ ॥

शठी-तामलकी-भार्गी-चण्डा-वालक-पौष्करम् ।
शर्कराष्ट-गुणं चूर्णं हिध्मा-श्वास-हरं परम् ॥ ४६ ॥

तुल्यं गुडं नागरं च भक्षयेन् नावयेत वा ।
लशुनस्य पलाण्डोर् वा मूलं गृञ्जनकस्य वा ॥ ४७ ॥

चन्दनाद् वा रसं दद्यान् नारी-क्षीरेण नावनम् ।
स्तन्येन मक्षिका-विष्ठाम् अलक्तक-रसेन वा ॥ ४८ ॥

स-सैन्धवं घृताच्छं वा सिद्धं स्तन्येन वा घृतम् ।
कल्कितैर् मधुर-द्रव्यैस् तत् पिबेन् नावयेत वा ॥ ४९ ॥

सकृद् उष्णं सकृच् छीतं व्यत्यासात् स-सिता-मधु ।
तद्-वत् पयस् तथा सिद्धम् अधो-भागौषधैर् घृतम् ॥ ५० ॥

कणा-सौवर्चल-क्षार-वयःस्था-हिङ्गु-चोरकैः ।
स-कायस्थैर् घृतं मस्तु-दश-मूल-रसे पचेत् ॥ ५१ ॥

तत् पिबेज् जीवनीयैर् वा लिह्यात् स-मधु साधितम् ।
तेजोवत्य् अभया कुष्ठं पिप्पली कटु-रोहिणी ॥ ५२ ॥

भूतिकं पौष्करं मूलं पलाशश् चित्रकः शठी ।
पटु-द्वयं तामलकी जीवन्ती बिल्व-पेशिका ॥ ५३ ॥

वचा पत्त्रं च तालीशं कर्षांशैस् तैर् विपाचयेत् ।
हिङ्गु-पादैर् घृत-प्रस्थं पीतम् आशु निहन्ति तत् ॥ ५४ ॥

४.५४av वचा पत्त्रं च तालीशात् शाखानिलार्शो-ग्रहणी-हिध्मा-हृत्-पार्श्व-वेदनाः ।
अर्धांशेन पिबेत् सर्पिः क्षारेण पटुनाथ-वा ॥ ५५ ॥

धान्वन्तरं वृष-घृतं दाधिकं हपुषादि वा ।
शीताम्बु-सेकः सहसा त्रास-विक्षेप-भी-शुचः ॥ ५६ ॥

हर्षेर्ष्योच्छ्वास-रोधाश् च हितं कीटैश् च दंशनम् ।
यत् किञ्-चित् कफ-वात-घ्नम् उष्णं वातानुलोमनम् ॥ ५७ ॥

४.५७av हर्षेर्ष्योच्छ्वास-संरोधा तत् सेव्यं प्राय-शो यच् च सु-तरां मारुतापहम् ।
सर्वेषां बृंहणे ह्य् अल्पः शक्यश् च प्राय-शो भवेत् ॥ ५८ ॥

नात्य्-अर्थं शमने ऽपायो भृशो ऽ-शक्यश् च कर्षणे ।
शमनैर् बृंहणैश् चातो भूयिष्ठं तान् उपाचरेत् ॥ ५९ ॥

४.५९bv भृशो ऽ-शक्यश् च कर्शने कास-श्वास-क्षय-च्छर्दि-हिध्माश् चान्यो-ऽन्य-भेषजैः ॥ ५९अब् ॥

# अध्याय 05

बलिनो बहु-दोषस्य स्निग्ध-स्विन्नस्य शोधनम् ।
ऊर्ध्वाधो यक्ष्मिणः कुर्यात् स-स्नेहं यन् न कर्शनम् ॥ १ ॥

५.१dv स-स्नेहं यन् न कर्षणम् पयसा फल-युक्तेन मधुरेण रसेन वा ।
सर्पिष्-मत्या यवाग्वा वा वमन-द्रव्य-सिद्धया ॥ २ ॥

वमेद् विरेचनं दद्यात् त्रिवृच्-छ्यामा-नृपद्रुमान् ।
शर्करा-मधु-सर्पिर्भिः पयसा तर्पणेन वा ॥ ३ ॥

द्राक्षा-विदारी-काश्मर्य-मांसानां वा रसैर् युतान् ।
शुद्ध-कोष्ठस्य युञ्जीत विधिं बृंहण-दीपनम् ॥ ४ ॥

५.४bv -मांसानां वा रसैर् युतम् हृद्यानि चान्न-पानानि वात-घ्नानि लघूनि च ।
शालि-षष्टिक-गोधूम-यव-मुद्गं समोषितम् ॥ ५ ॥

लघुम् अ-च्युत-वीर्यं च सु-जरं बल-कृच् च यत् ॥ ५+(१)अब् ॥
५.५+(१)अव् लघुं चा-च्युत-वीर्यं च ५.५+(१)अव् लघुम् अद्भुत-वीर्यं च आजं क्षीरं घृतं मांसं क्रव्यान्-मांसं च शोष-जित् ।
काकोलूक-वृक-द्वीपि-गवाश्व-नकुलोरगम् ॥ ६ ॥

गृध्र-भास-खरोष्ट्रं च हितं छद्मोपसंहितम् ।
ज्ञातं जुगुप्सितं तद् धि च्छर्दिषे न बलौजसे ॥ ७ ॥

५.७av गृध्र-चाष-खरोष्ट्रं च मृगाद्याः पित्त-कफयोः पवने प्रसहादयः ।
वेसवारी-कृताः पथ्या रसादिषु च कल्पिताः ॥ ८ ॥

भृष्टाः सर्षप-तैलेन सर्पिषा वा यथा-यथम् ।
रसिका मृदवः स्निग्धाः पटु-द्रव्याभिसंस्कृताः ॥ ९ ॥

हिता मौलक-कौलत्थास् तद्-वद् यूषाश् च साधिताः ।
स-पिप्पलीकं स-यवं स-कुलत्थं स-नागरम् ॥ १० ॥

स-दाडिमं सामलकं स्निग्धम् आजं रसं पिबेत् ।
तेन षड् विनिवर्तन्ते विकाराः पीनसादयः ॥ ११ ॥

५.११bv स्निग्धम् आज-रसं पिबेत् पिबेच् च सु-तरां मद्यं जीर्णं स्रोतो-विशोधनम् ।
पित्तादिषु विशेषेण मध्व्-अरिष्टाच्छ-वारुणीः ॥ १२ ॥

५.१२dv मध्व्-अरिष्टं च वारुणीम् सिद्धं वा पञ्च-मूलेन तामलक्याथ-वा जलम् ।
पर्णिनीभिश् चतसृभिर् धान्य-नागरकेण वा ॥ १३ ॥

कल्पयेच् चानुकूलो ऽस्य तेनान्नं शुचि यत्न-वान् ।
दश-मूलेन पयसा सिद्धं मांस-रसेन वा ॥ १४ ॥

बला-गर्भं घृतं योज्यं क्रव्यान्-मांस-रसेन वा ।
स-क्षौद्रं पयसा सिद्धं सर्पिर् दश-गुणेन वा ॥ १५ ॥

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
पुष्कराह्वं शठीं कृष्णां व्याघ्रीं गोक्षुरकं बलाम् ॥ १६ ॥

५.१६dv व्याघ्रीं गोक्षुरकं बलाः नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
कल्की-कृत्य घृतं पक्वं रोग-राज-हरं परम् ॥ १७ ॥

घृतं खर्जूर-मृद्वीका-मधुकैः स-परूषकैः ।
स-पिप्पलीकं वैस्वर्य-कास-श्वास-ज्वरापहम् ॥ १८ ॥

दश-मूल-शृतात् क्षीरात् सर्पिर् यद् उदियान् नवम् ।
स-पिप्पलीकं स-क्षौद्रं तत् परं स्वर-बोधनम् ॥ १९ ॥

शिरः-पार्श्वांस-शूल-घ्नं कास-श्वास-ज्वरापहम् ।
पञ्चभिः पञ्च-मूलैर् वा शृताद् यद् उदियाद् घृतम् ॥ २० ॥

पञ्चानां पञ्च-मूलानां रसे क्षीर-चतुर्-गुणे ।
सिद्धं सर्पिर् जयत्य् एतद् यक्ष्मणः सप्तकं बलम् ॥ २१ ॥

५.२१dv यक्ष्मिणः सप्तकं बलम् पञ्च-कोल-यव-क्षार-षट्-पलेन पचेद् घृतम् ।
प्रस्थोन्मितं तुल्य-पयः स्रोतसां तद् विशोधनम् ॥ २२ ॥

गुल्म-ज्वरोदर-प्लीह-ग्रहणी-पाण्डु-पीनसान् ।
श्वास-कासाग्नि-सदन-श्वयथूर्ध्वानिलाञ् जयेत् ॥ २३ ॥

रास्ना-बला-गोक्षुरक-स्थिरा-वर्षाभु-वारिणि ।
जीवन्ती-पिप्पली-गर्भं स-क्षीरं शोष-जिद् घृतम् ॥ २४ ॥

अश्वगन्धा-शृतात् क्षीराद् घृतं च स-सिता-पयः ।
साधारणामिष-तुलां तोय-द्रोण-द्वये पचेत् ॥ २५ ॥

तेनाष्ट-भाग-शेषेण जीवनीयैः पलोन्मितैः ।
साधयेत् सर्पिषः प्रस्थं वात-पित्तामयापहम् ॥ २६ ॥

मांस-सर्पिर् इदम् पीतं युक्तं मांस-रसेन वा ।
कास-श्वास-स्वर-भ्रंश-शोष-हृत्-पार्श्व-शूल-जित् ॥ २७ ॥

५.२७bv युक्तं मांस-रसेषु वा एलाजमोदा-त्रि-फला-सौराष्ट्री-व्योष-चित्रकान् ।
सारान् अरिष्ट-गायत्री-शाल-बीजक-संभवान् ॥ २८ ॥

भल्लातकं विडङ्गं च पृथग् अष्ट-पलोन्मितम् ।
सलिले षो-डश-गुणे षो-डशांश-स्थितं पचेत् ॥ २९ ॥

पुनस् तेन घृत-प्रस्थं सिद्धे चास्मिन् पलानि षट् ।
तवक्षीर्याः क्षिपेत् त्रिंशत् सिताया द्वि-गुणं मधु ॥ ३० ॥

घृतात् त्रि-जातात् त्रि-पलं ततो लीढं खजाहतम् ।
पयो-ऽनु-पानं तत् प्राह्णे रसायनम् अ-यन्त्रणम् ॥ ३१ ॥

मेध्यं चक्षुष्यम् आयुष्यं दीपनं हन्ति चा-चिरात् ।
मेह-गुल्म-क्षय-व्याधि-पाण्डु-रोग-भगन्दरान् ॥ ३२ ॥

ये च सर्पिर्-गुडाः प्रोक्ताः क्षते योज्याः क्षये ऽपि ते ।
त्वग्-एला-पिप्पली-क्षीरी-शर्करा द्वि-गुणाः क्रमात् ॥ ३३ ॥

चूर्णिता भक्षिताः क्षौद्र-सर्पिषा वावलेहिताः ।
स्वर्याः कास-क्षय-श्वास-पार्श्व-रुक्-कफ-नाशनाः ॥ ३४ ॥

५.३४bv -सर्पिषा चावलेहिताः विशेषात् स्वर-सादे ऽस्य नस्य-धूमादि योजयेत् ।
तत्रापि वात-जे कोष्णं पिबेद् औत्तरभक्तिकम् ॥ ३५ ॥

५.३५dv पिबेद् उत्तर-भक्तिकम् कासमर्दक-वार्ताकी-मार्कव-स्व-रसैर् घृतम् ।
साधितं कास-जित् स्वर्यं सिद्धम् आर्तगलेन वा ॥ ३६ ॥

बदरी-पत्त्र-कल्कं वा घृत-भृष्टं स-सैन्धवम् ।
तैलं वा मधुक-द्राक्षा-पिप्पली-कृमिनुत्-फलैः ॥ ३७ ॥

५.३७dv -पिप्पली-कृमिहृत्-फलैः हंसपद्याश् च मूलेन पक्वं नस्तो निषेचयेत् ।
सुखोदकानु-पानं च स-सर्पिष्कं गुडौदनम् ॥ ३८ ॥

अश्नीयात् पायसं चैवं स्निग्धं स्वेदं नियोजयेत् ।
पित्तोद्भवे पिबेत् सर्पिः शृत-शीत-पयो-ऽनुपः ॥ ३९ ॥

क्षीरि-वृक्षाङ्कुर-क्वाथ-कल्क-सिद्धं स-माक्षिकम् ।
अश्नीयाच् च स-सर्पिष्कं यष्टीमधुक-पायसम् ॥ ४० ॥

बला-विदारिगन्धाभ्यां विदार्या मधुकेन च ।
सिद्धं स-लवणं सर्पिर् नस्यं स्वर्यम् अन्-उत्तमम् ॥ ४१ ॥

प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।
साधितं क्षीर-सर्पिश् च तत् स्वर्यं नावनं परम् ॥ ४२ ॥

लिह्यान् मधुरकाणां च चूर्णं मधु-घृताप्लुतम् ।
पिबेत् कटूनि मूत्रेण कफ-जे रूक्ष-भोजनः ॥ ४३ ॥

कट्फलामलक-व्योषं लिह्यात् तैल-मधु-प्लुतम् ।
व्योष-क्षाराग्नि-चविका-भार्गी-पथ्या-मधूनि वा ॥ ४४ ॥

यवैर् यवागूं यमके कणा-धात्री-कृतां पिबेत् ।
भुक्त्वाद्यात् पिप्पलीं शुण्ठीं तीक्ष्णं वा वमनं भजेत् ॥ ४५ ॥

शर्करा-क्षौद्र-मिश्राणि शृतानि मधुरैः सह ।
पिबेत् पयांसि यस्योच्चैर् वदतो ऽभिहतः स्वरः ॥ ४६ ॥

विचित्रम् अन्नम् अ-रुचौ हितैर् उपहितं हितम् ।
बहिर्-अन्तर्-मृजा चित्त-निर्वाणं हृद्यम् औषधम् ॥ ४७ ॥

द्वौ कालौ दन्त-पवनं भक्षयेन् मुख-धावनैः ।
कषायैः क्षालयेद् आस्यं धूमं प्रायोगिकं पिबेत् ॥ ४८ ॥

तालीश-चूर्ण-वटकाः स-कर्पूर-सितोपलाः ।
शशाङ्क-किरणाख्याश् च भक्ष्या रुचि-कराः परम् ॥ ४९ ॥

५.४९dv भक्ष्या रुचि-करा भृशम् वाताद् अ-रोचके तत्र पिबेच् चूर्णं प्रसन्नया ।
हरेणु-कृष्णा-कृमिजिद्-द्राक्षा-सैन्धव-नागरात् ॥ ५० ॥

एला-भार्गी-यव-क्षार-हिङ्गु-युक्ताद् घृतेन वा ।
छर्दयेद् वा वचाम्भोभिः पित्ताच् च गुड-वारिभिः ॥ ५१ ॥

लिह्याद् वा शर्करा-सर्पिर्-लवणोत्तम-माक्षिकम् ।
कफाद् वमेन् निम्ब-जलैर् दीप्यकारग्वधोदकम् ॥ ५२ ॥

पानं स-मध्व्-अरिष्टाश् च तीक्ष्णाः स-मधु-माधवाः ।
पिबेच् चूर्णं च पूर्वोक्तं हरेण्व्-आद्य्-उष्ण-वारिणा ॥ ५३ ॥

एला-त्वङ्-नागकुसुम-तीक्ष्ण-कृष्णा-महौषधम् ।
भाग-वृद्धं क्रमाच् चूर्णं निहन्ति सम-शर्करम् ॥ ५४ ॥

प्रसेका-रुचि-हृत्-पार्श्व-कास-श्वास-गलामयान् ।
यवानी-तिन्तिडीकाम्ल-वेतसौषध-दाडिमम् ॥ ५५ ॥

कृत्वा कोलं च कर्षांशं सितायाश् च चतुः-पलम् ।
धान्य-सौवर्चलाजाजी-वराङ्गं चार्ध-कार्षिकम् ॥ ५६ ॥

पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।
चूर्णम् एतत् परं रुच्यं हृद्यं ग्राहि हिनस्ति च ॥ ५७ ॥

५.५७cv तच्-चूर्णं दीपनं रुच्यं विबन्ध-कास-हृत्-पार्श्व-प्लीहार्शो-ग्रहणी-गदान् ।
तालीश-पत्त्रं मरिचं नागरं पिप्पली शुभा ॥ ५८ ॥

यथोत्तरं भाग-वृद्ध्या त्वग्-एले चार्ध-भागिके ।
तद् रुच्यं दीपनं चूर्णं कणाष्ट-गुण-शर्करम् ॥ ५९ ॥

५.५९av यथोत्तरं भाग-वृद्धास् ५.५९cv तद् द्रव्यं दीपनं चूर्णं कास-श्वासा-रुचि-च्छर्दि-प्लीह-हृत्-पार्श्व-शूल-नुत् ।
पाण्डु-ज्वरातिसार-घ्नं मूढ-वातानुलोमनम् ॥ ६० ॥

अर्कामृता-क्षार-जले शर्वरीम् उषितैर् यवैः ।
प्रसेके कल्पितान् सक्तून् भक्ष्यांश् चाद्याद् बली वमेत् ॥ ६१ ॥

५.६१av अर्कामृता-क्षीर-जले कटु-तिक्तैस् तथा शूल्यं भक्षयेज् जाङ्गलं पलम् ।
शुष्कांश् च भक्ष्यान् सु-लघूंश् चणकादि-रसानुपः ॥ ६२ ॥

श्लेष्मणो ऽति-प्रसेकेन वायुः श्लेष्माणम् अस्यति ।
कफ-प्रसेकं तं विद्वान् स्निग्धोष्णैर् एव निर्जयेत् ॥ ६३ ॥

५.६३dv स्निग्धोष्णेनैव निर्जयेत् पीनसे ऽपि क्रमम् इमं वमथौ च प्रयोजयेत् ।
विशेषात् पीनसे ऽभ्यङ्गान् स्नेहान् स्वेदांश् च शीलयेत् ॥ ६४ ॥

५.६४av पीनसे च क्रमम् इमं स्निग्धान् उत्कारिका-पिण्डैः शिरः-पार्श्व-गलादिषु ।
लवणाम्ल-कटूष्णांश् च रसान् स्नेहोपसंहितान् ॥ ६५ ॥

शिरो-ऽंस-पार्श्व-शूलेषु यथा-दोष-विधिं चरेत् ।
औदकानूप-पिशितैर् उपनाहाः सु-संस्कृताः ॥ ६६ ॥

तत्रेष्टाः स-चतुः-स्नेहा दोष-संसर्ग इष्यते ।
प्रलेपो नत-यष्ट्य्-आह्व-शताह्वा-कुष्ठ-चन्दनैः ॥ ६७ ॥

बला-रास्ना-तिलैस् तद्-वत् स-सर्पिर्-मधुकोत्पलैः ।
पुनर्नवा-कृष्णगन्धा-बला-वीरा-विदारिभिः ॥ ६८ ॥

नावनं धूम-पानानि स्नेहाश् चौत्तरभक्तिकाः ।
तैलान्य् अभ्यङ्ग-योगीनि वस्ति-कर्म तथा परम् ॥ ६९ ॥

शृङ्गाद्यैर् वा यथा-दोषं दुष्टम् एषां हरेद् असृक् ।
प्रदेहः स-घृतैः श्रेष्ठः पद्मकोशीर-चन्दनैः ॥ ७० ॥

दूर्वा-मधुक-मञ्जिष्ठा-केसरैर् वा घृताप्लुतैः ।
वटादि-सिद्ध-तैलेन शत-धौतेन सर्पिषा ॥ ७१ ॥

अभ्यङ्गः पयसा सेकः शस्तश् च मधुकाम्बुना ।
प्रायेणोपहताग्नि-त्वात् स-पिच्छम् अतिसार्यते ॥ ७२ ॥

तस्यातीसार-ग्रहणी-विहितं हितम् औषधम् ।
पुरीषं यत्नतो रक्षेच् छुष्यतो राज-यक्ष्मिणः ॥ ७३ ॥

सर्व-धातु-क्षयार्तस्य बलं तस्य हि विड्-बलम् ।
मांसम् एवाश्नतो युक्त्या मार्द्वीकं पिबतो ऽनु च ॥ ७४ ॥

अ-विधारित-वेगस्य यक्ष्मा न लभते ऽन्तरम् ।
सुरां स-मण्डां मार्द्वीकम् अरिष्टान् सीधु-माधवान् ॥ ७५ ॥

५.७५dv अरिष्टं सीधु-माधवान् यथार्हम् अनु-पानार्थं पिबेन् मांसानि भक्षयन् ।
स्रोतो-विबन्ध-मोक्षार्थं बलौजः-पुष्टये च तत् ॥ ७६ ॥

स्नेह-क्षीराम्बु-कोष्ठेषु स्व्-अभ्यक्तम् अवगाहयेत् ।
उत्तीर्णं मिश्रकैः स्नेहैर् भूयो ऽभ्यक्तं सुखैः करैः ॥ ७७ ॥

५.७७cv उत्तीर्णं मिश्रक-स्नेहैर् मृद्नीयात् सुखम् आसीनं सुखं चोद्वर्तयेत् परम् ।
जीवन्तीं शतवीर्यां च विकसां स-पुनर्नवाम् ॥ ७८ ॥

अश्वगन्धाम् अपामार्गं तर्कारीं मधुकं बलाम् ।
विदारीं सर्षपान् कुष्ठं तण्डुलान् अतसी-फलम् ॥ ७९ ॥

माषांस् तिलांश् च किण्वं च सर्वम् एक-त्र चूर्णयेत् ।
यव-चूर्णं त्रि-गुणितं दध्ना युक्तं स-माक्षिकम् ॥ ८० ॥

एतद् उद्वर्तनं कार्यं पुष्टि-वर्ण-बल-प्रदम् ।
गौर-सर्षप-कल्केन स्नानीयौषधिभिश् च सः ॥ ८१ ॥

५.८१av एतद् उत्सादनं कार्यं ५.८१dv स्नानैर् औषधिभिश् च सः स्नायाद् ऋतु-सुखैस् तोयैर् जीवनीयोपसाधितैः ।
गन्ध-माल्यादिकां भूषाम् अ-लक्ष्मी-नाशनीं भजेत् ॥ ८२ ॥

५.८२cv गन्ध-माल्यादिकैर् भूषाम् सुहृदां दर्शनं गीत-वादित्रोत्सव-संश्रुतिः ।
वस्तयः क्षीर-सर्पींषि मद्य-मांस-सु-शील-ता ॥ ८३ ॥

५.८३dv मद्यं मांसं सु-शील-ता दैव-व्यपाश्रयं तत् तद् अथर्वोक्तं च पूजितम् ॥ ८३अब् ॥

# अध्याय 06

आमाशयोत्क्लेश-भवाः प्रायश् छर्द्यो हितं ततः ।
लङ्घनं प्राग् ऋते वायोर् वमनं तत्र योजयेत् ॥ १ ॥

६.१bv प्रायश् छर्द्यो हितं मतम् बलिनो बहु-दोषस्य वमतः प्रततं बहु ।
ततो विरेकं क्रम-शो हृद्यं मद्यैः फलाम्बुभिः ॥ २ ॥

क्षीरैर् वा सह स ह्य् ऊर्ध्वं गतं दोषं नयत्य् अधः ।
शमनं चौषधं रूक्ष-दुर्-बलस्य तद् एव तु ॥ ३ ॥

परिशुष्कं प्रियं सात्म्यम् अन्नं लघु च शस्यते ।
उपवासस् तथा यूषा रसाः काम्बलिकाः खलाः ॥ ४ ॥

शाकानि लेहा भोज्यानि राग-षाडव-पानकाः ।
भक्ष्याः शुष्का विचित्राश् च फलानि स्नान-घर्षणम् ॥ ५ ॥

गन्धाः सु-गन्धयो गन्ध-फल-पुष्पान्न-पान-जाः ।
भुक्त-मात्रस्य सहसा मुखे शीताम्बु-सेचनम् ॥ ६ ॥

हन्ति मारुत-जां छर्दिं सर्पिः पीतं स-सैन्धवम् ।
किञ्-चिद्-उष्णं विशेषेण स-कास-हृदय-द्रवाम् ॥ ७ ॥

व्योष-त्रि-लवणाढ्यं वा सिद्धं वा दाडिमाम्बुना ।
स-शुण्ठी-दधि-धान्येन शृतं तुल्याम्बु वा पयः ॥ ८ ॥

६.८dv शृतं तुल्याम्बुना पयः ६.८dv पीतं तुल्याम्बुना पयः व्यक्त-सैन्धव-सर्पिर् वा फलाम्लो वैष्किरो रसः ।
स्निग्धं च भोजनं शुण्ठी-दधि-दाडिम-साधितम् ॥ ९ ॥

कोष्णं स-लवणं चात्र हितं स्नेह-विरेचनम् ।
पित्त-जायां विरेकार्थं द्राक्षेक्षु-स्व-रसैस् त्रिवृत् ॥ १० ॥

सर्पिर् वा तैल्वकं योज्यं वृद्धं च श्लेष्म-धाम-गम् ।
ऊर्ध्वम् एव हरेत् पित्तं स्वादु-तिक्तैर् विशुद्धि-मान् ॥ ११ ॥

पिबेन् मन्थं यवागूं वा लाजैः स-मधु-शर्कराम् ।
मुद्ग-जाङ्गल-जैर् अद्याद् व्यञ्जनैः शालि-षष्टिकम् ॥ १२ ॥

६.१२bv लाजैः स-मधु-शर्करैः मृद्-भृष्ट-लोष्ट-प्रभवं सु-शीतं सलिलं पिबेत् ।
मुद्गोशीर-कणा-धान्यैः सह वा संस्थितं निशाम् ॥ १३ ॥

द्राक्षा-रसं रसं वेक्षोर् गुडूच्य्-अम्बु पयो ऽपि वा ।
जम्ब्व्-आम्र-पल्लवोशीर-वट-शुङ्गावरोह-जः ॥ १४ ॥

६.१४av द्राक्षा-रसं रसं चेक्षोर् ६.१४dv -वट-शृङ्गावरोह-जः क्वाथः क्षौद्र-युतः पीतः शीतो वा विनियच्छति ।
छर्दिं ज्वरम् अतीसारं मूर्छां तृष्णां च दुर्-जयाम् ॥ १५ ॥

धात्री-रसेन वा शीतं पिबेन् मुद्ग-दलाम्बु वा ।
कोल-मज्ज-सिता-लाजा-मक्षिका-विट्-कणाञ्जनम् ॥ १६ ॥

६.१६cv कोल-मज्ज-सिता-लाक्षा- ६.१६dv -मक्षिका-विट्-रसाञ्जनम् लिह्यात् क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा ।
कफ-जायां वमेन् निम्ब-कृष्णा-पिण्डीत-सर्षपैः ॥ १७ ॥

युक्तेन कोष्ण-तोयेन दुर्-बलं चोपवासयेत् ।
आरग्वधादि-निर्यूहं शीतं क्षौद्र-युतं पिबेत् ॥ १८ ॥

६.१८cv आरग्वधादेर् निर्यूहं मन्थान् यवैर् वा बहु-शश् छर्दि-घ्नौषध-भावितैः ।
कफ-घ्नम् अन्नं हृद्यं च रागाः सार्जक-भूस्तृणाः ॥ १९ ॥

लीढं मनःशिला-कृष्णा-मरिचं बीजपूरकात् ।
स्व-रसेन कपित्थस्य स-क्षौद्रेण वमिं जयेत् ॥ २० ॥

खादेत् कपित्थं स-व्योषं मधुना वा दुरालभाम् ।
लिह्यान् मरिच-चोचैला-गो-शकृद्-रस-माक्षिकम् ॥ २१ ॥

अनुकूलोपचारेण याति द्विष्टार्थ-जा शमम् ।
कृमि-जा कृमि-हृद्-रोग-गदितैश् च भिषग्-जितैः ॥ २२ ॥

यथा-स्वं परिशेषाश् च तत्-कृताश् च तथामयाः ॥ २२अब् ॥
छर्दि-प्रसङ्गेन हि मातरिश्वा धातु-क्षयात् कोपम् उपैत्य् अवश्यम् ।
कुर्याद् अतो ऽस्मिन् वमनाति-योग-प्रोक्तं विधिं स्तम्भन-बृंहणीयम् ॥ २३ ॥

६.२३cv कुर्याद् अतो ऽस्मिन् वमनाति-योगे ६.२३dv प्रोक्तं विधिं स्तम्भन-बृंहणीयम् सर्पिर्-गुडा मांस-रसा घृतानि कल्याणक-त्र्य्-ऊषण-जीवनानि ।
पयांसि पथ्योपहितानि लेहाश् छर्दिं प्रसक्तां प्रशमं नयन्ति ॥ २४ ॥

६.२४av सर्पिर् गुडो मांस-रसा घृतानि इति छर्दि-चिकित्सितम् अथ हृद्-रोग-चिकित्सितम् ॥ २४+१ ॥

हृद्-रोगे वात-जे तैलं मस्तु-सौवीर-तक्र-वत् ॥ २५ ॥

तैलं च लवणैः सिद्धं स-मूत्राम्लं तथा-गुणम् ॥ २६ ॥

पिबेत् सुखोष्णं स-विडं गुल्मानाहार्ति-जिच् च तत् ।
तैलं च लवणैः सिद्धं स-मूत्राम्लं तथा-गुणम् ॥ २६ ॥

बिल्वं रास्नां यवान् कोलं देवदारुं पुनर्नवाम् ।
कुलत्थान् पञ्च-मूलं च पक्त्वा तस्मिन् पचेज् जले ॥ २७ ॥

तैलं तन् नावने पाने वस्तौ च विनियोजयेत् ।
शुण्ठी-वयःस्था-लवण-कायस्था-हिङ्गु-पौष्करैः ॥ २८ ॥

६.२८cv शुण्ठी-कयस्था-लवण- ६.२८cv -वयःस्था-हिङ्गु-पौष्करैः पथ्यया च शृतं पार्श्व-हृद्-रुजा-गुल्म-जिद् घृतम् ।
सौवर्चलस्य द्वि-पले पथ्या-पञ्चाशद्-अन्विते ॥ २९ ॥

घृतस्य साधितः प्रस्थो हृद्-रोग-श्वास-गुल्म-जित् ।
दाडिमं कृष्ण-लवणं शुण्ठी-हिङ्ग्व्-अम्ल-वेतसम् ॥ ३० ॥

६.३०bv हृद्-रोग-श्वास-गुल्म-हृत् ६.३०dv शुण्ठी हिङ्ग्व् अम्ल-वेतसः अपतन्त्रक-हृद्-रोग-श्वास-घ्नं चूर्णम् उत्तमम् ।
पुष्कराह्व-शठी-शुण्ठी-बीजपूर-जटाभयाः ॥ ३१ ॥

पीताः कल्की-कृताः क्षार-घृताम्ल-लवणैर् युताः ।
विकर्तिका-शूल-हराः क्वाथः कोष्णश् च तद्-गुणः ॥ ३२ ॥

यवानी-लवण-क्षार-वचाजाज्य्-औषधैः कृतः ।
स-पूतिदारु-बीजाह्व-पलाश-शठि-पौष्करैः ॥ ३३ ॥

६.३३cv स पूतिदारु-बीजाह्व- ६.३३dv -विजया-शठि-पौष्करैः यव-क्षारो यवानी च पिबेद् उष्णेन वारिणा ।
एतेन वात-जं शूलं गुल्मं चैव चिरोत्थितम् ॥ ३३+(१) ॥
भिद्यते सप्त-रात्रेण पवनेन यथा घनः ॥ ३३+(१)अब् ॥
पञ्च-कोल-शठी-पथ्या-गुड-बीजाह्व-पौष्करम् ।
वारुणी-कल्कितं भृष्टं यमके लवणान्वितम् ॥ ३४ ॥

हृत्-पार्श्व-योनि-शूलेषु खादेद् गुल्मोदरेषु च ।
स्निग्धाश् चेह हिताः स्वेदाः संस्कृतानि घृतानि च ॥ ३५ ॥

६.३५dv संस्कृतानि घृतानि तु लघुना पञ्च-मूलेन शुण्ठ्या वा साधितं जलम् ।
वारुणी-दधि-मण्डं वा धान्याम्लं वा पिबेत् तृषि ॥ ३६ ॥

६.३६cv वारुणीं दधि-मण्डं वा सायाम-स्तम्भ-शूलामे हृदि मारुत-दूषिते ।
क्रियैषा स-द्रवायाम-प्रमोहे तु हिता रसाः ॥ ३७ ॥

स्नेहाढ्यास् तित्तिरि-क्रौञ्च-शिखि-वर्तक-दक्ष-जाः ।
बला-तैलं स-हृद्-रोगः पिबेद् वा सु-कुमारकम् ॥ ३८ ॥

६.३८av स्नेहाद्यास् तित्तिरि-क्रौञ्च- यष्ट्य्-आह्व-शत-पाकं वा महा-स्नेहं तथोत्तमम् ।
रास्ना-जीवक-जीवन्ती-बला-व्याघ्री-पुनर्नवैः ॥ ३९ ॥

भार्गी-स्थिरा-वचा-व्योषैर् महा-स्नेहं विपाचयेत् ।
दधि-पादं तथाम्लैश् च लाभतः स निषेवितः ॥ ४० ॥

तर्पणो बृंहणो बल्यो वात-हृद्-रोग-नाशनः ।
दीप्ते ऽग्नौ स-द्रवायामे हृद्-रोगे वातिके हितम् ॥ ४१ ॥

क्षीरं दधि गुडः सर्पिर् औदकानूपम् आमिषम् ।
एतान्य् एव च वर्ज्यानि हृद्-रोगेषु चतुर्ष्व् अपि ॥ ४२ ॥

शेषेषु स्तम्भ-जाड्याम-संयुक्ते ऽपि च वातिके ।
कफानुबन्धे तस्मिंस् तु रूक्षोष्णाम् आचरेत् क्रियाम् ॥ ४३ ॥

पैत्ते द्राक्षेक्षु-निर्यास-सिता-क्षौद्र-परूषकैः ।
युक्तो विरेको हृद्यः स्यात् क्रमः शुद्धे च पित्त-हा ॥ ४४ ॥

६.४४cv युक्तो विरेचो हृद्यः स्यात् क्षत-पित्त-ज्वरोक्तं च बाह्यान्तः परिमार्जनम् ।
कट्वी-मधुक-कल्कं च पिबेत् स-सितम् अम्भसा ॥ ४५ ॥

श्रेयसी-शर्करा-द्राक्षा-जीवकर्षभकोत्पलैः ।
बला-खर्जूर-काकोली-मेदा-युग्मैश् च साधितम् ॥ ४६ ॥

स-क्षीरं माहिषं सर्पिः पित्त-हृद्-रोग-नाशनम् ।
प्रपौण्डरीक-मधुक-बिस-ग्रन्थि-कसेरुकाः ॥ ४७ ॥

स-शुण्ठी-शैवलास् ताभिः स-क्षीरं विपचेद् घृतम् ।
शीतं स-मधु तच् चेष्टं स्वादु-वर्ग-कृतं च यत् ॥ ४८ ॥

वस्तिं च दद्यात् स-क्षौद्रं तैलं मधुक-साधितम् ।
कफोद्भवे वमेत् स्विन्नः पिचुमन्द-वचाम्भसा ॥ ४९ ॥

६.४९av वस्तिं च दद्यात् स-क्षौद्र- ६.४९bv -तैलं मधुक-साधितम् ६.४९dv पिचुमन्द-वचाम्बुना कुलत्थ-धन्वोत्थ-रस-तीक्ष्ण-मद्य-यवाशनः ।
पिबेच् चूर्णं वचा-हिङ्गु-लवण-द्वय-नागरात् ॥ ५० ॥

सैला-यवानक-कणा-यव-क्षारात् सुखाम्बुना ।
फल-धान्याम्ल-कौलत्थ-यूष-मूत्रासवैस् तथा ॥ ५१ ॥

६.५१av सैला-यवानिक-कणा- पुष्कराह्वाभया-शुण्ठी-शठी-रास्ना-वचा-कणात् ।
क्वाथं तथाभया-शुण्ठी-माद्री-पीतद्रु-कट्फलात् ॥ ५२ ॥

६.५२ब्च् -शठी-रास्ना-वचा-कणा- ६.५२च्च् -क्वाथं तथाभया-शुण्ठी- क्वाथे रोहीतकाश्वत्थ-खदिरोदुम्बरार्जुने ।
स-पलाश-वटे व्योष-त्रिवृच्-चूर्णान्विते कृतः ॥ ५३ ॥

सुखोदकानु-पानश् च लेहः कफ-विकार-हा ।
श्लेष्म-गुल्मोदिताज्यानि क्षारांश् च विविधान् पिबेत् ॥ ५४ ॥

६.५४av सुखोदकानु-पानस्य प्रयोजयेच् छिलाह्वं वा ब्राह्मं वात्र रसायनम् ।
तथामलक-लेहं वा प्राशं वागस्त्य-निर्मितम् ॥ ५५ ॥

६.५५bv ब्राह्मं चात्र रसायनम् ६.५५dv प्राश्यं वागस्त्य-निर्मितम् ६.५५dv प्राश्यं चागस्त्य-निर्मितम् स्याच् छूलं यस्य भुक्ते ऽति जीर्यत्य् अल्पं जरां गते ।
शाम्येत् स कुष्ठ-कृमिजिल्-लवण-द्वय-तिल्वकैः ॥ ५६ ॥

६.५६av स्याच् छूलं यस्य भुक्ते ऽन्ने स-देवदार्व्-अतिविषैश् चूर्णम् उष्णाम्बुना पिबेत् ।
यस्य जीर्णे ऽधिकं स्नेहैः स विरेच्यः फलैः पुनः ॥ ५७ ॥

जीर्यत्य् अन्ने तथा मूलैस् तीक्ष्णैः शूले सदाधिके ।
प्रायो ऽनिलो रुद्ध-गतिः कुप्यत्य् आमाशये गतः ॥ ५८ ॥

६.५८dv कुप्यत्य् आमाशये ततः ६.५८dv कुप्यत्य् आमाशये यतः तस्यानुलोमनं कार्यं शुद्धि-लङ्घन-पाचनैः ।
कृमि-घ्नम् औषधं सर्वं कृमि-जे हृदयामये ॥ ५९ ॥

६.५९dv कृमि-जे च हृद्-आमये तृष्णासु वात-पित्त-घ्नो विधिः प्रायेण शस्यते ।
सर्वासु शीतो बाह्यान्तस् तथा शमन-शोधनः ॥ ६० ॥

६.६०bv विधिः प्रायेण युज्यते ६.६०dv तथा शमन-शोधनम् दिव्याम्बु शीतं स-क्षौद्रं तद्-वद् भौमं च तद्-गुणम् ।
निर्वापितं तप्त-लोष्ट-कपाल-सिकतादिभिः ॥ ६१ ॥

स-शर्करं वा क्वथितं पञ्च-मूलेन वा जलम् ।
दर्भ-पूर्वेण मन्थश् च प्रशस्तो लाज-सक्तुभिः ॥ ६२ ॥

वाट्यश् चाम-यवैः शीतः शर्करा-माक्षिकान्वितः ।
यवागूः शालिभिस् तद्-वत् कोद्रवैश् च चिरन्-तनैः ॥ ६३ ॥

शीतेन शीत-वीर्यैश् च द्रव्यैः सिद्धेन भोजनम् ।
हिमाम्बु-परिषिक्तस्य पयसा स-सिता-मधु ॥ ६४ ॥

रसैश् चान्-अम्ल-लवणैर् जाङ्गलैर् घृत-भर्जितैः ।
मुद्गादीनां तथा यूषैर् जीवनीय-रसान्वितैः ॥ ६५ ॥

६.६५av रसैश् चान्-अल्प-लवणैर् नस्यं क्षीर-घृतं सिद्धं शीतैर् इक्षोस् तथा रसः ।
निर्वापणाश् च गण्डूषाः सूत्र-स्थानोदिता हिताः ॥ ६६ ॥

६.६६bv शीतैर् इक्षोस् तथा रसैः ६.६६bv शीतैर् इक्षोस् तथा रसे दाह-ज्वरोक्ता लेपाद्या निरीह-त्वं मनो-रतिः ।
महा-सरिद्-ध्रदादीनां दर्शन-स्मरणानि च ॥ ६७ ॥

६.६७dv दर्शन-स्मरणादि च तृष्णायां पवनोत्थायां स-गुडं दधि शस्यते ।
रसाश् च बृंहणाः शीता विदार्य्-आदि-गणाम्बु च ॥ ६८ ॥

६.६८dv विदार्य्-आदि-गणाम्बु वा पित्त-जायां सिता-युक्तः पक्वोदुम्बर-जो रसः ।
तत्-क्वाथो वा हिमस् तद्-वच् छारिवादि-गणाम्बु वा ॥ ६९ ॥

तद्-विधैश् च गणैः शीत-कषायान् स-सिता-मधून् ।
मधुरैर् औषधैस् तद्-वत् क्षीरि-वृक्षैश् च कल्पितान् ॥ ७० ॥

बीजपूरक-मृद्वीका-वट-वेतस-पल्लवान् ।
मूलानि कुश-काशानां यष्ट्य्-आह्वं च जले शृतम् ॥ ७१ ॥

ज्वरोदितं वा द्राक्षादि पञ्च-साराम्बु वा पिबेत् ।
कफोद्भवायां वमनं निम्ब-प्रसव-वारिणा ॥ ७२ ॥

बिल्वाढकी-पञ्च-कोल-दर्भ-पञ्चक-साधितम् ।
जलं पिबेद् रजन्या वा सिद्धं स-क्षौद्र-शर्करम् ॥ ७३ ॥

६.७३bv -दर्भ-कच्छक-साधितम् ६.७३cv जलं पिबेद् रजन्यां वा मुद्ग-यूषं च स-व्योष-पटोली-निम्ब-पल्लवम् ।
यवान्नं तीक्ष्ण-कवड-नस्य-लेहांश् च शीलयेत् ॥ ७४ ॥

सर्वैर् आमाच् च तद् धन्त्री क्रियेष्टा वमनं तथा ।
त्र्य्-ऊषणारुष्कर-वचा-फलाम्लोष्णाम्बु-मस्तुभिः ॥ ७५ ॥

अन्नात्ययान् मण्डम् उष्णं हिमं मन्थं च काल-वित् ।
तृषि श्रमान् मांस-रसं मन्थं वा स-सितं पिबेत् ॥ ७६ ॥

६.७६dv मद्यं वा स-सितं पिबेत् आतपात् स-सितं मन्थं यव-कोल-ज-सक्तुभिः ।
सर्वाण्य् अङ्गानि लिम्पेच् च तिल-पिण्याक-काञ्जिकैः ॥ ७७ ॥

शीत-स्नानाच् च मद्याम्बु पिबेत् तृण्-मान् गुडाम्बु वा ।
मद्याद् अर्ध-जलं मद्यं स्नातो ऽम्ल-लवणैर् युतम् ॥ ७८ ॥

६.७८av शीत-स्नानात् तु मद्याम्बु ६.७८bv पिबेत् तृड्-वान् गुडाम्बु वा ६.७८dv स्नातो ऽम्ल-लवणायुतम् स्नेह-तीक्ष्ण-तराग्निस् तु स्व-भाव-शिशिरं जलम् ।
स्नेहाद् उष्णाम्ब्व् अ-जीर्णात् तु जीर्णान् मण्डं पिपासितः ॥ ७९ ॥

६.७९av स्नेहात् तीक्ष्ण-तराग्निस् तु पिबेत् स्निग्धान्न-तृषितो हिम-स्पर्धि गुडोदकम् ।
गुर्व्-आद्य्-अन्नेन तृषितः पीत्वोष्णाम्बु तद् उल्लिखेत् ॥ ८० ॥

क्षय-जायां क्षय-हितं सर्वं बृंहणम् औषधम् ।
कृश-दुर्-बल-रूक्षाणां क्षीरं छागो रसो ऽथ-वा ॥ ८१ ॥

क्षीरं च सोर्ध्व-वातायां क्षय-कास-हरैः शृतम् ।
रोगोपसर्गाज् जातायां धान्याम्बु स-सिता-मधु ॥ ८२ ॥

६.८२cv रोगोपसर्ग-जातायां पाने प्रशस्तं सर्वा च क्रिया रोगाद्य्-अपेक्षया ।
तृष्यन् पूर्वामय-क्षीणो न लभेत जलं यदि ॥ ८३ ॥

६.८३cv तृष्णन् पूर्वामय-क्षीणो ६.८३च्च् तृष्णक् पूर्वामय-क्षीणो मरणं दीर्घ-रोगं वा प्राप्नुयात् त्वरितं ततः ।
सात्म्यान्न-पान-भैषज्यैस् तृष्णां तस्य जयेत् पुरा ॥ ८४ ॥

६.८४dv तृष्णां तस्य जयेत् पुरस् तस्यां जितायाम् अन्यो ऽपि व्याधिः शक्यश् चिकित्सितुम् ॥ ८४अब् ॥

# अध्याय 07

यं दोषम् अधिकं पश्येत् तस्यादौ प्रतिकारयेत् ।
कफ-स्थानानुपूर्व्या च तुल्य-दोषे मदात्यये ॥ १ ॥

७.१cv कफ-स्थानानुपूर्व्या तु पित्त-मारुत-पर्य्-अन्तः प्रायेण हि मदात्ययः ।
हीन-मिथ्याति-पीतेन यो व्याधिर् उपजायते ॥ २ ॥

सम-पीतेन तेनैव स मद्येनोपशाम्यति ।
मद्यस्य विष-सादृश्याद् विषं तूत्कर्ष-वृत्तिभिः ॥ ३ ॥

तीक्ष्णादिभिर् गुणैर् योगाद् विषान्तरम् अपेक्षते ।
तीक्ष्णोष्णेनाति-मात्रेण पीतेनाम्ल-विदाहिना ॥ ४ ॥

मद्येनान्न-रस-क्लेदो विदग्धः क्षार-तां गतः ।
यान् कुर्यान् मद-तृण्-मोह-ज्वरान्तर्-दाह-विभ्रमान् ॥ ५ ॥

मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः ।
सु-तीव्रा वेदना याश् च शिरस्य् अस्थिषु संधिषु ॥ ६ ॥

जीर्णाम-मद्य-दोषस्य प्रकाङ्क्षा-लाघवे सति ।
यौगिकं विधि-वद् युक्तं मद्यम् एव निहन्ति तान् ॥ ७ ॥

क्षारो हि याति माधुर्यं शीघ्रम् अम्लोपसंहितः ।
मद्यम् अम्लेषु च श्रेष्ठं दोष-विष्यन्दनाद् अलम् ॥ ८ ॥

७.८dv दोष-विस्रावणाद् अलम् तीक्ष्णोष्णाद्यैः पुरा प्रोक्तैर् दीपनाद्यैस् तथा गुणैः ।
सात्म्य-त्वाच् च तद् एवास्य धातु-साम्य-करं परम् ॥ ९ ॥

सप्ताहम् अष्ट-रात्रं वा कुर्यात् पानात्ययौषधम् ।
जीर्यत्य् एतावता पानं कालेन वि-पथाश्रितम् ॥ १० ॥

परं ततो ऽनुबध्नाति यो रोगस् तस्य भेषजम् ।
यथा-यथं प्रयुञ्जीत कृत-पानात्ययौषधः ॥ ११ ॥

७.११dv कृत-पानात्ययौषधम् तत्र वातोल्बणे मद्यं दद्यात् पिष्ट-कृतं युतम् ।
बीजपूरक-वृक्षाम्ल-कोल-दाडिम-दीप्यकैः ॥ १२ ॥

यवानी-हपुषाजाजी-व्योष-त्रि-लवणार्द्रकैः ।
शूल्य-मांसैर् हरीतकैः स्नेह-वद्भिश् च सक्तुभिः ॥ १३ ॥

७.१३bv -व्योष-त्रि-लवणार्जकैः ७.१३cv शूल्य-मांसैर् हरितकैः उष्ण-स्निग्धाम्ल-लवणा मेद्य-मांस-रसा हिताः ।
आम्राम्रातक-पेशीभिः संस्कृता राग-षाडवाः ॥ १४ ॥

७.१४av उष्णाः स्निग्धाम्ल-लवणा ७.१४bv मद्य-मांस-रसा हिताः ७.१४dv संस्कृता राग-खाण्डवाः गोधूम-माष-विकृतिर् मृदुश् चित्रा मुख-प्रिया ।
आर्द्रिकार्द्रक-कुल्माष-शुक्त-मांसादि-गर्भिणी ॥ १५ ॥

सुरभिर् लवणा शीता निर्-गदा वाच्छ-वारुणी ।
स्व-रसो दाडिमात् क्वाथः पञ्च-मूलात् कनीयसः ॥ १६ ॥

७.१६bv निगदा वाच्छ-वारुणी शुण्ठी-धान्यात् तथा मस्तु शुक्ताम्भो-ऽच्छाम्ल-काञ्जिकम् ।
अभ्यङ्गोद्वर्तन-स्नानम् उष्णं प्रावरणं घनम् ॥ १७ ॥

घनश् चागुरु-जो धूपः पङ्कश् चागुरु-कुङ्कुमः ।
कुचोरु-श्रोणि-शालिन्यो यौवनोष्णाङ्ग-यष्टयः ॥ १८ ॥

हर्षेणालिङ्गने युक्ताः प्रियाः संवाहनेषु च ।
पित्तोल्बणे बहु-जलं शार्करं मधु वा युतम् ॥ १९ ॥

रसैर् दाडिम-खर्जूर-भव्य-द्राक्षा-परूष-जैः ।
सु-शीतं स-सिता-सक्तु योज्यं तादृक् च पानकम् ॥ २० ॥

७.२०bv -भव्य-द्राक्षा-परूषकैः ७.२२bv -पटोली-दाडिमैर् अपि स्वादु-वर्ग-कषायैर् वा युक्तं मद्यं स-माक्षिकम् ।
शालि-षष्टिकम् अश्नीयाच् छशाजैण-कपिञ्जलैः ॥ २१ ॥

सतीन-मुद्गामलक-पटोली-दाडिमै रसैः ।
कफ-पित्तं समुत्क्लिष्टम् उल्लिखेत् तृड्-विदाह-वान् ॥ २२ ॥

पीत्वाम्बु शीतं मद्यं वा भूरीक्षु-रस-संयुतम् ।
द्राक्षा-रसं वा संसर्गी तर्पणादिः परं हितः ॥ २३ ॥

तथाग्निर् दीप्यते तस्य दोष-शेषान्न-पाचनः ।
कासे स-रक्त-निष्ठीवे पार्श्व-स्तन-रुजासु च ॥ २४ ॥

तृष्णायां स-विदाहायां सोत्क्लेशे हृदयोरसि ।
गुडूची-भद्र-मुस्तानां पटोलस्याथ-वा रसम् ॥ २५ ॥

स-शृङ्गवेरं युञ्जीत तित्तिरि-प्रतिभोजनम् ।
तृष्यते चाति बल-वद् वात-पित्ते समुद्धते ॥ २६ ॥

७.२६av स-नागरं योजयेत दद्याद् द्राक्षा-रसं पानं शीतं दोषानुलोमनम् ।
जीर्णे ऽद्यान् मधुराम्लेन च्छाग-मांस-रसेन च ॥ २७ ॥

तृष्य् अल्प-शः पिबेन् मद्यं मदं रक्षन् बहूदकम् ।
मुस्त-दाडिम-लाजाम्बु जलं वा पर्णिनी-शृतम् ॥ २८ ॥

पाटल्य्-उत्पल-कन्दैर् वा स्व-भावाद् एव वा हिमम् ।
मद्याति-पानाद् अब्-धातौ क्षीणे तेजसि चोद्धते ॥ २९ ॥

७.२९av पटोल्य्-उत्पल-कन्दैर् वा यः शुष्क-गल-ताल्व्-ओष्ठो जिह्वां निष्कृष्य चेष्टते ।
पाययेत् कामतो ऽम्भस् तं निशीथ-पवनाहतम् ॥ ३० ॥

कोल-दाडिम-वृक्षाम्ल-चुक्रीका-चुक्रिका-रसः ।
पञ्चाम्लको मुखालेपः सद्यस् तृष्णां नियच्छति ॥ ३१ ॥

त्वचं प्राप्तश् च पानोष्मा पित्त-रक्ताभिमूर्छितः ।
दाहं प्रकुरुते घोरं तत्राति-शिशिरो विधिः ॥ ३२ ॥

७.३२av त्वचं प्राप्तस् तु पानोष्मा ७.३२av त्वचं प्राप्तः स पानोष्मा अ-शाम्यति रसैस् तृप्ते रोहिणीं व्यधयेत् सिराम् ।
उल्लेखनोपवासाभ्यां जयेच् छलेष्मोल्बणं पिबेत् ॥ ३३ ॥

शीतं शुण्ठी-स्थिरोदीच्य-दुःस्पर्शान्य-तमोदकम् ।
निर्-आमं क्षुधितं काले पाययेद् बहु-माक्षिकम् ॥ ३४ ॥

शार्करं मधु वा जीर्णम् अरिष्टं सीधुम् एव वा ।
रूक्ष-तर्पण-संयुक्तं यवानी-नागरान्वितम् ॥ ३५ ॥

यूषेण यव-गोधूमं तनुनाल्पेन भोजयेत् ।
उष्णाम्ल-कटु-तिक्तेन कौलत्थेनाल्प-सर्पिषा ॥ ३६ ॥

७.३६cv उष्णाम्बु-कटु-तिक्तेन शुष्क-मूलक-जैश् छागै रसैर् वा धन्व-चारिणाम् ।
साम्ल-वेतस-वृक्षाम्ल-पटोली-व्योष-दाडिमैः ॥ ३७ ॥

७.३७dv -पाटली-व्योष-दाडिमैः प्रभूत-शुण्ठी-मरिच-हरितार्द्रक-पेशिकम् ।
बीजपूर-रसाद्य्-अम्ल-भृष्ट-नी-रस-वर्तितम् ॥ ३८ ॥

करीर-करमर्दादि रोचिष्णु बहु-शालनम् ।
प्रव्यक्ताष्टाङ्ग-लवणं विकल्पित-निमर्दकम् ॥ ३९ ॥

७.३९dv विकल्पित-विमर्दकम् यथाग्नि भक्षयन् मांसं माधवं निगदं पिबेत् ।
सिता-सौवर्चलाजाजी-तिन्तिडीकाम्ल-वेतसम् ॥ ४० ॥

७.४०bv माधवं निर्-गदं पिबेत् त्वग्-एला-मरिचार्धांशम् अष्टाङ्ग-लवणं हितम् ।
स्रोतो-विशुद्ध्य्-अग्नि-करं कफ-प्राये मदात्यये ॥ ४१ ॥

रूक्षोष्णोद्वर्तनोद्घर्ष-स्नान-भोजन-लङ्घनैः ।
स-कामाभिः सह स्त्रीभिर् युक्त्या जागरणेन च ॥ ४२ ॥

मदात्ययः कफ-प्रायः शीघ्रं समुपशाम्यति ।
यद् इदं कर्म निर्दिष्टं पृथग् दोष-बलं प्रति ॥ ४३ ॥

संनिपाते दश-विधे तच् छेषे ऽपि विकल्पयेत् ।
त्वङ्-नागपुष्प-मगधा-मरिचाजाजि-धान्यकैः ॥ ४४ ॥

परूषक-मधूकैला-सुराह्वैश् च सितान्वितैः ।
स-कपित्थ-रसं हृद्यं पानकं शशि-बोधितम् ॥ ४५ ॥

मदात्ययेषु सर्वेषु पेयं रुच्य-अग्नि-दीपनम् ।
ना-विक्षोभ्य मनो मद्यं शरीरम् अ-विहन्य वा ॥ ४६ ॥

७.४६cv ना-क्षोभ्य हि मनो मद्यं ७.४६dv शरीरम् अ-विहत्य वा कुर्यान् मदात्ययं तस्माद् इष्यते हर्षणी क्रिया ।
संशुद्धि-शमनाद्येषु मद-दोषः कृतेष्व् अपि ॥ ४७ ॥

न चेच् छाम्येत् कफे क्षीणे जाते दौर्बल्य-लाघवे ।
तस्य मद्य-विदग्धस्य वात-पित्ताधिकस्य च ॥ ४८ ॥

ग्रीष्मोपतप्तस्य तरोर् यथा वर्षं तथा पयः ।
मद्य-क्षीणस्य हि क्षीणं क्षीरम् आश्व् एव पुष्यति ॥ ४९ ॥

७.४९cv मद्य-क्षीणस्य हि क्षीरं ७.४९dv पीतम् आश्व् एव पुष्यति ओजस् तुल्यं गुणैः सर्वैर् विपरीतं च मद्यतः ।
पयसा विहते रोगे बले जाते निवर्तयेत् ॥ ५० ॥

७.५०cv पयसा विजिते रोगे क्षीर-प्रयोगं मद्यं च क्रमेणाल्पाल्पम् आचरेत् ।
न विक्षय-ध्वंसकोत्थैः स्पृशेतोपद्रवैर् यथा ॥ ५१ ॥

७.५१cv न विट्-क्षय-ध्वंसकोत्थैः ७.५१dv स्पृश्येतोपद्रवैर् यथा तयोस् तु स्याद् घृतं क्षीरं वस्तयो बृंहणाः शिवाः ।
अभ्यङ्गोद्वर्तन-स्नानान्य् अन्न-पानं च वात-जित् ॥ ५२ ॥

युक्त-मद्यस्य मद्योत्थो न व्याधिर् उपजायते ।
अतो ऽस्य वक्ष्यते योगो यः सुखायैव केवलम् ॥ ५३ ॥

आश्विनं या महत् तेजो बलं सारस्वतं च या ।
दधात्य् ऐन्द्रं च या वीर्यं प्रभावं वैष्णवं च या ॥ ५४ ॥

अस्त्रं मकर-केतोर् या पुरुषार्थो बलस्य या ।
सौत्रामण्यां द्वि-ज-मुखे या हुताशे च ह्वयते ॥ ५५ ॥

७.५५bv पुरुषार्थो बलस्य च या सर्वौषधि-संपूर्णान् मथ्यमानात् सुरासुरैः ।
महोद-धेः समुद्भूता श्री-शशाङ्कामृतैः सह ॥ ५६ ॥

मधु-माधव-मैरेय-सीधु-गौडासवादिभिः ।
मद-शक्तिम् अन्-उज्झन्ती या रूपैर् बहुभिः स्थिता ॥ ५७ ॥

७.५७cv मद-शक्तिम् अ-त्यजन्ती याम् आस्वाद्य विलासिन्यो यथार्थं नाम बिभ्रति ।
कुलाङ्गनापि यां पीत्वा नयत्य् उद्धत-मानसा ॥ ५८ ॥

७.५८av याम् आसाद्य विलासिन्यो अन्-अङ्गालिङ्गितैर् अङ्गैः क्वापि चेतो मुनेर् अपि ।
तरङ्ग-भङ्ग-भ्रू-कुटी-तर्जनैर् मानिनी-मनः ॥ ५९ ॥

एकं प्रसाद्य कुरुते या द्वयोर् अपि निर्वृतिम् ।
यथा-कामं भटावाप्ति-परिहृष्टाप्सरो-गणे ॥ ६० ॥

७.६०cv यथा-काम-भटावाप्ति- तृण-वत् पुरुषा युद्धे याम् आस्वाद्य त्यजन्त्य् असून् ।
यां शीलयित्वापि चिरं बहु-धा बहु-विग्रहाम् ॥ ६१ ॥

७.६१bv याम् आसाद्य त्यजन्त्य् असून् नित्यं हर्षाति-वेगेन तत्-पूर्वम् इव सेवते ।
शोकोद्वेगा-रति-भयैर् यां दृष्ट्वा नाभिभूयते ॥ ६२ ॥

गोष्ठी-महोत्सवोद्यानं न यस्याः शोभते विना ।
स्मृत्वा स्मृत्वा च बहु-शो वियुक्तः शोचते यया ॥ ६३ ॥

७.६३cv स्मृत्वा तु यां च बहु-शो अ-प्रसन्नापि या प्रीत्यै प्रसन्ना स्वर्ग एव या ।
अपीन्द्रं मन्यते दुः-स्थं हृदय-स्थितया यया ॥ ६४ ॥

अ-निर्देश्य-सुखास्वादा स्वयं-वेद्यैव या परम् ।
इति चित्रास्व् अवस्थासु प्रियाम् अनुकरोति या ॥ ६५ ॥

प्रियाति-प्रिय-तां याति यत् प्रियस्य विशेषतः ।
या प्रीतिर् या रतिर् वा वाग् या पुष्टिर् इति च स्तुता ॥ ६६ ॥

देव-दानव-गन्धर्व-यक्ष-राक्षस-मानुषैः ।
पान-प्रवृत्तौ सत्यां तु तां सुरां विधिना पिबेत् ॥ ६७ ॥

७.६७bv -यक्ष-राक्षस-मानवैः ७.६७bv -यक्ष-राक्षस-मानवैः संभवन्ति न ते रोगा मेदोऽनिल-कफोद्भवाः ।
विधि-युक्ताद् ऋते मद्याद् ये न सिध्यन्ति दारुणाः ॥ ६८ ॥

७.६८av संभवन्ति च ये रोगा ७.६८cv विधि-युक्ताद् ऋते मद्यात् ७.६८dv ते न सिध्यन्ति दारुणाः अस्ति देहस्य सावस्था यस्यां पानं निवार्यते ।
अन्य-त्र मद्यान् निगदाद् विविधौषध-संस्कृतात् ॥ ६९ ॥

७.६९dv विविधौषध-संभृतात् आनूपं जाङ्गलं ◌ांसं विधिनाप्य् उपकल्पितम् ।
मद्यं सहायम् अ-प्राप्य सम्यक् परिणमेत् कथम् ॥ ७० ॥

सु-तीव्र-मारुत-व्याधि-घातिनो लशुनस्य च ।
मद्य-मांस-वियुक्तस्य प्रयोगे स्यात् कियान् गुणः ॥ ७१ ॥

७.७१dv प्रयोगः स्यात् कियान् गुणः ७.७१dv प्रयोगात् स्यात् कियान् गुणः निगूढ-शल्याहरणे शस्त्र-क्षाराग्नि-कर्मणि ।
पीत-मद्यश् विषहते सुखं वैद्य-विकत्थनाम् ॥ ७२ ॥

७.७२bv शस्त्र-क्षाराग्नि-कर्मसु अनलोत्तेजनं रुच्यं शोक-श्रम-विनोदकम् ।
न चातः परम् अस्त्य् अन्यद् आरोग्य-बल-पुष्टि-कृत् ॥ ७३ ॥

७.७३bv शोक-श्रम-विनोदनम् रक्षता जीवितं तस्मात् पेयम् आत्म-वता सदा ।
आश्रितोपाश्रित-हितं परमं धर्म-साधनम् ॥ ७४ ॥

स्नातः प्रणम्य सुर-विप्र-गुरून् यथा-स्वं वृत्तिं विधाय च समस्त-परिग्रहस्य ।
आपान-भूमिम् अथ गन्ध-जलाभिषिक्ताम् आहार-मण्डप-समीप-गतां श्रयेत् ॥ ७५ ॥

स्व्-आस्तृते ऽथ शयने कमनीये मित्र-भृत्य-रमणी-समवेतः ।
स्वं यशः कथक-चारण-संघैर् उद्धतं निशमयन्न् अति-लोकम् ॥ ७६ ॥

विलासिनीनां च विलास-शोभि गीतं स-नृत्यं कल-तूर्य-घोषैः ।
काञ्ची-कलापैश् चल-किङ्किणीकैः क्रीडा-विहङ्गैश् च कृतानुनादम् ॥ ७७ ॥

७.७७bv गीतं स-नृत्तं कल-तूर्य-घोषैः ७.७७cv काञ्ची-कलापैः स्फुट-किङ्किणीकैः मणि-कनक-समुत्थैर् आवनेयैर् विचित्रैः ॥ ७८अ ॥
७.७८av मणि-कनक-समुत्थैर् औपगेयैर् विचित्रैः ७.७८av मणि-कनक-समुत्थैः पान-पात्रैर् विचित्रैः स-जल-विविध-लेख-क्षौम-वस्त्रावृताङ्गैः ॥ ७८ब् ॥
७.७८bv स-जल-विविध-भक्ति-क्षौम-वस्त्रावृताङ्गैः अपि मुनि-जन-चित्त-क्षोभ-संपादिनीभिश् ॥ ७८च् ॥

चकित-हरिण-लोल-प्रेक्षणीभिः प्रियाभिः ॥ ७८द् ॥
७.७८dv चकित-हरिण-लोल-प्रेक्षणाभिः प्रियाभिः स्तन-नितम्ब-कृताद् अति-गौरवाद् अलसम् आकुलम् ईश्वर-संभ्रमात् ।
इति गतं दधतीभिर् अ-संस्थितं तरुण-चित्त-विलोभन-कार्मणम् ॥ ७९ ॥

यौवनासव-मत्ताभिर् विलासाधिष्ठितात्मभिः ।
संचार्यमाणं युग-पत् तन्व्-अङ्गीभिर् इतस्-ततः ॥ ८० ॥

ताल-वृन्त-नलिनी-दलानिलैः शीतली-कृतम् अतीव शीतलैः ।
दर्शने ऽपि विदधद् वशानुगम् स्वादितं किम् उत चित्त-जन्मनः ॥ ८१ ॥

७.८१dv सेवितं किम् उत चित्त-जन्मनः चूत-रसेन्दु-मृगैः कृत-वासं मल्लिकयोज्ज्वलया च स-नाथम् ।
स्फाटिक-शुक्ति-गतं स-तरङ्गं कान्तम् अन्-अङ्गम् इवोद्वहद् अङ्गम् ॥ ८२ ॥

७.८२bv मल्लिकयोज्ज्वलयाथ स-नाथम् ७.८२cv स्फाटिक-शुक्ति-गतं सु-तरङ्गं तालीशाद्यं चूर्णम् एलादिकं वा हृद्यं प्राश्य प्राग् वयः-स्थापनं वा ।
तत्-प्रार्थिभ्यो भूमि-भागे सु-मृष्टे तोयोन्मिश्रं दापयित्वा ततश् च ॥ ८३ ॥

७.८३bv हृद्यं प्राश्यं प्राग् वयः-स्थापनं वा धृति-मान् स्मृति-मान् नित्यम् अन्-ऊनाधिकम् आचरन् ।
उचितेनोपचारेण सर्वम् एवोपपादयन् ॥ ८४ ॥

७.८४bv अ-न्यूनाधिकम् आचरन् ७.८४cv उदितेनोपचारेण ७.८४dv सर्वम् एवोपपालयन् जित-विकसितासित-सरो-ज-नयन-संक्रान्ति-वर्धित-श्रीकम् ।
कान्ता-मुखम् इव सौरभ-हृत-मधु-प-गणं पिबेन् मद्यम् ॥ ८५ ॥

७.८५bv -ज-नयन-संक्रान्त-वर्धित-श्रीकम् ७.८५bv -ज-नयनं सत् कान्ति-वर्धित-श्रीकम् पीत्वैवं चषक-द्वयं परिजनं सन्-मान्य सर्वं ततो ॥ ८६अ ॥
७.८६av पीत्वैवं चषक-त्रयं परिजनं सन्-मान्य सर्वं ततो ७.८६av पीत्वैवं चषक-द्वयं परिजनं संभाव्य सर्वं ततो गत्वाहार-भुवं पुरः सु-भिषजो भुञ्जीत भूयो ऽत्र च ॥ ८६ब् ॥
मांसापूप-घृतार्द्रकादि-हरितैर् युक्तं स-सौवर्चलैर् ॥ ८६च् ॥
द्विस् त्रिर् वा निशि चाल्पम् एव वनिता-संवल्गनार्थं पिबेत् ॥ ८६द् ॥
रहसि दयिताम् अङ्के कृत्वा भुजान्तर-पीडनात् ॥ ८७अ ॥
पुलकित-तनुं जात-स्वेदां स-कम्प-पयो-धराम् ॥ ८७ब् ॥
यदि स-रभसं सीधोर् वारं न पाययते कृती ॥ ८७च् ॥
७.८७cv यदि स-रभसं सीधूद्गारं न पाययते कृती किम् अनुभवति क्लेश-प्रायं ततो गृह-तन्त्र-ताम् ॥ ८७द् ॥
७.८७dv किम् अनुभवति क्लेश-प्रायां वृथा गृह-तन्त्र-ताम् ७.८७dv किम् अनुभवति क्लेश-प्रायां तदा गृह-तन्त्र-ताम् वर-तनु-वक्त्र-संगति-सु-गन्धि-तरं सरकम् ॥ ८८अ ॥
द्रुतम् इव पद्म-राग-मणिम् आसव-रूप-धरम् ॥ ८८ब् ॥
भवति रति-श्रमेण च मदः पिबतो ऽल्पम् अपि ॥ ८८च् ॥
क्षयम् अत ओजसः परिहरन् स शयीत परम् ॥ ८८द् ॥
इत्थं युक्त्या पिबन् मद्यं न त्रि-वर्गाद् विहीयते ।
अ-सार-संसार-सुखं परमं चाधिगच्छति ॥ ८९ ॥

ऐश्वर्यस्योपभोगो ऽयं स्पृहणीयः सुरैर् अपि ।
अन्य-था हि विपत्सु स्यात् पश्चात् तापेन्धनं धनम् ॥ ९० ॥

७.९०cv अन्य-था हि विपत्स्व् अस्य उपभोगेन रहितो भोग-वान् इति निन्द्यते ।
निर्मितो ऽति-कद्-अर्यो ऽयं विधिना निधि-पालकः ॥ ९१ ॥

तस्माद् व्यवस्थया पानं पानस्य सततं हितम् ।
जित्वा विषय-लुब्धानाम् इन्द्रियाणां स्व-तन्त्र-ताम् ॥ ९२ ॥

७.९२av तस्माद् अवस्थया पानं विधिर् वसु-मताम् एष भविष्यद्-वसवस् तु ये ।
यथोपपत्ति तैर् मद्यं पातव्यं मात्रया हितम् ॥ ९३ ॥

यावद् दृष्टेर् न संभ्रान्तिर् यावन् न क्षोभते मनः ।
तावद् एव विरन्तव्यं मद्याद् आत्म-वता सदा ॥ ९४ ॥

अभ्यङ्गोद्वर्तन-स्नान-वास-धूपानुलेपनैः ।
स्निग्धोष्णैर् भावितश् चान्नैः पानं वातोत्तरः पिबेत् ॥ ९५ ॥

शीतोपचारैर् विविधैर् मधुर-स्निग्ध-शीतलैः ।
पैत्तिको भावितश् चान्नैः पिबन् मद्यं न सीदति ॥ ९६ ॥

उपचारैर् अ-शिशिरैर् यव-गोधूम-भुक् पिबेत् ।
श्लैष्मिको धन्व-जैर् मांसैर् मद्यं मारिचिकैः सह ॥ ९७ ॥

७.९७cv श्लैष्मिको जाङ्गलैर् मांसैर् ७.९७dv मद्यं मरिचकैः सह तत्र वाते हितं मद्यं प्रायः पैष्टिक-गौडिकम् ।
पित्ते साम्भो मधु कफे मार्द्वीकारिष्ट-माधवम् ॥ ९८ ॥

७.९८dv माध्वीकारिष्ट-माधवम् प्राक् पिबेच् छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः ।
वातिकस् तु पिबेन् मध्ये सम-दोषो यथेच्छया ॥ ९९ ॥

७.९९dv सम-दोषो यथेच्छति ७.९९dv सम-दोषो यद्-ऋच्छया मदेषु वात-पित्त-घ्नं प्रायो मूर्छासु चेष्यते ।
सर्व-त्रापि विशेषेण पित्तम् एवोपलक्षयेत् ॥ १०० ॥

शीताः प्रदेहा मणयः सेका व्यजन-मारुताः ।
सिता द्राक्षेक्षु-खर्जूर-काश्मर्य-स्व-रसाः पयः ॥ १०१ ॥

सिद्धं मधुर-वर्गेण रसा यूषाः स-दाडिमाः ।
षष्टिकाः शालयो रक्ता यवाः सर्पिश् च जीवनम् ॥ १०२ ॥

कल्याणकं महा-तिक्तं षट्-पलं पयसाग्निकः ।
पिप्पल्यो वा शिलाह्वं वा रसायन-विधानतः ॥ १०३ ॥

त्रि-फला वा प्रयोक्तव्या स-घृत-क्षौद्र-शर्करा ।
प्रसक्त-वेगेषु हितं मुख-नासावरोधनम् ॥ १०४ ॥

पिबेद् वा मानुषी-क्षीरं तेन दद्याच् च नावनम् ।
मृणाल-बिस-कृष्णा वा लिह्यात् क्षौद्रेण साभयाः ॥ १०५ ॥

७.१०५av पिबेद् वा मानुषं क्षीरं दुरालभां वा मुस्तं वा शीतेन सलिलेन वा ।
पिबेन् मरिच-कोलास्थि-मज्जोशीराहिकेसरम् ॥ १०६ ॥

धात्री-फल-रसे सिद्धं पथ्या-क्वाथेन वा घृतम् ।
कुर्यात् क्रियां यथोक्तां च यथा-दोष-बलोदयम् ॥ १०७ ॥

पञ्च कर्माणि चेष्टानि सेचनं शोणितस्य च ।
सत्-त्वस्यालम्बनं ज्ञानम् अ-गृद्धिर् विषयेषु च ॥ १०८ ॥

मदेष्व् अति-प्रवृद्धेषु मूर्छायेषु च योजयेत् ।
तीक्ष्णं संन्यास-विहितं विष-घ्नं विष-जेषु च ॥ १०९ ॥

७.१०९cv कर्म संन्यास-विहितं ७.१०९dv विष-घ्नं विष-जेषु तु आशु प्रयोज्यं संन्यासे सु-तीक्ष्णं नस्यम् अञ्जनम् ।
धूमः प्रधमनं तोदः सूचीभिश् च नखान्तरे ॥ ११० ॥

७.११०cv धूमं प्रधमनं तोदः ७.११०dv सूचीभिश् च नखान्तरैः केशानां लुञ्चनं दाहो दंशो दशन-वृश्चिकैः ।
कट्व्-अम्ल-गालनं वक्त्रे कपिकच्छ्व्-अवघर्षणम् ॥ १११ ॥

७.१११dv कपिकच्छ्वावघर्षणम् उत्थितो लब्ध-संज्ञश् च लशुन-स्व-रसं पिबेत् ।
खादेत् स-व्योष-लवणं बीजपूरक-केसरम् ॥ ११२ ॥

लघ्व्-अन्न-प्रति तीक्ष्णोष्णम् अद्यात् स्रोतो-विशुद्धये ।
विस्मापनैः संस्मरणैः प्रिय-श्रवण-दर्शनैः ॥ ११३ ॥

७.११३av लघ्व् अन्नं कटु-तीक्ष्णोष्णम् पटुभिर् गीत-वादित्र-शब्दैर् व्यायाम-शीलनैः ।
स्रंसनोल्लेखनैर् धूमैः शोणितस्यावसेचनैः ॥ ११४ ॥

उपाचरेत् तं प्रततम् अनुबन्ध-भयात् पुनः ।
तस्य संरक्षितव्यं च मनः प्रलय-हेतुतः ॥ ११५ ॥

# अध्याय 08

काले साधारणे व्य्-अभ्रे नाति-दुर्-बलम् अर्शसम् ।
विशुद्ध-कोष्ठं लघ्व्-अल्पम् अनुलोमनम् आशितम् ॥ १ ॥

८.१cv विशुद्ध-कोष्ठं लघ्व्-अन्नम् शुचिं कृत-स्वस्त्य्-अयनं मुक्त-विण्-मूत्रम् अ-व्यथम् ।
शयने फलके वान्य-नरोत्सङ्गे व्यपाश्रितम् ॥ २ ॥

पूर्वेण कायेनोत्तानं प्रत्य्-आदित्य-गुदं समम् ।
समुन्नत-कटी-देशम् अथ यन्त्रण-वाससा ॥ ३ ॥

सक्थ्नोः शिरो-धरायां च परिक्षिप्तम् ऋजु स्थितम् ।
आलम्बितं परिचरैः सर्पिषाभ्यक्त-पायवे ॥ ४ ॥

ततो ऽस्मै सर्पिषाभ्यक्तं निदध्याद् ऋजु यन्त्रकम् ।
शनैर् अनु-सुखं पायौ ततो दृष्ट्वा प्रवाहणात् ॥ ५ ॥

यन्त्रे प्रविष्टं दुर्-नाम प्लोत-गुण्ठितयानु च ।
शलाकयोत्पीड्य भिषग् यथोक्त-विधिना दहेत् ॥ ६ ॥

८.६av यन्त्रे प्रविष्टे दुर्-नाम क्षारेणैवार्द्रम् इतरत् क्षारेण ज्वलनेन वा ।
महद् वा बलिनश् छित्त्वा वीत-यन्त्रम् अथातुरम् ॥ ७ ॥

स्व्-अभ्यक्त-पायु-जघनम् अवगाहे निधापयेत् ।
निर्-वात-मन्दिर-स्थस्य ततो ऽस्याचारम् आदिशेत् ॥ ८ ॥

८.८cv निर्-वातागार-संस्थस्य एकैकम् इति सप्ताहात् सप्ताहात् समुपाचरेत् ।
प्राग् दक्षिणं ततो वामम् अर्शः पृष्ठाग्र-जं ततः ॥ ९ ॥

बह्व्-अर्शसः सु-दग्धस्य स्याद् वायोर् अनुलोम-ता ।
रुचिर् अन्ने ऽग्नि-पटु-ता स्वास्थ्यं वर्ण-बलोदयः ॥ १० ॥

वस्ति-शूले त्व् अधो नाभेर् लेपयेच् छलक्ष्ण-कल्कितैः ।
वर्षाभू-कुष्ठ-सुरभि-मिशि-लोहामराह्वयैः ॥ ११ ॥

शकृन्-मूत्र-प्रतीघाते परिषेकावगाहयोः ।
वरणालम्बुषैर् अण्ड-गोकण्टक-पुनर्नवैः ॥ १२ ॥

८.१२av शकृन्-मूत्र-परीघाते सुषवी-सुरभीभ्यां च क्वाथम् उष्णं प्रयोजयेत् ।
स-स्नेहम् अथ-वा क्षीरं तैलं वा वात-नाशनम् ॥ १३ ॥

युञ्जीतान्नं शकृद्-भेदि स्नेहान् वात-घ्न-दीपनान् ।
अथा-प्रयोज्य-दाहस्य निर्गतान् कफ-वात-जान् ॥ १४ ॥

स-स्तम्भ-कण्डू-रुक्-शोफान् अभ्यज्य गुद-कीलकान् ।
बिल्व-मूलाग्निक-क्षार-कुष्ठैः सिद्धेन सेचयेत् ॥ १५ ॥

८.१५av संरम्भ-कण्डू-रुक्-शोफान् ८.१५av संस्तम्भ-कण्डू-रुक्-शोफान् तैलेनाहि-बिडालोष्ट्र-वराह-वसयाथ-वा ।
स्वेदयेद् अनु पिण्डेन द्रव-स्वेदेन वा पुनः ॥ १६ ॥

कासीसं सैन्धवं रास्ना शुण्ठी कुष्ठं च लाङ्गली ।
शिलाभ्रकाश्वमारं च जन्तुहृद् दन्ति-चित्रकौ ॥ १६.१+(१) ॥
हरितालं तथा स्वर्णक्षीरी तैश् च पचेत् समैः ।
तैलं सुधार्क-पयसी गवां मूत्रे चतुर्-गुणे ॥ १६.१+(२) ॥
एतद् अभ्यङ्गतो ऽर्शांसि क्षार-वत् पातयेद् द्रुतम् ।
क्षार-कर्म-करं ह्य् एतन् न च दूषयते वलीम् ॥ १६.१+(३) ॥
सक्तूनां पिण्डिकाभिर् वा स्निग्धानां तैल-सर्पिषा ।
रास्नाया हपुषाया वा पिण्डैर् वा कार्ष्ण्यगन्धिकैः ॥ १७ ॥

८.१७dv पिण्डैर् वा कार्षकान्वितैः अर्क-मूलं शमी-पत्त्रम् नृ-केशः सर्प-कञ्चुकम् ।
मार्जार-चर्म सर्पिश् च धूपनं हितम् अर्शसाम् ॥ १८ ॥

तथाश्वगन्धा सुरसा बृहती पिप्पली घृतम् ।
धान्याम्ल-पिष्टैर् जीमूत-बीजैस् तज्-जालकं मृदु ॥ १९ ॥

लेपितं छायया शुष्कं वर्तिर् गुद-ज-शातनी ।
स-जाल-मूल-जीमूत-लेहे वा क्षार-संयुते ॥ २० ॥

गुञ्जा-सूरण-कूष्माण्ड-बीजैर् वर्तिस् तथा-गुणा ।
स्नुक्-क्षीरार्द्र-निशा-लेपस् तथा गो-मूत्र-कल्कितैः ॥ २१ ॥

कृकवाकु-शकृत्-कृष्णा-निशा-गुञ्जा-फलैस् तथा ।
स्नुक्-क्षीर-पिष्टैः षड्ग्रन्था-हलिनी-वारणास्थिभिः ॥ २२ ॥

कुलीरशृङ्गी-विजया-कुष्ठारुष्कर-तुत्थकैः ।
शिग्रु-मूलक-जैर् बीजैः पत्त्रैर् अश्वघ्न-निम्ब-जैः ॥ २३ ॥

८.२३cv शिग्रु-मूलक-बीजैर् वा पीलु-मूलेन बिल्वेन हिङ्गुना च समन्वितैः ।
कुष्ठं शिरीष-बीजानि पिप्पल्यः सैन्धवं गुडः ॥ २४ ॥

अर्क-क्षीरं सुधा-क्षीरं त्रि-फला च प्रलेपनम् ।
आर्कं पयः सुधा-काण्डं कटुकालाबु-पल्लवाः ॥ २५ ॥

८.२५av आर्कं पयः स्नुही-काण्डं करञ्जो बस्त-मूत्रं च लेपनं श्रेष्ठम् अर्शसाम् ।
आनुवासनिकैर् लेपः पिप्पल्य्-आद्यैश् च पूजितः ॥ २६ ॥

एभिर् एवौषधैः कुर्यात् तैलान्य् अभ्यञ्जनाय च ।
धूपनालेपनाभ्यङ्गैः प्रस्रवन्ति गुदाङ्कुराः ॥ २७ ॥

८.२७av एभिर् लेपौषधैः कुर्यात् ८.२७bv तैलान्य् अभ्यञ्जनानि च संचितं दुष्ट-रुधिरं ततः संपद्यते सुखी ।
अ-वर्तमानम् उच्छून-कठिनेभ्यो हरेद् असृक् ॥ २८ ॥

अर्शोभ्यो जल-जा-शस्त्र-सूची-कूर्चैः पुनः पुनः ।
शीतोष्ण-स्निग्ध-रूक्षैर् हि न व्याधिर् उपशाम्यति ॥ २९ ॥

८.२९cv शीतोष्ण-स्निग्ध-रूक्षाद्यैर् रक्ते दुष्टे भिषक् तस्माद् रक्तम् एवावसेचयेत् ।
यो जातो गो-रसः क्षीराद् वह्नि-चूर्णावचूर्णितात् ॥ ३० ॥

८.३०dv बहु-मूलावचूर्णितात् पिबंस् तम् एव तेनैव भुञ्जानो गुद-जान् जयेत् ।
कोविदारस्य मूलानां मथितेन रजः पिबन् ॥ ३१ ॥

८.३१dv मथितेन रजः पिबेत् अश्नन् जीर्णे च पथ्यानि मुच्यते हत-नामभिः ।
गुद-श्वयथु-शूलार्तो मन्दाग्निर् गौल्मिकान् पिबेत् ॥ ३२ ॥

हिङ्ग्व्-आदीन् अनु-तक्रं वा खादेद् गुड-हरीतकीम् ।
तक्रेण वा पिबेत् पथ्या-वेल्लाग्नि-कुटज-त्वचः ॥ ३३ ॥

८.३३av हिङ्ग्व्-आदीन् अनु-तक्रां वा ८.३३cv तक्रेण वा पिबेत् पथ्यां ८.३३dv वेल्लाग्नि-कुटज-त्वचः कलिङ्ग-मगधा-ज्योतिः-सूरणान् वांश-वर्धितान् ।
कोष्णाम्बुना वा त्रि-पटु-व्योष-हिङ्ग्व्-अम्ल-वेतसम् ॥ ३४ ॥

युक्तं बिल्व-कपित्थाभ्यां महौषध-विडेन वा ।
अरुष्करैर् यवान्या वा प्रदद्यात् तक्र-तर्पणम् ॥ ३५ ॥

८.३५cv आरुष्करैर् यवान्या वा दद्याद् वा हपुषा-हिङ्गु-चित्रकं तक्र-संयुतम् ।
मासं तक्रानु-पानानि खादेत् पीलु-फलानि वा ॥ ३६ ॥

पिबेद् अहर् अहस् तक्रं निर्-अन्नो वा प्र-कामतः ।
अत्य्-अर्थं मन्द-कायाग्नेस् तक्रम् एवावचारयेत् ॥ ३७ ॥

८.३७cv अत्य्-अर्थ-मन्द-कायाग्नेस् सप्ताहं वा दशाहं वा मासार्धं मासम् एव च ।
बल-काल-विकार-ज्ञो भिषक् तक्रं प्रयोजयेत् ॥ ३८ ॥

सायं वा लाज-सक्तूनां दद्यात् तक्रावलेहिकाम् ।
जीर्णे तक्रे प्रदद्याद् वा तक्र-पेयां स-सैन्धवाम् ॥ ३९ ॥

तक्रानु-पानं स-स्नेहं तक्रौदनम् अतः परम् ।
यूषै रसैर् वा तक्राढ्यैः शालीन् भुञ्जीत मात्रया ॥ ४० ॥

रूक्षम् अर्धोद्धृत-स्नेहं यतश् चान्-उद्धृतं घृतम् ।
तक्रं दोषाग्नि-बल-वित् त्रि-विधं तत् प्रयोज्येत् ॥ ४१ ॥

न विरोहन्ति गुद-जाः पुनस् तक्र-समाहताः ।
निषिक्तं तद् धि दहति भूमाव् अपि तृणोलुपम् ॥ ४२ ॥

८.४२cv निषिक्तं तद् विदहति स्रोतःसु तक्र-शुद्धेषु रसो धातून् उपैति यः ।
तेन पुष्टिर् बलं वर्णः परं तुष्टिश् च जायते ॥ ४३ ॥

वात-श्लेष्म-विकाराणां शतं च विनिवर्तते ।
मथितं भाजने क्षुद्र-बृहती-फल-लेपिते ॥ ४४ ॥

निशां पर्युषितं पेयम् इच्छद्भिर् गुद-ज-क्षयम् ।
धान्योपकुञ्चिकाजाजी-हपुषा-पिप्पली-द्वयैः ॥ ४५ ॥

कारवी-ग्रन्थिक-शठी-यवान्य्-अग्नि-यवानकैः ।
चूर्णितैर् घृत-पात्र-स्थं नात्य्-अम्लं तक्रम् आसुतम् ॥ ४६ ॥

८.४६bv -यवान्य्-अग्नि-यवानिकैः तक्रारिष्टं पिबेज् जातं व्यक्ताम्ल-कटु कामतः ।
दीपनं रोचनं वर्ण्यं कफ-वातानुलोमनम् ॥ ४७ ॥

गुद-श्वयथु-कण्ड्व्-अर्ति-नाशनं बल-वर्धनम् ।
त्वचं चित्रक-मूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ॥ ४८ ॥

तक्रं वा दधि वा तत्र जातम् अर्शो-हरं पिबेत् ।
भार्ग्य्-आस्फोतामृता-पञ्च-कोलेष्व् अप्य् एष संविधिः ॥ ४९ ॥

पिष्टैर् गज-कणा-पाठा-कारवी-पञ्च-कोलकैः ।
तुम्बुर्व्-अजाजी-धनिका-बिल्व-मध्यैश् च कल्पयेत् ॥ ५० ॥

फलाम्लान् यमक-स्नेहान् पेया-यूष-रसादिकान् ।
एभिर् एवौषधैः साध्यं वारि सर्पिश् च दीपनम् ॥ ५१ ॥

क्रमो ऽयं भिन्न-शकृतां वक्ष्यते गाढ-वर्चसाम् ।
स्नेहाढ्यैः सक्तुभिर् युक्तां लवणां वारुणीं पिबेत् ॥ ५२ ॥

लवणा एव वा तक्र-सीधु-धान्याम्ल-वारुणीः ।
प्राग्-भक्तान् यमके भृष्टान् सक्तुभिश् चावचूर्णितान् ॥ ५३ ॥

८.५३cv प्राग्-भक्तं यमके भृष्टान् करञ्ज-पल्लवान् खादेद् वात-वर्चो-ऽनुलोमनान् ।
स-गुडं नागरं पाठां गुड-क्षार-घृतानि वा ॥ ५४ ॥

८.५४cv स-गुडं नागरं पाठा- ८.५४dv -गुड-क्षार-घृतानि वा गो-मूत्राध्युषिताम् अद्यात् स-गुडां वा हरीतकीम् ।
पथ्या-शत-द्वयान् मूत्र-द्रोणेना-मूत्र-संक्षयात् ॥ ५५ ॥

८.५५cv पथ्या-शत-द्वयं मूत्र- पक्वात् खादेत् स-मधुनी द्वे द्वे हन्ति कफोद्भवान् ।
दुर्-नाम-कुष्ठ-श्वयथु-गुल्म-मेहोदर-कृमीन् ॥ ५६ ॥

८.५६av पक्त्वा खादेत् स-मधुनी ग्रन्थ्य्-अर्बुदापची-स्थौल्य-पाण्डु-रोगाढ्य-मारुतान् ।
अजशृङ्गी-जटा-कल्कम् अजा-मूत्रेण यः पिबेत् ॥ ५७ ॥

गुड-वार्ताक-भुक् तस्य नश्यन्त्य् आशु गुदाङ्कुराः ।
श्रेष्ठा-रसेन त्रिवृतां पथ्यां तक्रेण वा सह ॥ ५८ ॥

पथ्यां वा पिप्पली-युक्तां घृत-भृष्टां गुडान्विताम् ।
अथ-वा स-त्रिवृद्-दन्तीं भक्षयेद् अनुलोमनीम् ॥ ५९ ॥

हते गुदाश्रये दोषे गुद-जा यान्ति संक्षयम् ।
दाडिम-स्व-रसाजाजी-यवानी-गुड-नागरैः ॥ ६० ॥

८.६०av हृते गुदाश्रये दोषे पाठया वा युतं तक्रं वात-वर्चो-ऽनुलोमनम् ।
सीधुं वा गौडम् अथ-वा स-चित्रक-महौषधम् ॥ ६१ ॥

पिबेत् सुरां वा हपुषा-पाठा-सौवर्चलान्विताम् ।
दशादि-दशकैर् वृद्धाः पिप्पलीर् द्वि-पिचुं तिलान् ॥ ६२ ॥

८.६२dv पिप्पलीर् द्वि-पिचुं तिलात् पीत्वा क्षीरेण लभते बलं देह-हुताशयोः ।
दुःस्पर्शकेन बिल्वेन यवान्या नागरेण वा ॥ ६३ ॥

८.६३dv यवान्या नागरेण च एकैकेनापि संयुक्ता पाठा हन्त्य् अर्शसां रुजम् ।
सलिलस्य वहे पक्त्वा प्रस्थार्धम् अभया-त्वचाम् ॥ ६४ ॥

८.६४dv प्रस्थार्धम् अभया-त्वचम् प्रस्थं धात्र्या दश-पलं कपित्थानां ततो ऽर्धतः ।
विशालां लोध्र-मरिच-कृष्णा-वेल्लैलवालुकम् ॥ ६५ ॥

द्वि-पलांशं पृथक् पाद-शेषे पूते गुडात् तुले ।
दत्त्वा प्रस्थं च धातक्याः स्थापयेद् घृत-भाजने ॥ ६६ ॥

८.६६cv दत्त्वा प्रस्थं तु धातक्याः पक्षात् स शीलितो ऽरिष्टः करोत्य् अग्निं निहन्ति च ।
गुद-ज-ग्रहणी-पाण्डु-कुष्ठोदर-गर-ज्वरान् ॥ ६७ ॥

श्वयथु-प्लीह-हृद्-रोग-गुल्म-यक्ष्म-वमि-कृमीन् ।
जल-द्रोणे पचेद् दन्ती-दश-मूल-वराग्निकान् ॥ ६८ ॥

पालिकान् पाद-शेषे तु क्षिपेद् गुड-तुलां परम् ।
पूर्व-वत् सर्वम् अस्य स्याद् आनुलोमि-तरस् त्व् अयम् ॥ ६९ ॥

पचेद् दुरालभा-प्रस्थं द्रोणे ऽपां प्रासृतैः सह ।
दन्ती-पाठाग्नि-विजया-वासामलक-नागरैः ॥ ७० ॥

८.७०bv द्रोणे ऽपां द्वि-पलैः सह तस्मिन् सिता-शतं दद्यात् पाद-स्थे ऽन्यच् च पूर्व-वत् ।
लिम्पेत् कुम्भं तु फलिनी-कृष्णा-चव्याज्य-माक्षिकैः ॥ ७१ ॥

प्राग्-भक्तम् आनुलोम्याय फलाम्लं वा पिबेद् घृतम् ।
चव्य-चित्रक-सिद्धं वा यव-क्षार-गुडान्वितम् ॥ ७२ ॥

पिप्पली-मूल-सिद्धं वा स-गुड-क्षार-नागरम् ।
पिप्पली-पिप्पली-मूल-धानका-दाडिमैर् घृतम् ॥ ७३ ॥

८.७३dv -धान्यका-दाडिमैर् घृतम् दध्ना च साधितं वात-शकृन्-मूत्र-विबन्ध-नुत् ।
पलाश-क्षार-तोयेन त्रि-गुणेन पचेद् घृतम् ॥ ७४ ॥

८.७४bv -शकृन्-मूत्र-विबन्ध-हृत् वत्सकादि-प्रतीवापम् अर्शो-घ्नं दीपनं परम् ।
पञ्च-कोलाभया-क्षार-यवानी-विड-सैन्धवैः ॥ ७५ ॥

स-पाठा-धान्य-मरिचैः स-बिल्वैर् दधि-मत् घृतम् ।
साधयेत् तज् जयत्य् आशु गुद-वङ्क्षण-वेदनाम् ॥ ७६ ॥

प्रवाहिकां गुद-भ्रंशं मूत्र-कृच्छ्रं परिस्रवम् ।
पाठाजमोद-धनिका-श्वदंष्ट्रा-पञ्च-कोलकैः ॥ ७७ ॥

स-बिल्वैर् दध्नि चाङ्गेरी-स्व-रसे च चतुर्-गुणे ।
हन्त्य् आज्यं सिद्धम् आनाहं मूत्र-कृच्छ्रं प्रवाहिकाम् ॥ ७८ ॥

गुद-भ्रंशार्ति-गुद-ज-ग्रहणी-गद-मारुतान् ।
शिखि-तित्तिरि-लावानां रसान् अम्लान् सु-संस्कृतान् ॥ ७९ ॥

दक्षाणां वर्तकानां वा दद्याद् विड्-वात-संग्रहे ।
वास्तुकाग्नि-त्रिवृद्-दन्ती-पाठाम्लीकादि-पल्लवान् ॥ ८० ॥

अन्यच् च कफ-वात-घ्नं शाकं च लघु भेदि च ।
स-हिङ्गु यमके भृष्टं सिद्धं दधि-सरैः सह ॥ ८१ ॥

८.८१dv सिद्धं दधि-सरेण च धनिका-पञ्च-कोलाभ्यां पिष्टाभ्यां दाडिमाम्बुना ।
आर्द्रिकायाः किसलयैः शकलैर् आर्द्रकस्य च ॥ ८२ ॥

युक्तम् अङ्गार-धूपेन हृद्येन सुरभी-कृतम् ।
स-जीरकं स-मरिचं विड-सौवर्चलोत्कटम् ॥ ८३ ॥

८.८३av युक्तम् अङ्गार-धूमेन वातोत्तरस्य रूक्षस्य मन्दाग्नेर् बद्ध-वर्चसः ।
कल्पयेद् रक्त-शाल्य्-अन्न-व्यञ्जनं शाक-वद् रसान् ॥ ८४ ॥

८.८४cv कल्पयेद् रक्त-शाल्य्-अन्नं ८.८४dv व्यञ्जनं शाक-वद् रसान् ८.८४dv व्यञ्जनात् छाक-वद् रसान् गो-गोधा-छगलोष्ट्राणां विशेषात् क्रव्य-भोजिनाम् ।
मदिरां शार्करं गौडं सीधुं तक्रं तुषोदकम् ॥ ८५ ॥

अरिष्टं मस्तु पानीयं पानीयं वाल्पकं शृतम् ।
धान्येन धान्य-शुण्ठीभ्यां कण्टकारिकयाथ-वा ॥ ८६ ॥

अन्ते भक्तस्य मध्ये वा वात-वर्चो-ऽनुलोमनम् ।
विड्-वात-कफ-पित्तानाम् आनुलोम्ये हि निर्-मले ॥ ८७ ॥

गुदे शाम्यन्ति गुद-जाः पावकश् चाभिवर्धते ।
उदावर्त-परीता ये ये चात्य्-अर्थं विरूक्षिताः ॥ ८८ ॥

विलोम-वाताः शूलार्तास् तेष्व् इष्टम् अनुवासनम् ।
पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम् ॥ ८९ ॥

कुष्ठं शठीं पुष्कराख्यं चित्रकं देवदारु च ।
पिष्ट्वा तैलं विपक्तव्यं द्वि-गुण-क्षीर-संयुतम् ॥ ९० ॥

८.९०av कुष्ठं शठीं पुष्कराह्वं ८.९०av कुष्ठं शठीं पौष्कराख्यं ८.९०av कुष्ठं शुण्ठीं पुष्कराख्यं अर्शसां मूढ-वातानां तच् छ्रेष्ठम् अनुवासनम् ।
गुद-निःसरणं शूलं मूत्र-कृच्छ्रं प्रवाहिकाम् ॥ ९१ ॥

कट्य्-ऊरु-पृष्ठ-दौर्बल्यम् आनाहं वङ्क्षणाश्रयम् ।
पिच्छा-स्रावं गुदे शोफं वात-वर्चो-विनिग्रहम् ॥ ९२ ॥

उत्थानं बहु-शो यच् च जयेत् तच् चानुवासनात् ।
निरूहं वा प्रयुञ्जीत स-क्षीरं पाञ्चमूलिकम् ॥ ९३ ॥

स-मूत्र-स्नेह-लवणं कल्कैर् युक्तं फलादिभिः ।
अथ रक्तार्शसां वीक्ष्य मारुतस्य कफस्य वा ॥ ९४ ॥

८.९४dv मारुतस्य कफस्य च अनुबन्धं ततः स्निग्धं रूक्षं वा योजयेद् धिमम् ।
शकृच् छ्यावं खरं रूक्षम् अधो निर्याति नानिलः ॥ ९५ ॥

कट्य्-ऊरु-गुद-शूलं च हेतुर् यदि च रूक्षणम् ।
तत्रानुबन्धो वातस्य श्लेष्मणो यदि विट् श्लथा ॥ ९६ ॥

श्वेता पीता गुरुः स्निग्धा स-पिच्छः स्तिमितो गुदः ।
हेतुः स्निग्ध-गुरुर् विद्याद् यथा-स्वं चास्र-लक्षणात् ॥ ९७ ॥

दुष्टे ऽस्रे शोधनं कार्यं लङ्घनं च यथा-बलम् ।
यावच् च दोषैः कालुष्यं स्रुतेस् तावद् उपेक्षणम् ॥ ९८ ॥

दोषाणां पाचनार्थं च वह्नि-संधुक्षणाय च ।
संग्रहाय च रक्तस्य परं तिक्तैर् उपाचरेत् ॥ ९९ ॥

यत् तु प्रक्षीण-दोषस्य रक्तं वातोल्बणस्य वा ।
स्नेहैस् तत् साधयेत् युक्तैः पानाभ्यञ्जन-वस्तिषु ॥ १०० ॥

यत् तु पित्तोल्बणं रक्तं घर्म-काले प्रवर्तते ।
स्तम्भनीयं तद् एकान्तान् न चेद् वात-कफानुगम् ॥ १०१ ॥

स-कफे ऽस्रे पिबेत् पाक्यं शुण्ठी-कुटज-वल्कलम् ।
किराततिक्तकं शुण्ठीं धन्वयासं कु-चन्दनम् ॥ १०२ ॥

दार्वी-त्वङ्-निम्ब-सेव्यानि त्वचं वा दाडिमोद्भवाम् ।
कुटज-त्वक्-फलं तार्क्ष्यं माक्षिकं घुणवल्लभाम् ॥ १०३ ॥

पिबेत् तण्डुल-तोयेन कल्कितं वा मयूरकम् ।
तुलां दिव्याम्भसि पचेद् आर्द्रायाः कुटज-त्वचः ॥ १०४ ॥

नी-रसायां त्वचि क्वाथे दद्यात् सूक्ष्म-रजी-कृतान् ।
समङ्गा-फलिनी-मोच-रसान् मुष्ट्य्-अंशकान् समान् ॥ १०५ ॥

तैश् च शक्रयवान् पूते ततो दर्वी-प्रलेपनम् ।
पक्त्वावलेहं लीढ्वा च तं यथाग्नि-बलं पिबेत् ॥ १०६ ॥

८.१०६av तैश् च शक्रयवान् पूतं पेयां मण्डं पयश् छागं गव्यं वा छाग-दुग्ध-भुक् ।
लेहो ऽयं शमयत्य् आशु रक्तातीसार-पायु-जान् ॥ १०७ ॥

बल-वद् रक्त-पित्तं च स्रवद् ऊर्ध्वम् अधो ऽपि वा ।
कुटज-त्वक्-तुलां द्रोणे पचेद् अष्टांश-शेषितम् ॥ १०८ ॥

८.१०८dv पचेद् अष्टांश-शेषिताम् कल्की-कृत्य क्षिपेत् तत्र तार्क्ष्य-शैलं कटु-त्रयम् ।
लोध्र-द्वयं मोच-रसं बलां दाडिम-जं त्वचम् ॥ १०९ ॥

बिल्व-कर्कटिकां मुस्तं समङ्गां धातकी-फलम् ।
पलोन्मितं दश-पलं कुटजस्यैव च त्वचः ॥ ११० ॥

त्रिंशत् पलानि गुडतो घृतात् पूते च विंशतिः ।
तत् पक्वं लेह-तां यातं धान्ये पक्ष-स्थितं लिहन् ॥ १११ ॥

सर्वार्शो-ग्रहणी-दोष-श्वास-कासान् नियच्छति ।
लोध्रं तिलान् मोच-रसं समङ्गां चन्दनोत्पलम् ॥ ११२ ॥

८.११२bv -श्वास-कासान् निबर्हति पाययित्वाज-दुग्धेन शालींस् तेनैव भोजयेत् ।
यष्ट्य्-आह्व-पद्मकानन्ता-पयस्या-क्षीर-मोरटम् ॥ ११३ ॥

स-सिता-मधु पातव्यं शीत-तोयेन तेन वा ।
लोध्र-कट्वङ्ग-कुटज-समङ्गा-शाल्मली-त्वचम् ॥ ११४ ॥

८.११४dv -समङ्गा-शाल्मली-त्वचः हिम-केसर-यष्ट्य्-आह्व-सेव्यं वा तण्डुलाम्बुना ।
यवानीन्द्रयवाः पाट्ा बिल्वं शुण्ठी रसाञ्जनम् ॥ ११५ ॥

चूर्णश् चले हितः शूले प्रवृत्ते चाति-शोणिते ।
दुग्धिका-कण्टकारीभ्यां सिद्धं सर्पिः प्रशस्यते ॥ ११६ ॥

अथ-वा धातकी-लोध्र-कुटज-त्वक्-फलोत्पलैः ।
स-केसरैर् यव-क्षार-दाडिम-स्व-रसेन वा ॥ ११७ ॥

शर्कराम्भो-ज-किञ्जल्क-सहितं सह वा तिलैः ।
अभ्यस्तं रक्त-गुद-जान् नव-नीतं नियच्छति ॥ ११८ ॥

छागानि नव-नीताज्य-क्षीर-मांसानि जाङ्गलः ।
अन्-अम्लो वा कद्-अम्ल वा स-वास्तुक-रसो रसः ॥ ११९ ॥

रक्त-शालिः सरो दध्नः षष्टिकस् तरुणी सुरा ।
तरुणश् च सुरा-मण्डः शोणितस्यौषधं परम् ॥ १२० ॥

पेया-यूष-रसाद्येषु पलाण्डुः केवलो ऽपि वा ।
स जयत्य् उल्बणं रक्तं मारुतं च प्रयोजितः ॥ १२१ ॥

वातोल्बणानि प्रायेण भवन्त्य् अस्रे ऽति-निःसृते ।
अर्शांसि तस्माद् अधिकं तज्-जये यत्नम् आचरेत् ॥ १२२ ॥

दृष्ट्वास्र-पित्तं प्रबलम् अ-बलौ च कफानिलौ ।
शीतोपचारः कर्तव्यः सर्व-था तत्-प्रशान्तये ॥ १२३ ॥

न चेद् एवं शमस् तस्य स्निग्धोष्णैस् तर्पयेत् ततः ।
रसैः कोष्णैश् च सर्पिर्भिर् अवपीडक-योजितैः ॥ १२४ ॥

८.१२४av यदा चैवं शमो न स्यात् सेचयेत् तं कवोष्णैश् च कामं तैल-पयो-घृतैः ।
यवास-कुश-काशानां मूलं पुष्पं च शाल्मलेः ॥ १२५ ॥

न्यग्रोधोदुम्बराश्वत्थ-शुङ्गाश् च द्वि-पलोन्मिताः ।
त्रि-प्रस्थे सलिलस्यैतत् क्षीर-प्रस्थे च साधयेत् ॥ १२६ ॥

क्षीर-शेषे कषाये च तस्मिन् पूते विमिश्रयेत् ।
कल्की-कृतं मोच-रसं समङ्गां चन्दनोत्पलम् ॥ १२७ ॥

प्रियङ्गुं कौटजं बीजं कमलस्य च केसरम् ।
पिच्छा-वस्तिर् अयं सिद्धः स-घृत-क्षौद्र-शर्करः ॥ १२८ ॥

प्रवाहिका-गुद-भ्रंश-रक्त-स्राव-ज्वरापहः ।
यष्ट्य्-आह्व-पुण्डरीकेण तथा मोच-रसादिभिः ॥ १२९ ॥

क्षीर-द्वि-गुणितः पक्वो देयः स्नेहो ऽनुवासनम् ।
मधुकोत्पल-लोध्राम्बु समङ्गा बिल्व-चन्दनम् ॥ १३० ॥

चविकातिविषा मुस्तं पाठा क्षारो यवाग्र-जः ।
दार्वी-त्वङ् नागरं मांसी चित्रको देवदारु च ॥ १३१ ॥

चाङ्गेरी-स्व-रसे सर्पिः साधितं तैस् त्रि-दोष-जित् ।
अर्शो-ऽतीसार-ग्रहणी-पाण्डु-रोग-ज्वरा-रुचौ ॥ १३२ ॥

मूत्र-कृच्छ्रे गुद-भ्रंशे वस्त्य्-आनाहे प्रवाहणे ।
पिच्छा-स्रावे ऽर्शसां शूले देयं तत् परमौषधम् ॥ १३३ ॥

व्यत्यासान् मधुराम्लानि शीतोष्णानि च योजयेत् ।
नित्यम् अग्नि-बलापेक्षी जयत्य् अर्शः-कृतान् गदान् ॥ १३४ ॥

८.१३४dv जयत्य् अर्शः-कृतां रुजम् उदावर्तार्तम् अभ्यज्य तैलैः शीत-ज्वरापहैः ।
सु-स्निग्धैः स्वेदयेत् पिण्डैर् वर्तिम् अस्मै गुदे ततः ॥ १३५ ॥

अभ्यक्तां तत्-कराङ्गुष्ठ-संनिभाम् अनुलोमनीम् ।
दद्याच् छ्यामा-त्रिवृद्-दन्ती-पिप्पली-नीलिनी-फलैः ॥ १३६ ॥

विचूर्णितैर् द्वि-लवणैर् गुड-गो-मूत्र-संयुतैः ।
तद्-वन् मागधिका-राठ-गृह-धूमैः स-सर्षपैः ॥ १३७ ॥

८.१३७bv गुड-गो-मूत्र-पाचितैः एतेषाम् एव वा चूर्णं गुदे नाड्या विनिर्धमेत् ।
तद्-विघाते सु-तीक्ष्णं तु वस्तिं स्निग्धं प्रपीडयेत् ॥ १३८ ॥

ऋजू-कुर्याद् गुद-सिरा-विण्-मूत्र-मरुतो ऽस्य सः ।
भूयो ऽनुबन्धे वात-घ्नैर् विरेच्यः स्नेह-रेचनैः ॥ १३९ ॥

८.१३९av ऋजू-कुर्याद् गुद-शिरो- अनुवास्यश् च रौक्ष्याद् धि सङ्गो मारुत-वर्चसोः ।
त्रि-पटु-त्रि-कटु-श्रेष्ठा-दन्त्य्-अरुष्कर-चित्रकम् ॥ १४० ॥

जर्जरं स्नेह-मूत्राक्तम् अन्तर्-धूमं विपाचयेत् ।
शराव-संधौ मृल्-लिप्ते क्षारः कल्याणकाह्वयः ॥ १४१ ॥

स पीतः सर्पिषा युक्तो भक्ते वा स्निग्ध-भोजिना ।
उदावर्त-विबन्धार्शो-गुल्म-पाण्डूदर-कृमीन् ॥ १४२ ॥

मूत्र-सङ्गाश्मरी-शोफ-हृद्-रोग-ग्रहणी-गदान् ।
मेह-प्लीह-रुजानाह-श्वास-कासांश् च नाशयेत् ॥ १४३ ॥

सर्वं च कुर्याद् यत् प्रोक्तम् अर्शसां गाढ-वर्चसाम् ॥ १४४अब् ॥
द्रोणे ऽपां पूति-वल्क-द्वि-तुलम् अथ पचेत् पाद-शेषे च तस्मिन् ॥ १४४च् ॥
८.१४४cv द्रोणे ऽपां पूति-वल्कं द्वि-तुलम् अथ पचेत् पाद-शेषे च तस्मिन् देयाशीतिर् गुडस्य प्रतनुक-रजसो व्योषतो ऽष्टौ पलानि ॥ १४४द् ॥
एतन् मासेन जातं जनयति परमाम् ऊष्मणः पक्ति-शक्तिं ॥ १४४ए ॥
शुक्तं कृत्वानुलोम्यं प्रजयति गुद-ज-प्लीह-गुल्मोदराणि ॥ १४४f ॥
पचेत् तुलां पूति-करञ्ज-वल्काद् द्वे मूलतश् चित्रक-कण्टकार्योः ।
द्रोण-त्रये ऽपि चरणावशेषे पूते शतं तत्र गुडस्य दद्यात् ॥ १४५ ॥

पलिकं च सु-चूर्णितं त्रि-जात-त्रि-कटु-ग्रन्थिक-दाडिमाश्मभेदम् ।
पुर-पुष्कर-मूल-धान्य-चव्यं हपुषाम् आर्द्रकम् अम्ल-वेतसं च ॥ १४६ ॥

शीती-भूतं क्षौद्र-विंशत्य्-उपेतम् आर्द्र-द्राक्षा-बीजपूरार्द्रकैश् च ।
युक्तं कामं गण्डिकाभिस् तथेक्षोः सर्पिः-पात्रे मास-मात्रेण जातम् ॥ १४७ ॥

चुक्रं क्रकचम् इवेदं दुर्-नाम्नां वह्नि-दीपनं परमम् ।
पाण्डु-गरोदर-गुल्म-प्लीहानाहाश्म-कृच्छ्र-घ्नम् ॥ १४८ ॥

द्रोणं पीलु-रसस्य वस्त्र-गलितं न्यस्तं हविर्-भाजने ॥ १४९अ ॥
युञ्जीत द्वि-पलैर् मदा-मधुफला-खर्जूर-धात्री-फलैः ॥ १४९ब् ॥
पाठा-माद्रि-दुरालभाम्ल-विदुल-व्योष-त्वग्-एलोल्लकैः ॥ १४९च् ॥
८.१४९cv पाठा-माद्रि-दुरालभाम्ल-विदुल-व्योष-त्वग्-एल्लाल्लकैः स्पृक्का-कोल-लवङ्ग-वेल्ल-चपला-मूलाग्निकैः पालिकैः ॥ १४९द् ॥
गुड-पल-शत-योजितं निवाते निहितम् इदं प्रपिबंश् च पक्ष-मात्रात् ।
निशमयति गुदाङ्कुरान् स-गुल्मान् अनल-बलं प्रबलं करोति चाशु ॥ १५० ॥

८.१५०cv प्रशमयति गुदाङ्कुरान् स-गुल्मान् एकैक-शो दश-पले दश-मूल-कुम्भ-पाठा-द्वयार्क-घुणवल्लभ-कट्फलानाम् ।
दग्धे सुते ऽनु कलशेन जलेन पक्वे पाद-स्थिते गुड-तुलां पल-पञ्चकं च ॥ १५१ ॥

८.१५१bv -पाठाभयार्क-घुणवल्लभ-कट्फलानाम् दद्यात् प्रत्य्-एकं व्योष-चव्याभयानां वह्नेर् मुष्टी द्वे यव-क्षारतश् च ।
दर्वीम् आलिम्पन् हन्ति लीढो गुडो ऽयं गुल्म-प्लीहार्शः-कुष्ठ-मेहाग्नि-सादान् ॥ १५२ ॥

तोय-द्रोणे चित्रक-मूल-तुलार्धं साध्यं यावत् पाद-दल-स्थम् अथेदम् ।
अष्टौ दत्त्वा जीर्ण-गुडस्य पलानि क्वाथ्यं भूयः सान्द्र-तया समम् एतत् ॥ १५३ ॥

८.१५३bv साध्यं यावत् पाद-जल-स्थम् अप्य् इदम् त्रि-कटुक-मिशि-पथ्या-कुष्ठ-मुस्ता-वराङ्ग-कृमिरिपु-दहनैला-चूर्ण-कीर्णो ऽवलेहः ।
जयति गुद-ज-कुष्ठ-प्लीह-गुल्मोदराणि प्रबलयति हुताशं शश्वद् अभ्यस्यमानः ॥
१५४ ॥

८.१५४cv जयति गुद-ज-युक्त-प्लीह-गुल्मोदराणि गुड-व्योष-वरा-वेल्ल-तिलारुष्कर-चित्रकैः ।
अर्शांसि हन्ति गुटिका त्वग्-विकारं च शीलिता ॥ १५५ ॥

मृल्-लिप्तं सौरणं कन्दं पक्त्वाग्नौ पुट-पाक-वत् ।
अद्यात् स-तैल-लवणं दुर्-नाम-विनिवृत्तये ॥ १५६ ॥

मरिच-पिप्पलि-नागर-चित्रकान् क्रम-विवर्धित-भाग-समाहृतान् ।
शिखि-चतुर्-गुण-सूरण-योजितान् कुरु गुडेन गुडान् गुद-ज-च्छिदः ॥ १५७ ॥

चूर्णी-कृताः षो-डश सूरणस्य भागास् ततो ऽर्धेन च चित्रकस्य ।
महौषधाद् द्वौ मरिचस्य चैको गुडेन दुर्-नाम-जयाय पिण्डी ॥ १५८ ॥

पथ्या-नागर-कृष्णा-करञ्ज-वेल्लाग्निभिः सिता-तुल्यैः ।
वडबा-मुख इव जरयति बहु-गुर्व् अपि भोजनं चूर्णः ॥ १५९ ॥

८.१५९dv बहु-गुर्व् अपि भोजनं चूर्णम् कलिङ्ग-लाङ्गली-कृष्णा-वह्न्य्-अपामार्ग-तण्डुलैः ।
भूनिम्ब-सैन्धव-गुडैर् गुडा गुद-ज-नाशनाः ॥ १६० ॥

लवणोत्तम-वह्नि-कलिङ्ग-यवांश् चिरिबिल्व-महापिचुमन्द-युतान् ।
पिब सप्त-दिनं मथितालुडितान् यदि मर्दितुम् इच्छसि पायु-रुहान् ॥ १६१ ॥

८.१६१cv पिब सप्त-दिनं मथितालुलितान् ८.१६१dv यदि मर्दितुम् इच्छसि पायु-रुहः शुष्केषु भल्लातकम् अग्र्यम् उक्तं भैषज्यम् आर्द्रेषु तु वत्सक-त्वक् ।
सर्वेषु सर्वर्तुषु कालशेयम् अर्शःसु बल्यं च मलापहं च ॥ १६२ ॥

भित्त्वा विबन्धान् अनुलोमनाय यन् मारुतस्याग्नि-बलाय यच् च ।
तद् अन्न-पानौषधम् अर्शसेन सेव्यं विवर्ज्यं विपरीतम् अस्मात् ॥ १६३ ॥

अर्शो-ऽतिसार-ग्रहणी-विकाराः प्रायेण चान्यो-ऽन्य-निदान-भूताः ।
सन्ने ऽनले सन्ति न सन्ति दीप्ते रक्षेद् अतस् तेषु विशेषतो ऽग्निम् ॥ १६४ ॥

८.१६४dv रक्षेत् ततस् तेषु विशेषतो ऽग्निम्

# अध्याय 09

अतीसारो हि भूयिष्ठं भवत्य् आमाशयान्वयः ।
हत्वाग्निं वात-जे ऽप्य् अस्मात् प्राक् तस्मिँ लङ्घनं हितम् ॥ १ ॥

९.१dv प्राग् अस्मिँ लङ्घनं हितम् शूलानाह-प्रसेकार्तं वामयेद् अतिसारिणम् ।
दोषाः संनिचिता ये च विदग्धाहार-मूर्छिताः ॥ २ ॥

अतीसाराय कल्पन्ते तेषूपेक्षैव भेषजम् ।
भृशोत्क्लेश-प्रवृत्तेषु स्वयम् एव चलात्मसु ॥ ३ ॥

न तु संग्रहणं योज्यं पूर्वम् आमातिसारिणि ।
अपि चाध्मान-गुरु-ता-शूल-स्तैमित्य-कारिणि ॥ ४ ॥

९.४av प्रयोज्यं न तु संग्राहि ९.४bv पूर्वम् आमोल्बणे न तु प्राणदा प्राण-दा दोषे विबद्धे संप्रवर्तिनी ।
पिबेत् प्रक्वथितास् तोये मध्य-दोषो विशोषयन् ॥ ५ ॥

भूतिक-पिप्पली-शुण्ठी-वचा-धान्य-हरीतकीः ।
अथ-वा बिल्व-धनिका-मुस्त-नागर-वालकम् ॥ ६ ॥

विड-पाठा-वचा-पथ्या-कृमिजिन्-नागराणि वा ।
शुण्ठी-घन-वचा-माद्री-बिल्व-वत्सक-हिङ्गु वा ॥ ७ ॥

शस्यते त्व् अल्प-दोषाणाम् उपवासो ऽतिसारिणाम् ।
वचा-प्रतिविषाभ्यां वा मुस्ता-पर्पटकेन वा ॥ ८ ॥

ह्रीवेर-नागराभ्यां वा विपक्वं पाययेज् जलम् ।
युक्ते ऽन्न-काले क्षुत्-क्षामं लघ्व्-अन्न-प्रति भोजयेत् ॥ ९ ॥

९.९dv लघ्व् अन्नं प्रतिभोजयेत् तथा स शीघ्रं प्राप्नोति रुचिम् अग्नि-बलं बलम् ।
तक्रेणावन्ति-सोमेन यवाग्वा तर्पणेन वा ॥ १० ॥

सुरया मधुना वाथ यथा-सात्म्यम् उपाचरेत् ।
भोज्यानि कल्पयेद् ऊर्ध्वं ग्राहि-दीपन-पाचनैः ॥ ११ ॥

९.११av सुरया मधुना चाथ बाल-बिल्व-शठी-धान्य-हिङ्गु-वृक्षाम्ल-दाडिमैः ।
पलाश-हपुषाजाजी-यवानी-विड-सैन्धवैः ॥ १२ ॥

लघुना पञ्च-मूलेन पञ्च-कोलेन पाठया ।
शालिपर्णी-बला-बिल्वैः पृश्निपर्ण्या च साधिता ॥ १३ ॥

दाडिमाम्ला हिता पेया कफ-पित्ते समुल्बणे ।
अभया-पिप्पली-मूल-बिल्वैर् वातानुलोमनी ॥ १४ ॥

विबद्धं दोष-बहुलो दीप्ताग्निर् यो ऽतिसार्यते ।
कृष्णा-विडङ्ग-त्रि-फला-कषायैस् तं विरेचयेत् ॥ १५ ॥

पेयां युञ्ज्याद् विरिक्तस्य वात-घ्नैर् दीपनैः कृताम् ।
आमे परिणते यस् तु दीप्ते ऽग्नाव् उपवेश्यते ॥ १६ ॥

स-फेन-पिच्छं स-रुजं स-विबन्धं पुनः पुनः ।
अल्पाल्पम् अल्प-शमलं निर्-विड् वा स-प्रवाहिकम् ॥ १७ ॥

९.१७cv अल्पाल्पम् अल्पं स-मलं दधि-तैल-घृत-क्षीरैः स शुण्ठीं स-गुडां पिबेत् ।
स्विन्नानि गुड-तैलेन भक्षयेद् बदराणि वा ॥ १८ ॥

गाढ-विड्-विहितैः शाकैर् बहु-स्नेहैस् तथा रसैः ।
क्षुधितं भोजयेद् एनं दधि-दाडिम-साधितैः ॥ १९ ॥

९.१९dv दधि-दाडिम-संस्कृतैः शाल्य्-ओदनं तिलैर् माषैर् मुद्गैर् वा साधु साधितम् ।
शठ्या मूलक-पोतायाः पाठायाः स्वस्तिकस्य वा ॥ २० ॥

९.२०cv शुण्ठ्या मूलक-पोतायाः सूषा-यवानी-कर्कारु-क्षीरिणी-चिर्भटस्य वा ।
उपोदकाया जीवन्त्या वाकुच्या वास्तुकस्य वा ॥ २१ ॥

सुवर्चलायाश् चुञ्चोर् वा लोणिकाया रसैर् अपि ।
कूर्म-वर्तक-लोपाक-शिखि-तित्तिरि-कौक्कुटैः ॥ २२ ॥

९.२२dv -शिखि-तित्तिरि-दक्ष-जैः बिल्व-मुस्ताक्षि-भैषज्य-धातकी-पुष्प-नागरैः ।
पक्वातीसार-जित् तक्रे यवागूर् दाधिकी तथा ॥ २३ ॥

कपित्थ-कच्छुरा-फञ्जी-यूथिका-वट-शेलु-जैः ।
दाडिमी-शण-कार्पासी-शाल्मलीनां च पल्लवैः ॥ २४ ॥

९.२४dv -शाल्मली-मोच-पल्लवैः कल्को बिल्व-शलाटूनां तिल-कल्कश् च तत्-समः ।
दध्नः सरो ऽम्लः स-स्नेहः खलो हन्ति प्रवाहिकाम् ॥ २५ ॥

मरिचं धनिकाजाजी तिन्तिडीकं शठी विडम् ।
दाडिमं धातकी पाठा त्रि-फला पञ्च-कोलकम् ॥ २६ ॥

याव-शूकं कपित्थाम्र-जम्बू-मध्यं स-दीप्यकम् ।
पिष्टैः षड्-गुण-बिल्वैस् तैर् दध्नि मुद्ग-रसे गुडे ॥ २७ ॥

स्नेहे च यमके सिद्धः खलो ऽयम् अ-पराजितः ।
दीपनः पाचनो ग्राही रुच्यो बिम्बिशि-नाशनः ॥ २८ ॥

कोलानां बाल-बिल्वानां कल्कैः शालि-यवस्य च ।
मुद्ग-माष-तिलानां च धान्य-यूषं प्रकल्पयेत् ॥ २९ ॥

ऐकध्यं यमके भृष्टं दधि-दाडिम-सारिकम् ।
वर्चः-क्षये शुष्क-मुखं शाल्य्-अन्नं तेन भोजयेत् ॥ ३० ॥

दध्नः सरं वा यमके भृष्टं स-गुड-नागरम् ।
सुरां वा यमके भृष्टां व्यञ्जनार्थं प्रयोजयेत् ॥ ३१ ॥

फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा ।
भृष्टान् वा यमके सक्तून् खादेद् व्योषावचूर्णितान् ॥ ३२ ॥

माषान् सु-सिद्धांस् तद्-वद् वा घृत-मण्डोपसेवनान् ।
रसं सु-सिद्ध-पूतं वा छाग-मेषान्तर्-आधि-जम् ॥ ३३ ॥

९.३३cv रसं सु-सिद्धं पूतं वा पचेद् दाडिम-साराम्लं स-धान्य-स्नेह-नागरम् ।
रक्त-शाल्य्-ओदनं तेन भुञ्जानः प्रपिबंश् च तम् ॥ ३४ ॥

वर्चः-क्षय-कृतैर् आशु विकारैः परिमुच्यते ।
बाल-बिल्वं गुडं तैलं पिप्पलीं विश्व-भेषजम् ॥ ३५ ॥

९.३५dv पिप्पली-विश्व-भेषजम् लिह्याद् वाते प्रतिहते स-शूलः स-प्रवाहिकः ।
वल्कलं शाबरं पुष्पं धातक्या बदरी-दलम् ॥ ३६ ॥

९.३६bv स-शूले स-प्रवाहिके ९.३६dv धातक्या बदरी-फलम् एरण्ड-बिल्व-यव-गोक्षुरकाम्ल-सिद्धां पथ्यां लिहन् मधु-युताम् अथ वा गुडेन ।
कृच्छ्र-प्रवृत्तम् अति-शूलम् असृग्-विमिश्रं हन्याद् अवश्यम् अतिसारम् उदीर्ण-वेगम् ॥
३६.१+१ ॥

पिबेद् दधि-सर-क्षौद्र-कपित्थ-स्व-रसाप्लुतम् ।
विबद्ध-वात-वर्चास् तु बहु-शूल-प्रवाहिकः ॥ ३७ ॥

स-रक्त-पिच्छस् तृष्णार्तः क्षीर-सौहित्यम् अर्हति ।
यमकस्योपरि क्षीरं धारोष्णं वा प्रयोजयेत् ॥ ३८ ॥

शृतम् एरण्ड-मूलेन बाल-बिल्वेन वा पुनः ।
पयस्य् उत्क्वाथ्य मुस्तानां विंशतिं त्रि-गुणे ऽम्भसि ॥ ३९ ॥

९.३९dv विंशतिं त्रि-गुणाम्भसि क्षीरावशिष्टं तत् पीतं हन्याद् आमं स-वेदनम् ।
पिप्पल्याः पिबतः सूक्ष्मं रजो मरिच-जन्म वा ॥ ४० ॥

चिर-कालानुषक्तापि नश्यत्य् आशु प्रवाहिका ।
निर्-आम-रूपं शूलार्तं लङ्घनाद्यैश् च कर्षितम् ॥ ४१ ॥

रूक्ष-कोष्ठम् अपेक्ष्याग्निं स-क्षारं पाययेद् घृतम् ।
सिद्धं दधि-सुरा-मण्डे दश-मूलस्य चाम्भसि ॥ ४२ ॥

९.४२dv दश-मूलस्य वाम्भसि सिन्धूत्थ-पञ्च-कोलाभ्यां तैलं सद्यो ऽर्ति-नाशनम् ।
षड्भिः शुण्ठ्याः पलैर् द्वाभ्यां द्वाभ्यां ग्रन्थ्य्-अग्नि-सैन्धवात् ॥ ४३ ॥

तैल-प्रस्थं पचेद् दध्ना निः-सारक-रुजापहम् ।
एकतो मांस-दुग्धाज्यं पुरीष-ग्रह-शूल-जित् ॥ ४४ ॥

पानानुवासनाभ्यङ्ग-प्रयुक्तं तैलम् एकतः ।
तद् धि वात-जिताम् अग्र्यं शूलं च वि-गुणो ऽनिलः ॥ ४५ ॥

धात्व्-अन्तरोपमर्दद्धश् चलो व्यापी स्व-धाम-गः ।
तैलं मन्दानलस्यापि युक्त्या शर्म-करं परम् ॥ ४६ ॥

९.४६av धात्व्-अन्तरोपमर्दाद् वै ९.४६av धात्व्-अन्तरोपमर्देन वाय्व्-आशये स-तैले हि बिम्बिशिर् नावतिष्ठते ॥ ४६अब् ॥
क्षीणे मले स्वायतन-च्युतेषु दोषान्तरेष्व् ईरण एक-वीरे ।
को निष्टनन् प्राणिति कोष्ठ-शूली नान्तर्-बहिस्-तैल-परो यदि स्यात् ॥ ४७ ॥

गुद-रुग्-भ्रंशयोर् युञ्ज्यात् स-क्षीरं साधितं हविः ॥ ४८अब् ॥
रसे कोलाम्ल-चाङ्गेर्योर् दध्नि पिष्टे च नागरे ।
तैर् एव चाम्लैः संयोज्य सिद्धं सु-श्लक्ष्ण-कल्कितैः ॥ ४९ ॥

९.४९cv तैर् एव चाम्लैः संयुक्तैः धान्योषण-विडाजाजी-पञ्च-कोलक-दाडिमैः ।
योजयेत् स्नेह-वस्तिं वा दश-मूलेन साधितम् ॥ ५० ॥

शठी-शताह्वा-कुष्ठैर् वा वचया चित्रकेण वा ।
प्रवाहणे गुद-भ्रंशे मूत्राघाते कटी-ग्रहे ॥ ५१ ॥

मधुराम्लैः शृतं तैलं घृतं वाप्य् अनुवासनम् ।
प्रवेशयेद् गुदं ध्वस्तम् अभ्यक्तं स्वेदितं मृदु ॥ ५२ ॥

कुर्याच् च गो-फणा-बन्धं मध्य-च्छिद्रेण चर्मणा ।
पञ्च-मूलस्य महतः क्वाथं क्षीरे विपाचयेत् ॥ ५३ ॥

९.५३dv क्वाथं क्षीरेण पाचयेत् उन्दुरुं चान्त्र-रहितं तेन वात-घ्न-कल्क-वत् ।
तैलं पचेद् गुद-भ्रंशं पानाभ्यङ्गेन तज् जयेत् ॥ ५४ ॥

पैत्ते तु सामे तीक्ष्णोष्ण-वर्ज्यं प्राग् इव लङ्घनम् ।
तृड्-वान् पिबेत् षड्-अङ्गाम्बु स-भूनिम्बं स-शारिवम् ॥ ५५ ॥

पेयादि क्षुधितस्यान्नम् अग्नि-संधुक्षणं हितम् ।
बृहत्य्-आदि-गणाभीरु-द्वि-बला-शूर्पपर्णिभिः ॥ ५६ ॥

पाययेद् अनुबन्धे तु स-क्षौद्रं तण्डुलाम्भसा ।
कुटजस्य फलं पिष्टं स-वल्कं स-घुणप्रियम् ॥ ५७ ॥

९.५७bv स-क्षौद्रं तण्डुलाम्बुना ९.५७cv वत्सकस्य फलं पिष्टं पाठा-वत्सक-बीज-त्वग्-दार्वी-ग्रन्थिक-शुण्ठि वा ।
क्वाथं वातिविषा-बिल्व-वत्सकोदीच्य-मुस्त-जम् ॥ ५८ ॥

अथ-वातिविषा-मूर्वा-निशेन्द्रयव-तार्क्ष्य-जम् ।
स-मध्व्-अतिविषा-शुण्ठी-मुस्तेन्द्रयव-कट्फलम् ॥ ५९ ॥

पलं वत्सक-बीजस्य श्रपयित्वा रसं पिबेत् ।
यो रसाशी जयेच् छीघ्रं स पैत्तं जठरामयम् ॥ ६० ॥

मुस्ता-कषायम् एवं वा पिबेन् मधु-समायुतम् ।
स-क्षौद्रं शाल्मली-वृन्त-कषायं वा हिमाह्वयम् ॥ ६१ ॥

किराततिक्तकं मुस्तं वत्सकं स-रसाञ्जनम् ।
कटङ्कटेरी ह्रीवेरं बिल्व-मध्यं दुरालभा ॥ ६२ ॥

तिला मोच-रसं लोध्रं समङ्गा कमलोत्पलम् ।
नागरं धातकी-पुष्पं दाडिमस्य त्वग् उत्पलम् ॥ ६३ ॥

अर्ध-श्लोकैः स्मृता योगाः स-क्षौद्रास् तण्डुलाम्बुना ।
निशेन्द्रयव-लोध्रैला-क्वाथः पक्वातिसार-जित् ॥ ६४ ॥

९.६४dv -क्वाथः पक्वातिसार-नुत् नागरातिविषा-मुस्ता-भूनिम्बामृत-वत्सकैः ।
सर्व-ज्वर-हरः क्वाथः सर्वातीसार-नाशनः ॥ ६४+१ ॥

गुडूच्य्-अतिविषा-धान्य-शुण्ठी-बिल्वाब्द-वालकैः ।
पाठा-भूनिम्ब-कुटज-चन्दनोशीर-पद्मकैः ॥ ६४+२ ॥

कषायः शितलः पेयो ज्वरातीसार-शान्तये ।
हृल्-लासा-रोचक-च्छर्दि-पिपासा-दाह-नाशनः ॥ ६४+३ ॥

लोध्राम्बष्ठा-प्रियङ्ग्व्-आदि-गणांस् तद्-वत् पृथक् पिबेत् ।
कट्वङ्ग-वल्क-यष्ट्य्-आह्व-फलिनी-दाडिमाङ्कुरैः ॥ ६५ ॥

पेया-विलेपी-खलकान् कुर्यात् स-दधि-दाडिमान् ।
तद्-वद् दधित्थ-बिल्वाम्र-जम्बू-मध्यैः प्रकल्पयेत् ॥ ६६ ॥

अजा-पयः प्रयोक्तव्यं निर्-आमे तेन चेच् छमः ।
दोषाधिक्यान् न जायेत बलिनं तं विरेचयेत् ॥ ६७ ॥

व्यत्यासेन शकृद्-रक्तम् उपवेश्येत यो ऽपि वा ।
पलाश-फल-निर्यूहं युक्तं वा पयसा पिबेत् ॥ ६८ ॥

ततो ऽनु कोष्णं पातव्यं क्षीरम् एव यथा-बलम् ।
प्रवाहिते तेन मले प्रशाम्यत्य् उदरामयः ॥ ६९ ॥

पलाश-वत् प्रयोज्या वा त्रायमाणा विशोधनी ।
संसर्ग्यां क्रियमाणायां शूलं यद्य् अनुवर्तते ॥ ७० ॥

९.७०bv त्रायमाणा विशोधने स्रुत-दोषस्य तं शीघ्रं यथा-वह्न्य् अनुवासयेत् ।
शतपुष्पा-वरीभ्यां च बिल्वेन मधुकेन च ॥ ७१ ॥

तैल-पादं पयो-युक्तं पक्वम् अन्वासनं घृतम् ।
अ-शान्ताव् इत्य् अतीसारे पिच्छा-वस्तिः परं हितः ॥ ७२ ॥

परिवेष्ट्य कुशैर् आर्द्रैर् आर्द्र-वृन्तानि शाल्मलेः ।
कृष्ण-मृत्तिकयालिप्य स्वेदयेद् गो-मयाग्निना ॥ ७३ ॥

मृच्-छोषे तानि संक्षुद्य तत्-पिण्डं मुष्टि-संमितम् ।
मर्दयेत् पयसः प्रस्थे पूतेनास्थापयेत् ततः ॥ ७४ ॥

नत-यष्ट्य्-आह्व-कल्काज्य-क्षौद्र-तैल-वतानु च ।
स्नातो भुञ्जीत पयसा जाङ्गलेन रसेन वा ॥ ७५ ॥

पित्तातिसार-ज्वर-शोफ-गुल्म-समीरणास्र-ग्रहणी-विकारान् ।
जयत्य् अयं शीघ्रम् अति-प्रवृत्तिं विरेचनास्थापनयोश् च वस्तिः ॥ ७६ ॥

कट्वङ्ग-बिल्व-जं त्व् अस्थि कपित्थं सुरसाञ्जनम् ।
लाक्षा-हरिद्रे ह्रीवेरं कट्फलं शुकनासिका ॥ ७६+१ ॥

लोध्रं मोच-रसं मुस्तं धातकी वट-शुङ्गकान् ।
पिष्ट्वा तण्डुल-तोयेन वटकान् अक्ष-संमितान् ॥ ७६+२ ॥

पिबेत् तेनैव तोयेन ज्वरातीसार-नाशनः ।
रक्त-प्रसादनो ह्य् एष शोफातीसार-नाशनः ॥ ७६+३ ॥

फाणितं कुटजोत्थं च सर्वातीसार-नाशनम् ।
वत्सकादि-समायुक्तं साम्बष्ठादि स-माक्षिकम् ॥ ७७ ॥

नी-रुङ्-निर्-आमं दीप्ताग्नेर् अपि सास्रं चिरोत्थितम् ।
नाना-वर्णम् अतीसारं पुट-पाकैर् उपाचरेत् ॥ ७८ ॥

त्वक्-पिण्डाद् दीर्घवृन्तस्य श्रीपर्णी-पत्त्र-संवृतात् ।
मृल्-लिप्ताद् अग्निना स्विन्नाद् रसं निष्पीडितं हिमम् ॥ ७९ ॥

अतीसारी पिबेद् युक्तं मधुना सितयाथ-वा ।
एवं क्षीरि-द्रुम-त्वग्भिस् तत्-प्ररोहैश् च कल्पयेत् ॥ ८० ॥

९.८०cv एवं क्षीर-द्रुम-त्वग्भिस् कट्वङ्ग-त्वग्-घृत-युता स्वेदिता सलिलोष्मणा ।
स-क्षौद्रा हन्त्य् अतीसारं बल-वन्तम् अपि द्रुतम् ॥ ८१ ॥

पित्तातीसारी सेवेत पित्तलान्य् एव यः पुनः ।
रक्तातीसारं कुरुते तस्य पित्तं स-तृड्-ज्वरम् ॥ ८२ ॥

दारुणं गुद-पाकं च तत्र च्छागं पयो हितम् ।
पद्मोत्पल-समङ्गाभिः शृतं मोच-रसेन च ॥ ८३ ॥

शारिवा-यष्टि-लोध्रैर् वा प्रसवैर् वा वटादि-जैः ।
स-क्षौद्र-शर्करं पाने भोजने गुद-सेचने ॥ ८४ ॥

तद्-वद् रसादयो ऽन्-अम्लाः साज्याः पानान्नयोर् हिताः ।
काश्मर्य-फल-यूषश् च किञ्-चिद्-अम्लः स-शर्करः ॥ ८५ ॥

पयस्य् अर्धोदके छागे ह्रीवेरोत्पल-नागरैः ।
पेया रक्तातिसार-घ्नी पृश्निपर्णी-रसान्विता ॥ ८६ ॥

प्राग्-भक्तं नव-नीतं वा लिह्यान् मधु-सिता-युतम् ।
बलिन्य् अस्रे ऽस्रम् एवाजं मार्गं वा घृत-भर्जितम् ॥ ८७ ॥

क्षीरानु-पानं क्षीराशी त्र्य्-अहं क्षीरोद्भवं घृतम् ।
कपिञ्जल-रसाशी वा लिहन्न् आरोग्यम् अश्नुते ॥ ८८ ॥

पीत्वा शतावरी-कल्कं क्षीरेण क्षीर-भोजनः ।
रक्तातीसारं हन्त्य् आशु तया वा साधितं घृतम् ॥ ८९ ॥

लाक्षा-नागर-वैदेही-कटुका-दार्वि-वल्कलैः ।
सर्पिः सेन्द्रयवैः सिद्धं पेया-मण्डावचारितम् ॥ ९० ॥

अतीसारं जयेच् छीघ्रं त्रि-दोषम् अपि दारुणम् ।
कृष्ण-मृच्-छङ्ख-यष्ट्य्-आह्व-क्षौद्रासृक्-तण्डुलोदकम् ॥ ९१ ॥

जयत्य् अस्रं प्रियङ्गुश् च तण्डुलाम्बु-मधु-प्लुता ।
कल्कस् तिलानां कृष्णानां शर्करा-पाञ्चभागिकः ॥ ९२ ॥

९.९२dv शर्करा-भाग-संयुतः आजेन पयसा पीतः सद्यो रक्तं नियच्छति ।
पीत्वा स-शर्करा-क्षौद्रं चन्दनं तण्डुलाम्बुना ॥ ९३ ॥

दाह-तृष्णा-प्रमोहेभ्यो रक्त-स्रावाच् च मुच्यते ।
गुदस्य दाहे पाके वा सेक-लेपा हिता हिमाः ॥ ९४ ॥

९.९४av दाह-तृष्णा-प्रमेहेभ्यो ९.९४dv सेका लेपा हिता हिमाः अल्पाल्पं बहु-शो रक्तं स-शूलम् उपवेश्यते ।
यदा विबद्धो वायुश् च कृच्छ्राच् चरति वा न वा ॥ ९५ ॥

पिच्छा-वस्तिं तदा तस्य पूर्वोक्तम् उपकल्पयेत् ।
पल्लवान् जर्जरी-कृत्य शिंशिपा-कोविदारयोः ॥ ९६ ॥

पचेद् यवांश् च स क्वाथे घृत-क्षीर-समन्वितः ।
पिच्छा-स्रुतौ गुद-भ्रंशे प्रवाहण-रुजासु वा ॥ ९७ ॥

पिच्छा-वस्तिः प्रयोक्तव्यः क्षत-क्षीण-बलावहः ।
प्रपौण्डरीक-सिद्धेन सर्पिषा चानुवासनम् ॥ ९८ ॥

रक्तं विट्-सहितं पूर्वं पश्चाद् वा यो ऽतिसार्यते ।
शतावरी-घृतं तस्य लेहार्थम् उपकल्पयेत् ॥ ९९ ॥

शर्करार्धांशकं लीढं नव-नीतं नवोद्धृतम् ।
क्षौद्र-पादं जयेच् छीघ्रं तं विकारं हिताशिनः ॥ १०० ॥

न्यग्रोधोदुम्बराश्वत्थ-शुङ्गान् आपोथ्य वासयेत् ।
अहो-रात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ॥ १०१ ॥

तद् अर्ध-शर्करा-युक्तं लेहयेत् क्षौद्र-पादिकम् ।
अधो वा यदि वाप्य् उर्ध्वं यस्य रक्तं प्रवर्तते ॥ १०२ ॥

९.१०२cv अधो वा यदि वात्य्-उर्ध्वं श्लेष्मातीसारे वातोक्तं विशेषाद् आम-पाचनम् ।
कर्तव्यम् अनुबन्धे ऽस्य पिबेत् पक्त्वाग्नि-दीपनम् ॥ १०३ ॥

बिल्व-कर्कटिका-मुस्त-प्राणदा-विश्व-भेषजम् ।
वचा-विडङ्ग-भूतीक-धानकामरदारु वा ॥ १०४ ॥

९.१०४dv -धान्यकामरदारु वा अथ-वा पिप्पली-मूल-पिप्पली-द्वय-चित्रकम् ।
पाठाग्नि-वत्सक-ग्रन्थि-तिक्ता-शुण्ठी-वचाभयाः ॥ १०५ ॥

९.१०५bv -पिप्पली-द्वय-चित्रकान् क्वथिता यदि वा पिष्टाः श्लेष्मातीसार-भेषजम् ।
सौवर्चल-वचा-व्योष-हिङ्गु-प्रतिविषाभयाः ॥ १०६ ॥

पिबेच् छलेष्मातिसारार्तश् चूर्णिताः कोष्ण-वारिणा ।
मध्यं लीढ्वा कपित्थस्य स-व्योष-क्षौद्र-शर्करम् ॥ १०७ ॥

९.१०७dv स-क्षौद्रं व्योष-शर्करम् कट्फलं मधु-युक्तं वा मुच्यते जठरामयात् ।
कणां मधु-युतां लीढ्वा तक्रं पीत्वा स-चित्रकम् ॥ १०८ ॥

भुक्त्वा वा बाल-बिल्वानि व्यपोहत्य् उदरामयम् ।
पाठा-मोच-रसाम्भोद-धातकी-बिल्व-नागरम् ॥ १०९ ॥

सु-कृच्छ्रम् अप्य् अतीसारं गुड-तक्रेण नाशयेत् ।
यवानी-पिप्पली-मूल-चातुर्जातक-नागरैः ॥ ११० ॥

मरिचाग्नि-जलाजाजी-धान्य-सौवर्चलैः समैः ।
वृषाम्ल-धातकी-कृष्णा-बिल्व-दाडिम-दीप्यकैः ॥ १११ ॥

९.१११च्च् वृक्षाम्ल-धातकी-कृष्णा- ९.१११द्च् -बिल्व-दाडिम-तिन्दुकैः त्रि-गुणैः षड्-गुण-सितैः कपित्थाष्ट-गुणैः कृतः ।
चूर्णो ऽतीसार-ग्रहणी-क्षय-गुल्म-गलामयान् ॥ ११२ ॥

९.११२av त्रि-गुणैः षड्-गुण-सिते ९.११२bv कपित्थे ऽष्ट-गुणे कृतः ९.११२dv -क्षय-गुल्मोदरामयान् कास-श्वासाग्नि-सादार्शः-पीनसा-रोचकाञ् जयेत् ।
कर्षोन्मिता तवक्षीरी चातुर्जातं द्वि-कार्षिकम् ॥ ११३ ॥

९.११३cv कर्षोन्मितं तवक्षीरी- ९.११३dv -चातुर्जातं द्वि-कार्षिकम् यवानी-धान्यकाजाजी-ग्रन्थि-व्योषं पलांशकम् ।
पलानि दाडिमाद् अष्टौ सितायाश् चैकतः कृतः ॥ ११४ ॥

९.११४av यवानी-धान्यकाजाजि ९.११४bv ग्रन्थि-व्योषं पलांशकम् गुणैः कपित्थाष्टक-वच् चूर्णो ऽयं दाडिमाष्टकः ।
भोज्यो वातातिसारोक्तैर् यथावस्थं खलादिभिः ॥ ११५ ॥

स-विडङ्गः स-मरिचः स-कपित्थः स-नागरः ।
चाङ्गेरी-तक्र-कोलाम्लः खलः श्लेष्मातिसार-जित् ॥ ११६ ॥

क्षीणे श्लेष्मणि पूर्वोक्तम् अम्लं लाक्षादि षट्-पलम् ।
पुराणं वा घृतं दद्याद् यवागू-मण्ड-मिश्रितम् ॥ ११७ ॥

कट्फलं मधुकं लोध्रं त्वग्-दाडिम-फलस्य च ।
वात-पित्तातिसार-घ्नं पिबेत् तण्डुल-वारिणा ॥ ११७+१ ॥

मुस्तं सातिविषा दार्वी वचा शुण्ठी च तत्-समम् ।
कषायं क्षौद्र-संयुक्तं श्लेष्म-वातातिसारिणे ॥ ११७+२ ॥

पीतदारु वचा लोध्रं कलिङ्ग-फल-नागरम् ।
दाडिमाम्बु-युतं दद्यात् पित्त-श्लेष्मातिसारिणे ॥ ११७+३ ॥

वात-श्लेष्म-विबन्धे वा स्रवत्य् अति कफे ऽपि वा ।
शूले प्रवाहिकायां वा पिच्छा-वस्तिः प्रशस्यते ॥ ११८ ॥

९.११८av वात-श्लेष्म-विबन्धे च वचा-बिल्व-कणा-कुष्ठ-शताह्वा-लवणान्वितः ।
बिल्व-तैलेन तैलेन वचाद्यैः साधितेन वा ॥ ११९ ॥

बहु-शः कफ-वातार्ते कोष्णेनान्वासनं हितम् ।
क्षीणे कफे गुदे दीर्घ-कालातीसार-दुर्-बले ॥ १२० ॥

अनिलः प्रबलो ऽवश्यं स्व-स्थान-स्थः प्रजायते ।
स बली सहसा हन्यात् तस्मात् तं त्वरया जयेत् ॥ १२१ ॥

वायोर् अन्-अन्तरं पित्तं पित्तस्यान्-अन्तरं कफम् ।
जयेत् पूर्वं त्रयाणां वा भवेद् यो बल-वत्-तमः ॥ १२२ ॥

भी-शोकाभ्याम् अपि चलः शीघ्रं कुप्यत्य् अतस् तयोः ।
कार्या क्रिया वात-हरा हर्षणाश्वासनानि च ॥ १२३ ॥

यस्योच्चाराद् विना मूत्रं पवनो वा प्रवर्तते ।
दीप्ताग्नेर् लघु-कोष्ठस्य शान्तस् तस्योदरामयः ॥ १२४ ॥

# अध्याय 10

ग्रहणीम् आश्रितं दोषम् अ-जीर्ण-वद् उपाचरेत् ।
अतीसारोक्त-विधिना तस्यामं च विपाचयेत् ॥ १ ॥

अन्न-काले यवाग्व्-आदि पञ्च-कोलादिभिर् युतम् ।
वितरेत् पटु-लघ्व्-अन्नं पुनर् योगांश् च दीपनान् ॥ २ ॥

दद्यात् सातिविषां पेयाम् आमे साम्लां स-नागराम् ।
पाने ऽतीसार-विहितं वारि तक्रं सुरादि च ॥ ३ ॥

ग्रहणी-दोषिणां तक्रं दीपन-ग्राहि-लाघवात् ।
पथ्यं मधुर-पाकि-त्वान् न च पित्त-प्रदूषणम् ॥ ४ ॥

कषायोष्ण-विकाशि-त्वाद् रूक्ष-त्वाच् च कफे हितम् ।
वाते स्वाद्व्-अम्ल-सान्द्र-त्वात् सद्यस्कम् अ-विदाहि तत् ॥ ५ ॥

१०.५av कषायोष्ण-विकाषि-त्वाद् चतुर्णां प्रस्थम् अम्लानां त्र्य्-ऊषणाच् च पल-त्रयम् ।
लवणानां च चत्वारि शर्करायाः पलाष्टकम् ॥ ६ ॥

तच् चूर्णं शाक-सूपान्न-रागादिष्व् अवचारयेत् ।
कासा-जीर्णा-रुचि-श्वास-हृत्-पाण्डु-प्लीह-गुल्म-नुत् ॥ ७ ॥

१०.७dv -हृत्-पार्श्वामय-शूल-नुत् १०.७dv -हृत्-पाण्ड्व्-आमय-शूल-नुत् नागरातिविषा-मुस्तं पाक्यम् आम-हरं पिबेत् ।
उष्णाम्बुना वा तत्-कल्कं नागरं वाथ-वाभयाम् ॥ ८ ॥

स-सैन्धवं वचादिं वा तद्-वन् मदिरयाथ-वा ।
वर्चस्य् आमे स-प्रवाहे पिबेद् वा दाडिमाम्बुना ॥ ९ ॥

विडेन लवणं पिष्टं बिल्व-चित्रक-नागरम् ।
सामे कफानिले कोष्ठ-रुक्-करे कोष्ण-वारिणा ॥ १० ॥

कलिङ्ग-हिङ्ग्व्-अतिविषा-वचा-सौवर्चलाभयम् ।
छर्दि-हृद्-रोग-शूलेषु पेयम् उष्णेन वारिणा ॥ ११ ॥

पथ्या-सौवर्चलाजाजी-चूर्णं मरिच-संयुतम् ।
पिप्पलीं नागरं पाठां शारिवां बृहती-द्वयम् ॥ १२ ॥

चित्रकं कौटजं क्षारं तथा लवण-पञ्चकम् ।
चूर्णी-कृतं दधि-सुरा-तन्-मण्डोष्णाम्बु-काञ्जिकैः ॥ १३ ॥

पिबेद् अग्नि-विवृद्ध्य्-अर्थं कोष्ठ-वात-हरं परम् ।
पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्च-कोलकम् ॥ १४ ॥

दीप्यकं हिङ्गु गुटिका बीजपूर-रसे कृता ।
कोल-दाडिम-तोये वा परं पाचन-दीपनी ॥ १५ ॥

तालीश-पत्त्र-चविका-मरिचानां पलं पलम् ।
कृष्णा-तन्-मूलयोर् द्वे द्वे पले शुण्ठी-पल-त्रयम् ॥ १६ ॥

चतुर्-जातम् उशीरं च कर्षांशं श्लक्ष्ण-चूर्णितम् ।
गुडेन वटकान् कृत्वा त्रि-गुणेन सदा भजेत् ॥ १७ ॥

मद्य-यूष-रसारिष्ट-मस्तु-पेया-पयो-ऽनुपः ।
वात-श्लेष्मात्मनां छर्दि-ग्रहणी-पार्श्व-हृद्-रुजाम् ॥ १८ ॥

ज्वर-श्वयथु-पाण्डु-त्व-गुल्म-पानात्ययार्शसाम् ।
प्रसेक-पीनस-श्वास-कासानां च निवृत्तये ॥ १९ ॥

अभयां नागर-स्थाने दद्यात् तत्रैव विड्-ग्रहे ।
छर्द्य्-आदिषु च पैत्तेषु चतुर्-गुण-सितान्विताः ॥ २० ॥

१०.२०bv दद्याद् अत्रैव विड्-ग्रहे पक्वेन वटकाः कार्या गुडेन सितयापि वा ।
परं हि वह्नि-संपर्काल् लघिमानं भजन्ति ते ॥ २१ ॥

अथैनं परिपक्वामं मारुत-ग्रहणी-गदम् ।
दीपनीय-युतं सर्पिः पाययेद् अल्प-शो भिषक् ॥ २२ ॥

१०.२२av अथैनं परिपक्वाम- १०.२२bv -मारुत-ग्रहणी-गदम् किञ्-चित्-संधुक्षिते त्व् अग्नौ सक्त-विण्-मूत्र-मारुतम् ।
द्व्य्-अहं त्र्य्-अहं वा संस्नेह्य स्विन्नाभ्यक्तं निरूहयेत् ॥ २३ ॥

तत एरण्ड-तैलेन सर्पिषा तैल्वकेन वा ।
स-क्षारेणानिले शान्ते स्रस्त-दोषं विरेचयेत् ॥ २४ ॥

शुद्ध-रूक्षाशयं बद्ध-वर्चस्कं चानुवासयेत् ।
दीपनीयाम्ल-वात-घ्न-सिद्ध-तैलेन तं ततः ॥ २५ ॥

निरूढं च विरिक्तं च सम्यक् चाप्य् अनुवासितम् ।
लघ्व्-अन्न-प्रतिसंयुक्तं सर्पिर् अभ्यासयेत् पुनः ॥ २६ ॥

१०.२६bv सम्यग् वाप्य् अनुवासितम् पञ्च-मूलाभया-व्योष-पिप्पली-मूल-सैन्धवैः ।
रास्ना-क्षार-द्वयाजाजी-विडङ्ग-शठिभिर् घृतम् ॥ २७ ॥

शुक्तेन मातुलुङ्गस्य स्व-रसेनार्द्रकस्य च ।
शुष्क-मूलक-कोलाम्ल-चुक्रिका-दाडिमस्य च ॥ २८ ॥

तक्र-मस्तु-सुरा-मण्ड-सौवीरक-तुषोदकैः ।
काञ्जिकेन च तत् पक्वम् अग्नि-दीप्ति-करं परम् ॥ २९ ॥

शूल-गुल्मोदर-श्वास-कासानिल-कफापहम् ।
स-बीजपूरक-रसं सिद्धं वा पाययेद् घृतम् ॥ ३० ॥

तैलम् अभ्यञ्जनार्थं च सिद्धम् एभिश् चलापहम् ।
एतेषाम् औषधानां वा पिबेच् चूर्णं सुखाम्बुना ॥ ३१ ॥

वाते श्लेष्मावृते सामे कफे वा वायुनोद्धते ।
अग्नेर् निर्वापकं पित्तं रेकेण वमनेन वा ॥ ३२ ॥

हत्वा तिक्त-लघु-ग्राहि-दीपनैर् अ-विदाहिभिः ।
अन्नैः संधुक्षयेद् अग्निं चूर्णैः स्नेहैश् च तिक्तकैः ॥ ३३ ॥

पटोल-निम्ब-त्रायन्ती-तिक्ता-तिक्तक-पर्पटम् ।
कुटज-त्वक्-फलं मूर्वा मधु-शिग्रु-फलं वचा ॥ ३४ ॥

दार्वी-त्वक्-पद्मकोशीर-यवानी-मुस्त-चन्दनम् ।
सौराष्ट्र्य्-अतिविषा-व्योष-त्वग्-एला-पत्त्र-दारु च ॥ ३५ ॥

चूर्णितं मधुना लेह्यं पेयं मद्यैर् जलेन वा ।
हृत्-पाण्डु-ग्रहणी-रोग-गुल्म-शूला-रुचि-ज्वरान् ॥ ३६ ॥

कामलां संनिपातं च मुख-रोगांश् च नाशयेत् ।
भूनिम्ब-कटुका-मुस्ता-त्र्य्-ऊषणेन्द्रयवान् समान् ॥ ३७ ॥

द्वौ चित्रकाद् वत्सक-त्वग्-भागान् षो-डश चूर्णयेत् ।
गुड-शीताम्बुना पीतं ग्रहणी-दोष-गुल्म-नुत् ॥ ३८ ॥

कामला-ज्वर-पाण्डु-त्व-मेहा-रुच्य्-अतिसार-जित् ।
नागरातिविषा-मुस्ता-पाठा-बिल्वं रसाञ्जनम् ॥ ३९ ॥

१०.३९bv -मेहा-रुच्य्-अतिसार-नुत् कुटज-त्वक्-फलं तिक्ता धातकी च कृतं रजः ।
क्षौद्र-तण्डुल-वारिभ्यां पैत्तिके ग्रहणी-गदे ॥ ४० ॥

प्रवाहिकार्शो-गुद-रुग्-रक्तोत्थानेषु चेष्यते ।
चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम् ॥ ४१ ॥

षड्ग्रन्था-शारिवास्फोता-सप्तपर्णाटरूषकान् ।
पटोलोदुम्बराश्वत्थ-वट-प्लक्ष-कपीतनान् ॥ ४२ ॥

१०.४२dv -वट-प्लक्ष-कपीतनम् कटुकां रोहिणीं मुस्तां निम्बं च द्वि-पलांशकान् ।
द्रोणे ऽपां साधयेत् तेन पचेत् सर्पिः पिचून्मितैः ॥ ४३ ॥

किराततिक्तेन्द्रयव-वीरा-मागधिकोत्पलैः ।
पित्त-ग्रहण्यां तत् पेयं कुष्ठोक्तं तिक्तकं च यत् ॥ ४४ ॥

ग्रहण्यां श्लेष्म-दुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ।
कट्व्-अम्ल-लवण-क्षारैः क्रमाद् अग्निं विवर्धयेत् ॥ ४५ ॥

पञ्च-कोलाभया-धान्य-पाठा-गन्ध-पलाशकैः ।
बीजपूर-प्रगाढैश् च सिद्धैः पेयादि कल्पयेत् ॥ ४६ ॥

द्रोणं मधूक-पुष्पाणां विडङ्गं च ततो ऽर्धतः ।
चित्रकस्य ततो ऽर्धं च तथा भल्लातकाढकम् ॥ ४७ ॥

मञ्जिष्ठाष्ट-पलं चैतज् जल-द्रोण-त्रये पचेत् ।
द्रोण-शेषं शृतं शीतं मध्व्-अर्धाढक-संयुतम् ॥ ४८ ॥

एला-मृणालागुरुभिश् चन्दनेन च रूषिते ।
कुम्भे मासं स्थितं जातम् आसवं तं प्रयोजयेत् ॥ ४९ ॥

१०.४९cv कुम्भे मास-स्थितं जातम् ग्रहणीं दीपयत्य् एष बृंहणः पित्त-रक्त-नुत् ।
शोष-कुष्ठ-किलासानां प्रमेहाणां च नाशनः ॥ ५० ॥

१०.५०bv बृंहणो रक्त-पित्त-नुत् मधूक-पुष्प-स्व-रसं शृतम् अर्ध-क्षयी-कृतम् ।
क्षौद्र-पाद-युतं शीतं पूर्व-वत् संनिधापयेत् ॥ ५१ ॥

१०.५१av मधूक-पुष्प-कुडवं तत् पिबन् ग्रहणी-दोषान् जयेत् सर्वान् हिताशनः ।
तद्-वद् द्राक्षेक्षु-खर्जूर-स्व-रसान् आसुतान् पिबेत् ॥ ५२ ॥

हिङ्गु-तिक्ता-वचा-माद्री-पाठेन्द्रयव-गोक्षुरम् ।
पञ्च-कोलं च कर्षांशं पलांशं पटु-पञ्चकम् ॥ ५३ ॥

घृत-तैल-द्वि-कुडवे दध्नः प्रस्थ-द्वये च तत् ।
आपोथ्य क्वाथयेद् अग्नौ मृदाव् अनुगते रसे ॥ ५४ ॥

अन्तर्-धूमं ततो दग्ध्वा चूर्णी-कृत्य घृताप्लुतम् ।
पिबेत् पाणि-तलं तस्मिन् जीर्णे स्यान् मधुराशनः ॥ ५५ ॥

वात-श्लेष्मामयान् सर्वान् हन्याद् विष-गरांश् च सः ।
भूनिम्बं रोहिणीं तिक्तां पटोलं निम्ब-पर्पटम् ॥ ५६ ॥

दग्ध्वा माहिष-मूत्रेण पिबेद् अग्नि-विवर्धनम् ।
द्वे हरिद्रे वचा कुष्ठं चित्रकः कटु-रोहिणी ॥ ५७ ॥

मुस्ता च च्छाग-मूत्रेण सिद्धः क्षारो ऽग्नि-वर्धनः ।
चतुः-पलं सुधा-काण्डात् त्रि-पलं लवण-त्रयात् ॥ ५८ ॥

१०.५८dv त्रि-फला-लवणानि च वार्ताक-कुडवं चार्काद् अष्टौ द्वे चित्रकात् पले ।
दग्ध्वा रसेन वार्ताकाद् गुटिका भोजनोत्तराः ॥ ५९ ॥

१०.५९av वार्ताकात् कुडवं चार्काद् भुक्तम् अन्नं पचन्त्य् आशु कास-श्वासार्शसां हिताः ।
विषूचिका-प्रतिश्याय-हृद्-रोग-शमनाश् च ताः ॥ ६० ॥

मातुलुङ्ग-शठी-रास्ना-कटु-त्रय-हरीतकि ।
स्वर्जिका-याव-शूकाख्यौ क्षारौ पञ्च-पटूनि च ॥ ६१ ॥

१०.६१bv -कटु-त्रय-हरीतकीः सुखाम्बु-पीतं तच्-चूर्णं बल-वर्णाग्नि-वर्धनम् ।
श्लैष्मिके ग्रहणी-दोषे स-वाते तैर् घृतं पचेत् ॥ ६२ ॥

धान्वन्तरं षट्-पलं च भल्लातक-घृताभयम् ।
विड-काचोष-लवण-स्वर्जिका-याव-शूक-जान् ॥ ६३ ॥

सप्तलां कण्टकारीं च चित्रकं चैकतो दहेत् ।
सप्त-कृत्वः स्रुतस्यास्य क्षारस्यार्धाढके पचेत् ॥ ६४ ॥

आढकं सर्पिषः पेयं तद् अग्नि-बल-वृद्धये ।
निचये पञ्च कर्माणि युञ्ज्याच् चैतद् यथा-बलम् ॥ ६५ ॥

प्रसेके श्लैष्मिके ऽल्पाग्नेर् दीपनं रूक्ष-तिक्तकम् ।
योज्यं कृशस्य व्यत्यासात् स्निग्ध-रूक्षं कफोदये ॥ ६६ ॥

क्षीण-क्षाम-शरीरस्य दीपनं स्नेह-संयुतम् ।
दीपनं बहु-पित्तस्य तिक्तं मधुरकैर् युतम् ॥ ६७ ॥

स्नेहो ऽम्ल-लवणैर् युक्तो बहु-वातस्य शस्यते ।
स्नेहम् एव परं विद्याद् दुर्-बलानल-दीपनम् ॥ ६८ ॥

नालं स्नेह-समिद्धस्य शमायान्नं सु-गुर्व् अपि ।
यो ऽल्पाग्नि-त्वात् कफे क्षीणे वर्चः पक्वम् अपि श्लथम् ॥ ६९ ॥

मुञ्चेत् पट्व्-औषध-युतं स पिबेद् अल्प-शो घृतम् ।
तेन स्व-मार्गम् आनीतः स्व-कर्मणि नियोजितः ॥ ७० ॥

समानो दीपयत्य् अग्निम् अग्नेः संधुक्षको हि सः ।
पुरीषं यश् च कृच्छ्रेण कठिन-त्वाद् विमुञ्चति ॥ ७१ ॥

१०.७१bv अग्नेः संधुक्षको ह्य् असौ स घृतं लवणैर् युक्तं नरो ऽन्नावग्रहं पिबेत् ।
रौक्ष्यान् मन्दे ऽनले सर्पिस् तैलं वा दीपनैः पिबेत् ॥ ७२ ॥

क्षार-चूर्णासवारिष्टन् मन्दे स्नेहाति-पानतः ।
उदावर्तात् तु योक्तव्या निरूह-स्नेह-वस्तयः ॥ ७३ ॥

१०.७३cv उदावर्तात् प्रयोक्तव्या दोषाति-वृद्ध्या मन्दे ऽग्नौ संशुद्धो ऽन्न-विधिं चरेत् ।
व्याधि-मुक्तस्य मन्दे ऽग्नौ सर्पिर् एव तु दीपनम् ॥ ७४ ॥

१०.७४bv संशुद्धो ऽन्न-विधिं भजेत् अध्वोपवास-क्षाम-त्वैर् यवाग्वा पाययेद् घृतम् ।
अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥ ७५ ॥

दीर्घ-काल-प्रसङ्गात् तु क्षाम-क्षीण-कृशान् नरान् ।
प्रसहानां रसैः साम्लैर् भोजयेत् पिशिताशिनाम् ॥ ७६ ॥

लघूष्ण-कटु-शोधि-त्वाद् दीपयन्त्य् आशु ते ऽनलम् ।
मांसोपचित-मांस-त्वात् परं च बल-वर्धनाः ॥ ७७ ॥

१०.७७av लघूष्ण-कटु-शोधि-त्वैर् स्नेहासव-सुरारिष्ट-चूर्ण-क्वाथ-हिताशनैः ।
सम्यक्-प्रयुक्तैर् देहस्य बलम् अग्नेश् च वर्धते ॥ ७८ ॥

दीप्तो यथैव स्थाणुश् च बाह्यो ऽग्निः सार-दारुभिः ।
स-स्नेहैर् जायते तद्-वद् आहारैः कोष्ठ-गो ऽनलः ॥ ७९ ॥

ना-भोजनेन कायाग्निर् दीप्यते नाति-भोजनात् ।
यथा निर्-इन्धनो वह्निर् अल्पो वातीन्धनावृतः ॥ ८० ॥

१०.८०dv अल्पो वातीन्धनान्वितः यदा क्षीणे कफे पित्तं स्व-स्थाने पवनानुगम् ।
प्रवृद्धं वर्धयत्य् अग्निं तदासौ सानिलो ऽनलः ॥ ८१ ॥

पक्त्वान्नम् आशु धातूंश् च सर्वान् ओजश् च संक्षिपन् ।
मारयेत् स्यात् स ना स्वस्थो भुक्ते जीर्णे तु ताम्यति ॥ ८२ ॥

१०.८२cv मारयेत् तं स ना स्वस्थो तृट्-कास-दाह-मूर्छाद्या व्याधयो ऽत्य्-अग्नि-संभवाः ।
तम् अत्य्-अग्निं गुरु-स्निग्ध-मन्द-सान्द्र-हिम-स्थिरैः ॥ ८३ ॥

अन्न-पानैर् नयेच् छान्तिं दीप्तम् अग्निम् इवाम्बुभिः ।
मुहुर् मुहुर् अ-जीर्णे ऽपि भोज्यान्य् अस्योपहारयेत् ॥ ८४ ॥

१०.८४dv भोज्यान्य् अस्योपकल्पयेत् निर्-इन्धनो ऽन्तरं लब्ध्वा यथैनं न विपादयेत् ।
कृशरां पायसं स्निग्धं पैष्टिकं गुड-वैकृतम् ॥ ८५ ॥

१०.८५bv तथैनं न विपादयेत् अश्नीयाद् औदकानूप-पिशितानि भृतानि च ।
मत्स्यान् विशेषतः श्लक्ष्णान् स्थिर-तोय-चराश् च ये ॥ ८६ ॥

आविकं सु-भृतं मांसम् अद्याद् अत्य्-अग्नि-वारणम् ।
पयः सह-मधूच्छिष्टं घृतं वा तृषितः पिबेत् ॥ ८७ ॥

गोधूम-चूर्णं पयसा बहु-सर्पिः-परिप्लुतम् ।
आनूप-रस-युक्तान् वा स्नेहांस् तैल-विवर्जितान् ॥ ८८ ॥

श्यामा-त्रिवृद्-विपक्वं वा पयो दद्याद् विरेचनम् ।
अ-सकृत् पित्त-हरणं पायस-प्रतिभोजनम् ॥ ८९ ॥

यत् किञ्-चिद् गुरु मेद्यं च श्लेष्म-कारि च भोजनम् ।
सर्वं तद् अत्य्-अग्नि-हितं भुक्त्वा च स्वपनं दिवा ॥ ९० ॥

आहारम् अग्निः पचति दोषान् आहार-वर्जितः ।
धातून् क्षीणेषु दोषेषु जीवितं धातु-संक्षये ॥ ९१ ॥

एतत् प्रकृत्यैव विरुद्धम् अन्नं संयोग-संस्कार-वशेन चेदम् ।
इत्य्-आदि अ-विज्ञाय यथेष्ट-चेष्टाश् चरन्ति यत् साग्नि-बलस्य शक्तिः ॥ ९२ ॥

तस्माद् अग्निं पालयेत् सर्व-यत्नैस् तस्मिन् नष्टे याति ना नाशम् एव ।
दोषैर् ग्रस्ते ग्रस्यते रोग-संघैर् युक्ते तु स्यान् नी-रुजो दीर्घ-जीवी ॥ ९३ ॥

# अध्याय 11

लिङ्गाग्र-सुषिरे सम्यग् योन्यां वा संप्रवेशयेत् ।
मूत्र-दुःख-हरं मुख्यं कर्पूरं परिसंक्षिपेत् ॥ ०+१ ॥

कृच्छ्रे वात-घ्न-तैलाक्तम् अधो नाभेः समीर-जे ।
सु-स्निग्धैः स्वेदयेद् अङ्गं पिण्ड-सेकावगाहनैः ॥ १ ॥

दश-मूल-बलैरण्ड-यवाभीरु-पुनर्नवैः ।
कुलत्थ-कोल-पत्तूर-वृश्चीवोपलभेदकैः ॥ २ ॥

तैल-सर्पिर्-वराहर्क्ष-वसाः क्वथित-कल्कितैः ।
स-पञ्च-लवणाः सिद्धाः पीताः शूल-हराः परम् ॥ ३ ॥

द्रव्याण्य् एतानि पानान्ने तथा पिण्डोपनाहने ।
सह तैलफलैर् युञ्ज्यात् साम्लानि स्नेह-वन्ति च ॥ ४ ॥

सौवर्चलाढ्यां मदिरां पिबेन् मूत्र-रुजापहाम् ।
पैत्ते युञ्जीत शिशिरं सेक-लेपावगाहनम् ॥ ५ ॥

पिबेद् वरीं गोक्षुरकं विदारीं स-कसेरुकाम् ।
तृणाख्यं पञ्च-मूलं च पाक्यं स-मधु-शर्करम् ॥ ६ ॥

वृषकं त्रपुसैर्वारु-लट्वा-बीजानि कुङ्कुमम् ।
द्राक्षाम्भोभिः पिबन् सर्वान् मूत्राघातान् अपोहति ॥ ७ ॥

एर्वारु-बीज-यष्ट्य्-आह्व-दार्वीर् वा तण्डुलाम्बुना ।
तोयेन कल्कं द्राक्षायाः पिबेत् पर्युषितेन वा ॥ ८ ॥

कफ-जे वमनं स्वेदं तीक्ष्णोष्ण-कटु-भोजनम् ।
यवानां विकृतीः क्षारं कालशेयं च शीलयेत् ॥ ९ ॥

पिबेन् मद्येन सूक्ष्मैलां धात्री-फल-रसेन वा ।
सारसास्थि-श्वदंष्ट्रैला-व्योषं वा मधु-मूत्र-वत् ॥ १० ॥

स्व-रसं कण्टकार्या वा पाययेन् माक्षिकान्वितम् ।
शितिवारक-बीजं वा तक्रेण श्लक्ष्ण-चूर्णितम् ॥ ११ ॥

धव-सप्ताह्व-कुटज-गुडूची-चतुरङ्गुलम् ।
केम्बुकैला-करञ्जं च पाक्यं स-मधु साधिताम् ॥ १२ ॥

११.१२cv कटुकैला-करञ्जं च तैर् वा पेयां प्रवालं वा चूर्णितं तण्डुलाम्बुना ।
स-तैलं पाटला-क्षारं सप्त-कृत्वो ऽथ-वा स्रुतम् ॥ १३ ॥

पाटली-याव-शूकाभ्यां पारिभद्रात् तिलाद् अपि ।
क्षारोदकेन मदिरां त्वग्-एलोषण-संयुताम् ॥ १४ ॥

पिबेद् गुडोपदंशान् वा लिह्याद् एतान् पृथक् पृथक् ।
संनिपातात्मके सर्वं यथावस्थम् इदं हितम् ॥ १५ ॥

अश्मन्य् अप्य् अ-चिरोत्थाने वात-वस्त्य्-आदिकेषु च ।
अश्मरी दारुणो व्याधिर् अन्तक-प्रतिमो मतः ॥ १६ ॥

११.१६bv वात-वस्त्य्-आदिकेष्व् अपि तरुणो भेषजैः साध्यः प्रवृद्धश् छेदम् अर्हति ।
तस्य पूर्वेषु रूपेषु स्नेहादि-क्रम इष्यते ॥ १७ ॥

पाषाणभेदो वसुको वशिरो ऽश्मन्तको वरी ।
कपोतवङ्कातिबला-भल्लूकोशीर-कच्छकम् ॥ १८ ॥

११.१८dv -भल्लूकोशीर-कन्तकम् वृक्षादनी शाक-फलं व्याघ्र्यौ गुण्ठस् त्रिकण्टकः ।
यवाः कुलत्थाः कोलानि वरुणः कतकात् फलम् ॥ १९ ॥

ऊषकादि-प्रतीवापम् एषां क्वाथे शृतं घृतम् ।
भिनत्ति वात-संभूतां तत् पीतं शीघ्रम् अश्मरीम् ॥ २० ॥

गन्धर्वहस्त-बृहती-व्याघ्री-गोक्षुरकेक्षुरात् ।
मूल-कल्कं पिबेद् दध्ना मधुरेणाश्म-भेदनम् ॥ २१ ॥

कुशः काशः शरो गुण्ठ इत्कटो मोरटो ऽश्मभित् ।
दर्भो विदारी वाराही शालि-मूलं त्रिकण्टकः ॥ २२ ॥

भल्लूकः पाटली पाठा पत्तूरः स-कुरण्टकः ।
पुनर्नवे शिरीषश् च तेषां क्वाथे पचेद् घृतम् ॥ २३ ॥

पिष्टेन त्रपुसादीनां बीजेनेन्दीवरेण च ।
मधुकेन शिला-जेन तत् पित्ताश्मरि-भेदनम् ॥ २४ ॥

वरुणादिः समीर-घ्नौ गणाव् एला हरेणुका ।
गुग्गुलुर् मरिचं कुष्ठं चित्रकः स-सुराह्वयः ॥ २५ ॥

तैः कल्कितैः कृताव् आपम् ऊषकादि-गणेन च ।
भिनत्ति कफ-जाम् आशु साधितं घृतम् अश्मरीम् ॥ २६ ॥

क्षार-क्षीर-यवाग्व्-आदि द्रव्यैः स्वैः स्वैश् च कल्पयेत् ।
पिचुकाङ्कोल्ल-कतक-शाकेन्दीवर-जैः फलैः ॥ २७ ॥

पीतम् उष्णाम्बु स-गुडं शर्करा-पातनं परम् ।
क्रौञ्चोष्ट्र-रासभास्थीनि श्वदंष्ट्रा तालपत्त्रिका ॥ २८ ॥

११.२८av पीतम् उष्णाम्बु स-घृतं अजमोदा कदम्बस्य मूलं विश्वस्य चौषधम् ।
पीतानि शर्करां भिन्द्युः सुरयोष्णोदकेन वा ॥ २९ ॥

११.२९bv मूलं बिल्वस्य चौषधम् नृत्यकुण्डक-बीजानां चूर्णं माक्षिक-संयुतम् ।
अवि-क्षीरेण सप्ताहं पीतम् अश्मरि-पातनः ॥ ३० ॥

११.३०av नृत्यकुण्डल-बीजानां ११.३०av मर्कटकस्य बीजानां क्वाथश् च शिग्रु-मूलोत्थः कद्-उष्णो ऽश्मरी-पातनः ।
तिलापामार्ग-कदली-पलाश-यव-संभवः ॥ ३१ ॥

क्षारः पेयो ऽवि-मूत्रेण शर्करास्व् अश्मरीषु च ।
कपोतवङ्का-मूलं वा पिबेद् एकं सुरादिभिः ॥ ३२ ॥

तत्-सिद्धं वा पिबेत् क्षीरं वेदनाभिर् उपद्रुतः ।
हरीतक्य्-अस्थि-सिद्धं वा साधितं वा पुनर्नवैः ॥ ३३ ॥

क्षीरान्न-भुग् बर्हि-शिखा-मूलं वा तण्डुलाम्बुना ।
मूत्राघातेषु विभजेद् अतः शेषेष्व् अपि क्रियाम् ॥ ३४ ॥

बृहत्य्-आदि-गणे सिद्धं द्वि-गुणी-कृत-गोक्षुरे ।
तोयं पयो वा सर्पिर् वा सर्व-मूत्र-विकार-जित् ॥ ३५ ॥

देवदारुं घनं मूर्वां यष्टीमधु हरीतकीम् ।
मूत्राघातेषु सर्वेषु सुरा-क्षीर-जलैः पिबेत् ॥ ३६ ॥

रसं वा धन्वयासस्य कषायं ककुभस्य वा ।
सुखाम्भसा वा त्रि-फलां पिष्टां सैन्धव-संयुताम् ॥ ३७ ॥

व्याघ्री-गोक्षुरक-क्वाथे यवागूं वा स-फाणिताम् ।
क्वाथे वीरतरादेर् वा ताम्र-चूड-रसे ऽपि वा ॥ ३८ ॥

अद्याद् वीरतराद्येन भावितं वा शिला-जतु ।
मद्यं वा निगदं पीत्वा रथेनाश्वेन वा व्रजेत् ॥ ३९ ॥

११.३९cv मद्यं वा निर्-गदं पीत्वा शीघ्र-वेगेन संक्षोभात् तथास्य च्यवते ऽश्मरी ।
सर्व-था चोपयोक्तव्यो वर्गो वीरतरादिकः ॥ ४० ॥

रेकार्थं तैल्वकं सर्पिर् वस्ति-कर्म च शीलयेत् ।
विशेषाद् उत्तरान् वस्तीञ् छुक्राश्मर्यां तु शोधिते ॥ ४१ ॥

११.४१dv छुक्राश्मर्यां च शोधिते तैर् मूत्र-मार्गे बल-वान् शुक्राशय-विशुद्धये ।
पुमान् सु-तृप्तो वृष्याणां मांसानां कुक्कुटस्य च ॥ ४२ ॥

कामं स-कामः सेवेत प्रमदा मद-दायिनीः ।
सिद्धैर् उपक्रमैर् एभिर् न चेच् छान्तिस् तदा भिषक् ॥ ४३ ॥

११.४३dv न चेच् छान्तिस् ततो भिषक् इति राजानम् आपृच्छ्य शस्त्रं साध्व् अवचारयेत् ।
अ-क्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥ ४४ ॥

निश्चितस्यापि वैद्यस्य बहु-शः सिद्ध-कर्मणः ।
अथातुरम् उपस्निग्ध-शुद्धम् ईषच् च कर्शितम् ॥ ४५ ॥

११.४५cv अथातुरम् उपस्निग्धं ११.४५dv -शुद्धम् ईषच् च कर्षितम् ११.४५dv शुद्धम् ईषच् च कर्शितम् अभ्यक्त-स्विन्न-वपुषम् अ-भुक्तं कृत-मङ्गलम् ।
आ-जानु-फलक-स्थस्य नरस्याङ्के व्यपाश्रितम् ॥ ४६ ॥

पूर्वेण कायेनोत्तानं निषण्णं वस्त्र-चुम्भले ।
ततो ऽस्याकुञ्चिते जानु-कूर्परे वाससा दृढम् ॥ ४७ ॥

सहाश्रय-मनुष्येण बद्धस्याश्वासितस्य च ।
नाभेः समन्ताद् अभ्यज्याद् अधस् तस्याश् च वामतः ॥ ४८ ॥

मृदित्वा मुष्टिनाक्रामेद् यावद् अश्मर्य् अधो-गता ।
तैलाक्ते वर्धित-नखे तर्जनी-मध्यमे ततः ॥ ४९ ॥

अ-दक्षिणे गुदे ऽङ्गुल्यौ प्रणिधायानु-सेवनि ।
आसाद्य बल-यत्नाभ्याम् अश्मरीं गुद-मेढ्रयोः ॥ ५० ॥

११.५०bv प्रणिधायानु-सेवनीम् कृत्वान्तरे तथा वस्तिं निर्-वलीकम् अन्-आयतम् ।
उत्पीडयेद् अङ्गुलीभ्यां यावद् ग्रन्थिर् इवोन्नतम् ॥ ५१ ॥

शल्यं स्यात् सेवनीं मुक्त्वा यव-मात्रेण पाटयेत् ।
अश्म-मानेन न यथा भिद्यते सा तथाहरेत् ॥ ५२ ॥

समग्रं सर्प-वक्त्रेण स्त्रीणां वस्तिस् तु पार्श्व-गः ।
गर्भाशयाश्रयस् तासां शस्त्रम् उत्सङ्ग-वत् ततः ॥ ५३ ॥

न्यसेद् अतो ऽन्य-था ह्य् आसां मूत्र-स्रावी व्रणो भवेत् ।
मूत्र-प्रसेक-क्षणनान् नरस्याप्य् अपि चैक-धा ॥ ५४ ॥

वस्ति-भेदो ऽश्मरी-हेतुः सिद्धिं याति न तु द्वि-धा ।
वि-शल्यम् उष्ण-पानीय-द्रोण्यां तम् अवगाहयेत् ॥ ५५ ॥

तथा न पूर्यते ऽस्रेण वस्तिः पूर्णे तु पीडयेत् ।
मेढ्रान्तः क्षीरि-वृक्षाम्बु मूत्र-संशुद्धये ततः ॥ ५६ ॥

११.५६cv मेढ्रतः क्षीरि-वृक्षाम्बु ११.५६cv मेढ्रे ऽन्तः क्षीरि-वृक्षाम्बु कुर्याद् गुडस्य सौहित्यं मध्व्-आज्याक्त-व्रणः पिबेत् ।
द्वौ कालौ स-घृतां कोष्णां यवागूं मूत्र-शोधनैः ॥ ५७ ॥

त्र्य्-अहं दशाहं पयसा गुडाढ्येनाल्पम् ओदनम् ।
भुञ्जीतोर्ध्वं फलाम्लैश् च रसैर् जाङ्गल-चारिणाम् ॥ ५८ ॥

क्षीरि-वृक्ष-कषायेण व्रणं प्रक्षाल्य लेपयेत् ।
प्रपौण्डरीक-मञ्जिष्ठा-यष्ट्य्-आह्व-नयनौषधैः ॥ ५९ ॥

व्रणाभ्यङ्गे पचेत् तैलम् एभिर् एव निशान्वितैः ।
दशाहं स्वेदयेच् चैनं स्व-मार्गं सप्त-रात्रतः ॥ ६० ॥

११.६०cv दशाहं स्वेदयेच् चैव ११.६०cv दशाहं स्वेदयेच् चैवं मूत्रे त्व् अ-गच्छति दहेद् अश्मरी-व्रणम् अग्निना ।
स्व-मार्ग-प्रतिपत्तौ तु स्वादु-प्रायैर् उपाचरेत् ॥ ६१ ॥

तं वस्तिभिर् न चारोहेद् वर्षं रूढ-व्रणो ऽपि सः ।
नग-नागाश्व-वृक्ष-स्त्री-रथान् नाप्सु प्लवेत च ॥ ६२ ॥

मूत्र-शुक्र-वहौ वस्ति-वृषणौ सेवनीं गुदम् ।
मूत्र-प्रसेकं योनिं च शस्त्रेणाष्टौ विवर्जयेत् ॥ ६३ ॥

# अध्याय 12

मेहिनो बलिनः कुर्याद् आदौ वमन-रेचने ।
स्निग्धस्य सर्षपारिष्ट-निकुम्भाक्ष-करञ्ज-जैः ॥ १ ॥

तैलस् त्रिकण्टकाद्येन यथा-स्वं साधितेन वा ।
स्नेहेन मुस्त-देवाह्व-नागर-प्रतिवाप-वत् ॥ २ ॥

सुरसादि-कषायेण दद्याद् आस्थापनं ततः ।
न्यग्रोधादेस् तु पित्तार्तं रसैः शुद्धं च तर्पयेत् ॥ ३ ॥

१२.३cv न्यग्रोधादेस् तु पित्तार्ते मूत्र-ग्रह-रुजा-गुल्म-क्षयाद्यास् त्व् अपतर्पणात् ।
ततो ऽनुबन्ध-रक्षार्थं शमनानि प्रयोजयेत् ॥ ४ ॥

अ-संशोध्यस्य तान्य् एव सर्व-मेहेषु पाययेत् ।
धात्री-रस-प्लुतां प्राह्णे हरिद्रां माक्षिकान्विताम् ॥ ५ ॥

दार्वी-सुराह्व-त्रि-फला-मुस्ता वा क्वथिता जले ।
चित्रक-त्रि-फला-दार्वी-कलिङ्गान् वा स-माक्षिकान् ॥ ६ ॥

मधु-युक्तं गुडूच्या वा रसम् आमलकस्य वा ॥ ७अब् ॥
लोध्राभया-तोयद-कट्फलानां पाठा-विडङ्गार्जुन-धन्वनानाम् ॥ ७च्द् ॥
गायत्रि-दार्वी-कृमिहृद्-धवानां कफे त्रयः क्षौद्र-युताः कषायाः ॥ ७एf ॥
उशीर-लोध्रार्जुन-चन्दनानां पटोल-निम्बामलकामृतानाम् ।
लोध्राम्बु-कालीयक-धातकीनां पित्ते त्रयः क्षौद्र-युताः कषायाः ॥ ८ ॥

यथा-स्वम् एभिः पानान्नं यव-गोधूम-भावनाः ॥ ९अब् ॥
१२.९bv यव-गोधूम-भावनाम् १२.९bv यव-गोधूम-भावनम् वातोल्बणेषु स्नेहांश् च प्रमेहेषु प्रकल्पयेत् ।
अपूप-सक्तु-वाट्यादिर् यवानां विकृतिर् हिता ॥ १० ॥

गजाश्व-गुद-मुक्तानाम् अथ-वा वेणु-जन्मनाम् ।
तृण-धान्यानि मुद्गाद्याः शालिर् जीर्णः स-षष्टिकः ॥ ११ ॥

श्री-कुक्कुटो ऽम्लः खलकस् तिल-सर्षप-किट्ट-जः ।
कपित्थं तिन्दुकं जम्बूस् तत्-कृता राग-षाडवाः ॥ १२ ॥

तिक्तं शाकं मधु श्रेष्ठा भक्ष्याः शुष्काः स-सक्तवः ।
धन्व-मांसानि शूल्यानि परिशुष्काण्य् अयस्-कृतिः ॥ १३ ॥

मध्व्-अरिष्टासवा जीर्णाः सीधुः पक्व-रसोद्भवः ।
तथासनादि-साराम्बु दर्भाम्भो माक्षिकोदकम् ॥ १४ ॥

वासितेषु वरा-क्वाथे शर्वरीं शोषितेष्व् अहः ।
यवेषु सु-कृतान् सक्तून् स-क्षौद्रान् सीधुना पिबेत् ॥ १५ ॥

शाल-सप्ताह्व-कम्पिल्ल-वृक्षकाक्ष-कपित्थ-जम् ।
रोहीतकं च कुसुमं मधुनाद्यात् सु-चूर्णितम् ॥ १६ ॥

कफ-पित्त-प्रमेहेषु पिबेद् धात्री-रसेन वा ।
त्रिकण्टक-निशा-लोध्र-सोमवल्क-वचार्जुनैः ॥ १७ ॥

पद्मकाश्मन्तकारिष्ट-चन्दनागुरु-दीप्यकैः ।
पटोल-मुस्त-मञ्जिष्ठा-माद्री-भल्लातकैः पचेत् ॥ १८ ॥

तैलं वात-कफे पित्ते घृतं मिश्रेषु मिश्रकम् ।
दश-मूल-शठी-दन्ती-सुराह्वं द्वि-पुनर्नवम् ॥ १९ ॥

मूलं स्नुग्-अर्कयोः पथ्यां भूकदम्बम् अरुष्करम् ।
करञ्जौ वरुणान् मूलं पिप्पल्याः पौष्करं च यत् ॥ २० ॥

१२.२०cv करञ्ज-वरुणान् मूलं पृथग् दश-पलं प्रस्थान् यव-कोल-कुलत्थतः ।
त्रींश् चाष्ट-गुणिते तोये विपचेत् पाद-वर्तिना ॥ २१ ॥

तेन द्वि-पिप्पली-चव्य-वचा-निचुल-रोहिषैः ।
त्रिवृद्-विडङ्ग-कम्पिल्ल-भार्गी-विश्वैश् च साधयेत् ॥ २२ ॥

१२.२२dv -भार्गी-बिल्वैश् च साधयेत् प्रस्थं घृताज् जयेत् सर्वांस् तन् मेहान् पिटिका विषम् ।
पाण्डु-विद्रधि-गुल्मार्शः-शोष-शोफ-गरोदरम् ॥ २३ ॥

श्वासं कासं वमिं वृद्धिं प्लीहानं वात-शोणितम् ।
कुष्ठोन्मादाव् अपस्मारं धान्वन्तरम् इदं घृतम् ॥ २४ ॥

लोध्र-मूर्वा-शठी-वेल्ल-भार्गी-नत-नख-प्लवान् ।
कलिङ्ग-कुष्ठ-क्रमुक-प्रियङ्ग्व्-अतिविषाग्निकान् ॥ २५ ॥

द्वे विशाले चतुर्-जातं भूनिम्बं कटु-रोहिणीम् ।
यवानीं पौष्करं पाठां ग्रन्थिं चव्यं फल-त्रयम् ॥ २६ ॥

कर्षांशम् अम्बु-कलशे पाद-शेषे स्रुते हिमे ।
द्वौ प्रस्थौ माक्षिकात् क्षिप्त्वा रक्षेत् पक्षम् उपेक्षया ॥ २७ ॥

लोध्रासवो ऽयं मेहार्शः-श्वित्र-कुष्ठा-रुचि-कृमीन् ।
पाण्डु-त्वं ग्रहणी-दोषं स्थूल-तां च नियच्छति ॥ २८ ॥

साधयेद् असनादीनां पलानां विंशतिं पृथक् ।
द्वि-वहे ऽपां क्षिपेत् तत्र पाद-स्थे द्वे शते गुडात् ॥ २९ ॥

क्षौद्राढकार्धं पलिकं वत्सकादिं च कल्कितम् ।
तत् क्षौद्र-पिप्पली-चूर्ण-प्रदिग्धे घृत-भाजने ॥ ३० ॥

१२.३०bv वत्सकादि च कल्कितम् स्थितं दृढे जतु-सृते यव-राशौ निधापयेत् ।
खदिराङ्गार-तप्तानि बहु-शो ऽत्र निमज्जयेत् ॥ ३१ ॥

तनूनि तीक्ष्ण-लोहस्य पत्त्राण्य् आ-लोह-संक्षयात् ।
अयस्-कृतिः स्थिता पीता पूर्वस्माद् अधिका गुणैः ॥ ३२ ॥

रूक्षम् उद्वर्तनं गाढं व्यायामो निशि जागरः ।
यच् चान्यच् छ्लेष्म-मेदो-घ्नं बहिर् अन्तश् च तद् धितम् ॥ ३३ ॥

सु-भावितां सार-जलैस् तुलां पीत्वा शिलोद्भवात् ।
साराम्बुनैव भुञ्जानः शालीञ् जाङ्गल-जै रसैः ॥ ३४ ॥

१२.३४dv शालिं जाङ्गल-जै रसैः सर्वान् अभिभवेन् मेहान् सु-बहूपद्रवान् अपि ।
गण्ड-मालार्बुद-ग्रन्थि-स्थौल्य-कुष्ठ-भगन्दरान् ॥ ३५ ॥

कृमि-श्लीपद-शोफांश् च परं चैतद् रसायनम् ।
अ-धनश् छत्त्र-पाद-त्र-रहितो मुनि-वर्तनः ॥ ३६ ॥

चन्दनम् उत्पलं द्राक्षा उशीरं च पुनर्नवा ।
यष्टीमधुक-श्रीखण्डं त्रि-फलोत्पल-शारिवा ॥ ३६.१+१ ॥

शमी वंश-फलं लोध्रं त्रि-जातं नागकेसरम् ।
पद्मकं च कणा-चूर्णं तत्-तुल्या शर्करा शुभा ॥ ३६.१+२ ॥

एतच् चूर्णं पिबेत् प्रातस् तण्डुलोदक-वारिणा ।
प्रमेहे रक्त-पित्ते च कृच्छ्र-दोषे च दारुणे ॥ ३६.१+३ ॥

योजनानां शतं यायात् खनेद् वा सलिलाशयान् ।
गो-शकृन्-मूत्र-वृत्तिर् वा गोभिर् एव सह भ्रमेत् ॥ ३७ ॥

बृंहयेद् औषधाहारैर् अ-मेदो-मूत्रलैः कृशम् ।
शराविकाद्याः पिटिकाः शोफ-वत् समुपाचरेत् ॥ ३८ ॥

अ-पक्वा व्रण-वत् पक्वास् तासां प्राग्-रूपम् एव च ।
क्षीरि-वृक्षाम्बु पानाय बस्त-मूत्रं च शस्यते ॥ ३९ ॥

तीक्ष्णं च शोधनं प्रायो दुर्-विरेच्या हि मेहिनः ।
तैलम् एलादिना कुर्याद् गणेन व्रण-रोपणम् ॥ ४० ॥

उद्वर्तने कषायं तु वर्गेणारग्वधादिना ।
परिषेको ऽसनाद्येन पानान्ने वत्सकादिना ॥ ४१ ॥

१२.४१cv परिषेके ऽसनाद्येन पाठा-चित्रक-शार्ङ्गष्टा-शारिवा-कण्टकारिकाः ।
सप्ताह्वं कौटजं मूलं सोमवल्कं नृपद्रुमम् ॥ ४२ ॥

संचूर्ण्य मधुना लिह्यात् तद्-वच् चूर्णं नवायसम् ।
मधु-मेहि-त्वम् आपन्नो भिषग्भिः परिवर्जितः ॥ ४३ ॥

शिला-जतु-तुलाम् अद्यात् प्रमेहार्तः पुनर्-नवः ॥ ४३अब् ॥

# अध्याय 13

विद्रधिं सर्वम् एवामं शोफ-वत् समुपाचरेत् ।
प्रततं च हरेद् रक्तं पक्वे तु व्रण-वत् क्रिया ॥ १ ॥

पञ्च-मूल-जलैर् धौतं वातिकं लवणोत्तरैः ।
भद्रादि-वर्ग-यष्ट्य्-आह्व-तिलैर् आलेपयेद् व्रणम् ॥ २ ॥

वैरेचनिक-युक्तेन त्रैवृतेन विशोध्य च ।
विदारी-वर्ग-सिद्धेन त्रैवृतेनैव रोपयेत् ॥ ३ ॥

क्षालितं क्षीरि-तोयेन लिम्पेद् यष्ट्य्-अमृता-तिलैः ।
पैत्तं घृतेन सिद्धेन मञ्जिष्ठोशीर-पद्मकैः ॥ ४ ॥

पयस्या-द्वि-निशा-श्रेष्ठा-यष्टी-दुग्धैश् च रोपयेत् ।
न्यग्रोधादि-प्रवाल-त्वक्-फलैर् वा कफ-जं पुनः ॥ ५ ॥

आरग्वधादिना धौतं सक्तु-कुम्भ-निशा-तिलैः ।
लिम्पेत् कुलत्थिका-दन्ती -त्रिवृच्-छ्यामाग्नि-तिल्वकैः ॥ ६ ॥

१३.६av आरग्वधाम्बुना धौतं स-सैन्धवैः स-गो-मूत्रैस् तैलं कुर्वीत रोपणम् ।
रक्तागन्तूद्भवे कार्या पित्त-विद्रधि-वत् क्रिया ॥ ७ ॥

वरुणादि-गण-क्वाथम् अ-पक्वे ऽभ्यन्तरोत्थिते ।
ऊषकादि-प्रतीवापं पूर्वाह्णे विद्रधौ पिबेत् ॥ ८ ॥

१३.८bv अ-पक्वे ऽभ्यन्तर-स्थिते घृतं विरेचन-द्रव्यैः सिद्धं ताभ्यां च पाययेत् ।
निरूहं स्नेह-वस्तिं च ताभ्याम् एव प्रकल्पयेत् ॥ ९ ॥

पान-भोजन-लेपेषु मधु-शिग्रुः प्रयोजितः ।
दत्तावापो यथा-दोषम् अ-पक्वं हन्ति विद्रधिम् ॥ १० ॥

त्रायन्ती-त्रि-फला-निम्ब-कटुका-मधुकं समम् ।
त्रिवृत्-पटोल-मूलाभ्यां चत्वारो ऽंशाः पृथक् पृथक् ॥ ११ ॥

मसूरान् निस्-तुषाद् अष्टौ तत्-क्वाथः स-घृतो जयेत् ।
विद्रधि-गुल्म-वीसर्प-दाह-मोह-मद-ज्वरान् ॥ १२ ॥

तृण्-मूर्छा-छर्दि-हृद्-रोग-पित्तासृक्-कुष्ठ-कामलाः ।
कुडवं त्रायमाणायाः साध्यम् अष्ट-गुणे ऽम्भसि ॥ १३ ॥

कुडवं तद्-रसाद् धात्री-स्व-रसात् क्षीरतो घृतात् ।
कर्षांशं कल्कितं तिक्ता-त्रायन्ती-धन्वयासकम् ॥ १४ ॥

मुस्ता-तामलकी-वीरा-जीवन्ती-चन्दनोत्पलम् ।
पचेद् एक-त्र संयोज्य तद् घृतं पूर्व-वद् गुणैः ॥ १५ ॥

द्राक्षा मधूकं खर्जूरं विदारी स-शतावरी ।
परूषकाणि त्रि-फला तत्-क्वाथे पाचयेद् घृतम् ॥ १६ ॥

क्षीरेक्षु-धात्री-निर्यास-प्राणदा-कल्क-संयुतम् ।
तच् छीतं शर्करा-क्षौद्र-पादिकं पूर्व-वद् गुणैः ॥ १७ ॥

१३.१७av क्षीरेक्षु-धात्री-निर्यासे १३.१७bv प्राणदा-कल्क-संयुतम् हरेच् छृङ्गादिभिर् असृक् सिरया वा यथान्तिकम् ।
विद्रधिं पच्यमानं च कोष्ठ-स्थं बहिर्-उन्नतम् ॥ १८ ॥

ज्ञात्वोपनाहयेत् शूले स्थिते तत्रैव पिण्डिते ।
तत्-पार्श्व-पीडनात् सुप्तौ दाहादिष्व् अल्पकेषु च ॥ १९ ॥

पक्वः स्याद् विद्रधिं भित्त्वा व्रण-वत् तम् उपाचरेत् ।
अन्तर्-भागस्य चाप्य् एतच् चिह्नं पक्वस्य विद्रदेः ॥ २० ॥

पक्वः स्रोतांसि संपूर्य स यात्य् ऊर्ध्वम् अधो ऽथ-वा ।
स्वयम्-प्रवृत्तं तं दोषम् उपेक्षेत हिताशिनः ॥ २१ ॥

१३.२१bv स यात्य् ऊर्ध्वम् अधो ऽपि वा दशाहं द्वा-दशाहं वा रक्षन् भिषग् उपद्रवात् ।
अ-सम्यग् वहति क्लेदे वरुणादिं सुखाम्भसा ॥ २२ ॥

१३.२२bv रक्षेद् भिषग् उपद्रवात् पाययेन् मधु-शिग्रुं वा यवागूं तेन वा कृताम् ।
यव-कोल-कुलत्थोत्थ-यूषैर् अन्नं च शस्यते ॥ २३ ॥

ऊर्ध्वं दशाहात् त्रायन्ती-सर्पिषा तैल्वकेन वा ।
शोधयेद् बलतः शुद्धः स-क्षौद्रं तिक्तकं पिबेत् ॥ २४ ॥

सर्व-शो गुल्म-वच् चैनं यथा-दोषम् उपाचरेत् ।
सर्वावस्थासु सर्वासु गुग्गुलुं विद्रधीषु च ॥ २५ ॥

१३.२५cv सर्वावस्थासु सर्वेषु कषायैर् यौगिकैर् युञ्ज्यात् स्वैः स्वैस् तद्-वच् छिला-जतु ।
पाकं च वारयेद् यत्नात् सिद्धिः पक्वे हि दैविकी ॥ २६ ॥

अपि चाशु विदाहि-त्वाद् विद्रधिः सो ऽभिधीयते ।
सति चालोचयेन् मेहे प्रमेहाणां चिकित्सितम् ॥ २७ ॥

शौभाञ्जनक-निर्यूहो हिङ्गु-सैन्धव-संयुतः ।
अ-चिराद् विद्रधिं हन्ति प्रातः प्रातर् निषेवितः ॥ २७+१ ॥

कटु-त्रिकं तिक्तक-रोहिणी घनं किराततिक्तो ऽथ शतक्रतोर् यवाः ।
स-सप्तपर्णातिविषा दुरालभा पटोल-मूलं सह त्रायमाणया ॥ २७+२ ॥

गुडूची-चव्यं स-विडङ्ग-निम्बं प्रियङ्गु-नीलोत्पल-लोध्रम् अञ्जनम् ।
स-धातकी-मोच-रसं फल-त्रिकं स-नागरं बिल्व-कपित्थ-शारिवाः ॥ २७+३ ॥

समाः स्युर् एते द्वि-गुणं तु चित्रकं द्विर् अष्ट-भागं कुटज-त्वचं स्यात् ।
सु-सूक्ष्म-पिष्टं शिशिराम्बु-योजितं पिबेन् मनुष्यो ऽर्ध-पलं गुडान्वितम् ॥ २७+४ ॥

बुभुक्षिते स्यान् मृदु भोजनं हितं शशैः स-लावैर् अथ-वा ऽपि तित्तिरैः ।
निहन्ति गुल्मान् कफ-पित्त-संभवान् विराजते शारद-पूर्ण-चन्द्र-वत् ॥ २७+५ ॥

अ-जीर्ण-कासं क्षय-पाण्डु-ते तथा ज्वरातिसार-ग्रहणी-गदापचीः ।
प्रमेह-मूत्र-क्षय-वर्ध्म-विद्रधीञ् जयेत् प्रयुक्तः स-गुडः कटु-त्रिकः ॥ २७+६ ॥
भूनिम्बार्ध-पलं निशा-पल-युक्तं दार्वी-पले द्वे तथा ॥ २७+७अ ॥
दार्व्य्-अर्धेन पुनर्नवां कुरु तथा दार्व्या समः प्रग्रहः ॥ २७+७ब् ॥
सार्धं दुःस्पर्शतः पलं तु कटुका योज्या तद्-अर्धेन वा ॥ २७+७च् ॥
अश्वाह्वं निशया समानम् अमृता-पादाधिकं स्यात् पलम् ॥ २७+७द् ॥
एतद् वत्सक-सप्त-कर्ष-सहितं सु-श्लक्ष्ण-चूर्णी-कृतं ॥ २७+८अ ॥
वासायाः स्व-रसेन पञ्च चतुरस् त्रीन् वा पिबेद् वासरान् ॥ २७+८ब् ॥
भूयस् तद् गुड-वारिणा प्रति-दिनं पेयं पुरः-स्थे रवौ ॥ २७+८च् ॥
एतद् विद्रधि-रोगिणां नि-रुज-कृच् चूर्णं तु गुह्योत्तमम् ॥ २७+८द् ॥
ना-पुत्राय न चा-भ्रात्रे ना-शिष्याया-हितैषिणे ।
आरोग्य-शास्त्र-सर्व-स्वं देयम् एतत् कथञ्-च-न ॥ २७+९ ॥

स्तन-जे व्रण-वत् सर्वं न त्व् एनम् उपनाहयेत् ।
पाटयेत् पालयन् स्तन्य-वाहिनीः कृष्ण-चूचुकौ ॥ २८ ॥

सर्वास्व् आमादय्-अवस्थासु निर्दुहीत च तत् स्तनम् ।
शोधयेत् त्रि-वृता स्निग्धं वृद्धौ स्नेहैश् चलात्मके ॥ २९ ॥

कौशाम्र-तिल्वकैरण्ड-सु-कुमारक-मिश्रकैः ।
ततो ऽनिल-घ्न-निर्यूह-कल्क-स्नेहैर् निरूहयेत् ॥ ३० ॥

रसेन भोजितं यष्टी-तैलेनान्वासयेद् अनु ।
स्वेद-प्रलेपा वात-घ्नाः पक्वे भित्त्वा व्रण-क्रियाम् ॥ ३१ ॥

पित्त-रक्तोद्भवे वृद्धाव् आम-पक्वे यथा-यथम् ।
शोफ-व्रण-क्रियां कुर्यात् प्रततं च हरेद् असृक् ॥ ३२ ॥

गो-मूत्रेण पिबेत् कल्कं श्लैष्मिके पीतदारु-जम् ।
विम्लापनाद् ऋते चास्य श्लेष्म-ग्रन्थि-क्रमो हितः ॥ ३३ ॥

१३.३३cv विम्लापनाद् ऋते चात्र पक्वे च पाटिते तैलम् इष्यते व्रण-शोधनम् ।
सुमनो-ऽरुष्कराङ्कोल्ल-सप्तपर्णेषु साधितम् ॥ ३४ ॥

पटोल-निम्ब-रजनी-विडङ्ग-कुटजेषु च ।
मेदो-जं मूत्र-पिष्टेन सु-स्विन्नं सुरसादिना ॥ ३५ ॥

शिरो-विरेक-द्रव्यैर् वा वर्जयन् फल-सेवनीम् ।
दारयेद् वृद्धि-पत्त्रेण सम्यङ् मेदसि सूद्धृते ॥ ३६ ॥

१३.३६dv सम्यङ् मेदसि चोद्धृते व्रणं माक्षिक-कासीस-सैन्धव-प्रतिसारितम् ।
सीव्येद् अभ्यञ्जनं चास्य योज्यं मेदो-विशुद्धये ॥ ३७ ॥

मनःशिलैला-सुमनो-ग्रन्थि-भल्लातकैः कृतम् ।
तैलम् आ-व्रण-संधानात् स्नेह-स्वेदौ च शीलयेत् ॥ ३८ ॥

मूत्र-जं स्वेदितं स्निग्धैर् वस्त्र-पट्टेन वेष्टितम् ।
विध्येद् अधस्-तात् सेवन्याः स्रावयेच् च यथोदरम् ॥ ३९ ॥

व्रणं च स्थगिका-बद्धं रोपयेद् अन्त्र-हेतुके ।
फल-कोशम् अ-संप्राप्ते चिकित्सा वात-वृद्धि-वत् ॥ ४० ॥

पचेत् पुनर्नव-तुलां तथा दश-पलाः पृथक् ।
दश-मूल-पयस्याश्वगन्धैरण्ड-शतावरीः ॥ ४१ ॥

द्वि-दर्भ-शर-काशेक्षु-मूल-पोटगलान्विताः ।
वहे ऽपाम् अष्ट-भाग-स्थे तत्र त्रिंशत्-पलं गुडात् ॥ ४२ ॥

प्रस्थम् एरण्ड-तैलस्य द्वौ घृतात् पयसस् तथा ।
आवपेद् द्वि-पलांशं च कृष्णा-तन्-मूल-सैन्धवम् ॥ ४३ ॥

यष्टीमधुक-मृद्वीका-यवानी-नागराणि च ।
तत्-सिद्धं सु-कुमाराख्यं सु-कुमारं रसायनम् ॥ ४४ ॥

वातातपाध्व-यानादि-परिहार्येष्व् अ-यन्त्रणम् ।
प्रयोज्यं सु-कुमाराणाम् ईश्वराणाम् सुखात्मनाम् ॥ ४५ ॥

नृणां स्त्री-वृन्द-भर्तृणाम् अ-लक्ष्मी-कलि-नाशनम् ।
सर्व-कालोपयोगेन कान्ति-लावण्य-पुष्टि-दम् ॥ ४६ ॥

वर्ध्म-विद्रधि-गुल्मार्शो-योनि-मेढ्रानिलार्तिषु ।
शोफोदर-खुड-प्लीह-विड्-विबन्धेषु चोत्तमम् ॥ ४७ ॥

रास्ना-यष्ट्य्-अमृतैरण्ड-बला-गोक्षुर-साधितः ।
क्वाथो ऽन्त्र-वृद्धिं हन्त्य् आशु रुबु-तैलेन मिश्रितः ॥ ४७+१ ॥

यायाद् वर्ध्म न चेच् छान्तिं स्नेह-रेकानुवासनैः ।
वस्ति-कर्म पुरः कृत्वा वङ्क्षण-स्थं ततो दहेत् ॥ ४८ ॥

अग्निना मार्ग-रोधार्थं मरुतो ऽर्धेन्दु-वक्रया ।
अङ्गुष्ठस्योपरि स्नाव पीतं तन्तु-समं च यत् ॥ ४९ ॥

उत्क्षिप्य सूच्या तत् तिर्यग् दहेच् छित्त्वा यतो गदः ।
ततो ऽन्य-पार्श्वे ऽन्ये त्व् आहुर् दहेद् वानामिकाङ्गुलेः ॥ ५० ॥

गुल्मे ऽन्यैर् वात-कफ-जे प्लीह्नि चायं विधिः स्मृतः ।
कनिष्ठिकानामिकयोर् विश्वाच्यां च यतो गदः ॥ ५१ ॥

मूलं बिल्व-कपित्थयोः अरलुकस्याग्नेर् बृहत्योर् द्वयोः ॥ ५१+१अ ॥
श्यामा-पूति-करञ्ज-शिग्रुक-तरोर् विश्वौषधारुष्करम् ॥ ५१+१ब् ॥
कृष्णा-ग्रन्थिक-वेल्ल-पञ्च-लवण-क्षाराजमोदान्वितं ॥ ५१+१च् ॥
पीतं काञ्जिक-तोय-...-मथितैश् चूर्णी-कृतं वर्ध्म-जित् ॥ ५१+१द् ॥
अजाजी-कुष्ठ-गोमेद-हपुषा-बदराणि च ।
आरनालेन लेपः स्याद् वर्ध्म-जित् परम् औषधम् ॥ ५१+२ ॥

अवि-क्षीरेण गोधूम-चूर्णं कन्दुरुकस्य च ।
प्रलेपनं सुखोष्णं स्याद् वर्ध्म-जित् परम् औषधम् ॥ ५१+३ ॥

मृत-मात्रे तु वै काके विशस्तेन प्रलेपयेत् ।
मुहूर्तं वर्ध्म मेधावी तत्-क्षणाद् अ-रुजो भवेत् ॥ ५१+४ ॥

# अध्याय 14

गुल्मं बद्ध-शकृद्-वातं वातिकं तीव्र-वेदनम् ।
रूक्ष-शीतोद्भवं तैलैः साधयेद् वात-रोगिकैः ॥ १ ॥

पानान्नान्वासनाभ्यङ्गैः स्निग्धस्य स्वेदम् आचरेत् ।
आनाह-वेदना-स्तम्भ-विबन्धेषु विशेषतः ॥ २ ॥

स्रोतसां मार्दवं कृत्वा जित्वा मारुतम् उल्बणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्मम् अपोहति ॥ ३ ॥

स्नेह-पानं हितं गुल्मे विशेषेणोर्ध्व-नाभि-जे ।
पक्वाशय-गते वस्तिर् उभयं जठराश्रये ॥ ४ ॥

दीप्ते ऽग्नौ वातिके गुल्मे विबन्धे ऽनिल-वर्चसोः ।
बृंहणान्य् अन्न-पानानि स्निग्धोष्णानि प्रदापयेत् ॥ ५ ॥

पुनः पुनः स्नेह-पानं निरूहाः सानुवासनाः ।
प्रयोज्या वात-जे गुल्मे कफ-पित्तानुरक्षिणः ॥ ६ ॥

१४.६dv कफ-पित्तानुरक्षिणा वस्ति-कर्म परं विद्याद् गुल्म-घ्नं तद् धि मारुतम् ।
स्व-स्थाने प्रथमं जित्वा सद्यो गुल्मम् अपोहति ॥ ७ ॥

तस्माद् अभीक्ष्ण-शो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वात-पित्त-कफात्मकाः ॥ ८ ॥

हिङ्गु-सौवर्चल-व्योष-विड-दाडिम-दीप्यकैः ।
पुष्कराजाजी-धान्याम्ल-वेतस-क्षार-चित्रकैः ॥ ९ ॥

शठी-वचाजगन्धैला-सुरसैर् दधि-संयुतैः ।
शूलानाह-हरं सर्पिः साधयेद् वात-गुल्मिनाम् ॥ १० ॥

हपुषोषण-पृथ्वीका-पञ्च-कोलक-दीप्यकैः ।
साजाजी-सैन्धवैर् दध्ना दुग्धेन च रसेन च ॥ ११ ॥

दाडिमान् मूलकात् कोलात् पचेत् सर्पिर् निहन्ति तत् ।
वात-गुल्मोदरानाह-पार्श्व-हृत्-कोष्ठ-वेदनाः ॥ १२ ॥

योन्य्-अर्शो-ग्रहणी-दोष-कास-श्वासा-रुचि-ज्वरान् ।
दश-मूलं बलां कालां सुषवीं द्वौ पुनर्नवौ ॥ १३ ॥

१४.१३cv दश-मूलं बलां कालीं पौष्करैरण्ड-रास्नाश्वगन्धा-भार्ग्य्-अमृता-शठीः ।
पचेद् गन्ध-पलाशं च द्रोणे ऽपां द्वि-पलोन्मितम् ॥ १४ ॥

यवैः कोलैः कुलत्थैश् च माषैश् च प्रास्थिकैः सह ।
क्वाथे ऽस्मिन् दधि-पात्रे च घृत-प्रस्थं विपाचयेत् ॥ १५ ॥

स्व-रसैर् दाडिमाम्रात-मातुलुङ्गोद्भवैर् युतम् ।
तथा तुषाम्बु-धान्याम्ल-शुक्तैः श्लक्ष्णैश् च कल्कितैः ॥ १६ ॥

भार्गी-तुम्बुरु-षड्ग्रन्था-ग्रन्थि-रास्नाग्नि-धान्यकैः ।
यवानक-यवान्य्-अम्ल-वेतसासित-जीरकैः ॥ १७ ॥

अजाजी-हिङ्गु-हपुषा-कारवी-वृषकोषकैः ।
निकुम्भ-कुम्भ-मूर्वेभ-पिप्पली-वेल्ल-दाडिमैः ॥ १८ ॥

श्वदंष्ट्रा-त्रपुसैर्वारु-बीज-हिंस्राश्मभेदकैः ।
मिशि-द्वि-क्षार-सुरस-शारिवा-नीलिनी-फलैः ॥ १९ ॥

त्रि-कटु-त्रि-पटूपेतैर् दाधिकं तद् व्यपोहति ।
रोगान् आशु-तरान् पूर्वान् कष्टान् अपि च शीलितम् ॥ २० ॥

अपस्मार-गदोन्माद-मूत्राघातानिलामयान् ।
त्र्य्-ऊषण-त्रि-फला-धान्य-चविका-वेल्ल-चित्रकैः ॥ २१ ॥

१४.२१av अपस्मार-गरोन्माद- कल्की-कृतैर् घृतं पक्वं स-क्षीरं वात-गुल्म-नुत् ।
तुलां लशुन-कन्दानां पृथक् पञ्च-पलांशकम् ॥ २२ ॥

पञ्च-मूलं महच् चाम्बु-भारार्धे तद् विपाचयेत् ।
पाद-शेषं तद्-अर्धेन दाडिम-स्व-रसं सुराम् ॥ २३ ॥

धान्याम्लं दधि चादाय पिष्टांश् चार्ध-पलांशकान् ।
त्र्य्-ऊषण-त्रि-फला-हिङ्गु-यवानी-चव्य-दीप्यकान् ॥ २४ ॥

साम्ल-वेतस-सिन्धूत्थ-देवदारून् पचेद् घृतात् ।
तैः प्रस्थं तत् परं सर्व-वात-गुल्म-विकार-जित् ॥ २५ ॥

१४.२५av साम्ल-वेतस-सिन्धूत्थं १४.२५bv देवदारु पचेद् घृतात् षट्-पलं वा पिबेत् सर्पिर् यद् उक्तं राज-यक्ष्मणि ।
प्रसन्नया वा क्षीरार्थः सुरया दाडिमेन वा ॥ २६ ॥

घृते मारुत-गुल्म-घ्नः कार्यो दध्नः सरेण वा ।
वात-गुल्मे कफो वृद्धो हत्वाग्निम् अ-रुचिं यदि ॥ २७ ॥

हृल्-लासं गौरवं तन्द्रां जनयेद् उल्लिखेत् तु तम् ।
शूलानाह-विबन्धेषु ज्ञात्वा स-स्नेहम् आशयम् ॥ २८ ॥

निर्यूह-चूर्ण-वटकाः प्रयोज्या घृत-भेषजैः ।
कोल-दाडिम-घर्माम्बु-तक्र-मद्याम्ल-काञ्जिकैह् ॥ २९ ॥

मण्डेन वा पिबेत् प्रातश् चूर्णान्य् अन्नस्य वा पुरः ।
चूर्णानि मातुलुङ्गस्य भावितान्य् अ-सकृद् रसे ॥ ३० ॥

कुर्वीत कार्मुक-तरान् वटकान् कफ-वातयोः ॥ ३१अब् ॥
हिङ्गु-वचा-विजया-पशुगन्धा-दाडिम-दीप्यक-धान्यक-पाठाः ॥ ३१च्द् ॥
पुष्कर-मूल-शठी-हपुषाग्नि-क्षार-युग-त्रि-पटु-त्रि-कटूनि ॥ ३१एf ॥
साजाजि-चव्यं सह-तिन्तिडीकं स-वेतसाम्लं विनिहन्ति चूर्णं ।
हृत्-पार्श्व-वस्ति-त्रिक-योनि-पायु-शूलानि वाय्व्-आम-कफोद्भवानि ॥ ३२ ॥

कृच्छ्रान् गुल्मान् वात-विण्-मूत्र-सङ्गं कण्ठे बन्धं हृद्-ग्रहं पाण्डु-रोगम् ।
अन्ना-श्रद्धा-प्लीह-दुर्-नाम-हिध्मा-वर्ध्माध्मान-श्वास-कासाग्नि-सादान् ॥ ३३ ॥

लवण-यवानी-दीप्यक-कण-नागरम् उत्तरोत्तरं वृद्धम् ।
सर्व-समांश-हरीतकी- चूर्णं वैश्वानरः साक्षात् ॥ ३४ ॥

१४.३४cv सर्व-समांशं हरीतकी- १४.३४cv सर्व-समांशा विजया- १४.३४dv चूर्णो वैश्वानरः साक्षात् त्रि-कटुकम् अजमोदा सैन्धवं जीरके द्वे ॥ ३५अ ॥
सम-धरण-घृतानाम् अष्टमो हिङ्गु-भागः ॥ ३५ब् ॥
प्रथम-कवड-भोज्यः सर्पिषा संप्रयुक्तो ॥ ३५च् ॥
१४.३५cv प्रथम-कवड-भोज्यः सर्पिषा चूर्णको ऽयं जनयति जठराग्निं वात-गुल्मं निहन्ति ॥ ३५द् ॥
१४.३५dv जनयति भृशम् अग्निं वात-गुल्मं निहन्ति हिङ्गूग्रा-विड-शुण्ठ्य्-अजाजि-विजया-वाट्याभिधानामयैश् ॥ ३६अ ॥
चूर्णः कुम्भ-निकुम्भ-मूल-सहितैर् भागोत्तरं वर्धितैः ॥ ३६ब् ॥
पीतः कोष्ण-जलेन कोष्ठ-ज-रुजो गुल्मोदरादीन् अयं ॥ ३६च् ॥
शार्दूलः प्रसभं प्रमथ्य हरति व्याधीन् मृगौघान् इव ॥ ३६द् ॥
सिन्धूत्थ-पथ्या-कण-दीप्यकानां ॥ ३७अ ॥
चूर्णानि तोयैः पिबतां कवोष्णैः ॥ ३७ब् ॥
प्रयाति नाशं कफ-वात-जन्मा ॥ ३७च् ॥
नाराच-निर्भिन्न इवामयौघः ॥ ३७द् ॥
पूतीक-पत्त्र-गज-चिर्भट-चव्य-वह्नि- ॥ ३८अ ॥
-व्योषं च संस्तर-चितं लवणोपधानम् ॥ ३८ब् ॥
दग्ध्वा विचूर्ण्य दधि-मस्तु-युतं प्रयोज्यं ॥ ३८च् ॥
गुल्मोदर-श्वयथु-पाण्डु-गुदोद्भवेषु ॥ ३८द् ॥
१४.३८dv गुल्मोदर-श्वयथु-पाण्डु-गदोद्भवेषु हिङ्गु-त्रि-गुणं सैन्धवम् अस्मात् त्रि-गुणं च तैलम् ऐरण्डम् ॥ ३९अब् ॥
तत् त्रि-गुण-लशुन-रसं गुल्मोदर-वर्ध्म-शूल-घ्नम् ।
मातुलुङ्ग-रसो हिङ्गु दाडिमं विड-सैन्धवम् ॥ ४० ॥

सुरा-मण्डेन पातव्यं वात-गुल्म-रुजापहम् ।
शुण्ठ्याः कर्षं गुडस्य द्वौ धौतात् कृष्ण-तिलात् पलम् ॥ ४१ ॥

१४.४१bv वात-गुल्म-ज्वरापहम् खादन्न् एक-त्र संचूर्ण्य कोष्ण-क्षीरानुपो जयेत् ।
वात-हृद्-रोग-गुल्मार्शो-योनि-शूल-शकृद्-ग्रहान् ॥ ४२ ॥

पिबेद् एरण्ड-तैलं तु वात-गुल्मी प्रसन्नया ।
श्लेष्मण्य् अनु-बले वायौ पित्ते तु पयसा सह ॥ ४३ ॥

विवृद्धं यदि वा पित्तं संतापं वात-गुल्मिनः ।
कुर्याद् विरेचनीयो ऽसौ स-स्नेहैर् आनुलोमिकैः ॥ ४४ ॥

तापानुवृत्ताव् एवं च रक्तं तस्यावसेचयेत् ।
साधयेच् छुद्ध-शुष्कस्य लशुनस्य चतुः-पलम् ॥ ४५ ॥

क्षीरोदके ऽष्ट-गुणिते क्षीर-शेषं च पाचयेत् ।
वात-गुल्मम् उदावर्तं गृध्रसीं विषम-ज्वरम् ॥ ४६ ॥

हृद्-रोगं विद्रधिं शोषं साधयत्य् आशु तत् पयः ।
तैलं प्रसन्ना गो-मूत्रम् आरनालं यवाग्र-जः ॥ ४७ ॥

१४.४७bv नाशयत्य् आशु तत् पयः गुल्मं जठरम् आनाहं पीतम् एक-त्र साधयेत् ।
चित्रक-ग्रन्थिकैरण्ड-शुण्ठी-क्वाथः परं हितः ॥ ४८ ॥

शूलानाह-विबन्धेषु स-हिङ्गु-विड-सैन्धवैः ।
पुष्करैरण्डयोर् मूलं यव-धन्वयवासकम् ॥ ४९ ॥

जलेन क्वथितं पीतं कोष्ठ-दाह-रुजापहम् ।
वाट्याह्वैरण्ड-दर्भाणां मूलं दारु महौषधम् ॥ ५० ॥

पीतं निःक्वाथ्य तोयेन कोष्ठ-पृष्ठांस-शूल-जित् ।
शिला-जं पयसान्-अल्प-पञ्च-मूल-शृतेन वा ॥ ५१ ॥

१४.५१bv कोष्ठ-पृष्ट्य्-अंस-शूल-जित् वात-गुल्मी पिबेद् वाट्यम् उदावर्ते तु भोजयेत् ।
स्निग्धं पैप्पलिकैर् यूषैर् मूलकानां रसेन वा ॥ ५२ ॥

बद्ध-विण्-मारुतो ऽश्नीयात् क्षीरेणोष्णेन यावकम् ।
कुल्माषान् वा बहु-स्नेहान् भक्षयेल् लवणोत्तरान् ॥ ५३ ॥

नीलिनी-त्रिवृता-दन्ती-पथ्या-कम्पिल्लकैः सह ।
स-मलाय घृतं देयं स-विड-क्षार-नागरम् ॥ ५४ ॥

नीलिनीं त्रि-फलां रास्नां बलां कटुक-रोहिणीम् ।
पचेद् विडङ्गं व्याघ्रीं च पालिकानि जलाढके ॥ ५५ ॥

रसे ऽष्ट-भाग-शेषे तु घृत-प्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधा-क्षीर-पलेन च ॥ ५६ ॥

ततो घृत-पलं दद्याद् यवागू-मण्ड-मिश्रितम् ।
जीर्णे सम्यग्-विरिक्तं च भोजयेद् रस-भोजनम् ॥ ५७ ॥

गुल्म-कुष्ठोदर-व्यङ्ग-शोफ-पाण्ड्व्-आमय-ज्वरान् ।
श्वित्रं प्लीहानम् उन्मादं हन्त्य् एतन् नीलिनी-घृतम् ॥ ५८ ॥

कुक्कुटाश् च मयूराश् च तित्तिरि-क्रौञ्च-वर्तकाः ।
शालयो मदिरा सर्पिर् वात-गुल्म-चिकित्सितम् ॥ ५९ ॥

मितम् उष्णं द्रवं स्निग्धं भोजनं वात-गुल्मिनाम् ।
स-मण्डा वारुणी पानं तप्तं वा धान्यकैर् जलम् ॥ ६० ॥

स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ।
द्राक्षाभया-गुड-रसं कम्पिल्लं वा मधु-द्रुतम् ॥ ६१ ॥

१४.६१dv कम्पिल्लं वा मधु-द्रवम् कल्पोक्तं रक्त-पित्तोक्तं गुल्मे रूक्षोष्ण-जे पुनः ।
परं संशमनं सर्पिस् तिक्तं वासा-घृतं शृतम् ॥ ६२ ॥

तृणाख्य-पञ्चक-क्वाथे जीवनीय-गणेन वा ।
शृतं तेनैव वा क्षीरं न्यग्रोधादि-गणेन वा ॥ ६३ ॥

तत्रापि स्रंसनं युञ्ज्याच् छीघ्रम् आत्ययिके भिषक् ।
वैरेचनिक-सिद्धेन सर्पिषा पयसापि वा ॥ ६४ ॥

रसेनामलकेक्षूणां घृत-प्रस्थं विपाचयेत् ।
पथ्या-पादं पिबेत् सर्पिस् तत् सिद्धं पित्त-गुल्म-नुत् ॥ ६५ ॥

पिबेद् वा तैल्वकं सर्पिर् यच् चोक्तं पित्त-विद्रधौ ।
द्राक्षां पयस्यां मधुकं चन्दनं पद्मकं मधु ॥ ६६ ॥

पिबेत् तण्डुल-तोयेन पित्त-गुल्मोपशान्तये ।
द्वि-पलं त्रायमाणाया जल-द्वि-प्रस्थ-साधितम् ॥ ६७ ॥

अष्ट-भाग-स्थितं पूतं कोष्णं क्षीर-समम् पिबेत् ।
पिबेद् उपरि तस्योष्णं क्षीरम् एव यथा-बलम् ॥ ६८ ॥

तेन निर्हृत-दोषस्य गुल्मः शाम्यति पैत्तिकः ।
दाहे ऽभ्यङ्गो घृतैः शीतैः साज्यैर् लेपो हिमौषधैः ॥ ६९ ॥

स्पर्शः सरो-रुहां पत्त्रैः पात्रैश् च प्रचलज्-जलैः ।
विदाह-पूर्व-रूपेषु शूले वह्नेश् च मार्दवे ॥ ७० ॥

बहु-शो ऽपहरेद् रक्तं पित्त-गुल्मे विशेषतः ।
छिन्न-मूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ॥ ७१ ॥

रक्तं हि व्य्-अम्ल-तां याति तच् च नास्ति न चास्ति रुक् ।
हृत-दोषं परिम्लानं जाङ्गलैस् तर्पितं रसैः ॥ ७२ ॥

समाश्वस्तं स-शेषार्तिं सर्पिर् अभ्यासयेत् पुनः ।
रक्त-पित्तातिवृद्ध-त्वात् क्रियाम् अन्-उपलभ्य वा ॥ ७३ ॥

गुल्मे पाकोन्-मुखे सर्वा पित्त-विद्रधि-वत् क्रिया ।
शालिर् गव्याज-पयसी पटोली जाङ्गलं घृतम् ॥ ७४ ॥

धात्री परूषकं द्राक्षा खर्जूरं दाडिमं सिता ।
भोज्यं पाने ऽम्बु बलया बृहत्य्-आद्यैश् च साधितम् ॥ ७५ ॥

श्लेष्म-जे वामयेत् पूर्वम् अ-वम्यम् उपवासयेत् ।
तिक्तोष्ण-कटु-संसर्ग्या वह्निं संधुक्षयेत् ततः ॥ ७६ ॥

१४.७६av कफ-जे वामयेत् पूर्वम् हिङ्ग्व्-आदिभिश् च द्वि-गुण-क्षार-हिङ्ग्व्-अम्ल-वेतसैः ।
निगूढं यदि वोन्नद्धं स्तिमितं कठिनं स्थिरम् ॥ ७७ ॥

आनाहादि-युतं गुल्मं संस्वेद्य विनयेद् अनु ।
घृतं स-क्षार-कटुकं पातव्यं कफ-गुल्मिनाम् ॥ ७८ ॥

१४.७८bv संशोध्य विनयेद् अनु स-व्योष-क्षार-लवणं स-हिङ्गु-विड-दाडिमम् ।
कफ-गुल्मं जयत्य् आशु दश-मूल-शृतं घृतम् ॥ ७९ ॥

भल्लातकानां द्वि-पलं पञ्च-मूलं पलोन्मितम् ।
अल्पं तोयाढके साध्यं पाद-शेषेण तेन च ॥ ८० ॥

तुल्यं घृतं तुल्य-पयो विपचेद् अक्ष-संमितैः ।
विडङ्ग-हिङ्गु-सिन्धूत्थ-याव-शूक-शठी-विडैः ॥ ८१ ॥

स-द्वीपि-रास्ना-यष्ट्य्-आह्व-षड्ग्रन्था-कण-नागरैः ।
एतद् भल्लातक-घृतं कफ-गुल्म-हरं परम् ॥ ८२ ॥

प्लीह-पाण्ड्व्-आमय-श्वास-ग्रहणी-रोग-कास-जित् ।
ततो ऽस्य गुल्मे देहे च समस्ते स्वेदम् आचरेत् ॥ ८३ ॥

१४.८३bv -ग्रहणी-रोग-कास-नुत् सर्व-त्र गुल्मे प्रथमं स्नेह-स्वेदोपपादिते ।
या क्रिया क्रियते याति सा सिद्धिं न विरूक्षिते ॥ ८४ ॥

स्निग्ध-स्विन्न-शरीरस्य गुल्मे शैथिल्यम् आगते ।
यथोक्तां घटिकां न्यस्येद् गृहीते ऽपनयेच् च ताम् ॥ ८५ ॥

वस्त्रान्तरं ततः कृत्वा भिन्द्याद् गुल्मं प्रमाण-वित् ।
वि-मार्गाज-पदादर्शैर् यथा-लाभं प्रपीडयेत् ॥ ८६ ॥

प्रमृज्याद् गुल्मम् एवैकं न त्व् अन्त्र-हृदयं स्पृशेत् ।
तिलैरण्डातसी-बीज-सर्षपैः परिलिप्य च ॥ ८७ ॥

१४.८७dv -सर्षपैः परिलिप्य वा श्लेष्म-गुल्मम् अयः-पात्रैः सुखोष्णैः स्वेदयेत् ततः ।
एवं च विसृतं स्थानात् कफ-गुल्मं विरेचनैः ॥ ८८ ॥

स-स्नेहैर् वस्तिभिश् चैनं शोधयेद् दाशमूलिकैः ।
पिप्पल्य्-आमलक-द्राक्षा-श्यामाद्यैः पालिकैः पचेत् ॥ ८९ ॥

एरण्ड-तैल-हविषोः प्रस्थौ पयसि षड्-गुणे ।
सिद्धो ऽयं मिश्रकः स्नेहो गुल्मिनां स्रंसनं हितम् ॥ ९० ॥

वृद्धि-विद्रधि-शूलेषु वात-व्याधिषु चामृतम् ।
पिबेद् वा नीलिनी-सर्पिर् मात्रया द्वि-पलीनया ॥ ९१ ॥

१४.९१dv मात्रया द्वि-पलीकया तथैव सु-कुमाराख्यं घृतान्य् औदरिकाणि वा ।
द्रोणे ऽम्भसः पचेद् दन्त्याः पलानां पञ्च-विंशतिम् ॥ ९२ ॥

चित्रकस्य तथा पथ्यास् तावतीस् तद्-रसे स्रुते ।
द्वि-प्रस्थे साधयेत् पूते क्षिपेद् दन्ती-समं गुडम् ॥ ९३ ॥

१४.९३bv तावतीस् तद्-रसे शृते तैलात् पलानि चत्वारि त्रिवृतायश् च चूर्णतः ।
कणा-कर्षौ तथा शुण्ठ्याः सिद्धे लेहे तु शीतले ॥ ९४ ॥

मधु तैल-समं दद्याच् चतुर्-जाताच् चतुर्थिकाम् ।
अतो हरीतकीम् एकां सावलेह-पलाम् अदन् ॥ ९५ ॥

सुखं विरिच्यते स्निग्धो दोष-प्रस्थम् अन्-आमयः ।
गुल्म-हृद्-रोग-दुर्-नाम-शोफानाह-गरोदरान् ॥ ९६ ॥

कुष्ठोत्क्लेशा-रुचि-प्लीह-ग्रहणी-विषम-ज्वरान् ।
घ्नन्ति दन्ती-हरीतक्यः पाण्डु-तां च स-कामलाम् ॥ ९७ ॥

१४.९७dv पाण्डु-तां च स-कामलान् सुधा-क्षीर-द्रवं चूर्णं त्रि-वृतायाः सु-भावितम् ।
कार्षिकं मधु-सर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥ ९८ ॥

कुष्ठ-श्यामा-त्रिवृद्-दन्ती-विजया-क्षार-गुग्गुलून् ।
गो-मूत्रेण पिबेद् एकं तेन गुग्गुलुम् एव वा ॥ ९९ ॥

निरूहान् कल्प-सिद्ध्य्-उक्तान् योजयेद् गुल्म-नाशनान् ।
कृत-मूलं महा-वास्तुं कठिनं स्तिमितं गुरुम् ॥ १०० ॥

गूढ-मांसं जयेद् गुल्मं क्षारारिष्टाग्नि-कर्मभिः ।
एकान्तरम् द्व्य्-अन्तरं वा विश्रमय्याथ-वा त्र्य्-अहम् ॥ १०१ ॥

शरीर-दोष-बलयोर् वर्धन-क्षपणोद्यतः ।
अर्शो-ऽश्मरी-ग्रहण्य्-उक्ताः क्षारा योज्याः कफोल्बणे ॥ १०२ ॥

देवदारु-त्रिवृद्-दन्ती-कटुका-पञ्च-कोलकम् ।
स्वर्जिका-याव-शूकाख्यौ श्रेष्ठा-पाठोपकुञ्चिकाः ॥ १०३ ॥

कुष्ठं सर्पसुगन्धां च द्व्य्-अक्षांशं पटु-पञ्चकम् ।
पालिकं चूर्णितं तैल-वसा-दधि-घृताप्लुतम् ॥ १०४ ॥

घटस्यान्तः पचेत् पक्वम् अग्नि-वर्णे घटे च तम् ।
क्षारं गृहीत्वा क्षीराज्य-तक्र-मद्यादिभिः पिबेत् ॥ १०५ ॥

गुल्मोदावर्त-वर्ध्मार्शो-जठर-ग्रहणी-कृमीन् ।
अपस्मार-गरोन्माद-योनि-शुक्रामयाश्मरीः ॥ १०६ ॥

क्षारा-गदो ऽयं शमयेद् विषं चाखु-भुजङ्ग-जम् ।
श्लेष्माणं मधुरं स्निग्धं रस-क्षीर-घृताशिनः ॥ १०७ ॥

छित्त्वा भित्त्वाशयात् क्षारः क्षार-त्वात् क्षारयत्य् अधः ।
मन्दे ऽग्नाव् अ-रुचौ सात्म्यैर् मद्यैः स-स्नेहम् अश्नताम् ॥ १०८ ॥

१४.१०८av छित्त्वा छित्त्वाशयात् क्षारः १४.१०८av छित्त्वा भित्त्वाशयं क्षारः १४.१०८bv क्षार-त्वात् पातयत्य् अधः योजयेद् आसवारिष्टान् निगदान् मार्ग-शुद्धये ।
शालयः षष्टिका जीर्णाः कुलत्था जाङ्गलं पलम् ॥ १०९ ॥

चिरिबिल्वाग्नि-तर्कारी-यवानी-वरुणाङ्कुराः ।
शिग्रुस् तरुण-बिल्वानि बालं शुष्कं च मूलकम् ॥ ११० ॥

१४.११०cv शिग्रोस् तरुण-मूलानि बीजपूरक-हिङ्ग्व्-अम्ल-वेतस-क्षार-दाडिमम् ।
व्योषं तक्रं घृतं तैलं भक्तं पानं तु वारुणी ॥ १११ ॥

धान्याम्लं मस्तु तक्रं च यवानी-विड-चूर्णितम् ।
पञ्च-मूल-शृतं वारि जीर्णं मार्द्वीकम् एव वा ॥ ११२ ॥

पिप्पली-पिप्पली-मूल-चित्रकाजाजी-सैन्धवैः ।
सुरा गुल्मं जयत्य् आशु जगलश् च विमिश्रितः ॥ ११३ ॥

१४.११३dv जाङ्गलश् च विमिश्रितः वमनैर् लङ्घनैः स्वेदैः सर्पिः-पानैर् विरेचनैः ।
वस्ति-क्षारासवारिष्ट-गुटिका-पथ्य-भोजनैः ॥ ११४ ॥

१४.११४cv वस्ति-क्षारासवारिष्टैर् १४.११४dv -गुल्मिका-पथ्य-भोजनैः १४.११४dv गौल्मिकैः पथ्य-भोजनैः श्लैष्मिको बद्ध-मूल-त्वाद् यदि गुल्मो न शाम्यति ।
तस्य दाहं हृते रक्ते कुर्याद् अन्ते शरादिभिः ॥ ११५ ॥

अथ गुल्मं स-पर्य्-अन्तं वाससान्तरितं भिषक् ।
नाभि-वस्त्य्-अन्त्र-हृदयं रोम-राजीं च वर्जयन् ॥ ११६ ॥

नाति-गाढं परिमृशेच् छरेण ज्वलताथ-वा ।
लोहेनारणिकोत्थेन दारुणा तैन्दुकेन वा ॥ ११७ ॥

ततो ऽग्नि-वेगे शमिते शीतैर् व्रण इव क्रिया ।
आमान्वये तु पेयाद्यैः संधुक्ष्याग्निं विलङ्घिते ॥ ११८ ॥

स्वं स्वं कुर्यात् क्रमं मिश्रं मिश्र-दोषे च काल-वित् ।
गत-प्रसव-कालायै नार्यै गुल्मे ऽस्र-संभवे ॥ ११९ ॥

स्निग्ध-स्विन्न-शरीरायै दद्यात् स्नेह-विरेचनम् ।
तिल-क्वाथे घृत-गुड-व्योष-भार्गी-रजो-ऽन्वितः ॥ १२० ॥

पानं रक्त-भवे गुल्मे नष्टे पुष्पे च योषितः ।
भार्गी-कृष्णा-करञ्ज-त्वग्-ग्रन्थिकामरदारु-जम् ॥ १२१ ॥

चूर्णं तिलानां क्वाथेन पीतं गुल्म-रुजापहम् ।
पलाश-क्षार-पात्रे द्वे द्वे पात्रे तैल-सर्पिषोः ॥ १२२ ॥

गुल्म-शैथिल्य-जननीं पक्त्वा मात्रां प्रयोजयेत् ।
न प्रभिद्येत यद्य् एवं दद्याद् योनि-विरेचनम् ॥ १२३ ॥

क्षारेण युक्तं पललं सुधा-क्षीरेण वा ततः ।
ताभ्यां वा भावितान् दद्याद् योनौ कटुक-मत्स्यकान् ॥ १२४ ॥

वराह-मत्स्य-पित्ताभ्यां नक्तकान् वा सु-भावितान् ।
किण्वं वा स-गुड-क्षारं दद्याद् योनौ विशुद्धये ॥ १२५ ॥

रक्त-पित्त-हरं क्षारं लेहयेन् मधु-सर्पिषा ।
लशुनं मदिरां तीक्ष्णां मत्स्यांश् चास्यै प्रयोजयेत् ॥ १२६ ॥

वस्तिं स-क्षीर-गो-मूत्रं स-क्षारं दाशमूलिकम् ।
अ-वर्तमाने रुधिरे हितं गुल्म-प्रभेदनम् ॥ १२७ ॥

१४.१२७av वस्तिं स-क्षौद्र-गो-मुत्रं यमकाभ्यक्त-देहायाः प्रवृत्ते समुपेक्षणम् ।
रसौदनस् तथाहारः पानं च तरुणी सुरा ॥ १२८ ॥

रुधिरे ऽति-प्रवृत्ते तु रक्त-पित्त-हराः क्रियाः ।
कार्या वात-रुग्-आर्तायाः सर्वा वात-हराः पुनः ॥ १२९ ॥

आनाहादाव् उदावर्त-बलास-घ्न्यो यथा-यथम् ॥ १२९अब् ॥

# अध्याय 15

दोषाति-मात्रोपचयात् स्रोतो-मार्ग-निरोधनात् ।
संभवत्य् उदरं तस्मान् नित्यम् एनं विरेचयेत् ॥ १ ॥

१५.१bv स्रोतो-मार्ग-विघातनात् पाययेत् तैलम् ऐरण्डं स-मूत्रं स-पयो ऽपि वा ।
मासं द्वौ वाथ-वा गव्यं मूत्रं माहिषम् एव वा ॥ २ ॥

१५.२cv मासं द्वौ वा तथा गव्यं पिबेद् गो-क्षीर-भुक् स्याद् वा करभी-क्षीर-वर्तनः ।
दाहानाहाति-तृण्-मूर्छा-परीतस् तु विशेषतः ॥ ३ ॥

रूक्षाणां बहु-वातानां दोष-संशुद्धि-काङ्क्षिणाम् ।
स्नेहनीयानि सर्पींषि जठर-घ्नानि योजयेत् ॥ ४ ॥

षट्-पलं दश-मूलाम्बु-मस्तु-द्व्य्-आढक-साधितम् ।
नागर-त्रि-पलं प्रस्थं घृत-तैलात् तथाढकम् ॥ ५ ॥

१५.५cv नागरं त्रि-पलं प्रस्थं मस्तुनः साधयित्वैतत् पिबेत् सर्वोदरापहम् ।
कफ-मारुत-संभूते गुल्मे च परमं हितम् ॥ ६ ॥

चतुर्-गुणे जले मूत्रे द्वि-गुणे चित्रकात् पले ।
कल्के सिद्धं घृत-प्रस्थं स-क्षारं जठरी पिबेत् ॥ ७ ॥

यव-कोल-कुलत्थानां पञ्च-मूलस्य चाम्भसा ।
सुरा-सौवीरकाभ्यां च सिद्धं वा पाययेद् घृतम् ॥ ८ ॥

एभिः स्निग्धाय संजाते बले शान्ते च मारुते ।
स्रस्ते दोषाशये दद्यात् कल्प-दृष्टं विरेचनम् ॥ ९ ॥

पटोल-मूलं त्रि-फलां निशां वेल्लं च कार्षिकम् ।
कम्पिल्ल-नीलिनी-कुम्भ-भागान् द्वि-त्रि-चतुर्-गुणान् ॥ १० ॥

पिबेत् संचूर्ण्य मूत्रेण पेया-पूर्वं ततो रसैः ।
विरिक्तो जाङ्गलैर् अद्यात् ततः षड्-दिवसं पयः ॥ ११ ॥

शृतं पिबेद् व्योष-युतं पीतम् एवं पुनः पुनः ।
हन्ति सर्वोदराण्य् एतच् चूर्णं जातोदकान्य् अपि ॥ १२ ॥

गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिबेत् कर्कन्धु-मृद्वीका-कोलाम्भो-मूत्र-सीधुभिः ॥ १३ ॥

यवानी हपुषा धान्यं शतपुष्पोपकुञ्चिका ।
कारवी पिप्पली-मूलम् अजगन्धा शठी वचा ॥ १४ ॥

चित्रको ऽजाजिकं व्योषं स्वर्णक्षीरी फल-त्रयम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवण-पञ्चकम् ॥ १५ ॥

विडङ्गं च समांशानि दन्त्या भाग-त्रयं तथा ।
त्रिवृद्-विशाले द्वि-गुणे सातला च चतुर्-गुणा ॥ १६ ॥

एष नारायणो नाम चूर्णो रोग-गणापहः ।
नैनं प्राप्याभिवर्धन्ते रोगा विष्णुम् इवासुराः ॥ १७ ॥

१५.१७cv नैनं प्राप्यातिवर्तन्ते तक्रेणोदरिभिः पेयो गुल्मिभिर् बदराम्बुना ।
आनाह-वाते सुरया वात-रोगे प्रसन्नया ॥ १८ ॥

दधि-मण्डेन विट्-सङ्गे दाडिमाम्भोभिर् अर्शसैः ।
परिकर्ते स-वृक्षाम्लैर् उष्णाम्बुभिर् अ-जीर्णके ॥ १९ ॥

भगन्दरे पाण्डु-रोगे कासे श्वासे गल-ग्रहे ।
हृद्-रोगे ग्रहणी-दोषे कुष्ठे मन्दे ऽनले ज्वरे ॥ २० ॥

दंष्ट्रा-विषे मूल-विषे स-गरे कृत्रिमे दोषे ।
यथार्हं स्निग्ध-कोष्ठेन पेयम् एतद् विरेचनम् ॥ २१ ॥

हपुषां काञ्चनक्षीरीं त्रि-फलां नीलिनी-फलम् ।
त्रायन्तीं रोहिणीं तिक्तां सातलां त्रिवृतां वचाम् ॥ २२ ॥

सैन्धवं काल-लवणं पिप्पलीं चेति चूर्णयेत् ।
दाडिम-त्रि-फला-मांस-रस-मूत्र-सुखोदकैः ॥ २३ ॥

पेयो ऽयं सर्व-गुल्मेषु प्लीह्नि सर्वोदरेषु च ।
श्वित्रे कुष्ठेष्व् अ-जरके सदने विषमे ऽनले ॥ २४ ॥

शोफार्शः-पाण्डु-रोगेषु कामलायां हलीमके ।
वात-पित्त-कफांश् चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥

नीलिनीं निचुलं व्योषं क्षारौ लवण-पञ्चकम् ।
चित्रकं च पिबेच् चूर्णं सर्पिषोदर-गुल्म-नुत् ॥ २६ ॥

पूर्व-वच् च पिबेद् दुग्धं क्षामः शुद्धो ऽन्तरान्तरा ।
कारभं गव्यम् आजं वा दद्याद् आत्ययिके गदे ॥ २७ ॥

स्नेहान् एव विरेकार्थे दुर्-बलेभ्यो विशेषतः ।
हरीतकी-सूक्ष्म-रजः-प्रस्थ-युक्तं घृताढकम् ॥ २८ ॥

१५.२८av स्नेहम् एव विरेकार्थे अग्नौ विलाप्य मथितं खजेन यव-पल्लके ।
निधापयेत् ततो मासाद् उद्धृतं गालितं पचेत् ॥ २९ ॥

हरीतकीनां क्वाथेन दध्ना चाम्लेन संयुतम् ।
उदरं गरं अष्ठीलाम् आनाहं गुल्म-विद्रधी ॥ ३० ॥

हन्त्य् एतत् कुष्ठम् उन्मादम् अपस्मारं च पानतः ।
स्नुक्-क्षीर-युक्ताद् गो-क्षीराच् छृत-शीतात् खजाहतात् ॥ ३१ ॥

यज् जातम् आज्यं स्नुक्-क्षीर-सिद्धं तच् च तथा-गुणम् ।
क्षीर-द्रोणं सुधा-क्षीर-प्रस्थार्ध-सहितं दधि ॥ ३२ ॥

१५.३२dv -प्रस्थार्धेन युतं दधि जातं मथित्वा तत्-सर्पिस् त्रिवृत्-सिद्धं च तद्-गुणम् ।
तथा सिद्धं घृत-प्रस्थं पयस्य् अष्ट-गुणे पिबेत् ॥ ३३ ॥

१५.३३dv पयस्य् अष्ट-गुणे पचेत् स्नुक्-क्षीर-पल-कल्केन त्रिवृता-षट्-पलेन च ।
एषां चानु पिबेत् पेयां रसं स्वादु पयो ऽथ-वा ॥ ३४ ॥

घृते जीर्णे विरिक्तश् च कोष्णं नागर-साधितम् ।
पिबेद् अम्बु ततः पेयां ततो यूषं कुलत्थ-जम् ॥ ३५ ॥

पिबेद् रूक्षस् त्र्य्-अहं त्व् एवं भूयो वा प्रतिभोजितः ।
पुनः पुनः पिबेत् सर्पिर् आनुपूर्व्यानयैव च ॥ ३६ ॥

घृतान्य् एतानि सिद्धानि विदध्यात् कुशलो भिषक् ।
गुल्मानां गर-दोषाणाम् उदराणां च शान्तये ॥ ३७ ॥

पीलु-कल्कोपसिद्धं वा घृतम् आनाह-भेदनम् ।
तैल्वकं नीलिनी-सर्पिः स्नेहं वा मिश्रकं पिबेत् ॥ ३८ ॥

हृत-दोषः क्रमाद् अश्नन् लघु-शाल्य्-ओदन-प्रति ।
उपयुञ्जीत जठरी दोष-शोष-निवृत्तये ॥ ३९ ॥

हरीतकी-सहस्रं वा गो-मूत्रेण पयो-ऽनुपः ।
सहस्रं पिप्पलीनां वा स्नुक्-क्षीरेण सु-भावितम् ॥ ४० ॥

पिप्पली-वर्धमानं वा क्षीराशी वा शिला-जतु ।
तद्-वद् वा गुग्गुलुं क्षीरं तुल्यार्द्रक-रसं तथा ॥ ४१ ॥

१५.४१av पिप्पलीं वर्धमानं वा चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ।
मासं युक्तस् तथा हस्ति-पिप्पली-विश्व-भेषजम् ॥ ४२ ॥

विडङ्गं चित्रको दन्ती चव्यं व्योषं च तैः पयः ।
कल्कैः कोल-समैः पीत्वा प्रवृद्धम् उदरं जयेत् ॥ ४३ ॥

भोज्यं भुञ्जीत वा मासं स्नुही-क्षीर-घृतान्वितम् ।
उत्कारिकां वा स्नुक्-क्षीर-पीत-पथ्या-कणा-कृताम् ॥ ४४ ॥

पार्श्व-शूलम् उपस्तम्भं हृद्-ग्रहं च समीरणः ।
यदि कुर्यात् ततस् तैलं बिल्व-क्षारान्वितम् पिबेत् ॥ ४५ ॥

पक्वं वा टुण्टुक-बला-पलाश-तिल-नाल-जैः ।
क्षारैः कदल्य्-अपामार्ग-तर्कारी-जैः प्ठक्-कृतैः ॥ ४६ ॥

कफे वातेन पित्ते वा ताभ्यां वाप्य् आवृते ऽनिले ।
बलिनः स्वौषध-युतं तैलम् एरण्ड-जं हितम् ॥ ४७ ॥

देवदारु-पलाशार्क-हस्ति-पिप्पलि-शिग्रुकैः ।
साश्वकर्णैः स-गो-मूत्रैः प्रदिह्याद् उदरं बहिः ॥ ४८ ॥

वृश्चिकाली-वचा-शुण्ठी-पञ्च-मूल-पुनर्नवात् ।
वर्षाभू-धान्य-कुष्ठाच् च क्वाथैर् मूत्रैश् च सेचयेत् ॥ ४९ ॥

विरिक्त-म्लानम् उदरं स्वेदितं शाल्वणादिभिः ।
वाससा वेष्टयेद् एवं वायुर् नाध्मापयेत् पुनः ॥ ५० ॥

१५.५०bv स्वेदितं शाल्वलादिभिः सु-विरिक्तस्य यस्य स्याद् आध्मानं पुनर् एव तम् ।
सु-स्निग्धैर् अम्ल-लवणैर् निरूहैः समुपाचरेत् ॥ ५१ ॥

सोपस्तम्भो ऽपि वा वायुर् आध्मापयति यं नरम् ।
तीक्ष्णाः स-क्षार-गो-मूत्राः शस्यन्ते तस्य वस्तयः ॥ ५२ ॥

इति सामान्यतः प्रोक्ताः सिद्धा जठरिणां क्रियाः ।
वातोदरे ऽथ बलिनं विदार्य्-आदि-शृतं घृतम् ॥ ५३ ॥

१५.५३av इति सामान्यतः प्रोक्ता १५.५३bv सिद्धा जठरिणां क्रिया पाययेत ततः स्निग्धं स्वेदिताङ्गं विरेचयेत् ।
बहु-शस् तैल्वकेनैनं सर्पिषा मिश्रकेण वा ॥ ५४ ॥

कृते संसर्जने क्षीरं बलार्थम् अवचारयेत् ।
प्राग् उत्क्लेशान् निवर्त्यं च बले लब्धे क्रमात् पयः ॥ ५५ ॥

१५.५५cv प्राग् उत्क्लेशान् निवर्तेत यूषै रसैर् वा मन्दाम्ल-लवणैर् एधितानलम् ।
सोदावर्तं पुनः स्निग्ध-स्विन्नम् आस्थापयेत् ततः ॥ ५६ ॥

तीक्ष्णाधो-भाग-युक्तेन दश-मूलिक-वस्तिना ।
तिलोरुबूक-तैलेन वात-घ्नाम्ल-शृतेन च ॥ ५७ ॥

१५.५७bv दश-मूलेन वस्तिना स्फुरणाक्षेप-संध्य्-अस्थि-पार्श्व-पृष्ठ-त्रिकार्तिषु ।
रूक्षं बद्ध-शकृद्-वातं दीप्ताग्निम् अनुवासयेत् ॥ ५८ ॥

अ-विरेच्यस्य शमना वस्ति-क्षीर-घृतादयः ।
बलिनं स्वादु-सिद्धेन पैत्ते संस्नेह्य सर्पिषा ॥ ५९ ॥

श्यामा-त्रिभण्डी-त्रि-फला-विपक्वेन विरेचयेत् ।
सिता-मधु-घृताढ्येन निरूहो ऽस्य ततो हितः ॥ ६० ॥

न्यग्रोधादि-कषायेण स्नेह-वस्तिश् च तच्-छृतः ।
दुर्-बलं त्व् अनुवास्यादौ शोधयेत् क्षीर-वस्तिभिः ॥ ६१ ॥

जाते चाग्नि-बले स्निग्धं भूयो भूयो विरेचयेत् ।
क्षीरेण स-त्रिवृत्-कल्केनोरुबूक-शृतेन वा ॥ ६२ ॥

१५.६२av जाते त्व् अग्नि-बले स्निग्धं १५.६२dv ंनोरुबूक-शृतेन तम् सातला-त्रायमाणाभ्यां शृतेनारग्वधेन वा ।
स-कफे वा स-मूत्रेण स-तिक्ताज्येन सानिले ॥ ६३ ॥

१५.६३av सप्तला-त्रायमाणाभ्यां पयसान्य-तमेनैषां विदार्य्-आदि-शृतेन वा ।
भुञ्जीत जठरं चास्य पायसेनोपनाहयेत् ॥ ६४ ॥

पुनः क्षीरं पुनर् वस्तिं पुनर् एव विरेचनम् ।
क्रमेण ध्रुवम् आतिष्ठन् यत्तः पित्तोदरं जयेत् ॥ ६५ ॥

१५.६५dv यतः पित्तोदरं जयेत् वत्सकादि-विपक्वेन कफे संस्नेह्य सर्पिषा ।
स्विन्नं स्नुक्-क्षीर-सिद्धेन बल-वन्तं विरेचितम् ॥ ६६ ॥

संसर्जयेत् कटु-क्षार-युक्तैर् अन्नैः कफापहैः ।
मूत्र-त्र्य्-ऊषण-तैलाढ्यो निरूहो ऽस्य ततो हितः ॥ ६७ ॥

मुष्ककादि-कषायेण स्नेह-वस्तिश् च तच्-छृतः ।
भोजनं व्योष-दुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥

स्तैमित्या-रुचि-हृल्-लासे मन्दे ऽग्नौ मद्य-पाय च ।
दद्याद् अरिष्टान् क्षारांश् च कफ-स्त्यान-स्थिरोदरे ॥ ६९ ॥

१५.६९av स्तैमित्या-रुचि-हृल्-लासैर् १५.६९dv कफे स्त्याने स्थिरोदरे हिङ्गूपकुल्ये त्रि-फलां देवदारु निशा-द्वयम् ।
भल्लातकं शिग्रु-फलं कटुकां तिक्तकं वचां ॥ ७० ॥

शुण्ठीं माद्रीं घनं कुष्ठं सरलं पटु-पञ्चकम् ।
दाहयेज् जर्जरी-कृत्य दधि-स्नेह-चतुष्क-वत् ॥ ७१ ॥

अन्तर्-धूमं ततः क्षाराद् बिडाल-पदकं पिबेत् ।
मदिरा-दधि-मण्डोष्ण-जलारिष्ट-सुरासवैः ॥ ७२ ॥

१५.७२dv -जलारिष्ट-सुधासवैः उदरं गुल्मम् अष्ठीलां तूण्यौ शोफं विषूचिकाम् ।
प्लीह-हृद्-रोग-गुद-जान् उदावर्तं च नाशयेत् ॥ ७३ ॥

जयेद् अरिष्ट-गो-मूत्र-चूर्णायस्-कृति-पानतः ।
स-क्षार-तैल-पानैश् च दुर्-बलस्य कफोदरम् ॥ ७४ ॥

उपनाह्यं स-सिद्धार्थ-किण्वैर् बीजैश् च मूलकात् ।
कल्कितैर् उदरं स्वेदम् अभीक्ष्णं चात्र योजयेत् ॥ ७५ ॥

१५.७५cv कल्कितैर् उदर-स्वेदम् संनिपातोदरे कुर्यान् नाति-क्षीण-बलानले ।
दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियाम् इमाम् ॥ ७६ ॥

दन्ती-द्रवन्ती-फल-जं तैलं पाने च शस्यते ।
क्रिया-निवृत्ते जठरे त्रि-दोषे तु विशेषतः ॥ ७७ ॥

दद्याद् आपृच्छ्य तज्-ज्ञातीन् पातुं मद्येन कल्कितम् ।
मूलं काकादनी-गुञ्जा-करवीरक-संभवम् ॥ ७८ ॥

पान-भोजन-संयुक्तं दद्याद् वा स्थावरं विषम् ।
यस्मिन् वा कुपितः सर्पो विमुञ्चति फले विषम् ॥ ७९ ॥

तेनास्य दोष-संघातः स्थिरो लीनो वि-मार्ग-गः ।
बहिः प्रवर्तते भिन्नो विषेणाशु प्रमाथिना ॥ ८० ॥

तथा व्रजत्य् अ-गद-तां शरीरान्तरम् एव वा ।
हृत-दोषं तु शीताम्बु-स्नातं तं पाययेत् पयः ॥ ८१ ॥

पेयां वा त्रिवृतः शाकं माण्डूक्या वास्तुकस्य वा ।
काल-शाकं यवाख्यं वा खादेत् स्व-रस-साधितम् ॥ ८२ ॥

निर्-अम्ल-लवण-स्नेहं स्विन्ना-स्विन्नम् अन्-अन्न-भुक् ।
मासम् एकं ततश् चैव तृषितः स्व-रसं पिबेत् ॥ ८३ ॥

१५.८३cv मासम् एकं ततश् चैवं एवं विनिर्हृते शाकैर् दोषे मासात् परं ततः ।
दुर्-बलाय प्रयुञ्जीत प्राण-भृत् कारभं पयः ॥ ८४ ॥

प्लीहोदरे यथा-दोषं स्निग्धस्य स्वेदितस्य च ।
सिरां भुक्त-वतो दध्ना वाम-बाहौ विमोक्षयेत् ॥ ८५ ॥

लब्धे बले च भूयो ऽपि स्नेह-पीतं विशोधितम् ।
समुद्र-शुक्ति-जं क्षारं पयसा पाययेत् तथा ॥ ८६ ॥

अम्ल-स्रुतं विड-कणा-चूर्णाढ्यं नक्तमाल-जम् ।
शौभाञ्जनस्य वा क्वाथं सैन्धवाग्नि-कणान्वितम् ॥ ८७ ॥

हिङ्ग्व्-आदि-चूर्णं क्षाराज्यं युञ्जीत च यथा-बलम् ।
पिप्पली-नागरं दन्ती-समांशं द्वि-गुणाभयम् ॥ ८८ ॥

१५.८८dv -समांशं द्वि-गुणाभया विडार्धांश-युतं चूर्णम् इदम् उष्णाम्बुना पिबेत् ।
विडङ्गं चित्रकं सक्तून् स-घृतान् सैन्धवं वचाम् ॥ ८९ ॥

दग्ध्वा कपाले पयसा गुल्म-प्लीहापहं पिबेत् ।
तैलोन्मिश्रैर् बदरक-पत्त्रैः संमर्दितैः समुपनद्धः ॥ ९० ॥

मुसलेन पीडितो ऽनु च याति प्लीहा पयो-भुजो नाशम् ।
रोहीतक-लताः क्लृप्ताः खण्ड-शः साभया जले ॥ ९१ ॥

मूत्रे वासुनुयात् तच् च सप्त-रात्र-स्थितं पिबेत् ।
कामला-प्लीह-गुल्मार्शः-कृमि-मेहोदरापहम् ॥ ९२ ॥

१५.९२av मूत्रे वासुनुयात् तत् तु रोहीतक-त्वचः कृत्वा पलानां पञ्च-विंशतिम् ।
कोल-द्वि-प्रस्थ-संयुक्तं कषायम् उपकल्पयेत् ॥ ९३ ॥

पालिकैः पञ्च-कोलैस् तु तैः समस्तैश् च तुल्यया ।
रोहीतक-त्वचा पिष्टैर् घृत-प्रस्थं विपाचयेत् ॥ ९४ ॥

प्लीहाभिवृद्धिं शमयत्य् एतद् आशु प्रयोजितम् ।
कदल्यास् तिल-नालानां क्षारेण क्षुरकस्य च ॥ ९५ ॥

१५.९५av प्लीहाभिवृद्धिं शमयेद् १५.९५अच् प्लीहाति-वृद्धिं शमयत्य् १५.९५dv क्षारेणेक्षुरकस्य च तैलं पक्वं जयेत् पानात् प्लीहानं कफ-वात-जम् ।
अ-शान्तौ गुल्म-विधिना योजयेद् अग्नि-कर्म च ॥ ९६ ॥

अ-प्राप्त-पिच्छा-सलिले प्लीह्नि वात-कफोल्बणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीर-वस्तयः ॥ ९७ ॥

रक्तावसेकः संशुद्धिः क्षीर-पानं च शस्यते ।
यकृति प्लीह-वत् कर्म दक्षिणे तु भुजे सिराम् ॥ ९८ ॥

स्विन्नाय बद्धोदरिणे मूत्र-तीक्ष्णौषधान्वितम् ।
स-तैल-लवणं दद्यान् निरूहं सानुवासनम् ॥ ९९ ॥

परिस्रंसीनि चान्नानि तीक्ष्णं चास्मै विरेचनम् ।
उदावर्त-हरं कर्म कार्यं यच् चानिलापहम् ॥ १०० ॥

छिद्रोदरम् ऋते स्वेदाच् छलेष्मोदर-वद् आचरेत् ।
जातं जातं जलं स्राव्यम् एवं तद् यापयेद् भिषक् ॥ १०१ ॥

अपां दोष-हराण्य् आदौ योजयेद् उदकोदरे ।
मूत्र-युक्तानि तीक्ष्णानि विविध-क्षार-वन्ति च ॥ १०२ ॥

दीपनीयैः कफ-घ्नैश् च तम् आहारैर् उपाचरेत् ।
क्षारं छाग-करीषाणां स्रुतं मूत्रे ऽग्निना पचेत् ॥ १०३ ॥

घनी-भवति तस्मिंश् च कर्षांशं चूर्णितं क्षिपेत् ।
पिप्पली पिप्पली-मूलं शुण्ठी लवण-पञ्चकम् ॥ १०४ ॥

निकुम्भ-कुम्भ-त्रि-फला-स्वर्णक्षीरी-विषाणिकाः ।
स्वर्जिका-क्षार-षड्ग्रन्था-सातला-यव-शूक-जम् ॥ १०५ ॥

कोलाभा गुटिकाः कृत्वा ततः सौवीरकाप्लुताः ।
पिबेद् अ-जरके शोफे प्रवृद्धे चोदकोदरे ॥ १०६ ॥

१५.१०६dv प्रवृद्धे च दकोदरे इत्य् औषधैर् अ-प्रशमे त्रिषु बद्धोदरादिषु ।
प्रयुञ्जीत भिषक् शस्त्रम् आर्त-बन्धु-नृपार्थितः ॥ १०७ ॥

स्निग्ध-स्विन्न-तनोर् नाभेर् अधो बद्ध-क्षतान्त्रयोः ।
पाटयेद् उदरं मुक्त्वा वामतश् चतुर्-अङ्गुलात् ॥ १०८ ॥

चतुर्-अङ्गुल-मानं तु निष्कास्यान्त्राणि तेन च ।
निरीक्ष्यापनयेद् वाल-मल-लेपोपलादिकम् ॥ १०९ ॥

छिद्रे तु शल्यम् उद्धृत्य विशोध्यान्त्र-परिस्रवम् ।
मर्कोटैर् दंशयेच् छिद्रं तेषु लग्नेषु चाहरेत् ॥ ११० ॥

१५.११०bv विशोध्यान्त्रं परिस्रवम् कायं मूर्ध्नो ऽनु चान्त्राणि यथा-स्थानं निवेशयेत् ।
अक्तानि मधु-सर्पिर्भ्याम् अथ सीव्येद् बहिर् व्रणम् ॥ १११ ॥

१५.१११bv यथा-स्थानं विवेशयेत् ततः कृष्ण-मृदालिप्य बध्नीयाद् यष्टि-मिश्रया ।
निवात-स्थः पयो-वृत्तिः स्नेह-द्रोण्यां वसेत् ततः ॥ ११२ ॥

स-जले जठरे तैलैर् अभ्यक्तस्यानिलापहैः ।
स्विन्नस्योष्णाम्बुना-कक्षम् उदरे पट्ट-वेष्टिते ॥ ११३ ॥

१५.११३dv उदरे परिवेष्टिते बद्ध-च्छिद्रोदित-स्थाने विध्येद् अङ्गुल-मात्रकम् ।
निधाय तस्मिन् नाडीं च स्रावयेद् अर्धम् अम्भसः ॥ ११४ ॥

अथास्य नाडीम् आकृष्य तैलेन लवणेन च ।
व्रणम् अभ्यज्य बद्ध्वा च वेष्टयेद् वाससोदरम् ॥ ११५ ॥

तृतीये ऽह्नि चतुर्थे वा यावद् आ-षो-डशं दिनम् ।
तस्य विश्रम्य विश्रम्य स्रावयेद् अल्प-शो जलम् ॥ ११६ ॥

१५.११६bv यावद् वा-दिन-षो-डश विवेष्टयेद् गाढ-तरं जठरं वाससा श्लथम् ।
निःसुते लङ्घितः पेयाम् अ-स्नेह-लवणां पिबेत् ॥ ११७ ॥

१५.११७bv जठरं च श्लथा-श्लथम् स्यात् क्षीर-वृत्तिः षण्-मासांश् त्रीन् पेयां पयसा पिबेत् ।
त्रींश् चान्यान् पयसैवाद्यात् फलाम्लेन रसेन वा ॥ ११८ ॥

अल्प-शो ऽ-स्नेह-लवणं जीर्णं श्यामाक-कोद्रवम् ।
प्रयतो वत्सरेणैवं विजयेत जलोदरम् ॥ ११९ ॥

वर्ज्येषु यन्त्रितो दिष्टे नात्य्-अ-दिष्टे जितेन्द्रियः ।
सर्वम् एवोदरं प्रायो दोष-संघात-जं यतः ॥ १२० ॥

अतो वातादि-शमनी क्रिया सर्व-त्र शस्यते ।
वह्निर् मन्द-त्वम् आयाति दोषैः कुक्षौ प्रपूरिते ॥ १२१ ॥

१५.१२१bv क्रिया सर्वा प्रशस्यते तस्माद् भोज्यानि भोज्यानि दीपनानि लघूनि च ।
स-पञ्च-मूलान्य् अल्पाम्ल-पटु-स्नेह-कटूनि च ॥ १२२ ॥

भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ।
यवागूं पयसा सिद्धां प्र-कामं भोजयेन् नरम् ॥ १२३ ॥

पिबेद् इक्षु-रसं चानु जठराणां निवृत्तये ।
स्वं स्वं स्थानं व्रजन्त्य् एषां वात-पित्त-कफास् तथा ॥ १२४ ॥

अत्य्-अर्थोष्णाम्ल-लवणं रूक्षं ग्राहि हिमं गुरु ।
गुडं तैल-कृतं शाकं वारि पानावगाहयोः ॥ १२५ ॥

१५.१२५av अत्य्-अर्थोष्णाम्बु-लवणं आयासाध्व-दिवा-स्वप्न-यानानि च परित्यजेत् ।
नात्य्-अच्छ-सान्द्र-मधुरं तक्रं पाने प्रशस्यते ॥ १२६ ॥

स-कणा-लवणं वाते पित्ते सोषण-शर्करम् ।
यवानी-सैन्धवाजाजी-मधु-व्योषैः कफोदरे ॥ १२७ ॥

त्र्य्-ऊषण-क्षार-लवणैः संयुतं निचयोदरे ।
मधु-तैल-वचा-शुण्ठी-शताह्वा-कुष्ठ-सैन्धवैः ॥ १२८ ॥

१५.१२८cv मधु-तैल-वरा-शुण्ठी- १५.१२८cv मधु-तैल-वसा-शुण्ठी- प्लीह्नि बद्धे तु हपुषा-यवानी-पट्व्-अजाजिभिः ।
स-कृष्णा-माक्षिकं छिद्रे व्योष-वत् सलिलोदरे ॥ १२९ ॥

गौरवा-रोचकानाह-मन्द-वह्न्य्-अतिसारिणाम् ।
तक्रं वात-कफार्तानाम् अमृत-त्वाय कल्पते ॥ १३० ॥

प्रयोगाणां च सर्वेषाम् अनु क्षीरं प्रयोजयेत् ।
स्थैर्य-कृत् सर्व-धातूनां बल्यं दोषानुबन्ध-हृत् ॥ १३१ ॥

भेषजापचिताङ्गानां क्षीरम् एवामृतायते ॥ १३१अब् ॥

# अध्याय 16

पाण्ड्व्-आमयी पिबेत् सर्पिर् आदौ कल्याणकाह्वयम् ।
पञ्च-गव्यं महा-तिक्तं शृतं वारग्वधादिना ॥ १ ॥

१६.१av पाण्डु-रोगी पिबेत् सर्पिर् दाडिमात् कुडवो धान्यात् कुडवार्धं पलं पलम् ।
चित्रकाच् छृङ्गवेराच् च पिप्पल्य्-अर्ध-पलं च तैः ॥ २ ॥

कल्कितैर् विंशति-पलं घृतस्य सलिलाढके ।
सिद्धं हृत्-पाण्डु-गुल्मार्शः-प्लीह-वात-कफार्ति-नुत् ॥ ३ ॥

दीपनं श्वास-कास-घ्नं मूढ-वातानुलोमनम् ।
दुःख-प्रसविनीनां च वन्ध्यानां च प्रशस्यते ॥ ४ ॥

स्नेहितं वामयेत् तीक्ष्णैः पुनः स्निग्धं च शोधयेत् ।
पयसा मूत्र-युक्तेन बहु-शः केवलेन वा ॥ ५ ॥

दन्ती-फल-रसे कोष्णे काश्मर्याञ्जलिम् आसुतम् ।
द्राक्षाञ्जलिं वा मृदितं तत् पिबेत् पाण्डु-रोग-जित् ॥ ६ ॥

१६.६av दन्ती-पल-रसे कोष्णे मूत्रेण पिष्टां पथ्यां वा तत्-सिद्धं वा फल-त्रयम् ।
स्वर्णक्षीरी-त्रिवृच्-छ्यामा-भद्रदारु-महौषधम् ॥ ७ ॥

गो-मूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत् ।
साधितं क्षीरम् एभिर् वा पिबेद् दोषानुलोमनम् ॥ ८ ॥

मूत्रे स्थितं वा सप्ताहं पयसायो-रजः पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ९ ॥

शुद्धश् चोभयतो लिह्यात् पथ्यां मधु-घृत-द्रुताम् ।
विशाला-कटुका-मुस्ता-कुष्ठ-दारु-कलिङ्गकाः ॥ १० ॥

१६.१०bv पथ्या मधु-घृत-द्रुताः १६.१०cv विशालां कटुकां मुस्तां १६.१०dv कुष्ठं दारु-कलिङ्गकाः कर्षांशा द्वि-पिचुर् मूर्वा कर्षार्धांशा घुणप्रिया ।
पीत्वा तच् चूर्णम् अम्भोभिः सुखैर् लिह्यात् ततो मधु ॥ ११ ॥

पाण्डु-रोगं ज्वरं दाहं कासं श्वासम् अ-रोचकम् ।
गुल्मानाहाम-वातांश् च रक्त-पित्तं च तज् जयेत् ॥ १२ ॥

वासा-गुडूची-त्रि-फला-कट्वी-भूनिम्ब-निम्ब-जः ।
क्वाथः क्षौद्र-युतो हन्ति पाण्डु-पित्तास्र-कामलाः ॥ १३ ॥

व्योषाग्नि-वेल्ल-त्रि-फला-मुस्तैस् तुल्यम् अयो-रजः ।
चूर्णितं तक्र-मध्व्-आज्य-कोष्णाम्भोभिः प्रयोजितम् ॥ १४ ॥

कामला-पाण्डु-हृद्-रोग-कुष्ठार्शो-मेह-नाशनम् ।
गुड-नागर-मण्डूर-तिलांशान् मानतः समान् ॥ १५ ॥

पिप्पली-द्वि-गुणान् दद्याद् गुटिकां पाण्डु-रोगिणे ।
ताप्यं दार्व्यास् त्वचं चव्यं ग्रन्थिकं देवदारु च ॥ १६ ॥

व्योषादि-नवकं चैतच् चूर्णयेद् द्वि-गुणं ततः ।
मण्डूरं चाञ्जन-निभं सर्वतो ऽष्ट-गुणे ऽथ तत् ॥ १७ ॥

१६.१७av व्योषादि-नवकं चेति पृथग् विपक्वे गो-मूत्रे वटकी-करण-क्षमे ।
प्रक्षिप्य वटकान् कुर्यात् तान् खादेत् तक्र-भोजनः ॥ १८ ॥

एते मण्डूर-वटकाः प्राण-दाः पाण्डु-रोगिणाम् ।
कुष्ठान्य् अ-जरकं शोफम् ऊरु-स्तम्भम् अ-रोचकम् ॥ १९ ॥

अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ।
ताप्याद्रि-जतु-रौप्यायो-मलाः पञ्च-पलाः पृथक् ॥ २० ॥

चित्रक-त्रि-फला-व्योष-विडङ्गैः पालिकैः सह ।
शर्कराष्ट-पलोन्मिश्राश् चूर्णिता मधुना द्रुताः ॥ २१ ॥

१६.२१dv चूर्णिता मधुना युताः १६.२१dv चूर्णिताः स-मधु-द्रुताः पाण्डु-रोगं विषं कासं यक्ष्माणं विषमं ज्वरम् ।
कुष्ठान्य् अ-जरकं मेहं शोफं श्वासम् अ-रोचकम् ॥ २२ ॥

विशेषाद् धन्त्य् अपस्मारं कामलां गुद-जानि च ।
कौटज-त्रि-फला-निम्ब-पटोल-घन-नागरैः ॥ २३ ॥

भावितानि दशाहानि रसैर् द्वि-त्रि-गुणानि वा ।
शिला-जतु-पलान्य् अष्टौ तावती सित-शर्करा ॥ २४ ॥

त्वक्क्षीरी-पिप्पली-धात्री-कर्कटाख्याः पलोन्मिताः ।
निदिग्ध्याः फल-मूलाभ्यां पलं युक्त्या त्रि-जातकम् ॥ २५ ॥

१६.२५cv निदिग्धा-फल-मूलाभ्यां मधु-त्रि-पल-संयुक्तान् कुर्याद् अक्ष-समान् गुडान् ।
दाडिमाम्बु-पयः-पक्षि-रस-तोय-सुरासवान् ॥ २६ ॥

१६.२६av मधु-त्रि-पल-संयुक्तं तान् भक्षयित्वानुपिबेन् निर्-अन्नो भुक्त एव वा ।
पाण्डु-कुष्ठ-ज्वर-प्लीह-तमकार्शो-भगन्दरम् ॥ २७ ॥

हृन्-मूत्र-पूति-शुक्राग्नि-दोष-शोष-गरोदरम् ।
कासासृग्-दर-पित्तासृक्-शोफ-गुल्म-गलामयान् ॥ २८ ॥

मेह-वर्ध्म-भ्रमान् हन्युः सर्व-दोष-हराः शिवाः ।
द्राक्षा-प्रस्थं कणा-प्रस्थं शर्करार्ध-तुलां तथा ॥ २९ ॥

द्वि-पलं मधुकं शुण्ठीं त्वक्क्षीरीं च विचूर्णितम् ।
धात्री-फल-रस-द्रोणे तत् क्षिप्त्वा लेह-वत् पचेत् ॥ ३० ॥

शीतान् मधु-प्रस्थ-युताद् लिह्यात् पाणि-तलं ततः ।
हलीमकं पाण्डु-रोगं कामलां च नियच्छति ॥ ३१ ॥

कनीयः-पञ्च-मूलाम्बु शस्यते पान-भोजने ।
पाण्डूनां कामलार्तानां मृद्वीकामलकाद् रसः ॥ ३२ ॥

इति सामान्यतः प्रोक्तं पाण्डु-रोगे भिषग्-जितम् ।
विकल्प्य योज्यं विदुषा पृथग् दोष-बलं प्रति ॥ ३३ ॥

१६.३३bv पाण्डु-रोग-भिषग्-जितम् स्नेह-प्रायं पवन-जे तिक्त-शीतं तु पैत्तिके ।
श्लैष्मिके कटु-रूक्षोष्णं विमिश्रं सांनिपातिके ॥ ३४ ॥

१६.३४cv श्लैष्मिके कटु-तीक्ष्णोष्णं १६.३४dv विमिश्रं संनिपात-जे मृदं निर्यापयेत् कायात् तीक्ष्णैः संशोधनैः पुरः ।
बलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत् ॥ ३५ ॥

१६.३५av मृदं निर्वापयेत् कायात् १६.३५dv शुद्धे कोष्ठे नियोजयेत् व्योष-बिल्व-द्वि-रजनी-त्रि-फला-द्वि-पुनर्नवम् ।
मुस्तान्य् अयो-रजः पाठा विडङ्गं देवदारु च ॥ ३६ ॥

वृश्चिकाली च भार्गी च स-क्षीरैस् तैः शृतं घृतम् ।
सर्वान् प्रशमयत्य् आशु विकारान् मृत्तिका-कृतान् ॥ ३७ ॥

तद्-वत् केसर-यष्ट्य्-आह्व-पिप्पली-क्षीर-शाद्वलैः ।
मृद्-द्वेषणाय तल्-लौल्ये वितरेद् भावितां मृदम् ॥ ३८ ॥

वेल्लाग्नि-निम्ब-प्रसवैः पाठया मूर्वयाथ-वा ।
मृद्-भेद-भिन्न-दोषानुगमाद् योज्यं च भेषजम् ॥ ३९ ॥

कामलायां तु पित्त-घ्नं पाण्डु-रोगा-विरोधि यत् ।
पथ्या-शत-रसे पथ्या-वृन्तार्ध-शत-कल्कितः ॥ ४० ॥

प्रस्थः सिद्धो घृताद् गुल्म-कामला-पाण्डु-रोग-नुत् ।
आरग्वधं रसेनेक्षोर् विदार्य्-आमलकस्य वा ॥ ४१ ॥

स-त्र्य्-ऊषणं बिल्व-मात्रं पाययेत् कामलापहम् ।
पिबेन् निकुम्भ-कल्कं वा द्वि-गुडं शीत-वारिणा ॥ ४२ ॥

१६.४२dv द्वि-गुणं शीत-वारिणा कुम्भस्य चूर्णं स-क्षौद्रं त्रैफलेन रसेन वा ।
त्रि-फलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ॥ ४३ ॥

प्रातः प्रातर् मधु-युतं कामलार्ताय योजयेत् ।
निशा-गैरिक-धात्रीभिः कामलापहम् अञ्जनम् ॥ ४४ ॥

१६.४४cv शिला-गैरिक-धात्रीभिः तिल-पिष्ट-निभं यस् तु कामला-वान् सृजेन् मलम् ।
कफ-रुद्ध-पथं तस्य पित्तं कफ-हरैर् जयेत् ॥ ४५ ॥

रूक्ष-शीत-गुरु-स्वादु-व्यायाम-बल-निग्रहैः ।
कफ-संमूर्छितो वायुर् यदा पित्तं बहिः क्षिपेत् ॥ ४६ ॥

हारिद्र-नेत्र-मूत्र-त्वक् श्वेत-वर्चास् तदा नरः ।
भवेत् साटोप-विष्टम्भो गुरुणा हृदयेन च ॥ ४७ ॥

दौर्बल्याल्पाग्नि-पार्श्वार्ति-हिध्मा-श्वासा-रुचि-ज्वरैः ।
क्रमेणाल्पे ऽनुषज्येत पित्ते शाखा-समाश्रिते ॥ ४८ ॥

रसैस् तं रूक्ष-कट्व्-अम्लैः शिखि-तित्तिरि-दक्ष-जैः ।
शुष्क-मूलक-जैर् यूषैः कुलत्थोत्थैश् च भोजयेत् ॥ ४९ ॥

भृशाम्ल-तीक्ष्ण-कटुक-लवणोष्णं च शस्यते ।
स-बीजपूरक-रसं लिह्याद् व्योषं तथाशयम् ॥ ५० ॥

स्वं पित्तम् एति तेनास्य शकृद् अप्य् अनुरज्यते ।
वायुश् च याति प्रशमं सहाटोपाद्य्-उपद्रवैः ॥ ५१ ॥

निवृत्तोपद्रवस्यास्य कार्यः कामलिको विधिः ।
गो-मूत्रेण पिबेत् कुम्भ-कामलायां शिला-जतु ॥ ५२ ॥

मासं माक्षिक-धातुं वा किट्टं वाथ हिरण्य-जम् ।
गुडूची-स्व-रस-क्षीर-साधितेन हलीमकी ॥ ५३ ॥

महिषी-हविषा स्निग्धः पिबेद् धात्री-रसेन तु ।
त्रिवृतां तद्-विरिक्तो ऽद्यात् स्वादु पित्तानिलापहम् ॥ ५४ ॥

द्राक्षा-लेहं च पूर्वोक्तं सर्पींषि मधुराणि च ।
यापनान् क्षीर-वस्तींश् च शीलयेत् सानुवासनान् ॥ ५५ ॥

मार्द्वीकारिष्ट-योगांश् च पिबेद् युक्त्याग्नि-वृद्धये ।
कासिकं चाभया-लेहं पिप्पलीं मधुकं बलाम् ॥ ५६ ॥

१६.५६cv कासिकं वाभया-लेहं पयसा च प्रयुञ्जीत यथा-दोषं यथा-बलम् ।
पाण्डु-रोगेषु कुशलः शोफोक्तं च क्रिया-क्रमम् ॥ ५७ ॥

अयस्-तिल-त्र्य्-ऊषण-कोल-भागैः सर्वैः समं माक्षिक-धातु-चूर्णम् ।
तैर् मोदकः क्षौद्र-युतो ऽनु-तक्रः पाण्ड्व्-आमये दूर-गते ऽपि शस्तः ॥ ५७+१ ॥

# अध्याय 17

सर्व-त्र सर्वाङ्ग-सरे दोष-जे श्वयथौ पुरा ।
सामे विशोषितो भुक्त्वा लघु कोष्णाम्भसा पिबेत् ॥ १ ॥

नागरातिविषा-दारु-विडङ्गेन्द्रयवोषणम् ।
अथ-वा विजया-शुण्ठी-देवदारु-पुनर्नवम् ॥ २ ॥

नवायसं वा दोषाढ्यः शुद्ध्यै मूत्र-हरीतकीः ।
वरा-क्वाथेन कटुका-कुम्भायस्-त्र्य्-ऊषणानि च ॥ ३ ॥

१७.३bv शुद्ध्यै मूत्र-हरीतकीम् अथ-वा गुग्गुलुं तद्-वज् जतु वा शैल-संभवम् ।
मन्दाग्निः शीलयेद् आम-गुरु-भिन्न-विबन्ध-विट् ॥ ४ ॥

तक्रं सौवर्चल-व्योष-क्षौद्र-युक्तं गुडाभयाम् ।
तक्रानु-पानाम् अथ-वा तद्-वद् वा गुड-नागरम् ॥ ५ ॥

आर्द्रकं वा सम-गुडं प्रकुञ्चार्ध-विवर्धितम् ।
परं पञ्च-पलं मासं यूष-क्षीर-रसाशनः ॥ ६ ॥

गुल्मोदरार्शः-श्वयथु-प्रमेहाञ् छ्वास-प्रतिश्यालसका-विपाकान् ।
स-कामला-शोष-मनो-विकारान् कासं कफं चैव जयेत् प्रयोगः ॥ ७ ॥

घृतम् आर्द्रक-नागरस्य कल्क-स्व-रसाभ्यां पयसा च साधयित्वा ।
श्वयथु-क्षवथूदराग्नि-सादैर् अभिभूतो ऽपि पिबन् भवत्य् अ-रोगः ॥ ८ ॥

रसस् तथैवार्द्रक-नागरस्य पेयो ऽथ जीर्णे पयसान्नम् अद्यात् ।
शिलाह्वयं वा त्रि-फला-रसेन हन्यात् त्रि-दोषं श्वयथुं प्रसह्य ॥ ८+१ ॥

पुनर्नवा-निम्ब-पटोल-शुण्ठी- तिक्तामृता-दार्व्य्-अभया-कषायः ।
सर्वाङ्ग-शोफोदर-कास-शूल-श्वासान्वितं पाण्डु-गदं च हन्ति ॥ ८+२ ॥

निर्-आमो बद्ध-शमलः पिबेच् छवयथु-पीडितः ।
त्रि-कटु-त्रिवृता-दन्ती-चित्रकैः साधितं पयः ॥ ९ ॥

मूत्रं गोर् वा महिष्या वा स-क्षीरं क्षीर-भोजनः ।
सप्ताहं मासं अथ-वा स्याद् उष्ट्र-क्षीर-वर्तनः ॥ १० ॥

१७.१०dv स्याद् उष्ट्री-क्षीर-वर्तनः यवानकं यव-क्षारं यवानीं पञ्च-कोलकम् ।
मरिचं दाडिमं पाठां धानकाम् अम्ल-वेतसम् ॥ ११ ॥

बाल-बिल्वं च कर्षांशं साधयेत् सलिलाढके ।
तेन पक्वो घृत-प्रस्थः शोफार्शो-गुल्म-मेह-हा ॥ १२ ॥

दध्नश् चित्रक-गर्भाद् वा घृतं तत्-तक्र-संयुतम् ।
पक्वं स-चित्रकं तद्-वद् गुणैर् युञ्ज्याच् च काल-वित् ॥ १३ ॥

धान्वन्तरं महा-तिक्तं कल्याणम् अभया-घृतम् ।
दश-मूल-कषायस्य कंसे पथ्या-शतं पचेत् ॥ १४ ॥

दत्त्वा गुड-तुलां तस्मिन् लेहे दद्याद् विचूर्णितम् ।
त्रि-जातकं त्रि-कटुकं किञ्-चिच् च यव-शूक-जम् ॥ १५ ॥

प्रस्थार्धं च हिमे क्षौद्रात् तन् निहन्त्य् उपयोजितम् ॥ १६अब् ॥
प्रवृद्ध-शोफ-ज्वर-मेह-गुल्म-कार्श्याम-वाताम्लक-रक्त-पित्तम् ॥ १६च्द् ॥
वैवर्ण्य-मूत्रानिल-शुक्र-दोष-श्वासा-रुचि-प्लीह-गरोदरं च ॥ १६एf ॥
पुराण-यव-शाल्य्-अन्नं दश-मूलाम्बु-साधितम् ॥ १७अब् ॥
अल्पम् अल्प-पटु-स्नेहं भोजनं श्वयथोर् हितम् ।
क्षार-व्योषान्वितैर् मौद्गैः कौलत्थैः स-कणै रसैः ॥ १८ ॥

१७.१८bv भोजनं श्वयथौ हितम् तथा जाङ्गल-जैः कूर्म-गोधा-शल्यक-जैर् अपि ।
अन्-अम्लं मथितं पाने मद्यान्य् औषध-वन्ति च ॥ १९ ॥

अजाजी-शठी-जिवन्ती-कारवी-पौष्कराग्निकैः ।
बिल्व-मध्य-यव-क्षार-वृक्षाम्लैर् बदरोन्मितैः ॥ २० ॥

कृता पेयाज्य-तैलाभ्यां युक्ति-भृष्टा परं हिता ।
शोफातीसार-हृद्-रोग-गुल्मार्शो-ऽल्पाग्नि-मेहिनाम् ॥ २१ ॥

गुणैस् तद्-वच् च पाठायाः पञ्च-कोलेन साधिता ।
शैलेय-कुष्ठ-स्थौणेय-रेणुकागुरु-पद्मकैः ॥ २२ ॥

श्रीवेष्टक-नख-स्पृक्का-देवदारु-प्रियङ्गुभिः ।
मांसी-मागधिका-वन्य-धान्य-ध्यामक-वालकैः ॥ २३ ॥

चतुर्-जातक-तालीश-मुस्ता-गन्ध-पलाशकैः ।
कुर्याद् अभ्यञ्जनं तैलं लेपं स्नानाय तूदकम् ॥ २४ ॥

स्नानं वा निम्ब-वर्षाभू-नक्तमालार्क-वारिणा ।
एकाङ्ग-शोफे वर्षाभू-करवीरक-किंशुकैः ॥ २५ ॥

विशाला-त्रि-फला-लोध्र-नलिका-देवदारुभिः ।
हिंस्रा-कोशातकी-माद्री-तालपर्णी-जयन्तिभिः ॥ २६ ॥

स्थूल-काकादनी-शाल-नाकुली-वृषपर्णिभिः ।
वृद्ध्यर्द्धि-हस्तिकर्णैश् च सुखोष्णैर् लेपनं हितम् ॥ २७ ॥

अथानिलोत्थे श्वयथौ मासार्धं त्रिवृतं पिबेत् ।
तैलम् एरण्ड-जं वात-विड्-विबन्धे तद् एव तु ॥ २८ ॥

प्राग्-भक्तं पयसा युक्तं रसैर् वा कारयेत् तथा ।
स्वेदाभ्यङ्गान् समीर-घ्नान् लेपम् एकाङ्ग-गे पुनः ॥ २९ ॥

मातुलुङ्गाग्निमन्थैन शुण्ठी-हिंस्रामराह्वयैः ।
पैत्ते तिक्तं पिबेत् सर्पिर् न्यग्रोधाद्येन वा शृतम् ॥ ३० ॥

क्षीरं तृड्-दाह-मोहेषु लेपाभ्यङ्गाश् च शीतलाः ।
पटोल-मूल-त्रायन्ती-यष्ट्य्-आह्व-कटुकाभयाः ॥ ३१ ॥

१७.३१cv पटोल-मूर्वा-त्रायन्ती- दारु दार्वी हिमं दन्ती विशाला निचुलं कणा ।
तैः क्वाथः स-घृतः पीतो हन्त्य् अन्तस्-ताप-तृड्-भ्रमान् ॥ ३२ ॥

१७.३२cv तत्-क्वाथः स-घृतः पीतो स-संनिपात-वीसर्प-शोफ-दाह-विष-ज्वरान् ।
आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ॥ ३३ ॥

१७.३३bv -शोफ-दाह-मद-ज्वरान् स्रोतो-विबन्धे मन्दे ऽग्नाव् अ-रुचौ स्तिमिताशयः ।
क्षार-चूर्णासवारिष्ट-मूत्र-तक्राणि शीलयेत् ॥ ३४ ॥

कृष्णा-पुराण-पिण्याक-शिग्रु-त्वक्-सिकतातसीः ।
प्रलेपोन्मर्दने युञ्ज्यात् सुखोष्णा मूत्र-कल्किताः ॥ ३५ ॥

स्नानं मूत्राम्भसी सिद्धे कुष्ठ-तर्कारि-चित्रकैः ।
कुलत्थ-नागराभ्यां वा चण्डागुरु विलेपने ॥ ३६ ॥

कालाजशृङ्गी-सरल-बस्तगन्धा-हयाह्वयाः ।
एकैषीका च लेपः स्याच् छ्वयथाव् एक-गात्र-गे ॥ ३७ ॥

यष्टी-दुग्ध-तिलैर् लेपो नव-नीतेन संयुतः ।
शोफम् आरुष्करं हन्ति वृन्तैः शाल-दलस्य वा ॥ ३७+१ ॥

यथा-दोषं यथासन्नं शुद्धिं रक्तावसेचनम् ।
कुर्वीत मिश्र-दोषे तु दोषोद्रेक-बलात् क्रियाम् ॥ ३८ ॥

अजाजि-पाठा-घन-पञ्च-कोल-व्याघ्री-रजन्यः सुख-तोय-पीताः ।
शोफं त्रि-दोषं चिर-जं प्रवृद्धं निघ्नन्ति भूनिम्ब-महौषधे च ॥ ३९ ॥

अमृता-द्वितयं शिवातिका सुरकाष्ठं स-पुरं स-गो-जलम् ।
श्वयथूदर-कुष्ठ-पाण्डु-ता-कृमि-मेहोर्ध्व-कफानिलापहम् ॥ ४० ॥

इति निजम् अधिकृत्य पथ्यम् उक्तं क्षत-जनिते क्षत-जं विशोधनीयम् ।
स्रुति-हिम-घृत-लेप-सेक-रेकैर् विष-जनिते विष-जिच् च शोफ इष्टम् ॥ ४१ ॥

ग्राम्याब्-जानूपं पिशितम् अ-बलं शुष्क-शाकं तिलान्नं ॥ ४२अ ॥
गौडं पिष्टान्नं दधि स-लवणं विज्जलं मद्यम् अम्लम् ॥ ४२ब् ॥
१७.४२bv गौडं पिष्टान्नं दधि स-लवणं निर्-जलं मद्यम् अम्लम् धाना वल्लूरं समशनम् अथो गुर्व् अ-सात्म्यं विदाहि ॥ ४२च् ॥
स्वप्नं चा-रात्रौ श्वयथु-गद-वान् वर्जयेन् मैथुनं च ॥ ४२द् ॥

# अध्याय 18

आदाव् एव विसर्पेषु हितं लङ्घन-रूक्षणम् ।
रक्तावसेको वमनं विरेकः स्नेहनं न तु ॥ १ ॥

प्रच्छर्दनं विसर्प-घ्नं स-यष्टीन्द्रयवं फलम् ।
पटोल-पिप्पली-निम्ब-पल्लवैर् वा समन्वितम् ॥ २ ॥

रसेन युक्तं त्रायन्त्या द्राक्षायास् त्रैफलेन वा ।
विरेचनं त्रिवृच्-चूर्णं पयसा सर्पिषाथ-वा ॥ ३ ॥

योज्यं कोष्ठ-गते दोषे विशेषेण विशोधनम् ।
अ-विशोध्यस्य दोषे ऽल्पे शमनं चन्दनोत्पलम् ॥ ४ ॥

मुस्त-निम्ब-पटोलं वा पटोलादिकम् एव वा ।
शारिवामलकोशीर-मुस्तं वा क्वथितं जले ॥ ५ ॥

दुरालभां पर्पटकं गुडूचीं विश्व-भेषजम् ।
पाक्यं शीत-कषायं वा तृष्णा-विसर्प-वान् पिबेत् ॥ ६ ॥

दार्वी-पटोल-कटुका-मसूर-त्रि-फलास् तथा ।
स-निम्ब-यष्टी-त्रायन्तीः क्वथिता घृत-मूर्छिताः ॥ ७ ॥

अमृत-वृष-पटोलं मुस्तकं सप्तपर्णं ॥ ७+१अ ॥
खदिरम् असित-वेत्रं निम्ब-पत्त्रं हरिद्रे ॥ ७+१ब् ॥
विविध-विष-विसर्पान् कुष्ठ-विस्फोट-कण्डूर् ॥ ७+१च् ॥
अपनयति मसूरीं शीत-पित्तं ज्वरं च ॥ ७+१द् ॥
शाखा-दुष्टे तु रुधिरे रक्तम् एवादितो हरेत् ।
त्वङ्-मांस-स्नायु-संक्लेदो रक्त-क्लेदाद् धि जायते ॥ ८ ॥

निर्-आमे श्लेष्मणि क्षीणे वात-पित्तोत्तरे हितम् ।
घृतं तिक्तं महा-तिक्तं शृतं वा त्रायमाणया ॥ ९ ॥

निर्हृते ऽस्रे विशुद्धे ऽन्तर्-दोषे त्वङ्-मांस-संधि-गे ।
बहिः-क्रियाः प्रदेहाद्याः सद्यो विसर्प-शान्तये ॥ १० ॥

शताह्वा-मुस्त-वाराही-वंशार्तगल-धान्यकम् ।
सुराह्वा कृष्णगन्धा च कुष्ठं चालेपनं चले ॥ ११ ॥

१८.११dv कुष्ठं वालेपनं चले न्यग्रोधादि-गणः पित्ते तथा पद्मोत्पलादिकम् ।
न्यग्रोध-पादास् तरुणाः कदली-गर्भ-संयुताः ॥ १२ ॥

बिस-ग्रन्थिश् च लेपः स्याच् छत-धौत-घृताप्लुतः ।
पद्मिनी-कर्दमः शीतः पिष्टं मौक्तिकम् एव वा ॥ १३ ॥

शङ्खः प्रवालं शुक्तिर् वा गैरिकं वा घृतान्वितम् ।
त्रि-फला-पद्मकोशीर-समङ्गा-करवीरकम् ॥ १४ ॥

१८.१४dv -समङ्गा-करवीर-जम् नल-मूलान्य् अनन्ता च लेपः श्लेष्म-विसर्प-हा ।
धव-सप्ताह्व-खदिर-देवदारु-कुरण्टकम् ॥ १५ ॥

स-मुस्तारग्वधं लेपो वर्गो वा वरुणादिकः ।
आरग्वधस्य पत्त्राणि त्वचः श्लेष्मातकोद्भवाः ॥ १६ ॥

इन्द्राणि-शाकं काकाह्वा शिरीष-कुसुमानि च ।
सेक-व्रणाभ्यङ्ग-हविर्-लेप-चूर्णान् यथा-यथम् ॥ १७ ॥

१८.१७av इन्द्राणि-शाक-काकाह्वा- १८.१७bv -शिरीष-कुसुमानि च एतैर् एवौषधैः कुर्याद् वायौ लेपा घृताधिकाः ।
कफ-स्थान-गते सामे पित्त-स्थान-गते ऽथ-वा ॥ १८ ॥

अ-शीतोष्णा हिता रूक्षा रक्त-पित्ते घृतान्विताः ।
अत्य्-अर्थ-शीतास् तनवस् तनु-वस्त्रान्तरा-स्थिताः ॥ १९ ॥

१८.१९dv तनु-वस्त्रान्तर-स्थिताः योज्याः क्षणे क्षणे ऽन्ये ऽन्ये मन्द-वीर्यास् त एव च ।
संसृष्ट-दोषे संसृष्टम् एतत् कर्म प्रशस्यते ॥ २० ॥

शत-धौत-घृतेनाग्निं प्रदिह्यात् केवलेन वा ।
सेचयेद् घृत-मण्डेन शीतेन मधुकाम्बुना ॥ २१ ॥

सिताम्भसाम्भो-द-जलैः क्षीरेणेक्षु-रसेन वा ।
पान-लेपन-सेकेषु महा-तिक्तं परं हितम् ॥ २२ ॥

१८.२२av सिताम्भसाम्भो-ज-जलैः ग्रन्थ्य्-आख्ये रक्त-पित्त-घ्नं कृत्वा सम्यग् यथोदितम् ।
कफानिल-घ्नं कर्मेष्टं पिण्ड-स्वेदोपनाहनम् ॥ २३ ॥

ग्रन्थि-विसर्प-शूले तु तैलेनोष्णेन सेचयेत् ।
दश-मूल-विपक्वेन तद्-वन् मूत्रैर् जलेन वा ॥ २४ ॥

सुखोष्णया प्रदिह्याद् वा पिष्टया कृष्णगन्धया ।
नक्तमाल-त्वचा शुष्क-मूलकैः कलिनाथ-वा ॥ २५ ॥

दन्ती चित्रक-मूल-त्वक् सौधार्क-पयसी गुडः ।
भल्लातकास्थि कासीसं लेपो भिन्द्याच् छिलाम् अपि ॥ २६ ॥

१८.२६bv स्नुह्य्-अर्क-पयसी गुडः बहिर्-मार्गाश्रितं ग्रन्थिं किं पुनः कफ-संभवम् ।
दीर्घ-काल-स्थितं ग्रन्थिम् एभिर् भिन्द्याच् च भेषजैः ॥ २७ ॥

मूलकानां कुलत्थानां यूषैः स-क्षार-दाडिमैः ।
गोधूमान्नैर् यवान्नैर् वा स-सीधु-मधु-शार्करैः ॥ २८ ॥

१८.२८cv गोधूमान्नैर् यवान्नैश् च १८.२८dv स-सीधु-मधु-शर्करैः स-क्षौद्रैर् वारुणी-मण्डैर् मातुलुङ्ग-रसान्वितैः ।
त्रि-फलायाः प्रयोगैश् च पिप्पल्याः क्षौद्र-संयुतैः ॥ २९ ॥

१८.२९dv पिप्पली-क्षौद्र-संयुतैः देवदारु-गुडूच्योश् च प्रयोगैर् गिरिजस्य च ।
मुस्त-भल्लात-सक्तूनां प्रयोगैर् माक्षिकस्य च ॥ ३० ॥

धूमैर् विरेकैः शिरसः पूर्वोक्तैर् गुल्म-भेदनैः ।
तप्तायो-हेम-लवण-पाषाणादि-प्रपीडनैः ॥ ३१ ॥

आभिः क्रियाभिः सिद्धाभिर् विविधाभिर् बले स्थितः ।
ग्रन्थिः पाषाण-कठिनो यदि नैवोपशाम्यति ॥ ३२ ॥

अथास्य दाहः क्षारेण शरैर् हेम्नापि वा हितः ।
पाकिभिः पाचयित्वा वा पाटयित्वा तम् उद्धरेत् ॥ ३३ ॥

१८.३३cv पाकिभिः पाचयित्वा च मोक्षयेद् बहु-शश् चास्य रक्तम् उत्क्लेशम् आगतम् ।
पुनश् चापहृते रक्ते वात-श्लेष्म-जिद् औषधम् ॥ ३४ ॥

प्रक्लिन्ने दाह-पाकाभ्यां बाह्यान्तर् व्रण-वत् क्रिया ।
दार्वी-विडङ्ग-कम्पिल्लैः सिद्धं तैलं व्रणे हितम् ॥ ३५ ॥

दूर्वा-स्व-रस-सिद्धं तु कफ-पित्तोत्तरे घृतम् ।
एकतः सर्व-कर्माणि रक्त-मोक्षणम् एकतः ॥ ३६ ॥

विसर्पो न ह्य् अ-संसृष्टः स ऽस्र-पित्तेन जायते ।
रक्तम् एवाश्रयश् चास्य बहु-शो ऽस्रं हरेद् अतः ॥ ३७ ॥

न घृतं बहु-दोषाय देयं यन् न विरेचनम् ।
तेन दोषो ह्य् उपस्तब्धस् त्वग्-रक्त-पिशितं पचेत् ॥ ३८ ॥

# अध्याय 19

कुष्ठिनं स्नेह-पानेन पूर्वं सर्वम् उपाचरेत् ।
तत्र वातोत्तरे तैलं घृतं वा साधितं हितम् ॥ १ ॥

दश-मूलामृतैरण्ड-शार्ङ्गष्टा-मेषशृङ्गिभिः ।
पटोल-निम्ब-कटुका-दार्वी-पाठा-दुरालभाः ॥ २ ॥

पर्पटं त्रायमाणां च पलांशं पाचयेद् अपाम् ।
द्व्य्-आढके ऽष्टांश-शेषेण तेन कर्षोन्मितैस् तथा ॥ ३ ॥

त्रायन्ती-मुस्त-भूनिम्ब-कलिङ्ग-कण-चन्दनैः ।
सर्पिषो द्वा-दश-पलं पचेत् तत् तिक्तकं जयेत् ॥ ४ ॥

पित्त-कुष्ठ-परीसर्प-पिटिका-दाह-तृड्-भ्रमान् ।
कण्डू-पाण्ड्व्-आमयान् गण्डान् दुष्ट-नाडी-व्रणापचीः ॥ ५ ॥

विस्फोट-विद्रधी-गुल्म-शोफोन्माद-मदान् अपि ।
हृद्-रोग-तिमिर-व्यङ्ग-ग्रहणी-श्वित्र-कामलाः ॥ ६ ॥

भगन्दरम् अपस्मारम् उदरं प्रदरं गरम् ।
अर्शो-ऽस्र-पित्तम् अन्यांश् च सु-कृच्छ्रान् पित्त-जान् गदान् ॥ ७ ॥

स-प्रच्छदः पर्पटकः शम्याकः कटुका वचा ।
त्रि-फला पद्मकं पाठा रजन्यौ शारिवे कणे ॥ ८ ॥

निम्ब-चन्दन-यष्ट्य्-आह्व-विशालेन्द्रयवामृताः ।
किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ९ ॥

पटोलातिविषा-मुस्ता-त्रायन्ती-धन्वयासकम् ।
तैर् जले ऽष्ट-गुणे सर्पिर् द्वि-गुणामलकी-रसे ॥ १० ॥

सिद्धं तिक्तान् महा-तिक्तं गुणैर् अभ्यधिकं मतम् ।
कफोत्तरे घृतं सिद्धं निम्ब-सप्ताह्व-चित्रकैः ॥ ११ ॥

कुष्ठोषण-वचा-शाल-प्रियाल-चतुरङ्गुलैः ।
सर्वेषु चारुष्कर-जं तौबरं सार्षपं पिबेत् ॥ १२ ॥

स्नेहं घृतं वा कृमिजित्-पथ्या-भल्लातकैः शृतम् ।
आरग्वधस्य मूलेन शत-कृत्वः शृतं घृतम् ॥ १३ ॥

१९.१३bv -पथ्या-भल्लातक-शृतम् १९.१३dv सप्त-कृत्वः शृतं घृतम् पिबन् कुष्ठं जयत्य् आशु भजन् स-खदिरं जलम् ।
एभिर् एव यथा-स्वं च स्नेहैर् अभ्यञ्जनं हितम् ॥ १४ ॥

१९.१४av पिबेत् कुष्ठं जयत्य् आशु स्निग्धस्य शोधनं योज्यं विसर्पे यद् उदाहृतम् ।
ललाट-हस्त-पादेषु सिराश् चास्य विमोक्षयेत् ॥ १५ ॥

प्रच्छानम् अल्पके कुष्ठे शृङ्गाद्याश् च यथा-यथम् ।
स्नेहैर् आप्याययेच् चैनं कुष्ठ-घ्नैर् अन्तरान्तरा ॥ १६ ॥

मुक्त-रक्त-विरिक्तस्य रिक्त-कोष्ठस्य कुष्ठिनः ।
प्रभञ्जनस् तथा ह्य् अस्य न स्याद् देह-प्रभञ्जनः ॥ १७ ॥

वासामृता-निम्ब-वरा-पटोल-व्याघ्री-करञ्जोदक-कल्क-पक्वम् ।
सर्पिर् विसर्प-ज्वर-कामलास्र-कुष्ठापहं वज्रकम् आमनन्ति ॥ १८ ॥

त्रि-फला-त्रि-कटु-द्वि-कण्टकारी-कटुका-कुम्भ-निकुम्भ-राजवृक्षैः ।
स-वचातिविषाग्निकैः स-पाठैः पिचु-भागैर् नव-वज्र-दुग्ध-मुष्ट्या ॥ १९ ॥

पिष्टैः सिद्धं सर्पिषः प्रस्थम् एभिः क्रूरे कोष्ठे स्नेहनं रेचनं च ।
कुष्ठ-श्वित्र-प्लीह-वर्ध्माश्म-गुल्मान् हन्यात् कृच्छ्रांस् तन् महा-वज्रकाख्यम् ॥ २० ॥
दन्त्य्-आढकम् अपां द्रोणे पक्त्वा तेन घृतं पचेत् ।
धामार्गव-पले पीतं तद् ऊर्ध्वाधो विशुद्धि-कृत् ॥ २१ ॥

आवर्तकी-तुलां द्रोणे पचेद् अष्टांश-शेषितम् ।
तन्-मूलैस् तत्र निर्यूहे घृत-प्रस्थं विपाचयेत् ॥ २२ ॥

पीत्वा तद् एक-दिवसान्तरितं सु-जीर्णे भुञ्जीत कोद्रवम् अ-संस्कृत-काञ्जिकेन ।
कुष्ठं किलासम् अपचीं च विजेतुम् इच्छन् इच्छन् प्रजां च विपुलां ग्रहणं स्मृतिं च ॥
२३ ॥

१९.२३bv भुञ्जीत कोद्रव-सु-संस्कृत-काञ्जिकेन यतेर् लेलीतक-वसा क्षौद्र-जाती-रसान्विता ।
कुष्ठ-घ्नी सम-सर्पिर् वा स-गायत्र्य्-असनोदका ॥ २४ ॥

शालयो यव-गोधूमाः कोरदूषाः प्रियङ्गवः ।
मुद्गा मसूरास् तुबरी तिक्त-शाकानि जाङ्गलम् ॥ २५ ॥

वरा-पटोल-खदिर-निम्बारुष्कर-योजितम् ।
मद्यान्य् औषध-गर्भाणि मथितं चेन्दुराजि-मत् ॥ २६ ॥

अन्न-पानं हितं कुष्ठे न त्व् अम्ल-लवणोषणम् ।
दधि-दुग्ध-गुडानूप-तिल-माषांस् त्यजेत्-तराम् ॥ २७ ॥

पटोल-मूल-त्रि-फला-विशालाः पृथक्-त्रि-भागापचित-त्रि-शाणाः ।
स्युस् त्रायमाणा कटु-रोहिणी च भागार्धिके नागर-पाद-युक्ते ॥ २८ ॥

एतत् पलं जर्जरितं विपक्वं जले पिबेद् दोष-विशोधनाय ।
जीर्णे रसैर् धन्व-मृग-द्वि-जानां पुराण-शाल्य्-ओदनम् आददीत ॥ २९ ॥

कुष्ठं किलासं ग्रहणी-प्रदोषम् अर्शांसि कृच्छ्राणि हलीमकं च ।
षड्-रात्र-योगेन निहन्ति चैतद् हृद्-वस्ति-शूलं विषम-ज्वरं च ॥ ३० ॥

१९.३०cv षड्-रात्र-योगेन निहन्ति चैष विडङ्ग-सारामलकाभयानां पल-त्रयं त्रीणि पलानि कुम्भात् ।
गुडस्य च द्वा-दश मासम् एष जितात्मनां हन्त्य् उपयुज्यमानः ॥ ३१ ॥

कुष्ठ-श्वित्र-श्वास-कासोदरार्शो-मेह-प्लीह-ग्रन्थि-रुग्-जन्तु-गुल्मान् ।
सिद्धं योगं प्राह यक्षो मुमुक्षोर् भिक्षोः प्राणान् माणिभद्रः किलेमम् ॥ ३२ ॥

भूनिम्ब-निम्ब-त्रि-फला-पद्मकातिविषा-कणाः ।
मूर्वा-पटोली-द्वि-निशा-पाठा-तिक्तेन्द्रवारुणीः ॥ ३३ ॥

स-कलिङ्ग-वचास् तुल्या द्वि-गुणाश् च यथोत्तरम् ।
लिह्याद् दन्ती-त्रिवृद्-ब्राह्मीस् चूर्णिता मधु-सर्पिषा ॥ ३४ ॥

कुष्ठ-मेह-प्रसुप्तीनां परमं स्यात् तद् औषधम् ।
वरा-विडङ्ग-कृष्णा वा लिह्यात् तैलाज्य-माक्षिकैः ॥ ३५ ॥

१९.३५av कुष्ठ-मेह-प्रतप्तानां काकोदुम्बरिका-वेल्ल-निम्बाब्द-व्योष-कल्क-वान् ।
हन्ति वृक्षक-निर्यूहः पानात् सर्वांस् त्वग्-आमयान् ॥ ३६ ॥

१९.३६dv पानात् सर्व-त्वग्-आमयान् कुटजाग्नि-निम्ब-नृपतरु-खदिरासन-सप्तपर्ण-निर्यूहे ।
सिद्धा मधु-घृत-युक्ताः कुष्ठ-घ्नीर् भक्षयेद् अभयाः ॥ ३७ ॥

दार्वी-खदिर-निम्बानां त्वक्-क्वाथः कुष्ठ-सूदनः ॥ ३७अब् ॥
निशोत्तमा-निम्ब-पटोल-मूल-तिक्ता-वचा-लोहितयष्टिकाभिः ।
कृतः कषायः कफ-पित्त-कुष्ठं सु-सेवितो धर्म इवोच्छिनत्ति ॥ ३८ ॥

एभिर् एव च शृतं घृतम् उख्यं भेषजैर् जयति मारुत-कुष्ठम् ।
कल्पयेत् खदिर-निम्ब-गुडूची-देवदारु-रजनीः पृथग् एवम् ॥ ३९ ॥

पाठा-दार्वी-वह्नि-घुणेष्टा-कटुकाभिर् ॥ ४०अ ॥
मूत्रं युक्तं शक्रयवैश् चोष्ण-जलं वा ॥ ४०ब् ॥
कुष्ठी पीत्वा मासम् अ-रुक् स्याद् गुद-कीली ॥ ४०च् ॥
मेही शोफी पाण्डुर-जीर्णी कृमि-मांश् च ॥ ४०द् ॥
लाक्षा-दन्ती-मधुरस-वरा-द्वीपि-पाठा-विडङ्ग- ॥ ४१अ ॥
१९.४१av लाक्षा-दन्ती-मधुरस-वरा-द्वीपि-पाठा-विडङ्गं -प्रत्यक्पुष्पी-त्रि-कटु-रजनी-सप्तपर्णाटरूषम् ॥ ४१ब् ॥
१९.४१bv प्रत्यक्पुष्पी-त्रि-कटु-रजनी-सप्तपर्णाटरूषम् रक्ता निम्बं सुरतरु कृतं पञ्च-मूल्यौ च चूर्णं ॥ ४१च् ॥
पीत्वा मासं जयति हित-भुग् गव्य-मूत्रेण कुष्ठम् ॥ ४१द् ॥
निशा-कणा-नागर-वेल्ल-तौबरं स-वह्नि-ताप्यं क्रम-शो विवर्धितम् ।
गवाम्बु-पीतं वटकी-कृतं तथा निहन्ति कुष्ठानि स-दारुणान्य् अपि ॥ ४२ ॥

त्रि-कटूत्तमा-तिलारुष्कराज्य-माक्षिक-सितोपला-विहिता ।
गुटिका रसायनं कुष्ठ-जिच् च वृष्या च सप्त-समा ॥ ४३ ॥

१९.४३cv गुटिका रसायनं स्यात् १९.४३च्च् ठ-हृच् च वृष्या च सप्त-समा १९.४३dv कुष्ठ-जिच् च वृष्या च सप्त-समा चन्द्रशकलाग्नि-रजनी-विडङ्ग-तुबरास्थ्य्-अरुष्कर-त्रि-फलाभिः ।
वटका गुडांश-क्लृप्ताः समस्त-कुष्ठानि नाशयन्त्य् अभ्यस्ताः ॥ ४४ ॥

विडङ्ग-भल्लातक-वाकुचीनां स-द्वीपि-वाराहि-हरीतकीनाम् ।
स-लाङ्गली-कृष्ण-तिलोपकुल्या गुडेन पिण्डी विनिहन्ति कुष्ठम् ॥ ४५ ॥

शशाङ्कलेखा स-विडङ्ग-सारा स-पिप्पलीका स-हुताश-मूला ।
सायो-मला सामलका स-तैला कुष्ठानि कृच्छ्राणि निहन्ति लीढा ॥ ४६ ॥

१९.४६av शशाङ्कलेखा स-विडङ्ग-मूला पथ्या-तिल-गुडैः पिण्डी कुष्ठं सारुष्करैर् जयेत् ।
गुडारुष्कर-जन्तुघ्न-सोमराजी-कृताथ-वा ॥ ४७ ॥

विडङ्गाद्रि-जतु-क्षौद्र-सर्पिष्-मत् खादिरं रजः ।
किटिभ-श्वित्र-दद्रू-घ्नं खादेन् मित-हिताशनः ॥ ४८ ॥

सिता-तैल-कृमिघ्नानि धात्र्य्-अयो-मल-पिप्पलीः ।
लिहानः सर्व-कुष्ठानि जयत्य् अति-गुरूण्य् अपि ॥ ४९ ॥

मुस्तं व्योषं त्रि-फला मञ्जिष्ठा दारु पञ्च-मूले द्वे ।
सप्तच्छद-निम्ब-त्वक् स-विशाला चित्रको मूर्वा ॥ ५० ॥

चूर्णं तर्पण-भागैर् नवभिः संयोजितं स-मध्व्-अंशम् ।
नित्यं कुष्ठ-निबर्हणम् एतत् प्रायोगिकं खादन् ॥ ५१ ॥

श्वयथुं स-पाण्डु-रोगं श्वित्रं ग्रहणी-प्रदोषम् अर्शांसि ।
वर्ध्म-भगन्दर-पिटिका-कण्डू-कोठापचीर् हन्ति ॥ ५२ ॥

रसायन-प्रयोगेण तुबरास्थीनि शीलयेत् ।
भल्लातकं वाकुचिकां वह्नि-मूलं शिलाह्वयम् ॥ ५३ ॥

इति दोषे विजिते ऽन्तस्-त्वक्-स्थे शमनं बहिः प्रलेपादि हितम् ।
तीक्ष्णालेपोत्क्लिष्टं कुष्ठं हि विवृद्धिम् एति मलिने देहे ॥ ५४ ॥

स्थिर-कठिन-मण्डलानां कुष्ठानां पोटलैर् हितः स्वेदः ।
स्विन्नोत्सन्नं कुष्ठं शस्त्रैर् लिखितं प्रलेपनैर् लिम्पेत् ॥ ५५ ॥

येषु न शस्त्रं क्रमते स्पर्शेन्द्रिय-नाशनेषु कुष्ठेषु ।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्य ॥ ५६ ॥

लेपो ऽति-कठिन-परुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।
पीता-गदस्य कार्यो विषैः स-मन्त्रो ऽ-गदैश् चानु ॥ ५७ ॥

१९.५७dv विषैः स-मन्त्रा-गदैश् चानु स्तब्धानि सुप्त-सुप्तान्य् अ-स्वेदन-कण्डुलानि कुष्ठानि ।
घृष्टानि शुष्क-गो-मय-फेनक-शस्त्रैः प्रदेह्यानि ॥ ५८ ॥

मुस्ता त्रि-फला मदनं करञ्ज आरग्वधः कलिङ्ग-यवाः ।
सप्ताह्व-कुष्ठ-फलिनी-दार्व्यः सिद्धार्थकं स्नानम् ॥ ५९ ॥

एष कषायो वमनं विरेचनं वर्णकस् तथोद्घर्षः ।
त्वग्-दोष-कुष्ठ-शोफ-प्रबाधनः पाण्डु-रोग-घ्नः ॥ ६० ॥

करवीर-निम्ब-कुटजाच् छम्याकाच् चित्रकाच् च मूलानाम् ।
मूत्रे दर्वी-लेपी क्वाथो लेपेन कुष्ठ-घ्नः ॥ ६१ ॥

श्वेत-करवीर-मूलं कुटज-करञ्जात् फलं त्वचो दार्व्याः ।
सुमनः-प्रवाल-युक्तो लेपः कुष्ठापहः सिद्धः ॥ ६२ ॥

शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्ष-पत्त्राणि ।
पिष्टा च काकमाची चतुर्-विधः कुष्ठ-हा लेपः ॥ ६३ ॥

व्योष-सर्षप-निशा-गृह-धूमैर् याव-शूक-पटु-चित्रक-कुष्ठैः ।
कोल-मात्र-गुटिकार्ध-विषांशा श्वित्र-कुष्ठ-हरणो वर-लेपः ॥ ६४ ॥

निम्बं हरिद्रे सुरसं पटोलं कुष्ठाश्वगन्धे सुरदारु शिग्रुः ।
स-सर्षपं तुम्बुरु-धान्य-वन्यं चण्डा च चूर्णानि समानि कुर्यात् ॥ ६५ ॥

तैस् तक्र-पिष्टैः प्रथमं शरीरं तैलाक्तम् उद्वर्तयितुं यतेत ।
तथास्य कण्डूः पिटिकाः स-कोठाः कुष्ठानि शोफाश् च शमं व्रजन्ति ॥ ६६ ॥

१९.६६cv तेनास्य कण्डूः पिटिकाः स-कोठाः मुस्तामृतासङ्ग-कटङ्कटेरी-कासीस-कम्पिल्लक-कुष्ठ-लोध्राः ।
गन्धोपलः सर्ज-रसो विडङ्गं मनःशिलाले करवीरक-त्वक् ॥ ६७ ॥

तैलाक्त-गात्रस्य कृतानि चूर्णान्य् एतानि दद्याद् अवचूर्णनार्थम् ।
दद्रूः स-कण्डूः किटिभानि पामा विचर्चिका चेति तथा न सन्ति ॥ ६८ ॥

स्नुग्-गण्डे सर्षपात् कल्कः कुकूलानल-पाचितः ।
लेपाद् विचर्चिकां हन्ति राग-वेग इव त्रपाम् ॥ ६९ ॥

मनःशिलाले मरिचानि तैलम् आर्कं पयः कुष्ठ-हरः प्रदेहः ।
तथा करञ्ज-प्रपुनाट-बीजं कुष्ठान्वितं गो-सलिलेन पिष्टम् ॥ ७० ॥

गुग्गुलु-मरिच-विडङ्गैः सर्षप-कासीस-सर्ज-रस-मुस्तैः ।
श्रीवेष्ट-कालगन्धैर् मनःशिला-कुष्ठ-कम्पिल्लैः ॥ ७१ ॥

उभय-हरिद्रा-सहितैश् चाक्रिक-तैलेन मिश्रितैर् एभिः ।
दिन-कर-कराभितप्तैः कुष्ठं घृष्टं च नष्टं च ॥ ७२ ॥

मरिचं तमाल-पत्त्रं कुष्ठं स-मनःशिलं स-कासीसम् ।
तैलेन युक्तम् उषितं सप्ताहं भाजने ताम्रे ॥ ७३ ॥

तेनालिप्तं सिध्मं सप्ताहाद् घर्म-सेविनो ऽपैति ।
मासान् नवं किलासं स्नानेन विना विशुद्धस्य ॥ ७४ ॥

मयूरक-क्षार-जले सप्त-कृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मती-तैलम् अभ्यङ्गात् सिध्म-नाशनम् ॥ ७५ ॥

वायसजङ्घा-मूलं वमनी-पत्त्राणि मूलकाद् बीजम् ।
तक्रेण भौम-वारे लेपः सिध्मापहः सिद्धः ॥ ७६ ॥

जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकं पयस् तुत्थम् ।
एष घृत-तैल-पाकः सिद्धः सिद्धे च सर्ज-रसः ॥ ७७ ॥

देयः स-मधूच्छिष्टो विपादिका तेन नश्यति ह्य् अक्ता ।
चर्मैक-कुष्ठ-किटिभं कुष्ठं शाम्यत्य् अलसकं च ॥ ७८ ॥

मूलं सप्ताह्वात् त्वक् शिरीषाश्वमाराद् अर्कान् मालत्याश् चित्रकास्फोत-निम्बात् ।
बीजं कारञ्जं सार्षपं प्रापुनाटम् श्रेष्ठा जन्तुघ्नं त्र्य्-ऊषणं द्वे हरिद्रे ॥ ७९ ॥

तैलं तैलं साधितं तैः स-मूत्रैस् त्वग्-दोषाणां दुष्ट-नाडी-व्रणानाम् ।
अभ्यङ्गेन श्लेष्म-वातोद्भवानां नाशायालं वज्रकं वज्र-तुल्यम् ॥ ८० ॥

एरण्ड-तार्क्ष्य-घन-नीप-कदम्ब-भार्गी- ॥ ८१अ ॥
-कम्पिल्ल-वेल्ल-फलिनी-सुरवारुणीभिः ॥ ८१ब् ॥
निर्गुण्ड्य्-अरुष्कर-सुराह्व-सुवर्णदुग्धा- ॥ ८१च् ॥
-श्रीवेष्ट-गुग्गुलु-शिला-पटु-ताल-विश्वैः ॥ ८१द् ॥
तुल्य-स्नुग्-अर्क-दुग्धं सिद्धं तैलं स्मृतं महा-वज्रम् ।
अतिशयित-वज्रक-गुणं श्वित्रार्शो-ग्रन्थि-माला-घ्नम् ॥ ८२ ॥

कुष्ठाश्वमार-भृङ्गार्क-मूत्र-स्नुक्-क्षीर-सैन्धवैः ।
तैलं सिद्धं विषापहम् अभ्यङ्गात् कुष्ठ-जित् परम् ॥ ८३ ॥

सिद्धं सिक्थक-सिन्दूर-पुर-तुत्थक-तार्क्ष्य-जैः ।
कच्छूं विचर्चिकां चाशु कटु-तैलं निबर्हति ॥ ८४ ॥

१९.८४bv -पुर-तुत्थक-तार्क्ष्यकैः १९.८४cv पामां विचर्चिकां चाशु १९.८४dv कटु-तैलं नियच्छति लाक्षा व्योषं प्रापुनाटं च बीजं स-श्रीवेष्टं कुष्ठ-सिद्धार्थकाश् च ।
तक्रोन्मिश्रः स्याद् धरिद्रा च लेपो दद्रूघ्नक्तो मूलकोत्थं च बीजम् ॥ ८५ ॥

चित्रक-शोभाञ्जनकौ गुडूच्य्-अपामार्ग-देवदारूणि ।
खदिरो धवश् च लेपः श्यामा दन्ती द्रवन्ती च ॥ ८६ ॥

लाक्षा-रसाञ्जनैलाः पुनर्नवा चेति कुष्ठिनां लेपाः ।
दधि-मण्ड-युताः पादैः षट् प्रोक्ता मारुत-कफ-घ्नाः ॥ ८७ ॥

जल-वाप्य-लोह-केसर-पत्त्र-प्लव-चन्दन-मृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्त-कफ-कुष्ठे ॥ ८८ ॥

तिक्त-घृतैर् धौत-घृतैर् अभ्यङ्गो दह्यमान-कुष्ठेषु ।
तैलैश् चन्दन-मधुक-प्रपौण्डरीकोत्पल-युतैश् च ॥ ८९ ॥

क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके च चर्म-दले ।
शीताः प्रदेह-सेका व्यधन-विरेकौ घृतं तिक्तम् ॥ ९० ॥

खदिर-वृष-निम्ब-कुटजाः श्रेष्ठा-कृमिजित्-पटोल-मधुपर्ण्यः ।
अन्तर् बहिः प्रयुक्ताः कृमि-कुष्ठ-नुदः स-गो-मुत्राः ॥ ९१ ॥

प्रलेपोद्वर्तन-स्नान-पान-भोजन-कर्मणि ।
शीलितं खादिरं वारि सर्व-त्वग्-दोष-नाशनम् ॥ ९१+१ ॥

वातोत्तरेषु सर्पिर् वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रे ॥ ९२ ॥

१९.९२dv रक्तस्य विरेचनं चाग्र्यम् ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्र-दोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर् भवति तेषाम् ॥ ९३ ॥

दोषे हृते ऽपनीते रक्ते बाह्यान्तरे कृते शमने ।
स्नेहे च काल-युक्ते न कुष्ठम् अतिवर्तते साध्यम् ॥ ९४ ॥

बहु-दोषः संशोध्यः कुष्ठी बहु-शो ऽनुरक्षता प्राणान् ।
दोषे ह्य् अति-मात्र-हृते वायुर् हन्याद् अ-बलम् आशु ॥ ९५ ॥

पक्षात् पक्षाच् छर्दनान्य् अभ्युपेयान् मासान् मासाच् छोधनान्य् अप्य् अधस्-तात् ।
शुद्धिर् मूर्ध्नि स्यात् त्रि-रात्रात् त्रि-रात्रात् षष्ठे षष्ठे मास्य् असृङ्-मोक्षणं च ॥ ९६ ॥

१९.९६dv षष्ठे षष्ठे मास्य् असृङ्-मोक्षणानि यो दुर्-वान्तो दुर्-विरिक्तो ऽथ-वा स्यात् ॥ ९७अ ॥
कुष्ठी दोषैर् उद्धतैर् व्याप्यते ऽसौ ॥ ९७ब् ॥
निः-संदेहं यात्य् अ-साध्य-त्वम् एवं ॥ ९७च् ॥
तस्मात् कृत्स्नान् निर्हरेद् अस्य दोषान् ॥ ९७द् ॥
व्रत-दम-यम-सेवा-त्याग-शीलाभियोगो ॥ ९८अ ॥
द्वि-ज-सुर-गुरु-पूजा सर्व-सत्-त्वेषु मैत्री ॥ ९८ब् ॥
शिव-शिव-सुत-तारा-भास्-करराधनानि ॥ ९८च् ॥
१९.९८cv जिन-जिन-सुत-तारा-भास्-करराधनानि प्रकटित-मल-पापं कुष्ठम् उन्मूलयन्ति ॥ ९८द् ॥

# अध्याय 20

कुष्ठाद् अपि बीभत्सं यच् छीघ्र-तरं च यात्य् अ-साध्य-त्वम् ।
श्वित्रम् अतस् तच्-छान्त्यै यतेत दीप्ते यथा भवने ॥ १ ॥

संशोधनं विशेषात् प्रयोजयेत् पूर्वम् एव देहस्य ।
श्वित्रे स्रंसनम् अग्र्यं मलयू-रस इष्यते स-गुडः ॥ २ ॥

तं पीत्वाभ्यक्त-तनुर् यथा-बलं सूर्य-पाद-संतापम् ।
सेवेत विरिक्त-तनुर् त्र्य्-अहं पिपासुः पिबेत् पेयाम् ॥ ३ ॥

श्वित्रे ऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु निःस्रुतेषु प्रातः प्रातः पिबेत् त्रि-दिनम् ॥ ४ ॥

२०.४dv प्रातः प्रातः पिबेत् पक्षम् मलयूम् असनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथा-बलं फाणितोपेतम् ॥ ५ ॥

फल्ग्व्-अक्ष-वृक्ष-वल्कल-निर्यूहेणेन्दुराजिका-कल्कम् ।
पीत्वोष्ण-स्थितस्य जाते स्फोटे तक्रेण भोजनं निर्-लवणम् ॥ ६ ॥

गव्यं मूत्रं चित्रक-व्योष-युक्तं सर्पिः-कुम्भे स्थापितं क्षौद्र-मिश्रम् ।
पक्षाद् ऊर्ध्वं श्वित्रिणा पेयम् एतत् कार्यं चास्मै कुष्ठ-दिष्टं विधानम् ॥ ७ ॥

२०.७cv पक्षाद् ऊर्ध्वं श्वित्रिभिः पेयम् एतत् मार्कवम् अथ-वा स्वादेद् भृष्टं तैलेन लोह-पात्र-स्थम् ।
बीजक-शृतं च दुग्धं तद् अनु पिबेच् छिवत्र-नाशाय ॥ ८ ॥

पूतीकार्क-व्याधिघात-स्नुहीनां मूत्रे पिष्टाः पल्लवा जाति-जाश् च ।
घ्नन्त्य् आलेपाच् छिवत्र-दुर्-नाम-दद्रू-पामा-कोठान् दुष्ट-नाडी-व्रणांश् च ॥ ९ ॥

द्वैपं दग्धं चर्म मातङ्ग-जं वा श्वित्रे लेपस् तैल-युक्तो वरिष्ठः ।
पूतिः कीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रम् एको ऽपि हन्ति ॥ १० ॥

२०.१०dv क्षारेणाक्तः श्वित्रम् एको निहन्ति रात्रौ गो-मूत्रे वासितान् जर्जराङ्गान् अह्नि च्छायायां शोषयेत् स्फोट-हेतून् ।
एवं वारांस् त्रींस् तैस् ततः श्लक्ष्ण-पिष्टैः स्नुह्याः क्षीरेण श्वित्र-नाशाय लेपः ॥ ११ ॥
अक्ष-तैल-द्रुता लेपः कृष्ण-सर्पोद्भवा मषी ।
शिखि-पित्तं तथा दग्धं ह्रीवेरं वा तद्-आप्लुतम् ॥ १२ ॥

२०.१२av अक्ष-तैल-कृतो लेपः २०.१२av अक्ष-तैल-द्रुतो लेपः कुडवो ऽवल्गुज-बीजाद् धरिताल-चतुर्-भाग-संमिश्रः ।
मूत्रेण गवां पिष्टः स-वर्ण-करणं परं श्वित्रे ॥ १३ ॥

क्षारे सु-दग्धे गज-लिण्ड-जे च गजस्य मूत्रेण परिस्रुते च ।
द्रोण-प्रमाणे दश-भाग-युक्तं दत्त्वा पचेद् बीजम् अवल्गुजानाम् ॥ १४ ॥

२०.१४av क्षारे सु-दग्धे गज-लिण्ड-जे वा २०.१४bv गजस्य मूत्रे च परिस्रुते च श्वित्रं जयेच् चिक्कण-तां गतेन तेन प्रलिम्पन् बहु-शः प्रघृष्टं ।
कुष्ठं मषं वा तिल-कालकं वा यद् वा व्रणे स्याद् अधि-मांस-जातम् ॥ १५ ॥

भल्लातकं द्वीपि-सुधार्क-मूलं गुञ्जा-फलं त्र्य्-ऊषण-शङ्ख-चूर्णम् ।
तुत्थं स-कुष्ठं लवणानि पञ्च क्षार-द्वयं लाङ्गलिकां च पक्त्वा ॥ १६ ॥

२०.१६av भल्लातक-द्वीपि-सुधार्क-मूल- २०.१६bv -गुञ्जा-फल-त्र्य्-ऊषण-शङ्ख-चूर्णम् स्नुग्-अर्क-दुग्धे घनम् आयस-स्थं शलाकया तद् विदधीत लेपम् ।
कुष्ठे किलासे तिल-कालकेषु मषेषु दुर्-नामसु चर्म-कीले ॥ १७ ॥

शुद्ध्या शोणित-मोक्षैर् विरूक्षणैर् भक्षणैश् च सक्तूनाम् ।
श्वित्रं कस्य-चिद् एव प्रशाम्यति क्षीण-पापस्य ॥ १८ ॥

स्निग्ध-स्विन्ने गुड-क्षीर-मत्स्याद्यैः कृमिणोदरे ।
उत्क्लेशित-कृमि-कफे शर्वरीं तां सुखोषिते ॥ १९ ॥

सुरसादि-गणं मूत्रे क्वाथयित्वार्ध-वारिणि ।
तं कषायं कणा-गाल-कृमिजित्-कल्क-योजितम् ॥ २० ॥

स-तैल-स्वर्जिका-क्षारं युञ्ज्याद् वस्तिं ततो ऽहनि ।
तस्मिन्न् एव निरूढं तं पाययेत विरेचनम् ॥ २१ ॥

त्रिवृत्-कल्कं फल-कणा-कषायालोडितं ततः ।
ऊर्ध्वाधः-शोधिते कुर्यात् पञ्च-कोल-युतं क्रमम् ॥ २२ ॥

कटु-तिक्त-कषायाणां कषायैः परिषेचनम् ।
काले विडङ्ग-तैलेन ततस् तम् अनुवासयेत् ॥ २३ ॥

२०.२३bv कषायैः परिषेचयेत् शिरो-रोग-निषेधोक्तम् आचरेन् मूर्ध-गेष्व् अनु ।
उद्रिक्त-तिक्त-कटुकम् अल्प-स्नेहं च भोजनम् ॥ २४ ॥

२०.२४dv अल्प-स्नेहं च भोजयेत् विडङ्ग-कृष्णा-मरिच-पिप्पली-मूल-शिग्रुभिः ।
पिबेत् स-स्वर्जिका-क्षारैर् यवागूं तक्र-साधिताम् ॥ २५ ॥

२०.२५av विडङ्ग-कृष्णा-मधुक- २०.२५cv पिबेत् स-स्वर्जिका-क्षारां रसं शिरीष-किणिही-पारिभद्रक-केम्बुकात् ।
पलाश-बीज-पत्तूर-पूतिकाद् वा पृथक् पिबेत् ॥ २६ ॥

स-क्षौद्रं सुरसादीन् वा लिह्यात् क्षौद्र-युतान् पृथक् ।
शत-कृत्वो ऽश्व-विट्-चूर्णं विडङ्ग-क्वाथ-भावितम् ॥ २७ ॥

कृमि-मान् मधुना लिह्याद् भावितं वा वरा-रसैः ।
शिरो-गतेषु कृमिषु चूर्णं प्रधमनं च तत् ॥ २८ ॥

आखुकर्णी-किसलयैः सु-पिष्टैः पिष्ट-मिश्रितैः ।
पक्त्वा पूपलिकां खादेद् धान्याम्लं च पिबेद् अनु ॥ २९ ॥

२०.२९av आखुपर्णी-किसलयैः स-पञ्च-कोल-लवणम् अ-सान्द्रं तक्रम् एव वा ।
नीप-मार्कव-निर्गुण्डी-पल्लवेष्व् अप्य् अयं विधिः ॥ ३० ॥

२०.३०cv निम्बापामार्ग-निर्गुण्डी- विडङ्ग-चूर्ण-मिश्रैर् वा पिष्टैर् भक्ष्यान् प्रकल्पयेत् ।
विडङ्ग-तण्डुलैर् युक्तम् अर्धांशैर् आतपे स्थितम् ॥ ३१ ॥

२०.३१dv अर्धांशैर् आतप-स्थितम् दिनम् आरुष्करं तैलं पाने वस्तौ च योजयेत् ।
सुराह्व-सरल-स्नेहं पृथग् एवं च कल्पयेत् ॥ ३२ ॥

पुरीष-जेषु सु-तरां दद्याद् वस्ति-विरेचने ।
शिरो-विरेकं वमनं शमनं कफ-जन्मसु ॥ ३३ ॥

रक्त-जानां प्रतीकारं कुर्यात् कुष्ठ-चिकित्सितात् ।
इन्द्र-लुप्त-विधिश् चात्र विधेयो रोम-भोजिषु ॥ ३४ ॥

क्षीराणि मांसानि घृतं गुडं च दधीनि शाकानि च पर्ण-वन्ति ।
समासतो ऽम्लान् मधुरान् रसांश् च कृमीन् जिहासुः परिवर्जयेत ॥ ३५ ॥

## अध्याय 21

केवलं निर्-उपस्तम्भम् आदौ स्नेहैर् उपाचरेत् ।
वायुं सर्पिर्-वसा-मज्ज-तैल-पानैर् नरं ततः ॥ १ ॥

स्नेह-क्लान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः ।
यूषैर् ग्राम्यौदकानूप-रसैर् वा स्नेह-संयुतैः ॥ २ ॥

पायसैः कृशरैः साम्ल-लवणैः सानुवासनैः ।
नावनैस् तर्पणैश् चान्नैः सु-स्निग्धैः स्वेदयेत् ततः ॥ ३ ॥

स्व्-अभ्यक्तं स्नेह-संयुक्तैः शङ्कराद्यैः पुनः पुनः ।
स्नेहाक्तं स्विन्नम् अङ्गं तु वक्रं स्तब्धं स-वेदनम् ॥ ४ ॥

२१.४cv स्नेहाक्त-स्विन्नम् अङ्गं तु यथेष्टम् आनामयितुं सुखम् एव हि शक्यते ।
शुष्काण्य् अपि हि काष्ठानि स्नेह-स्वेदोपपादनैः ॥ ५ ॥

२१.५dv स्नेह-स्वेदोपनाहनैः शक्यं कर्मण्य-तां नेतुं किम् उ गात्राणि जीवताम् ।
हर्ष-तोद-रुग्-आयाम-शोफ-स्तम्भ-ग्रहादयः ॥ ६ ॥

स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ।
स्नेहश् च धातून् संशुष्कान् पुष्णात्य् आशूपयोजितः ॥ ७ ॥

२१.७dv पुष्णात्य् आशु प्रयोजितः बलम् अग्नि-बलं पुष्टिं प्राणांश् चास्याभिवर्धयेत् ।
अ-सकृत् तं पुनः स्नेहैः स्वेदैश् च प्रतिपादयेत् ॥ ८ ॥

२१.८bv प्राणं चास्याभिवर्धयेत् तथा स्नेह-मृदौ कोष्ठे न तिष्ठन्त्य् अनिलामयाः ।
यद्य् एतेन स-दोष-त्वात् कर्मणा न प्रशाम्यति ॥ ९ ॥

मृदुभिः स्नेह-संयुक्तैर् भेषजैस् तं विशोधयेत् ।
घृतं तिल्वक-सिद्धं वा सातला-सिद्धम् एव वा ॥ १० ॥

पयसैरण्ड-तैलं वा पिबेद् दोष-हरं शिवम् ।
स्निग्धाम्ल-लवणोष्णाद्यैर् आहारैर् हि मलश् चितः ॥ ११ ॥

स्रोतो बद्ध्वानिलं रुन्ध्यात् तस्मात् तम् अनुलोमयेत् ।
दुर्-बलो यो ऽ-विरेच्यः स्यात् तं निरूहैर् उपाचरेत् ॥ १२ ॥

२१.१२av स्रोतो रुद्ध्वानिलं रुन्ध्यात् दीपनैः पाचनीयैर् वा भोज्यैर् वा तद्-युतैर् नरम् ।
संशुद्धस्योत्थिते चाग्नौ स्नेह-स्वेदौ पुनर् हितौ ॥ १३ ॥

आमाशय-गते वायौ वमित-प्रतिभोजिते ।
सुखाम्बुना षड्-धरणं वचादिं वा प्रयोजयेत् ॥ १४ ॥

२१.१४cv सुखाम्बुना षट्-चरणं संधुक्षिते ऽग्नौ परतो विधिः केवल-वातिकः ।
मत्स्यान् नाभि-प्रदेश-स्थे सिद्धान् बिल्व-शलाटुभिः ॥ १५ ॥

वस्ति-कर्म त्व् अधो नाभेः शस्यते चावपीडकः ।
कोष्ठ-गे क्षार-चूर्णाद्या हिताः पाचन-दीपनाः ॥ १६ ॥

हृत्-स्थे पयः स्थिरा-सिद्धं शिरो-वस्तिः शिरो-गते ।
स्नैहिकं नावनं धूमः श्रोत्रादीनां च तर्पणम् ॥ १७ ॥

स्वेदाभ्यङ्ग-निवातानि हृद्यं चान्नं त्वग्-आश्रिते ।
शीताः प्रदेहा रक्त-स्थे विरेको रक्त-मोक्षणम् ॥ १८ ॥

२१.१८av स्वेदाभ्यङ्गानि शस्तानि विरेको मांस-मेदः-स्थे निरूहः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैर् अस्थि-मज्ज-गतं जयेत् ॥ १९ ॥

प्रहर्षो ऽन्नं च शुक्र-स्थे बल-शुक्र-करं हितम् ।
विबद्ध-मार्गं दृष्ट्वा तु शुक्रं दद्याद् विरेचनम् ॥ २० ॥

२१.२०bv बल्यं शुक्र-करं हितम् विरिक्तं प्रतिभुक्तं च पूर्वोक्तां कारयेत् क्रियाम् ।
गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥ २१ ॥

२१.२१av विरिक्त-प्रतिभुक्तस्य सिता-काश्मर्य-मधुकैः सिद्धम् उत्थापने पयः ।
स्नाव-संधि-सिरा-प्राप्ते स्नेह-दाहोपनाहनम् ॥ २२ ॥

तैलं संकुचिते ऽभ्यङ्गो माष-सैन्धव-साधितम् ।
आगार-धूम-लवण-तैलैर् लेपः स्रुते ऽसृजि ॥ २३ ॥

सुप्ते ऽङ्गे वेष्ट-युक्ते तु कर्तव्यम् उपनाहनम् ।
अथापतानकेनार्तम् अ-स्रस्ताक्षम् अ-वेपनम् ॥ २४ ॥

अ-स्तब्ध-मेढ्रम् अ-स्वेदं बहिर्-आयाम-वर्जितम् ।
अ-खट्वाघातिनं चैनं त्वरितं समुपाचरेत् ॥ २५ ॥

तत्र प्राग् एव सु-स्निग्ध-स्विन्नाङ्गे तीक्ष्ण-नावनम् ।
स्रोतो-विशुद्धये युञ्ज्याद् अच्छ-पानं ततो घृतम् ॥ २६ ॥

विदार्य्-आदि-गण-क्वाथ-दधि-क्षीर-रसैः शृतम् ।
नाति-मात्रं तथा वायुर् व्याप्नोति सहसैव वा ॥ २७ ॥

कुलत्थ-यव-कोलानि भद्रदार्व्-आदिकं गणम् ।
निःक्वाथ्यानूप-मांसं च तेनाम्लैः पयसापि च ॥ २८ ॥

स्वादु-स्कन्ध-प्रतीवापं महा-स्नेहं विपाचयेत् ।
सेकाभ्यङ्गावगाहान्न-पान-नस्यानुवासनैः ॥ २९ ॥

स हन्ति वातं ते ते च स्नेह-स्वेदाः सु-योजिताः ।
वेगान्तरेषु मूर्धानम् अ-सकृच् चास्य रेचयेत् ॥ ३० ॥

अवपीडैः प्रधमनैस् तीक्ष्णैः श्लेष्म-निबर्हणैः ।
श्वसनासु विमुक्तासु तथा संज्ञां स विन्दति ॥ ३१ ॥

सौवर्चलाभया-व्योष-सिद्धं सर्पिश् चले ऽधिके ॥ ३१अब् ॥
पलाष्टकं तिल्वकतो वरायाः प्रस्थं पलांशं गुरु-पञ्च-मूलम् ।
सैरण्ड-सिंही-त्रिवृतं घटे ऽपां पक्त्वा पचेत् पाद-शृतेन तेन ॥ ३२ ॥

दध्नः पात्रे याव-शूकात् त्रि-बिल्वैः सर्पिः-प्रस्थं हन्ति तत् सेव्यमानम् ।
दुष्टान् वातान् एक-सर्वाङ्ग-संस्थान् योनि-व्यापद्-गुल्म-वध्मोदरं च ॥ ३३ ॥

२१.३३av दध्नः पात्रे याव-शूक-त्रि-बिल्वैः विधिस् तिल्वक-वज् ज्ञेयो रम्यकाशोकयोर् अपि ॥ ३४अब् ॥
२१.३४bv शम्याकाशोकयोर् अपि चिकित्सितम् इदं कुर्याच् छुद्ध-वातापतानके ।
संसृष्ट-दोषे संसृष्टं चूर्णयित्वा कफान्विते ॥ ३५ ॥

तुम्बुरूण्य् अभया हिङ्गु पौष्करं लवण-त्रयम् ।
यव-क्वाथाम्बुना पेयं हृत्-पार्श्वार्त्य्-अपतन्त्रके ॥ ३६ ॥

हिङ्गु सौवर्चलं शुण्ठी दाडिमं साम्ल-वेतसम् ।
पिबेद् वा श्लेष्म-पवन-हृद्-रोगोक्तं च शस्यते ॥ ३७ ॥

आयामयोर् अर्दित-वद् बाह्याभ्यन्तरयोः क्रिया ।
तैल-द्रोण्यां च शयनम् आन्तरो ऽत्र सु-दुस्-तरः ॥ ३८ ॥

वि-वर्ण-दन्त-वदनः स्रस्ताङ्गो नष्ट-चेतनः ।
प्रस्विद्यंश् च धनुः-ष्कम्भी दश-रात्रं न जीवति ॥ ३९ ॥

२१.३९cv प्रस्विद्यंश् च धनुः-स्तम्भी वेगेष्व् अतो अन्य-था जीवेन् मन्देषु विनतो जडः ।
खञ्जः कुणिः पक्ष-हतः पङ्गुलो विकलो ऽथ-वा ॥ ४० ॥

२१.४०dv पङ्गुलो विकलो ऽपि वा हनु-स्रंसे हनू स्निग्ध-स्विन्नौ स्व-स्थानम् आनयेत् ।
उन्नामयेच् च कुशलश् चिबुकं विवृत्ते मुखे ॥ ४१ ॥

नामयेत् संवृते शेषम् एकायाम-वद् आचरेत् ।
जिह्वा-स्तम्भे यथावस्थं कार्यं वात-चिकित्सितम् ॥ ४२ ॥

वाग्-ग्रहे कोष्ण-तोयेन वेतसाम्लं पिबेन् नरः ।
मातुलुङ्ग-रसं तद्-वद् धिङ्गु-सौवर्चलान्वितम् ॥ ४२+१ ॥

अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षि-तर्पणम् ।
स-शोफे वमनं दाह-राग-युक्ते सिरा-व्यधः ॥ ४३ ॥

नव-नीतेन संयुक्तां खादेन् माषेण्डरीं नरः ।
दुर्-वारम् अर्दितं हन्ति सप्ताहान् नात्र संशयः ॥ ४३+१ ॥

स्नेहनं स्नेह-संयुक्तं पक्षाघाते विरेचनम् ।
अव-बाहौ हितं नस्यं स्नेहश् चोत्तर-भक्तिकः ॥ ४४ ॥

माष-बला-शुक-शिम्बी-कट्तृण-रास्नाश्वगन्धोरुबूकाणाम् ।
क्वाथो नस्य-निपीतो रामठ-लवणान्वितः कोष्णः ॥ ४४.१+१ ॥

अपनयति पक्ष-वातं मन्या-स्तम्भं स-कर्ण-नाद-रुजम् ।
दुर्-जयम् अर्दित-वातं सप्ताहाज् जयति चावश्यम् ॥ ४४.१+२ ॥

गुडमञ्जर्या खपुरं वृषभी-मूलं च शिशिर-जल-पिष्टम् ।
नावन-विधौ प्रयोजितम् अव-बाहुक-गल-रुजार्ति-हरम् ॥ ४४+१ ॥

दश-मूल-बला-माष-क्वाथं तैलाज्य-मिश्रितम् ।
सायं भुक्त्वा पिबेन् नस्यं विश्वाच्याम् अव-बाहुके ॥ ४४+२ ॥

ऊरु-स्तम्भे तु न स्नेहो न च संशोधनं हितम् ।
श्लेष्माम-मेदो-बाहुल्याद् युक्त्या तत्-क्षपणान्य् अतः ॥ ४५ ॥

२१.४५av ऊरु-स्तम्भे न च स्नेहो कुर्याद् रूक्षोपचारश् च यव-श्यामाक-कोद्रवाः ।
शाकैर् अ-लवणैः शस्ताः किञ्-चित्-तैलैर् जलैः शृतैः ॥ ४६ ॥

जाङ्गलैर् अ-घृतैर् मांसैर् मध्व्-अम्भो-ऽरिष्ट-पायिनः ।
वत्सकादिर् हरिद्रादिर् वचादिर् वा स-सैन्धवः ॥ ४७ ॥

आढ्य-वाते सुखाम्भोभिः पेयः षड्-धरणो ऽथ-वा ।
लिह्यात् क्षौद्रेण वा श्रेष्ठा-चव्य-तिक्ता-कणा-घनात् ॥ ४८ ॥

२१.४८av आम-वाते सुखाम्भोभिः २१.४८bv पेयः षट्-चरणो ऽथ-वा २१.४८dv -चव्य-तिक्ता-कणा-घनान् चित्रकेन्द्रयवाः पाठा कटुकातिविषा निशा ।
वात-व्याधि-प्रशमनो योगः षड्-धरणाह्वयः ॥ ४८.१+१ ॥

कल्कं स-मधु वा चव्य-पथ्याग्नि-सुरदारु-जम् ।
मूत्रैर् वा शीलयेत् पथ्यां गुग्गुलुं गिरिसंभवम् ॥ ४९ ॥

व्योषाग्नि-मुस्त-त्रि-फला-विडङ्गैर् गुग्गुलुं समम् ।
खादन् सर्वाञ् जयेद् व्याधीन् मेदः-श्लेष्माम-वात-जान् ॥ ५० ॥

शाम्यत्य् एवं कफाक्रान्तः स-मेदस्कः प्रभञ्जनः ।
क्षार-मूत्रान्वितान् स्वेदान् सेकान् उद्वर्तनानि च ॥ ५१ ॥

कुर्याद् दिह्याच् च मूत्राढ्यैः करञ्ज-फल-सर्षपैः ।
मूलैर् वाप्य् अर्क-तर्कारी-निम्ब-जैः स-सुराह्वयैः ॥ ५२ ॥

स-क्षौद्र-सर्षपा-पक्व-लोष्ट-वल्मीक-मृत्तिकैः ।
कफ-क्षयार्थं व्यायामे सह्ये चैनं प्रवर्तयेत् ॥ ५३ ॥

स्थलान्य् उल्लङ्घयेन् नारीः शक्तितः परिशीलयेत् ।
स्थिर-तोयं सरः क्षेमं प्रति-स्रोतो नदीं तरेत् ॥ ५४ ॥

श्लेष्म-मेदः-क्षये चात्र स्नेहादीन् अवचारयेत् ।
स्थान-दूष्यादि चालोच्य कार्या शेषेष्व् अपि क्रिया ॥ ५५ ॥

२१.५५cv स्थानं दूष्यादि चालोच्य बृहन्-निम्ब-तरोर् मूलं वारिणा परिपेषितम् ।
संपीतं नाशयेत् क्षिप्रम् अ-साध्याम् अपि गृध्रसीम् ॥ ५५.१+१ ॥

तूणी-प्रतूण्योर् लवनं स-घृतं क्षार-हिङ्गु वा ।
रक्तावसेचनं कुर्याद् अभीक्ष्णं वात-कण्टके ॥ ५५.१+२ ॥

पिबेद् एरण्ड-तैलं वा दहेत् सूचीभिर् एव वा ।
साज्यैः सक्तुभिर् अभ्यक्तौ न चा-क्षीर-समन्वितैः ॥ ५५.१+३ ॥

शाल्मली-त्वग्-विलिप्तौ वा पादौ संतापम् उद्गतः ॥ ५५.१+४अब् ॥
सहचरं सुरदारु स-नागरं क्वथितम् अम्भसि तैल-विमिश्रितम् ।
पवन-पीडित-देह-गतिः पिबन् द्रुत-विलम्बित-गो भवतीच्छया ॥ ५६ ॥

रास्ना-महौषध-द्वीपि-पिप्पली-शठि-पौष्करम् ।
पिष्ट्वा विपाचयेत् सर्पिर् वात-रोग-हरं परम् ॥ ५७ ॥

निम्बामृता-वृष-पटोल-निदिग्धिकानां भागान् पृथक् दश पलान् विपचेद् घटे ऽपाम् ।
अष्टांश-शेषित-रसेन पुनश् च तेन प्रस्थं घृतस्य विपचेत् पिचु-भाग-कल्कैः ॥ ५८ ॥

२१.५८av निम्बामृता-वृष-पटोल-करञ्जकानां पाठा-विडङ्ग-सुरदारु-गजोपकुल्या-द्वि-क्षार-नागर-निशा-मिशि-चव्य-कुष्ठैः ।
तेजोवती-मरिच-वत्सक-दीप्यकाग्नि-रोहिण्य्-अरुष्कर-वचा-कण-मूल-युक्तैः ॥ ५९ ॥

मञ्जिष्ठयातिविषया विषया यवान्या संशुद्ध-गुग्गुलु-पलैर् अपि पञ्च-संख्यैः ।
तत् सेवितं विधमति प्रबलं समीरं संध्य्-अस्थि-मज्ज-गतम् अप्य् अथ कुष्ठम् ईदृक् ॥ ६० ॥

२१.६०cv तत् सेवितं प्रधमति प्रबलं समीरं नाडी-व्रणार्बुद-भगन्दर-गण्ड-माला-जत्रूर्ध्व-सर्व-गद-गुल्म-गुदोत्थ-मेहान् ।
यक्ष्मा-रुचि-श्वसन-पीनस-कास-शोफ-हृत्-पाण्डु-रोग-मद-विद्रधि-वात-रक्तम् ॥ ६१ ॥
२१.६१dv -हृत्-पार्श्व-रोग-मद-विद्रधि-वात-रक्तम् रास्नाटरूष-सुरदार्व्-अमृता-शतावर्य्-एरण्ड-पुष्कर-धमासक-शुण्ठि-पथ्याः ।
निघ्नन्ति वात-ज-रुजं खलु स-श्वदंष्ट्राः शैलेय-शठ्य्-अतिविषाः क्वथिताः प्रयुक्ता ॥
६१+१ ॥

बला-बिल्व-शृते क्षीरे घृत-मण्डं विपाचयेत् ।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरो-गते ॥ ६२ ॥

तद्-वत् सिद्धा वसा नक्र-मत्स्य-कूर्म-चुलूक-जा ।
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६३ ॥

जीर्णं पिण्याकं पञ्च-मूलं पृथक् च क्वाथ्यं क्वाथाभ्याम् एकतस् तैलम् आभ्याम् ।
क्षीराद् अष्टांशं पाचयेत् तेन पानाद् वाता नश्येयुः श्लेष्म-युक्ता विशेषात् ॥ ६४ ॥

प्रसारिणी-तुला-क्वाथे तैल-प्रस्थं पयः-समम् ।
द्वि-मेदा-मिशि-मञ्जिष्ठा-कुष्ठ-रास्ना-कु-चन्दनैः ॥ ६५ ॥

जीवकर्षभ-काकोली-युगलामरदारुभिः ।
कल्कितैर् विपचेत् सर्व-मारुतामय-नाशनम् ॥ ६६ ॥

स-मूल-शाखस्य सहाचरस्य तुलां समेतां दश-मूलतश् च ।
पलानि पञ्चाशद् अभीरुतश् च पादावशेषं विपचेद् वहे ऽपाम् ॥ ६७ ॥

तत्र सेव्य-नख-कुष्ठ-हिमैला-स्पृक्-प्रियङ्गु-नलिकाम्बु-शिला-जैः ।
लोहिता-नलद-लोह-सुराह्वैः कोपना-मिशि-तुरुष्क-नतैश् च ॥ ६८ ॥

तुल्य-क्षीरं पालिकैस् तैल-पात्रं सिद्धं कृच्छ्रात् छीलितं हन्ति वातान् ।
कम्पाक्षेप-स्तम्भ-शोषादि-युक्तान् गुल्मोन्मादौ पीनसं योनि-रोगान् ॥ ६९ ॥

२१.६९av तुल्यं क्षीरं पालिकैस् तैल-पात्रं सहचर-तुलायास् तु रसे तैलाढकं पचेत् ।
मूल-कल्काद् दश-पलं पयो दत्त्वा चतुर्-गुणम् ॥ ७० ॥

अथ-वा नत-षड्ग्रन्था-स्थिरा-कुष्ठ-सुराहवयात् ।
सैला-नलद-शैलेय-शताह्वा-रक्त-चन्दनात् ॥ ७१ ॥

२१.७१bv -स्थिरा-कुष्ठ-सुराह्वयान् २१.७१dv -शताह्वा-रक्त-चन्दनान् सिद्धे ऽस्मिञ् छर्करा-चूर्णाद् अष्टा-दश-पलं क्षिपेत् ।
भेडस्य संमतं तैलं तत् कृच्छ्रान् अनिलामयान् ॥ ७२ ॥

वात-कुण्डलिकोन्माद-गुल्म-वर्ध्मादिकाञ् जयेत् ।
बला-शतं छिन्नरुहा-पादं रास्नाष्ट-भागिकम् ॥ ७३ ॥

जलाढक-शते पक्त्वा शत-भाग-स्थिते रसे ।
दधि-मस्त्व्-इक्षु-निर्यास-शुक्तैस् तैलाढकं समैः ॥ ७४ ॥

पचेत् साज-पयो-ऽर्धांशं कल्कैर् एभिः पलोन्मितैः ।
शठी-सरलदार्व्-एला-मञ्जिष्ठागुरु-चन्दनैः ॥ ७५ ॥

पद्मकातिबला-मुस्ता-शूर्पपर्णी-हरेणुभिः ।
यष्ट्य्-आह्व-सुरस-व्याघ्रनखर्षभक-जीवकैः ॥ ७६ ॥

पलाश-रस-कस्तूरी-नलिका-जाति-कोशकैः ।
स्पृक्का-कुङ्कुम-शैलेय-जाती-कटुफलाम्बुभिः ॥ ७७ ॥

२१.७७dv -जातिका-कट्फलाम्बुभिः त्वक्-कुन्दुरुक-कर्पूर-तुरुष्क-श्रीनिवासकैः ।
लवङ्ग-नख-कङ्कोल-कुष्ठ-मांसी-प्रियङ्गुभिः ॥ ७८ ॥

स्थौणेय-तगर-ध्याम-वचा-मदनक-प्लवैः ।
स-नागकेसरैः सिद्धे दद्याच् चात्रावतारिते ॥ ७९ ॥

२१.७९bv -वचा-मदन-पल्लवैः पत्त्र-कल्कं ततः पूतं विधिना तत् प्रयोजितम् ।
कासं श्वासं ज्वरं छर्दिं मूर्छां गुल्म-क्षत-क्षयान् ॥ ८० ॥

प्लीह-शोषाव् अपस्मारम् अ-लक्ष्मीं च प्रणाशयेत् ।
बला-तैलम् इदं श्रेष्ठं वात-व्याधि-विनाशनम् ॥ ८१ ॥

पाने नस्ये ऽन्वासने ऽभ्यञ्जने च स्नेहाः काले सम्यग् एते प्रयुक्ताः ।
दुष्टान् वातान् आशु शान्तिं नयेयुर् वन्ध्या नारीः पुत्र-भाजश् च कुर्युः ॥ ८२ ॥

२१.८२dv वन्ध्या नारीः पुत्र-भाजः प्रकुर्युः स्नेह-स्वेदैर् द्रुतः श्लेष्मा यदा पक्वाशये स्थितः ।
पित्तं वा दर्शयेद् रूपं वस्तिभिस् तं विनिर्जयेत् ॥ ८३ ॥

२१.८३bv यदा पक्वाशयं स्थितः

# अध्याय 22

वात-शोणितिनो रक्तं स्निग्धस्य बहु-शो हरेत् ।
अल्पाल्पं पालयन् वायुं यथा-दोषं यथा-बलम् ॥ १ ॥

रुग्-राग-तोद-दाहेषु जलौकोभिर् विनिर्हरेत् ।
शृङ्ग-तुम्बैश् चिमिचिमा-कण्डू-रुग्-दूयनान्वितम् ॥ २ ॥

प्रच्छानेन सिराभिर् वा देशाद् देशान्तरं व्रजत् ।
अङ्ग-ग्लानौ तु न स्राव्यं रूक्षे वातोत्तरे च यत् ॥ ३ ॥

२२.३cv अङ्ग-म्लानौ तु न स्राव्यं २२.३dv रूक्षं वातोत्तरं च यत् गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायु-सिरामयान् ।
ग्लानिम् अन्यांश् च वातोत्थान् कुर्याद् वायुर् असृक्-क्षयात् ॥ ४ ॥

विरेच्यः स्नेहयित्वा तु स्नेह-युक्तैर् विरेचनैः ।
वातोत्तरे वात-रक्ते पुराणं पाययेद् घृतम् ॥ ५ ॥

श्रावणी-क्षीर-काकोली-क्षीरिणी-जीवकैः समैः ।
सिद्धं सर्षभकैः सर्पिः स-क्षीरं वात-रक्त-नुत् ॥ ६ ॥

द्राक्षा-मधूक-वारिभ्यां सिद्धं वा स-सितोपलम् ।
घृतं पिबेत् तथा क्षीरं गुडूची-स्व-रसे शृतम् ॥ ७ ॥

तैलं पयः शर्करां च पाययेद् वा सु-मूर्छितम् ।
बला-शतावरी-रास्ना-दश-मूलैः स-पीलुभिः ॥ ८ ॥

श्यामैरण्ड-स्थिराभिश् च वातार्ति-घ्नं शृतं पयः ।
धारोष्णं मूत्र-युक्तं वा क्षीरं दोषानुलोमनम् ॥ ९ ॥

पैत्ते पक्त्वा वरी-तिक्ता-पटोल-त्रि-फलामृताः ।
पिबेद् घृतं वा क्षीरं वा स्वादु-तिक्तक-साधितम् ॥ १० ॥

क्षीरेणैरण्ड-तैलं च प्रयोगेण पिबेन् नरः ।
बहु-दोषो विरेकार्थं जीर्णे क्षीरौदनाशनः ॥ ११ ॥

कषायम् अभयानां वा पाययेद् घृत-भर्जितम् ।
क्षीरानु-पानं त्रिवृता-चूर्णं द्राक्षा-रसेन वा ॥ १२ ॥

निर्हरेद् वा मलं तस्य स-घृतैः क्षीर-वस्तिभिः ।
न हि वस्ति-समं किञ्-चिद् वात-रक्त-चिकित्सितम् ॥ १३ ॥

विशेषात् पायु-पार्श्वोरु-पर्वास्थि-जठरार्तिषु ।
मुस्ता-धात्री-हरिद्राणां पिबेत् क्वाथं कफोल्बणे ॥ १४ ॥

२२.१४cv मुस्त-द्राक्षा-हरिद्राणां स-क्षौद्रं त्रि-फलाया वा गुडूचीं वा यथा तथा ।
यथार्ह-स्नेह-पीतं च वामितं मृदु रूक्षयेत् ॥ १५ ॥

२२.१५bv गुडूचीं वा यथा-बलम् २२.१५bv गुडूचीं वा यथा-यथम् त्रि-फला-व्योष-पत्त्रैला-त्वक्क्षीरी-चित्रकं वचाम् ।
विडङ्गं पिप्पली-मूलं रोमशां वृषकं त्वचम् ॥ १६ ॥

२२.१६dv रोमशं वृषकं त्वचम् ऋद्धिं लाङ्गलिकीं चव्यं सम-भागानि पेषयेत् ।
कल्ये लिप्त्वायसीं पात्रीं मध्याह्ने भक्षयेद् इदम् ॥ १७ ॥

वातास्रे सर्व-दोषे ऽपि परं शूलान्विते हितम् ।
कोकिलाक्षक-निर्यूहः पीतस् तच् छाक-भोजिना ॥ १८ ॥

२२.१८dv पीतस् तच् छाक-भक्षिणा कृपाभ्यास इव क्रोधं वात-रक्तं नियच्छति ।
पञ्च-मूलस्य धात्र्या वा रसैर् लेलीतकीं वसाम् ॥ १९ ॥

खुडं सु-रूढम् अप्य् अङ्गे ब्रह्म-चारी पिबन् जयेत् ।
इत्य् आभ्यन्तरम् उद्दिष्टं कर्म बाह्यम् अतः परम् ॥ २० ॥

त्रि-फलाष्ट-पलं क्वाथ्य पाद-शेषं जलाढके ।
षो-डशैव पलान्य् अत्र प्रक्षिपेच् छुद्ध-गुग्गुलोः ॥ २०.१+१ ॥

ततस् तस्मिन् घनी-भूते कल्की-कृत्य द्वि-कार्षिकाः ।
पथ्या-विडङ्ग-कटुका गुडूची पल-संमिता ॥ २०.१+२ ॥

कर्षांशे त्रिवृता दन्ती खादेद् इष्टानु-पानतः ।
विविधम् अपि वात-रक्तं स्रुत-शुष्क-स्फुटितम् अपि हन्ति ॥ २०.१+३ ॥

व्रण-कास-कुष्ठ-गुल्म-श्वयथूदर-पाण्डु-मेहम् अर्शांसि ।
अभिभूय जरा-दोषं करोति कैशोरकं कायम् ॥ २०.१+४ ॥

आरनालाढके तैलं पाद-सर्ज-रसं शृतम् ।
प्रभूते खजितं तोये ज्वर-दाहार्ति-नुत् परम् ॥ २१ ॥

स-मधूच्छिष्ट-मञ्जिष्ठं स-सर्ज-रस-शारिवम् ।
पिण्ड-तैलं तद् अभ्यङ्गाद् वात-रक्त-रुजापहम् ॥ २२ ॥

दश-मूल-शृतं क्षीरं सद्यः शूल-निवारणम् ।
परिषेको ऽनिल-प्राये तद्-वत् कोष्णेन सर्पिषा ॥ २३ ॥

स्नेहैर् मधुर-सिद्धैर् वा चतुर्भिः परिषेचयेत् ।
स्तम्भाक्षेपक-शूलार्तं कोष्णैर् दाहे तु शीतलैः ॥ २४ ॥

तद्-वद् गव्याविक-च्छागैः क्षीरैस् तैल-विमिश्रितैः ।
निःक्वाथैर् जीवनीयानां पञ्च-मूलस्य वा लघोः ॥ २५ ॥

द्राक्षेक्षु-रस-मद्यानि दधि-मस्त्व्-अम्ल-काञ्जिकम् ।
सेकार्थं तण्डुल-क्षौद्र-शर्कराम्भश् च शस्यते ॥ २६ ॥

प्रियाः प्रियं-वदाः नार्याश् चन्दनार्द्र-कर-स्तनाः ।
स्पर्श-शीताः सुख-स्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥ २७ ॥

स-रागे स-रुजे दाहे रक्तं हृत्वा प्रलेपयेत् ।
प्रपौण्डरीक-मञ्जिष्ठा-दार्वी-मधुक-चन्दनैः ॥ २८ ॥

सितोपलैरका-सक्तु-मसूरोशीर-पद्मकैः ।
लेपो रुग्-दाह-वीसर्प-राग-शोफ-निबर्हणः ॥ २९ ॥

२२.२९av स-सितोपल-कासेक्षु- २२.२९bv -मसूरैरक-सक्तुभिः वात-घ्नैः साधितः स्निग्धः कृशरो मुद्ग-पायसः ।
तिल-सर्षप-पिण्डैश् च शूल-घ्नम् उपनाहनम् ॥ ३० ॥

२२.३०cv तिल-सर्षप-पिण्डश् च औदक-प्रसहानूप-वेसवाराः सु-संस्कृताः ।
जीवनीयौषधैः स्नेह-युक्ताः स्युर् उपनाहने ॥ ३१ ॥

२२.३१cv जीवनीयौषध-स्नेह- स्तम्भ-तोद-रुग्-आयाम-शोफाङ्ग-ग्रह-नाशनाः ।
जीवनीयौषधैः सिद्धा स-पयस्का वसापि वा ॥ ३२ ॥

घृतं सहचरान् मूलं जीवन्ती छागलं पयः ।
लेपः पिष्टास् तिलास् तद्-वद् भृष्टाः पयसि निर्वृताः ॥ ३३ ॥

क्षीर-पिष्ट-क्षुमां लेपम् एरण्डस्य फलानि वा ।
कुर्याच् छूल-निवृत्त्य्-अर्थं शताह्वां वानिले ऽधिके ॥ ३४ ॥

२२.३४av क्षीर-पिष्टाम् उमां लेपम् मूत्र-क्षार-सुरा-पक्वं घृतम् अभ्यञ्जने हितम् ।
सिद्धं स-मधु शुक्तं वा सेकाभ्यङ्गे कफोत्तरे ॥ ३५ ॥

२२.३५av मुस्त-क्षार-सिता-पक्वं २२.३५dv सेकाभ्यङ्गः कफोत्तरे गृह-धूमो वचा कुष्ठं शताह्वा रजनी-द्वयम् ।
प्रलेपः शूल-नुद् वात-रक्ते वात-कफोत्तरे ॥ ३६ ॥

मधु-शिग्रोर् हितं तद्-वद् बीजं धान्याम्ल-संयुतम् ।
मुहूर्त-लिप्तम् अम्लैश् च सिञ्चेद् वात-कफोत्तरे ॥ ३७ ॥

उत्तानं लेपनाभ्यङ्ग-परिषेकावगाहनैः ।
विरेकास्थापन-स्नेह-पानैर् गम्भीरम् आचरेत् ॥ ३८ ॥

वात-श्लेष्मोत्तरे कोष्णा लेपाद्यास् तत्र शीतलैः ।
विदाह-शोफ-रुक्-कण्डू-विवृद्धिः स्तम्भनाद् भवेत् ॥ ३९ ॥

पित्त-रक्तोत्तरे वात-रक्ते लेपादयो हिमाः ।
उष्णैः प्लोषोष-रुग्-राग-स्वेदावदरणोद्भवः ॥ ४० ॥

मधुयष्ट्याः पल-शतं कषाये पाद-शेषिते ।
तैलाढकं सम-क्षीरं पचेत् कल्कैः पलोन्मितैः ॥ ४१ ॥

स्थिरा-तामलकी-दूर्वा-पयस्याभीरु-चन्दनैः ।
लोह-हंसपदी-मांसी-द्वि-मेदा-मधुपर्णिभिः ॥ ४२ ॥

काकोली-क्षीर-काकोली-शतपुष्पर्द्धि-पद्मकैः ।
जीवकर्षभ-जीवन्ती-त्वक्-पत्त्र-नख-वालकैः ॥ ४३ ॥

प्रपौण्डरीक-मञ्जिष्ठा-शारिवैन्द्री-वितुन्नकैः ।
चतुष्-प्रयोगं वातासृक्-पित्त-दाह-ज्वरार्ति-नुत् ॥ ४४ ॥

२२.४४cv चतुष्-प्रयोगात् तद् धन्ति २२.४४dv तैलं मारुत-शोणितम् सोपद्रवं साङ्ग-शूलं सर्व-गात्रानुगं तथा ।
वातासृक्-पित्त-दाहार्ति-ज्वर-घ्नं बल-वर्ण-कृत् ॥ ४४+१ ॥

बला-कषाय-कल्काभ्यां तैलं क्षीर-समं पचेत् ।
सहस्र-शत-पाकं तद् वातासृग्-वात-रोग-नुत् ॥ ४५ ॥

रसायनं मुख्य-तमम् इन्द्रियाणां प्रसादनम् ।
जीवनं बृंहणं स्वर्यं शुक्रासृग्-दोष-नाशनम् ॥ ४६ ॥

कुपिते मार्ग-संरोधान् मेदसो वा कफस्य वा ।
अति-वृद्ध्यानिले शस्तं नादौ स्नेहन-बृंहणम् ॥ ४७ ॥

कृत्वा तत्राढ्य-वातोक्तं वात-शोणितिकं ततः ।
भेषजं स्नेहनं कुर्याद् यच् च रक्त-प्रसादनम् ॥ ४८ ॥

प्राणादि-कोपे युग-पद् यथोद्दिष्टं यथामयम् ।
यथासन्नं च भैषज्यं विकल्प्यं स्याद् यथा-बलम् ॥ ४९ ॥

नीते निर्-आम-तां सामे स्वेद-लङ्घन-पाचनैः ।
रूक्षैश् चालेप-सेकाद्यैः कुर्यात् केवल-वात-नुत् ॥ ५० ॥

शोषाक्षेपण-संकोच-स्तम्भ-स्वपन-कम्पनम् ।
हनु-स्रंसो ऽर्दितं खाञ्ज्यं पाङ्गुल्यं खुड-वात-ता ॥ ५१ ॥

संधि-च्युतिः पक्ष-वधो मेदो-मज्जास्थि-गा गदाः ।
एते स्थानस्य गाम्भीर्यात् सिध्येयुर् यत्नतो नवाः ॥ ५२ ॥

तस्माज् जयेन् नवान् एतान् बलिनो निर्-उपद्रवान् ।
वायौ पित्तावृते शीताम् उष्णां च बहु-शः क्रियाम् ॥ ५३ ॥

व्यत्यासाद् योजयेत् सर्पिर् जीवनीयं च पाययेत् ।
धन्व-मांसं यवाः शालिर् विरेकः क्षीर-वान् मृदुः ॥ ५४ ॥

स-क्षीरा वस्तयः क्षीरं पञ्च-मूल-बला-शृतम् ।
काले ऽनुवासनं तैलैर् मधुरौषध-साधितैः ॥ ५५ ॥

२२.५५cv काले ऽनुवासनं तैलं २२.५५dv मधुरौषध-साधितम् यष्टीमधु-बला-तैल-घृत-क्षीरैश् च सेचनम् ।
पञ्च-मूल-कषायेण वारिणा शीतलेन वा ॥ ५६ ॥

२२.५६dv वारिणा शीतलेन च कफावृते यवान्नानि जाङ्गला मृग-पक्षिणः ।
स्वेदास् तीक्ष्णा निरूहाश् च वमनं स-विरेचनम् ॥ ५७ ॥

पुराण-सर्पिस् तैलं च तिल-सर्षप-जं हितम् ।
संसृष्टे कफ-पित्ताभ्यां पित्तम् आदौ विनिर्जयेत् ॥ ५८ ॥

कारयेद् रक्त-संसृष्टे वात-शोणितिकीं क्रियाम् ।
स्वेदाभ्यङ्ग-रसाः क्षीरं स्नेहो मांसावृते हितम् ॥ ५९ ॥

२२.५९dv स्नेहो मांसावृते हितः प्रमेह-मेदो-वात-घ्नम् आढ्य-वाते भिषग्-जितम् ।
महा-स्नेहो ऽस्थि-मज्ज-स्थे पूर्वोक्तं रेतसावृते ॥ ६० ॥

अन्नावृते पाचनीयं वमनं दीपनं लघु ।
मूत्रावृते मूत्रलानि स्वेदाश् चोत्तर-वस्तयः ॥ ६१ ॥

२२.६१dv स्वेदा उत्तर-वस्तयः एरण्ड-तैलं वर्चः-स्थे वस्ति-स्नेहाश् च भेदिनः ।
कफ-पित्ता-विरुद्धं यद् यच् च वातानुलोमनम् ॥ ६२ ॥

सर्व-स्थानावृते ऽप्य् आशु तत् कार्यं मातरिश्वनि ।
अन्-अभिष्यन्दि च स्निग्धं स्रोतसां शुद्धि-कारणम् ॥ ६३ ॥

२२.६३av सर्व-स्थानावृते चाशु २२.६३av सर्व-स्थानावृते त्व् आशु यापना वस्तयः प्रायो मधुराः सानुवासनाः ।
प्रसमीक्ष्य बलाधिक्यं मृदु कार्यं विरेचनम् ॥ ६४ ॥

२२.६४dv मृदु काय-विरेचनम् रसायनानां सर्वेषाम् उपयोगः प्रशस्यते ।
शिलाह्वस्य विशेषेण पयसा शुद्ध-गुग्गुलोः ॥ ६५ ॥

लेहो वा भार्गवस् तद्-वद् एका-दश-सिताशितः ।
अपाने त्व् आवृते सर्वं दीपनं ग्राहि भेषजम् ॥ ६६ ॥

२२.६६bv एका-दश-सितासितः वातानुलोमनं कार्यं मूत्राशय-विशोधनम् ।
इति संक्षेपतः प्रोक्तम् आवृतानां चिकित्सितम् ॥ ६७ ॥

प्राणादीनां भिषक् कुर्याद् वितर्क्य स्वयम् एव तत् ।
उदानं योजयेद् ऊर्ध्वम् अपानं चानुलोमयेत् ॥ ६८ ॥

समानं शमयेद् विद्वांस् त्रि-धा व्यानं तु योजयेत् ।
प्राणो रक्ष्यश् चतुर्भ्यो ऽपि तत्-स्थितौ देह-संस्थितिः ॥ ६९ ॥

२२.६९bv त्रि-धा व्यानं च योजयेत् स्वं स्वं स्थानं नयेद् एवं वृतान् वातान् वि-मार्ग-गान् ।
सर्वं चावरणम् पित्त-रक्त-संसर्ग-वर्जितम् ॥ ७० ॥

रसायन-विधानेन लशुनो हन्ति शीलितः ।
पित्तावृते पित्त-हरं मरुतश् चानुलोमनम् ॥ ७१ ॥

रक्तावृते ऽपि तद्-वच् च खुडोक्तं यच् च भेषजम् ।
रक्त-पित्तानिल-हरं विविधं च रसायनम् ॥ ७२ ॥

यथा-निदानं निर्दिष्टम् इति सम्यक् चिकित्सितम् ।
आयुर्-वेद-फलं स्थानम् एतत् सद्यो ऽर्ति-नाशनात् ॥ ७३ ॥

२२.७३dv एतत् सद्यो ऽर्ति-नाशनम्

चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्-जितम् ।
भेषजं शमनं शस्तं पर्यायैः स्मृतम् औषधम् ॥ ७४ ॥

# अध्याय 01

वमने मदनं श्रेष्ठं त्रिवृन्-मूलं विरेचने ।
नित्यम् अन्यस्य तु व्याधि-विशेषेण विशिष्ट-ता ॥ १ ॥

फलानि नाति-पाण्डूनि न चाति-हरितान्य् अपि ।
आदायाह्नि प्रशतर्क्षे मध्ये ग्रीष्म-वसन्तयोः ॥ २ ॥

१.२av फलानि तानि पाण्डूनि १.२bv न चाति-हरितानि च १.२bv न चाति-हरितान्य् अथ प्रमृज्य कुश-मुत्तोल्यां क्षिप्त्वा बद्ध्वा प्रलेपयेत् ।
गो-मयेनानु मुत्तोलीं धान्य-मध्ये निधापयेत् ॥ ३ ॥

१.३av प्रमृज्य कुश-पूतोल्यां १.३cv गो-मयेनानु पूतोलीं मृदु-भूतानि मध्व्-इष्ट-गन्धानि कुश-वेष्टनात् ।
निष्कृष्टानि गते ऽष्टाहे शोषयेत् तान्य् अथातपे ॥ ४ ॥

१.४av मृदु-भूतानि मद्येष्ट- १.४cv निष्कृष्टानि गताष्टाहे १.४cv निष्कृष्य निर्गते ऽष्टाहे १.४cv निष्कृष्य विगते ऽष्टाहे तेषां ततः सु-शुष्काणाम् उद्धृत्य फल-पिप्पलीः ।
दधि-मध्व्-आज्य-पललैर् मृदित्वा शोषयेत् पुनः ॥ ५ ॥

१.५cv दधि-मध्व्-आम्बु-पललैर् ततः सु-गुप्तं संस्थाप्य कार्य-काले प्रयोजयेत् ।
अथादाय ततो मात्रां जर्जरी-कृत्य वासयेत् ॥ ६ ॥

शर्वरीं मधुयष्ट्या वा कोविदारस्य वा जले ।
कर्बुदारस्य बिम्ब्या वा नीपस्य विदुलस्य वा ॥ ७ ॥

१.७cv जीमूतकस्य बिम्ब्या वा शणपुष्प्याः सदापुष्प्याः प्रत्यक्पुष्प्य्-उदके ऽथ-वा ।
ततः पिबेत् कषायं तं प्रातर् मृदित-गालितम् ॥ ८ ॥

१.८bv प्रत्यक्पुष्पोदके ऽथ-वा १.८bv प्रत्यक्पुष्पोदकेन वा सूत्रोदितेन विधिना साधु तेन तथा वमेत् ।
श्लेष्म-ज्वर-प्रतिश्याय-गुल्मान्तर्-विद्रधीषु च ॥ ९ ॥

१.९bv साधु तेन यथा वमेत् १.९bv साधु तेन ततो वमेत् प्रच्छर्दयेद् विशेषेण यावत् पित्तस्य दर्शनम् ।
फल-पिप्पली-चूर्णं वा क्वाथेन स्वेन भावितम् ॥ १० ॥

त्रि-भाग-त्रि-फला-चूर्णं कोविदारादि-वारिणा ।
पिबेज् ज्वरा-रुचि-ष्ठेव-ग्रन्थ्य्-अपच्य्-अर्बुदोदरी ॥ ११ ॥

१.११cv पिबेज् ज्वर-गर-ष्ठीव- १.११cv पिबेज् ज्वर-गर-ष्ठेव- १.११cv पिबेज् ज्वर-गर-स्वेद- १.११cv पिबेज् ज्वरा-रुचि-ष्ठीव- १.११cv पिबेज् ज्वरा-रुचिष्व् एवं १.११dv ग्रन्थ्य्-अपच्य्-अर्बुदोदरी पित्ते कफ-स्थान-गते जीमूतादि-जलेन तत् ।
हृद्-दाहे ऽधो-ऽस्र-पित्ते च क्षीरं तत्-पिप्पली-शृतम् ॥ १२ ॥

क्षैरेयीं वा कफ-च्छर्दि-प्रसेक-तमकेषु तु ।
दध्य्-उत्तरं वा दधि वा तच्-छृत-क्षीर-संभवम् ॥ १३ ॥

१.१३bv -प्रसेक-तमकेषु च फलादि-क्वाथ-कल्काभ्यां सिद्धं तत्-सिद्ध-दुग्ध-जम् ।
सर्पिः कफाभिभूते ऽग्नौ शुष्यद्-देहे च वामनम् ॥ १४ ॥

१.१४dv शुष्क-देहे च वामनम् १.१४dv शुष्यद्-देहे तु वामनम् स्व-रसं फल-मज्ज्ञो वा भल्लातक-विधि-शृतम् ।
आ-दर्वी-लेपनात् सिद्धं लीढ्वा प्रच्छर्दयेत् सुखम् ॥ १५ ॥

तं लेहं भक्ष्य-भोज्येषु तत्-कषायांश् च योजयेत् ।
वत्सकादि-प्रतीवापः कषायः फल-मज्ज-जः ॥ १६ ॥

निम्बार्कान्य-तर-क्वाथ-समायुक्तो नियच्छति ।
बद्ध-मूलान् अपि व्याधीन् सर्वान् संतर्पणोद्भवान् ॥ १७ ॥

१.१७dv श्लेष्म-संतर्पणोद्भवान् राठ-पुष्प-फल-श्लक्ष्ण-चूर्णैर् माल्यं सु-रूक्षितम् ।
वमेन् मण्ड-रसादीनां तृप्तो जिघ्रन् सुखं सुखी ॥ १८ ॥

१.१८bv -चूर्णैर् माल्यं विरूक्षितम् १.१८bv -चूर्णैर् माल्यं सु-रूषितम् १.१८bv -चूर्णैर् मालां सु-रूषिताम् १.१८cv वमेन् नरो रसादीनां एवम् एव फला-भावे कल्प्यं पुष्पं शलाटु वा ।
जीमूताद्याश् च फल-वज् जीमूतं तु विशेषतः ॥ १९ ॥

१.१९av एवम् एव फला-लाभे प्रयोक्तव्यं ज्वर-श्वास-कास-हिध्मादि-रोगिणाम् ।
पयः पुष्पे ऽस्य निर्वृत्ते फले पेया पयस्-कृता ॥ २० ॥

रोमशे क्षीर-संतानं दध्य्-उत्तरम् अ-रोमशे ।
शृते पयसि दध्य्-अम्लं जातं हरित-पाण्डुके ॥ २१ ॥

१.२१dv जाते हरित-पाण्डुके १.२१dv जाते हरित-पाण्डुरे १.२१dv जातं हरित-पाण्डुरे आसुत्य वारुणी-मण्डं पिबेन् मृदित-गालितम् ।
कफाद् अ-रोचके कासे पाण्डु-त्वे राज-यक्ष्मणि ॥ २२ ॥

इयं च कल्पना कार्या तुम्बी-कोशातकीष्व् अपि ।
पर्यागतानां शुष्काणां फलानां वेणि-जन्मनाम् ॥ २३ ॥

१.२३dv फलानां वेणु-जन्मनाम् १.२३dv फलानां चोणि-जन्मनाम् चूर्णस्य पयसा शुक्तिं वात-पित्तार्दितः पिबेत् ।
द्वे वा त्रीण्य् अपि वापोथ्य क्वाथे तिक्तोत्तमस्य वा ॥ २४ ॥

१.२४cv द्वे वा त्रीण्य् अथ-वापोथ्य आरग्वधादि-नवकाद् आसुत्यान्य-तमस्य वा ।
विमृद्य पूतं तं क्वाथं पित्त-श्लेष्म-ज्वरी पिबेत् ॥ २५ ॥

१.२५cv विमृज्य पूतं तं क्वाथं जीमूत-कल्कं चूर्णं वा पिबेच् छीतेन वारिणा ।
ज्वरे पैत्ते कवोष्णेन कफ-वातात् कफाद् अपि ॥ २६ ॥

१.२६av जीमूत-चूर्णं कल्कं वा कास-श्वास-विष-च्छर्दि-ज्वरार्ते कफ-कर्शिते ।
इक्ष्वाकुर् वमने शस्तः प्रताम्यति च मानवे ॥ २७ ॥

१.२७bv -ज्वरार्ते कफ-कर्षिते १.२७cv इक्ष्वाकुर् वमने श्रेष्ठः फल-पुष्प-विहीनस्य प्रवालैस् तस्य साधितम् ।
पित्त-श्लेष्म-ज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २८ ॥

१.२८bv प्रवालैस् तेन साधितम् १.२८dv पित्तोद्रेके प्रयोजयेत् हृत-मध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।
स्यात् तदा कफ-जे कासे श्वासे वम्यं च पाययेत् ॥ २९ ॥

१.२९av हृत-मध्ये फले पक्वे १.२९dv श्वासे वम्यां च पाययेत् मस्तुना वा फलान् मध्यं पाण्डु-कुष्ठ-विषार्दितः ।
तेन तक्रं विपक्वं वा पिबेत् स-मधु-सैन्धवम् ॥ ३० ॥

१.३०bv पाण्दुः कुष्ठी विषार्दितः भावयित्वाज-दुग्धेन बीजं तेनैव वा पिबेत् ।
विष-गुल्मोदर-ग्रन्थि-गण्डेषु श्लीपदेषु च ॥ ३१ ॥

सक्तुभिर् वा पिबेन् मन्थं तुम्बी-स्व-रस-भावितैः ।
कफोद्भवे ज्वरे कासे गल-रोगेष्व् अ-रोचके ॥ ३२ ॥

गुल्मे ज्वरे प्रसक्ते च कल्कं मांस-रसैः पिबेत् ।
नरः साधु वमत्य् एवं न च दौर्बल्यम् अश्नुते ॥ ३३ ॥

१.३३av गुल्मे ज्वरे प्रसेके च तुम्ब्याः फल-रसैः शुष्कैः स-पुष्पैर् अवचूर्णितम् ।
छर्दयेन् माल्यम् आघ्राय गन्ध-संपत्-सुखोचितः ॥ ३४ ॥

१.३४av तुम्ब्याः फल-रसैः शुष्कं १.३४dv गन्धं सम्यक् सुखोचितः १.३४dv गन्ध-संपत्-सुखोचितम् १.३४dv गन्धं सम्यक् सुखोचितम् कास-गुल्मोदर-गरे वाते श्लेष्माशय-स्थिते ।
कफे च कण्ठ-वक्त्र-स्थे कफ-संचय-जेषु च ॥ ३५ ॥

१.३५dv कफ-संचय-जेषु तु धामार्गवो गदेष्व् इष्टः स्थिरेषु च महत्सु च ।
जीवकर्षभकौ वीरा कपिकच्छूः शतावरी ॥ ३६ ॥

काकोली श्रावणी मेदा महामेदा मधूलिका ।
तद्-रजोभिः पृथग् लेहा धामार्गव-रजो-ऽन्विताः ॥ ३७ ॥

कासे हृदय-दाहे च शस्ता मधु-सिता-द्रुताः ।
ते सुखाम्भो-ऽनु-पानाः स्युः पित्तोष्म-सहिते कफे ॥ ३८ ॥

१.३८bv शस्ता मधु-सिता-युताः १.३८bv शस्ता मधु-सितान्विताः धान्य-तुम्बुरु-यूषेण कल्कस् तस्य विषापहः ।
बिम्ब्याः पुनर्नवाया वा कासमर्दस्य वा रसे ॥ ३९ ॥

१.३९cv बिम्ब्याः पुनर्नवायाश् च एकं धामार्गवं द्वे वा मानसे मृदितं पिबेत् ।
तच्-छृत-क्षीर-जं सर्पिः साधितं वा फलादिभिः ॥ ४० ॥

क्ष्वेडो ऽति-कटु-तीक्ष्णोष्णः प्रगाढेषु प्रशस्यते ।
कुष्ठ-पाण्ड्व्-आमय-प्लीह-शोफ-गुल्म-गरादिषु ॥ ४१ ॥

१.४१bv प्रगाढेषु च शस्यते पृथक् फलादि-षट्कस्य क्वाथे मांसम् अनूप-जम् ।
कोशातक्या समं सिद्धं तद्-रसं लवणं पिबेत् ॥ ४२ ॥

१.४२cv कोशातक्याः समं सिद्धं फलादि-पिप्पली-तुल्यं सिद्धं क्ष्वेड-रसे ऽथ-वा ।
क्ष्वेड-क्वाथं पिबेत् सिद्धं मिश्रम् इक्षु-रसेन वा ॥ ४३ ॥

१.४३bv सिद्धं क्ष्वेड-रसेन वा १.४३cv क्ष्वेड-क्वाथे पिबेत् सिद्धं कौटजं सु-कुमारेषु पित्त-रक्त-कफोदये ।
ज्वरे विसर्पे हृद्-रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥

१.४४av कुटजं सु-कुमारेषु सर्षपाणां मधूकानां तोयेन लवणस्य वा ।
पाययेत् कौटजं बीजं युक्तं कृशरयाथ-वा ॥ ४५ ॥

सप्ताहं वार्क-दुग्धाक्तं तच्-चूर्णं पाययेत् पृथक् ।
फल-जीमूतकेक्ष्वाकु-जीवन्ती-जीवकोदकैः ॥ ४६ ॥

१.४६av सप्ताहं चार्क-दुघाक्तं वमनौषध-मुख्यानाम् इति कल्प-दिग् ईरिता ।
बीजेनानेन मति-मान् अन्यान्य् अपि च कल्पयेत् ॥ ४७ ॥

१.४७cv विधिनानेन मति-मान् १.४७dv अन्यान् अपि च कल्पयेत् १.४७dv अन्यान् अपि च योजयेत्

# अध्याय 02

कषाय-मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफ-पित्त-प्रशमनी रौक्ष्याच् चानिल-कोपनी ॥ १ ॥

२.१av कषाया मधुरा रूक्षा २.१dv रौक्ष्यात् सानिल-कोपनी २.१dv रौक्ष्याद् अनिल-कोपनी सेदानीम् औषधैर् युक्ता वात-पित्त-कफापहैः ।
कल्प-वैशेष्यम् आसाद्य जायते सर्व-रोग-जित् ॥ २ ॥

द्वि-धा ख्यातं च तन्-मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृद्-आख्यं वर-तरं निर्-अपायं सुखं तयोः ॥ ३ ॥

सु-कुमारे शिशौ वृद्धे मृदु-कोष्ठे च तद् धितम् ।
मूर्छा-संमोह-हृत्-कण्ठ-कषण-क्षणन-प्रदम् ॥ ४ ॥

२.४dv -कर्षण-क्षणन-प्रदम् श्यामं तीक्ष्णाशु-कारि-त्वाद् अतस् तद् अपि शस्यते ।
क्रूरे कोष्ठे बहौ दोषे क्लेश-क्षमिणि चातुरे ॥ ५ ॥

२.५cv क्रूरे कोष्ठे बहु-दोषे २.५cv क्रूरे कोष्ठे महा-दोषे गम्भीरानुगतं श्लक्ष्णम् अ-तिर्यग्-विसृतं च यत् ।
गृहीत्वा विसृजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६ ॥

२.६bv अ-तिर्यग्-विस्तृतं च यत् अथ काले ततश् चूर्णं किञ्-चिन् नागर-सैन्धवम् ।
वातामये पिबेद् अम्लैः पैत्ते साज्य-सिता-मधु ॥ ७ ॥

२.७av अथ काले च तच्-चूर्णं २.७av अथ काले तु तच्-चूर्णं २.७av अथ काले त्रिवृच्-चूर्णं २.७av अथ कालेन तच्-चूर्णं २.७cv वातामयी पिबेद् अम्लैः २.७dv पित्ते साज्य-सिता-मधु क्षीर-द्राक्षेक्षु-काश्मर्य-स्वादु-स्कन्ध-वरा-रसैः ।
कफामये पीलु-रस-मूत्र-मद्याम्ल-काञ्जिकैः ॥ ८ ॥

पञ्च-कोलादि-चूर्णैश् च युक्त्या युक्तं कफापहैः ।
त्रिवृत्-कल्क-कषायाभ्यां साधितः स-सितो हिमः ॥ ९ ॥

२.९cv त्रिवृत्-कल्क-कषायेण २.९dv युक्तं युञ्ज्यात् कफापहैः मधु-त्रि-जात-संयुक्तो लेहो हृद्यं विरेचनम् ।
अजगन्धा तवक्षीरी विदारी शर्करा त्रिवृत् ॥ १० ॥

२.१०cv अजगन्धा तुकाक्षीरी चूर्णितं मधु-सर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
संनिपात-ज्वर-स्तम्भ-पिपासा-दाह-पीडितः ॥ ११ ॥

२.११av तच्-चूर्णं मधु-सर्पिर्भ्यां लिम्पेद् अन्तस् त्रिवृतया द्वि-धा कृत्वेक्षु-गण्डिकाम् ।
एकी-कृत्य च तत् स्विन्नं पुट-पाकेन भक्षयेत् ॥ १२ ॥

२.१२bv द्वि-धा कृत्वेक्षु-गण्डिकाः २.१२bv द्वि-धा कृत्वेक्षु-कण्डिकाम् २.१२bv द्वि-धा कृत्वेक्षु-काण्डिकाम् २.१२cv एकी-कृतं च तत् स्विन्नं २.१२cv एकी-कृत्य च सु-स्विन्नं २.१२cv एकी-कृत्य तु तत् स्विन्नं भृङ्गैलाभ्यां समा नीली तैस् त्रिवृतैश् च शर्करा ।
चूर्णं फल-रस-क्षौद्र-सक्तुभिस् तर्पणं पिबेत् ॥ १३ ॥

२.१३av त्वग्-एलाभ्यां समा नीली वात-पित्त-कफोत्थेषु रोगेष्व् अल्पानलेषु च ।
नरेषु सु-कुमारेषु निर्-अपायं विरेचनम् ॥ १४ ॥

विडङ्ग-तण्डुल-वरा-याव-शूक-कणास् त्रिवृत् ।
सर्वतो ऽर्धेन तल् लीढं मध्व्-आज्येन गुडेन वा ॥ १५ ॥

गुल्मं प्लीहोदरं कासं हलीमकम् अ-रोचकम् ।
कफ-वात-कृतांश् चान्यान् परिमार्ष्टि गदान् बहून् ॥ १६ ॥

विडङ्ग-पिप्पली-मूल-त्रि-फला-धान्य-चित्रकान् ।
मरीचेन्द्रयवाजाजी-पिप्पली-हस्ति-पिप्पलीः ॥ १७ ॥

२.१७bv -त्रि-फला-धान्य-चित्रकम् २.१७dv -पिप्पली-हस्ति-पिप्पलि दीप्यकं पञ्च-लवणं चूर्णितं कार्षिकं पृथक् ।
तिल-तैल-त्रिवृच्-चूर्ण-भागौ चाष्ट-पलोन्मितौ ॥ १८ ॥

२.१८dv -भागाव् अष्ट-पलोन्मितौ धात्री-फल-रस-प्रस्थांस् त्रीन् गुडार्ध-तुलान्वितान् ।
पक्त्वा मृदव्-अग्निना खादेत् ततो मात्राम् अ-यन्त्रणः ॥ १९ ॥

२.१९bv त्रीन् गुडार्ध-तुलोन्मितान् २.१९dv ततो मात्राम् अ-यन्त्रितः मन्दाग्नि-त्वं ज्वरं मूर्छां मूत्र-कृच्छ्रम् अ-रोचकम् ॥ १९+1अब् ॥
कुष्ठार्शः-कामला-गुल्म-मेहोदर-भगन्दरान् ।
ग्रहणी-पाण्डु-रोगांश् च हन्ति पुं-सवनश् च सः ॥ २० ॥

गुडः कल्याणको नाम सर्वेष्व् ऋतुषु यौगिकः ।
व्योष-त्रि-जातकाम्भोद-कृमिघ्नामलकैस् त्रिवृत् ॥ २१ ॥

सर्वैः समा सम-सिता क्षौद्रेण गुटिकाः कृताः ।
मूत्र-कृच्छ्र-ज्वर-च्छर्दि-कास-शोष-भ्रम-क्षये ॥ २२ ॥

२.२२av सर्वैः समाना स-सिता २.२२bv क्षौद्रेण गुटिकी-कृता भक्षयेत् प्रातर् उत्थाय शीतं चानु पिबेज् जलम् ॥ २२.१+१अब् ॥
तापे पाण्ड्व्-आमये ऽल्पे ऽग्नौ शस्ताः सर्व-विषेषु च ।
अ-विपत्तिर् अयं योगः प्रशस्तः पित्त-रोगिणाम् ॥ २३ ॥

त्रिवृता कौटजं बीजं पिप्पली विश्व-भेषजम् ।
क्षौद्र-द्राक्षा-रसोपेतं वर्षा-काले विरेचनम् ॥ २४ ॥

त्रिवृद्-दुरालभा-मुस्त-शर्करोदीच्य-चन्दनम् ।
द्राक्षाम्बुना स-यष्ट्य्-आह्व-सातलं जल-दात्यये ॥ २५ ॥

२.२५cv द्राक्षाम्बुना स-यष्ट्य्-आह्वं २.२५dv -शीतलं जल-दात्यये २.२५dv शीतलं जल-दात्यये त्रिवृतां चित्रकं पाठाम् अजाजीं सरलं वचाम् ।
स्वर्णक्षीरीं च हेमन्ते चूर्णम् उष्णाम्बुना पिबेत् ॥ २६ ॥

त्रिवृता शर्करा-तुल्या ग्रीष्म-काले विरेचनम् ।
त्रिवृत्-त्रायन्ति-हपुषा-सातला-कटु-रोहिणीः ॥ २७ ॥

स्वर्णक्षीरीं च संचूर्ण्य गो-मूत्रे भावयेत् त्र्य्-अहम् ।
एष सर्वर्तुको योगः स्निग्धानां मल-दोष-हृत् ॥ २८ ॥

श्यामा-त्रिवृद्-दुरालभा-हस्ति-पिप्पली-वत्सकम् ।
नीलिनी-कटुका-मुस्ता-श्रेष्ठा-युक्तं सु-चूर्णितम् ॥ २९ ॥

रसाज्योष्णाम्बुभिः शस्तं रूक्षाणाम् अपि सर्व-दा ।
ज्वर-हृद्-रोग-वातासृग्-उदावर्तादि-रोगिषु ॥ ३० ॥

सैन्धवं पिप्पली-मूलम् अभया द्वि-गुणोत्तरम् ।
चूर्णम् उष्णाम्बुना पेयं स्वस्थे सुख-विरेचनम् ॥ ३०.१+१ ॥

२.३०.१+१cv चूर्णम् उष्णाम्बुना पीतं राजवृक्षो ऽधिकं पथ्यो मृदुर् मधुर-शीतलः ।
बाले वृद्धे क्षते क्षीणे सु-कुमारे च मानवे ॥ ३१ ॥

योज्यो मृद्व्-अन्-अपायि-त्वाद् विशेषाच् चतुरङ्गुलः ।
फल-काले परिणतं फलं तस्य समाहरेत् ॥ ३२ ॥

तेषां गुण-वतां भारं सिकतासु विनिक्षिपेत् ।
सप्त-रात्रात् समुद्धृत्य शोषयेद् आतपे ततः ॥ ३३ ॥

२.३३dv शोषयेच् चातपे ततः २.३३dv शोषयेद् आतपे पुनः ततो मज्जानम् उद्धृत्य शुचौ पात्रे निधापयेत् ।
द्राक्षा-रसेन तं दद्याद् दाहोदावर्त-पीडिते ॥ ३४ ॥

चतुर्-वर्षे सुखं बाले यावद् द्वा-दश-वार्षिके ।
चतुरङ्गुल-मज्ज्ञो वा कषायं पाययेद् धिमम् ॥ ३५ ॥

दधि-मण्ड-सुरा-मण्ड-धात्री-फल-रसैः पृथक् ।
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ॥ ३६ ॥

दन्ती-कषाये तन्-मज्ज्ञो गुडं जीर्णं च निक्षिपेत् ।
तम् अरिष्टं स्थितं मासं पाययेत् पक्षम् एव वा ॥ ३७ ॥

त्वचं तिल्वक-मूलस्य त्यक्त्वाभ्यन्तर-वल्कलम् ।
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत् ततः ॥ ३८ ॥

लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ।
कषाये दश-मूलस्य तं भागं भावितं पुनः ॥ ३९ ॥

२.३९av लोध्रस्य तु कषायेण शुष्कं चूर्णं पुनः कृत्वा ततः पाणि-तलं पिबेत् ।
मस्तु-मूत्र-सुरा-मण्ड-कोल-धात्री-फलाम्बुभिः ॥ ४० ॥

२.४०av शुष्क-चूर्णं ततः कुर्यात् २.४०av शुष्क-चूर्णं पुनः कृत्वा २.४०av शुष्कं चूर्णं ततः कृत्वा तिल्वकस्य कषायेण कल्केन च स-शर्करः ।
स-घृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ॥ ४१ ॥

२.४१dv स च श्रेष्ठो विरेचनम् सुधा भिनत्ति दोषाणां महान्तम् अपि संचयम् ।
आश्व् एव कष्ट-विभ्रंशान् नैव तां कल्पयेद् अतः ॥ ४२ ॥

२.४२cv आश्व् एव कष्ट-विभ्रंशां २.४२cv आश्व् एव कोष्ठ-विभ्रंशान् २.४२dv नैव तां कल्पयेत् ततः मृदौ कोष्ठे ऽ-बले बाले स्थविरे दीर्घ-रोगिणि ।
कल्प्या गुल्मोदर-गर-त्वग्-रोग-मधु-मेहिषु ॥ ४३ ॥

पाण्डौ दूषी-विषे शोफे दोष-विभ्रान्त-चेतसि ।
सा श्रेष्ठा कण्टकैस् तीक्ष्णैर् बहुभिश् च समाचिता ॥ ४४ ॥

द्वि-वर्षा वा त्रि-वर्षा वा शिशिरान्ते विशेषतः ।
तां पाटयित्वा शस्त्रेण क्षीरम् उद्धारयेत् ततः ॥ ४५ ॥

बिल्वादीनां बृहत्योर् वा क्वाथेन समम् एक-शः ।
मिश्रयित्वा सुधा-क्षीरं ततो ऽङ्गारेषु शोषयेत् ॥ ४६ ॥

पिबेत् कृत्वा तु गुटिकां मस्तु-मूत्र-सुरादिभिः ।
त्रिवृतादीन् नव वरां स्वर्णक्षीरीं स-सातलाम् ॥ ४७ ॥

सप्ताहं स्नुक्-पयः-पीतान् रसेनाज्येन वा पिबेत् ।
तद्-वद् व्योषोत्तमा-कुम्भ-निकुम्भाग्नीन् गुडाम्बुना ॥ ४८ ॥

२.४८dv -निकुम्भादीन् गुडाम्बुना नाति-शुष्कं फलं ग्राह्यं शङ्खिन्या निस्-तुषी-कृतम् ।
सप्तलायास् तथा मूलं ते तु तीक्ष्ण-विकाषिणी ॥ ४९ ॥

श्लेष्मामयोदर-गर-श्वयथ्व्-आदिषु कल्पयेत् ।
अक्ष-मात्रं तयोः पिण्डं मदिरा-लवणान्वितम् ॥ ५० ॥

हृद्-रोगे वात-कफ-जे तद्-वद् गुल्मे ऽपि योजयेत् ।
दन्ति-दन्त-स्थिरं स्थूलं मूलं दन्ती-द्रवन्ति-जम् ॥ ५१ ॥

२.५१bv तद्-वद् गुल्मे प्रयोजय् एत् आ-ताम्र-श्याव-तीक्ष्णोष्णम् आशु-कारि विकाशि च ।
गुरु प्रकोपि वातस्य पित्त-श्लेष्म-विलायनम् ॥ ५२ ॥

२.५२bv आशु-कारि विकाषि च तत् क्षौद्र-पिप्पली-लिप्तं स्वेद्यं मृद्-दर्भ-वेष्टितम् ।
शोष्यं मन्दातपे ऽग्न्य्-अर्कौ हतो ह्य् अस्य विकाशि-ताम् ॥ ५३ ॥

२.५३av तत् क्षौद्र-पिप्पली-मिश्रं २.५३av तत् क्षौद्र-पिप्पली-युक्तं २.५३dv हतो ह्य् अस्य विकाषि-ताम् तत् पिबेन् मस्तु-मदिरा-तक्र-पीलु-रसासवैः ।
अभिष्यण्ण-तनुर् गुल्मी प्रमेही जठरी गरी ॥ ५४ ॥

२.५४cv अभिष्यन्द-तनुर् गुल्मी २.५४cv अभिष्यन्दि-तनुर् गुल्मी गो-मृगाज-रसैः पाण्डुः कृमि-कोष्ठी भगन्दरी ।
सिद्धं तत् क्वाथ-कल्काभ्यां दश-मूल-रसेन च ॥ ५५ ॥

विसर्प-विद्रध्य्-अलजी-कक्षा-दाहान् जयेद् घृतम् ।
तैलं तु गुल्म-मेहार्शो-विबन्ध-कफ-मारुतान् ॥ ५६ ॥

महा-स्नेहः शकृच्-छुक्र-वात-सङ्गानिल-व्यथाः ।
विरेचने मुख्य-तमा नवैते त्रिवृतादयः ॥ ५७ ॥

२.५७av महा-स्नेहश् च विट्-शुक्र- हरीतकीम् अपि त्रिवृद्-विधानेनोपकल्पयेत् ।
गुडस्याष्ट-पले पथ्या विंशतिः स्यात् पलं पलम् ॥ ५८ ॥

दन्ती-चित्रकयोः कर्षौ पिप्पली-त्रिवृतोर् दश ।
प्रकल्प्य मोदकान् एकं दशमे दशमे ऽहनि ॥ ५९ ॥

उष्णाम्भो ऽनुपिबेत् खादेत् तान् सर्वान् विधिनामुना ।
एते निष्-परिहाराः स्युः सर्व-व्याधि-निबर्हणाः ॥ ६० ॥

२.६०av उष्णाम्भो ऽनुपिबन् खादेत् विशेषाद् ग्रहणी-पाण्डु-कण्डू-कोठार्शसां हिताः ।
अल्पस्यापि महार्थ-त्वं प्रभूतस्याल्प-कर्म-ताम् ॥ ६१ ॥

२.६१bv -कण्डू-कोष्ठाऋशसां हिताः २.६१bv -कण्डू-कुष्ठाऋशसां हिताः कुर्यात् संश्लेष-विश्लेष-काल-संस्कार-युक्तिभिः ॥ ६१अब् ॥
२.६१ब्व् -काल-संस्कार-युक्तितः त्वक्-केसराम्रातक-दाडिमैला-सितोपला-माक्षिक-मातुलुङ्गैः ।
मद्येन तैस् तैश् च मनो-ऽनुकूलैर् युक्तानि देयानि विरेचनानि ॥ ६२ ॥

२.६२cv मद्यैश् च तैस् तैश् च मनो-ऽनुकूलैर्

# अध्याय 03

वमनं मृदु-कोष्ठेन क्षुद्-वताल्प-कफेन वा ।
अति-तीक्ष्ण-हिम-स्तोकम् अ-जीर्णे दुर्-बलेन वा ॥ १ ॥

पीतं प्रयात्य् अधस् तस्मिन्न् इष्ट-हानिर् मलोदयः ।
वामयेत् तं पुनः स्निग्धं स्मरन् पूर्वम् अतिक्रमम् ॥ २ ॥

३.२dv स्मरन् पूर्वम् अनु-क्रमम् अ-जीर्णिनः श्लेष्म-वतो व्रजत्य् ऊर्ध्वं विरेचनम् ।
अति-तीक्ष्णोष्ण-लवणम् अ-हृद्यम् अति-भूरि वा ॥ ३ ॥

तत्र पूर्वोदिता व्यापत् सिद्धिश् च न तथापि चेत् ।
आशये तिष्ठति ततस् तृतीयं नावचारयेत् ॥ ४ ॥

अन्य-त्र सात्म्याद् धृद्याद् वा भेषजान् निर्-अपायतः ।
अ-स्निग्ध-स्विन्न-देहस्य पुराणं रूक्षम् औषधम् ॥ ५ ॥

३.५av अन्य-त्र सात्म्याद् धृद्याद् च ३.५cv अ-स्निग्धा-स्विन्न-देहस्य दोषान् उत्क्लेश्य निर्हर्तुम् अ-शक्तं जनयेद् गदान् ।
विभ्रंशं श्वयथुं हिध्मां तमसो दर्शनं तृषम् ॥ ६ ॥

३.६cv चिद्-भ्रंशं श्वयथुं हिध्मां पिण्डिकोद्वेष्टनं कण्डूम् ऊर्वोः सादं वि-वर्ण-ताम् ।
स्निग्ध-स्विन्नस्य वात्य्-अल्पं दीप्ताग्नेर् जीर्णम् औषधम् ॥ ७ ॥

३.७cv स्निग्ध-स्विन्नस्य चात्य्-अल्पं शीतैर् वा स्तब्धम् आमे वा समुत्क्लेश्याहरन् मलान् ।
तान् एव जनयेद् रोगान् अ-योगः सर्व एव सः ॥ ८ ॥

३.८av शीतैर् वा स्तब्धम् आमैर् वा ३.८bv समुत्क्लेश्याहरेन् मलान् ३.८bv समुत्क्लेश्य हरेन् मलान् तं तैल-लवणाभ्यक्तं स्विन्नं प्रस्तर-संकरैः ।
निरूढः जाङ्गल-रसैर् भोजयित्वानुवासयेत् ॥ ९ ॥

३.९bv स्विन्नं संस्तर-संकरैः ३.९bv स्विन्नं संस्तर-शङ्करैः फल-मागधिका-दारु-सिद्ध-तैलेन मात्रया ।
स्निग्धं वात-हरैः स्नेहैः पुनस् तीक्ष्णेन शोधयेत् ॥ १० ॥

बहु-दोषस्य रूक्षस्य मन्दाग्नेर् अल्पम् औषधम् ।
सोदावर्तस्य चोत्क्लेश्य दोषान् मार्गान् निरुध्य तैः ॥ ११ ॥

३.११dv दोषान् मार्गं निरुध्य तैः भृशम् आध्मापयेन् नाभिं पृष्ठ-पार्श्व-शिरो-रुजम् ।
श्वासं विण्-मूत्र-वातानां सङ्गं कुर्याच् च दारुणम् ॥ १२ ॥

३.१२av भृशम् आध्मापयेन् नाभि- ३.१२bv -पृष्ठ-पार्श्व-शिरो-रुजम् अभ्यङ्ग-स्वेद-वर्त्य्-आदि स-निरूहानुवासनम् ।
उदावर्त-हरम् सर्वं कर्माध्मातस्य शस्यते ॥ १३ ॥

पञ्च-मूल-यव-क्षार-वचा-भूतिक-सैन्धवैः ।
यवागूः सु-कृता शूल-विबन्धानाह-नाशनी ॥ १४ ॥

३.१४av पञ्च-कोल-यव-क्षार- पिप्पली-दाडिम-क्षार-हिङ्गु-शुण्ठ्य्-अम्ल-वेतसान् ।
स-सैन्धवान् पिबेन् मद्यैः सर्पिषोष्णोदकेन वा ॥ १५ ॥

प्रवाहिका-परिस्राव-वेदना-परिकर्तने ।
पीतौषधस्य वेगानां निग्रहान् मारुतादयः ॥ १६ ॥

३.१६av प्रवाहिका-परिस्रावे ३.१६bv वेदना-परिकर्तने कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्-ग्रहम् ।
हिध्मा-पार्श्व-रुजा-कास-दैन्य-लालाक्षि-विभ्रमैः ॥ १७ ॥

जिह्वां खादति निः-संज्ञो दन्तान् कटकटाययन् ।
न गच्छेद् विभ्रमं तत्र वामयेद् आशु तं भिषक् ॥ १८ ॥

३.१८bv दन्तान् कटकटायते मधुरैः पित्त-मूर्छार्तं कटुभिः कफ-मूर्छितम् ।
पाचनीयैस् ततश् चास्य दोष-शेषं विपाचयेत् ॥ १९ ॥

३.१९cv पाचनीयैस् ततश् चाशु ३.१९dv दोष-शेषं च पाचयेत् कायाग्निं च बलं चास्य क्रमेणाभिप्रवर्धयेत् ।
पवनेनाति-वमतो हृदयं यस्य पीड्यते ॥ २० ॥

३.२०bv क्रमेणाभिप्रवर्तयेत् तस्मै स्निग्धाम्ल-लवणान् दद्यात् पित्त-कफे ऽन्य-था ।
पीतौषधस्य वेगानां निग्रहेण कफेन वा ॥ २१ ॥

३.२१av तस्मै स्निग्धाम्ल-लवणं रुद्धो ऽति वा विशुद्धस्य गृह्णात्य् अङ्गानि मारुतः ।
स्तम्भ-वेपथु-निस्तोद-सादोद्वेष्टार्ति-भेदनैः ॥ २२ ॥

३.२२av रुद्धो वाति विशुद्धस्य ३.२२dv -सादोद्वेष्टाधिभेदनैः तत्र वात-हरं सर्वं स्नेह-स्वेदादि शस्यते ।
बहु-तीक्ष्णं क्षुधार्तस्य मृदु-कोष्ठस्य भेषजम् ॥ २३ ॥

हृत्वाशु विट्-पित्त-कफान् धातून् आस्रावयेद् द्रवान् ।
तत्राति-योगे मधुरैः शेषम् औषधम् उल्लिखेत् ॥ २४ ॥

३.२४bv धातून् प्रस्रावयेद् द्रवान् योज्यो ऽति-वमने रेको विरेके वमनं मृदु ।
परिषेकावगाहाद्यैः सु-शीतैः स्तम्भयेच् च तम् ॥ २५ ॥

३.२५av योज्यो ऽति रेको वमिते अञ्जनं चन्दनोशीरम् अजासृक्-शर्करोदकम् ।
लाज-चूर्णैः पिबेन् मन्थम् अति-योग-हरं परम् ॥ २६ ॥

३.२६av अञ्जनं चन्दनोशीर- ३.२६bv -मज्जासृक्-शर्करोदकम् वमनस्याति-योगे तु शीताम्बु-परिषेचितः ।
पिबेत् फल-रसैर् मन्थं स-घृत-क्षौद्र-शर्करम् ॥ २७ ॥

सोद्गारायां भृशं छर्द्यां मूर्वाया धान्य-मुस्तयोः ।
स-मधूकाञ्जनं चूर्णं लेहयेन् मधु-संयुतम् ॥ २८ ॥

३.२८bv मूर्छायां धान्य-मुस्तयोः वमतो ऽन्तः प्रविष्टायां जिह्वायां कवड-ग्रहाः ।
स्निग्धाम्ल-लवणा हृद्या यूष-मांस-रसा हिताः ॥ २९ ॥

३.२९cv स्निग्धाम्ल-लवणा हृद्याश् ३.२९dv छाग-मांस-रसा हिताः फलान्य् अम्लानि खादेयुस् तस्य चान्ये ऽग्रतो नराः ।
निःसृतां तु तिल-द्राक्षा-कल्क-लिप्तां प्रवेशयेत् ॥ ३० ॥

३.३०bv तस्य चान्ये ऽग्रतो जनाः ३.३०bv तस्य चैवाग्रतो नराः ३.३०dv -कल्क-लिप्तां प्रयोजयेत् वाग्-ग्रहानिल-रोगेषु घृत-मांसोपसाधिताम् ।
यवागूं तनुकां दद्यात् स्नेह-स्वेदौ च काल-वित् ॥ ३१ ॥

अति-योगाच् च भैषज्यं जीवं हरति शोणितम् ।
तज् जीवादानम् इत्य् उक्तम् आदत्ते जीवितं यतः ॥ ३२ ॥

३.३२dv आधत्ते जीवनं नृणाम् शुने काकाय वा दद्यात् तेनान्नम् असृजा सह ।
भुक्ते ऽ-भुक्ते वदेज् जीवं पित्तं वा भेषजेरितम् ॥ ३३ ॥

३.३३cv भुक्ता-भुक्तं वदेज् जीवं ३.३३cv भुक्ते तस्मिन् वदेज् जीवम् ३.३३cv भुक्त्वा-भुक्ते वदेज् जीवं ३.३३dv अ-भुक्ते पित्तम् आदिशेत् शुक्लं वा भावितं वस्त्रम् आवानं कोष्ण-वारिणा ।
प्रक्षालितं वि-वर्णं स्यात् पित्ते शुद्धं तु शोणिते ॥ ३४ ॥

३.३४dv पित्तं शुद्धं तु शोणितं तृष्णा-मूर्छा-मदार्तस्य कुर्याद् आ-मरणात् क्रियाम् ।
रक्त-पित्तातिसार-घ्नीं तस्याशु प्राण-रक्षणीम् ॥ ३५ ॥

३.३५bv कुर्याद् आ-मरण-क्रियाम् ३.३५dv तस्यापि प्राण-रक्षणीम् मृग-गो-महिषाजानां सद्यस्कं जीवताम् असृक् ।
पिबेज् जीवाभिसंधानं जीवं तद् ध्य् आशु गच्छति ॥ ३६ ॥

३.३६dv जीवं तद् ध्य् आशु यच्छति तद् एव दर्भ-मृदितं रक्तं वस्तौ निषेचयेत् ।
श्यामा-काश्मर्य-मधुक-दूर्वोशीरैः शृतं पयः ॥ ३७ ॥

घृत-मण्डाञ्जन-युतं वस्तिं वा योजयेद् धिमम् ।
पिच्छा-वस्तिं सु-शीतं वा घृत-मण्डानुवासनम् ॥ ३८ ॥

गुदं भ्रष्टं कषायैश् च स्तम्भयित्वा प्रवेशयेत् ।
वि-संज्ञं श्रावयेत् साम-वेणु-गीतादि-निस्वनम् ॥ ३९ ॥

३.३९bv स्तम्भयित्वा प्रयोजयेत्

# अध्याय 04

बलां गुडूचीं त्रि-फलां स-रास्नां द्वि-पञ्च-मूलं च पलोन्मितानि ।
अष्टौ फलान्य् अर्ध-तुलां च मांसाच् छागात् पचेद् अप्सु चतुर्थ-शेषम् ॥ १ ॥

पूतो यवानी-फल-बिल्व-कुष्ठ-वचा-शताह्वा-घन-पिप्पलीनाम् ।
कल्कैर् गुड-क्षौद्र-घृतैः स-तैलैर् युक्तः सुखोष्णो लवणान्वितश् च ॥ २ ॥

४.२av पूतं यवानी-फल-बिल्व-कुष्ठ- वस्तिः परं सर्व-गद-प्रमाथी स्वस्थे हितो जीवन-बृंहणश् च ।
वस्तौ च यस्मिन् पठितो न कल्कः सर्व-त्र दद्याद् अमुम् एव तत्र ॥ ३ ॥

४.३cv वस्तौ च यस्मिन् कथितो न कल्कः द्वि-पञ्च-मूलस्य रसो ऽम्ल-युक्तः स-च्छाग-मांसस्य स-पूर्व-पेष्यः ।
त्रि-स्नेह-युक्तः प्रवरो निरूहः सर्वानिल-व्याधि-हरः प्रदिष्टः ॥ ४ ॥

४.४bv स-च्छाग-मांसस्य स-पूर्व-कल्कः बला-पटोली-लघु-पञ्च-मूल-त्रायन्तिकैरण्ड-यवात् सु-सिद्धात् ।
प्रस्थो रसाच् छाग-रसार्ध-युक्तः साध्यः पुनः प्रस्थ-समः स यावत् ॥ ५ ॥

प्रियङ्गु-कृष्णा-घन-कल्क-युक्तः स-तैल-सर्पिर्-मधु-सैन्धवश् च ।
स्याद् दीपनो मांस-बल-प्रदश् च चक्षुर्-बलं चोपदधाति सद्यः ॥ ६ ॥

एरण्ड-मूलात् त्रि-पलं पलाशात् तथा पलांशं लघु-पञ्च-मूलम् ।
रास्ना-बला-छिन्नरुहाश्वगन्धा-पुनर्नवारग्वध-देवदारु ॥ ७ ॥

४.७bv तथा पलांशं लघु-पञ्च-मूलात् फलानि चाष्टौ सलिलाढकाभ्यां विपाचयेद् अष्टम-शेषिते ऽस्मिन् ।
वचा-शताह्वा-हपुषा-प्रियङ्गु-यष्टी-कणा-वत्सक-बीज-मुस्तम् ॥ ८ ॥

दद्यात् सु-पिष्टं सह-ताक्ष्र्य-शैलम् अक्ष-प्रमाणं लवणांश-युक्तम् ।
स-माक्षिकस् तैल-युतः स-मूत्रो वस्तिर् जयेल् लेखन-दीपनो ऽसौ ॥ ९ ॥

४.९dv वस्तिर् जयेद् दीपन-पाचनो ऽसौ जङ्घोरु-पाद-त्रिक-पृष्ठ-कोष्ठ-हृद्-गुह्य-शूलं गुरु-तां विबन्धम् ।
गुल्माश्म-वर्ध्म-ग्रहणी-गुदोत्थांस् तास् तांश् च रोगान् कफ-वात-जातान् ॥ १० ॥

४.१०cv गुल्माश्म-वर्ध्म-ग्रहणी-विकारांस् ४.१०dv तांस् तांश् च रोगान् कफ-वात-जांश् च यष्ट्य्-आह्व-लोध्राभय-चन्दनैश् च शृतं पयो ऽग्र्यं कमलोत्पलैश् च ।
स-शर्करा-क्षौद्र-घृतं सु-शीतं पित्तामयान् हन्ति स-जीवनीयम् ॥ ११ ॥

४.११cv स-शर्करं क्षौद्र-युतं सु-शीतं ४.११dv पित्तामयं हन्ति स-जीवनीयम् रास्नां वृषं लोहितिकाम् अनन्तां बलां कनीयस्-तृण-पञ्च-मूल्यौ ।
गोपाङ्गना-चन्दन-पद्मकर्द्धि-यष्ट्य्-आह्व-लोध्राणि पलार्धकानि ॥ १२ ॥

४.१२cv गोपाङ्गना-चन्दन-पद्मकाह्व- निःक्वाथ्य तोयेन रसेन तेन शृतं पयो ऽर्धाढकम् अम्बु-हीनम् ।
जीवन्ति-मेदर्द्धि-वरी-विदारी-वीरा-द्वि-काकोलि-कसेरुकाभिः ॥ १३ ॥

सितोपला-जीवक-पद्म-रेणु-प्रपौण्डरीकोत्पल-पुण्डरीकैः ।
लोध्रात्मगुप्ता-मधुयष्टिकाभिर् नागाह्व-मुञ्जातक-चन्दनैश् च ॥ १४ ॥

४.१४cv लोहात्मगुप्ता-मधुयष्टिकाभिर् पिष्टैर् घृत-क्षौद्र-युतैर् निरूहं स-सैन्धवं शीतलम् एव दद्यात् ।
प्रत्यागते धन्व-रसेन शालीन् क्षीरेण वाद्यात् परिषिक्त-गात्रः ॥ १५ ॥

दाहातिसार-प्रदरास्र-पित्त-हृत्-पाण्डु-रोगान् विषम-ज्वरं च ।
स-गुल्म-मूत्र-ग्रह-कामलादीन् सर्वामयान् पित्त-कृतान् निहन्ति ॥ १६ ॥

४.१६av दाहातिसार-प्रदराम्ल-पित्त- ४.१६bv -हृत्-पाण्डु-रोगान् विषम-ज्वरांश् च ४.१६bv -हृत्-पाण्डु-रोगान् विषमान् ज्वरांश् च कोशातकारग्वध-देवदारु-मूर्वा-श्वदंष्ट्रा-कुटजार्क-पाठाः ।
पक्त्वा कुलत्थान् बृहतीं च तोये रसस्य तस्य प्रसृता दश स्युः ॥ १७ ॥

तान् सर्षपैला-मदनैः स-कुष्ठैर् अक्ष-प्रमाणैः प्रसृतैश् च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्य च सार्षपस्य ॥ १८ ॥

४.१८dv क्षारस्य तैलस्य च सर्षपस्य दद्यान् निरूहं कफ-रोगिताय मन्दाग्नये चाशन-विद्विषे च ।
वक्ष्ये मृदून् स्नेह-कृतो निरूहान् सुखोचितानां प्रसृतैः पृथक् तु ॥ १९ ॥

अथेमान् सु-कुमाराणां निरूहान् स्नेहनान् मृदून् ।
कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक् ॥ २० ॥

४.२०cv कर्मणा विप्लुतानां तु क्षीराद् द्वौ प्रसृतौ कार्यौ मधु-तैल-घृतात् त्रयः ।
खजेन मथितो वस्तिर् वात-घ्नो बल-वर्ण-कृत् ॥ २१ ॥

एकैकः प्रसृतस् तैल-प्रसन्ना-क्षौद्र-सर्पिषाम् ।
बिल्वादि-मूल-क्वाथाद् द्वौ कौलत्थाद् द्वौ स वात-जित् ॥ २२ ॥

४.२२av एकैकः प्रसृतिस् तैल- पटोल-निम्ब-भूतीक-रास्ना-सप्तच्छदाम्भसः ।
प्रसृतः पृथग् आज्याच् च वस्तिः सर्षप-कल्क-वान् ॥ २३ ॥

४.२३av पटोल-निम्ब-पूतीक- ४.२३bv -रास्ना-सप्तच्छदाम्भसाम् ४.२३cv प्रसृताः पृथग् आज्याच् च स पञ्च-तिक्तो ऽभिष्यन्द-कृमि-कुष्ठ-प्रमेह-हा ।
चत्वारस् तैल-गो-मूत्र-दधि-मण्डाम्ल-काञ्जिकात् ॥ २४ ॥

४.२४bv -कृमि-कुष्ठ-प्रमोह-हा ४.२४bv -कृमि-कुष्ठ-प्रमेह-जित् प्रसृताः सर्षपैः पिष्टैर् विट्-सङ्गानाह-भेदनः ।
पयस्येक्षु-स्थिरा-रास्ना-विदारी-क्षौद्र-सर्पिषाम् ॥ २५ ॥

४.२५bv विट्-सङ्गानाह-भेदनाः ४.२५bv विट्-सङ्गानाह-भेदिनः ४.२५dv -विदारी-क्षौद्र-सर्पिषः एकैकः प्रसृतो वस्तिः कृष्णा-कल्को वृष-त्व-कृत् ।
सिद्ध-वस्तीन् अतो वक्ष्ये सर्व-दा यान् प्रयोजयेत् ॥ २६ ॥

निर्-व्यापदो बहु-फलान् बल-पुष्टि-करान् सुखान् ।
मधु-तैले समे कर्षः सैन्धवाद् द्वि-पिचुर् मिशिः ॥ २७ ॥

एरण्ड-मूल-क्वाथेन निरूहो माधुतैलिकः ।
रसायनं प्रमेहार्शः-कृमि-गुल्मान्त्र-वृद्धि-नुत् ॥ २८ ॥

४.२८bv निरूहो मधु-तैलिकः ४.२८dv -कृमि-गुल्मान्त्र-वृद्धि-हृत् स-यष्टीमधुकश् चैष चक्षुष्यो रक्त-पित्त-जित् ।
यापनो घन-कल्केन मधु-तैल-रसाज्य-वान् ॥ २९ ॥

पायु-जानूरु-वृषण-वस्ति-मेहन-शूल-जित् ।
प्रसृतांशैर् घृत-क्षौद्र-वसा-तैलैः प्रकल्पयेत् ॥ ३० ॥

४.३०av पायु-जङ्घोरु-वृषण- यापनं सैन्धवार्धाक्ष-हपुषार्ध-पलान्वितम् ।
एरण्ड-मूल-निःक्वाथो मधु-तैलं स-सैन्धवम् ॥ ३१ ॥

४.३१dv मधु-तैलं स-सैन्धवः एष युक्त-रथो वस्तिः स-वचा-पिल्लली-फलः ।
स क्वाथो मधु-षड्ग्रन्था-शताह्वा-हिङ्गु-सैन्धवम् ॥ ३२ ॥

४.३२cv तत्-क्वाथो मधु-षड्ग्रन्था- ४.३२dv -शताह्वा-हिङ्गु-सैन्धवः सुरदारु च रास्ना च वस्तिर् दोष-हरः शिवः ।
पञ्च-मूलस्य निःक्वाथस् तैलं मागधिका मधु ॥ ३३ ॥

४.३३av सुरदारु वचा रास्ना ४.३३bv वस्तिर् दोष-हरश् च सः ४.३३bv वस्तिर् दोष-हरः परः स-सैन्धवः स-मधुकः सिद्ध-वस्तिर् इति स्मृतः ।
द्वि-पञ्च-मूल-त्रि-फला-फल-बिल्वानि पाचयेत् ॥ ३४ ॥

गो-मूत्रे तेन पिष्टैश् च पाठा-वत्सक-तोयदैः ।
स-फलैः क्षौद्र-तैलाभ्यां क्षारेण लवणेन च ॥ ३५ ॥

४.३५dv क्षारेण लवणेन वा युक्तो वस्तिः कफ-व्याधि-पाण्डु-रोग-विषूचिषु ।
शुक्रानिल-विबन्धेषु वस्त्य्-आटोपे च पूजितः ॥ ३६ ॥

४.३६dv वस्त्य्-आटोपेषु पूजितः मुस्ता-पाठामृतैरण्ड-बला-रास्ना-पुनर्नवाः ।
मञ्जिष्ठारग्वधोशीर-त्रायमाणाक्ष-रोहिणीः ॥ ३७ ॥

४.३७bv -बला-रास्ना-पुनर्नवम् ४.३७dv -त्रायमाणाक्ष-रोहिणि कनीयः पञ्च-मूलं च पालिकं मदनाष्टकम् ।
जलाढके पचेत् तच् च पाद-शेषं परिस्रुतम् ॥ ३८ ॥

क्षीर-द्वि-प्रस्थ-संयुक्तं क्षीर-शेषं पुनः पचेत् ।
स-पाद-जाङ्गल-रसः स-सर्पिर्-मधु-सैन्धवः ॥ ३९ ॥

पिष्टैर् यष्टी-मिशि-श्यामा-कलिङ्गक-रसाञ्जनैः ।
वस्तिः सुखोष्णो मांसाग्नि-बल-शुक्र-विवर्धनः ॥ ४० ॥

वातासृङ्-मोह-मेहार्शो-गुल्म-विण्-मूत्र-संग्रहान् ।
विषम-ज्वर-वीसर्प-वर्ध्माध्मान-प्रवाहिकाः ॥ ४१ ॥

४.४१av वात-रक्त-प्रमेहार्शो- ४.४१av वातासृङ्-मेह-मेदो-ऽर्शो- ४.४१bv -गुल्म-विण्-मूत्र-संग्रहम् वङ्क्षणोरु-कटी-कुक्षि-मन्या-श्रोत्र-शिरो-रुजः ।
हन्याद् असृग्-दरोन्माद-शोफ-कासाश्म-कुण्डलान् ॥ ४२ ॥

चक्षुष्यः पुत्र-दो राजा यापनानां रसायनम् ।
मृगाणां लघु-वद्राणां दश-मूलस्य चाम्भसा ॥ ४३ ॥

४.४३bv यापनानां रसायनः ४.४३cv मृगाणां लघु-बभ्रूणां ४.४३cv मृगाणां लघु-बर्हाणां ४.४३cv मृगाणां लघु-वड्राणां ४.४३cv मृगाणां लघु-वभ्राणां ४.४३cv मृगाणां लघु-बभ्राणां ४.४३cv मृगाणां लघु-वर्गाणां हपुषा-मिशि-गाङ्गेयी-कल्कैर् वात-हरः परम् ।
निरूहो ऽत्य्-अर्थ-वृष्यश् च महा-स्नेह-समन्वितः ॥ ४४ ॥

४.४४bv -कल्कैर् वात-हरैः परम् ४.४४bv -कल्को वात-हरः परम् मयूरं पक्ष-पित्तान्त्र-पाद-विट्-तुण्ड-वर्जितम् ।
लघुना पञ्च-मूलेन पालिकेन समन्वितम् ॥ ४५ ॥

पक्त्वा क्षीर-जले क्षीर-शेषं स-घृत-माक्षिकम् ।
तद् विदारी-कणा-यष्टी-शताह्वा-फल-कल्क-वत् ॥ ४६ ॥

४.४६dv -शताह्वा-फल-कल्क-वान् वस्तिर् ईषत्-पटु-युतः परमं बल-शुक्र-कृत् ।
कल्पनेयं पृथक् कार्या तित्तिरि-प्रभृतिष्व् अपि ॥ ४७ ॥

४.४७bv परमं बल-वर्ण-कृत् विष्किरेषु समस्तेषु प्रतुद-प्रसहेषु च ।
जल-चारिषु तद्-वच् च मत्स्येषु क्षीर-वर्जिता ॥ ४८ ॥

गोधा-नकुल-मार्जार-शल्यकोन्दुर-जं पलम् ।
पृथग् दश-पलं क्षीरे पञ्च-मूलं च साधयेत् ॥ ४९ ॥

तत् पयः फल-वैदेही-कल्क-द्वि-लवणान्वितम् ।
स-सिता-तैल-मध्व्-आज्यो वस्तिर् योज्यो रसायनम् ॥ ५० ॥

४.५०cv स-सिता-तैल-मध्व्-आज्यं ४.५०cv स-सिता-तैल-मध्व्-आज्यं व्यायाम-मथितोरस्क-क्षीणेन्द्रिय-बलौजसाम् ।
विबद्ध-शुक्र-विण्-मूत्र-खुड-वात-विकारिणाम् ॥ ५१ ॥

४.५१cv विबन्ध-शुक्र-विण्-मूत्र- गज-वाजि-रथ-क्षोभ-भग्न-जर्जरितात्मनाम् ।
पुनर्-नव-त्वं कुरुते वाजी-करणम् उत्तमम् ॥ ५२ ॥

४.५२dv वाजी-करण-सत्-तमम् सिद्धेन पयसा भोज्यम् आत्मगुप्तोच्चटेक्षुरैः ।
स्नेहांश् चा-यन्त्रणान् सिद्धान् सिद्ध-द्रव्यैः प्रकल्पयेत् ॥ ५३ ॥

४.५३cv स्नेहांश् चाढ्य-गुणान् सिद्धान् दोष-घ्नाः स-परीहारा वक्ष्यन्ते स्नेह-वस्तयः ।
दश-मूलं बलां रास्नाम् अश्वगन्धां पुनर्नवाम् ॥ ५४ ॥

४.५४av दोष-घ्ना निष्-परीहारा गुडूच्यैरण्ड-भूतीक-भार्गी-वृषक-रोहिषम् ।
शतावरीं सहचरं काकनासां पलांशकम् ॥ ५५ ॥

४.५५av गुडूच्यैरण्ड-पूतीक- ४.५५dv काकनासां पलांशिकम् ४.५५dv काकनासां पलांशिकाम् यव-माषातसी-कोल-कुलत्थान् प्रसृतोन्मितान् ।
वहे विपाच्य तोयस्य द्रोण-शेषेण तेन च ॥ ५६ ॥

पचेत् तैलाढकं पेष्यैर् जीवनीयैः पलोन्मितैः ।
अनुवासनम् इत्य् एतत् सर्व-वात-विकार-नुत् ॥ ५७ ॥

४.५७av पचेत् तैलाड्ःकं कल्कैर् ४.५७dv सर्व-वात-विकार-जित् आनूपानां वसा तद्-वज् जीवनीयोपसाधिता ।
शताह्वा-चिरिबिल्वाम्लैस् तैलं सिद्धं समीरणे ॥ ५८ ॥

४.५८cv शताह्वा-यव-बिल्वाम्लैस् ४.५८dv तैलं तद्-वत् समीरणे सैन्धवेनाग्नि-वर्णेन तप्तं चानिल-जिद् घृतम् ।
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥ ५९ ॥

शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ।
स्वगुप्तां क्षीर-काकोलीं कर्कटाख्यां शठीं वचाम् ॥ ६० ॥

पिष्ट्वा तैल-घृतं क्षीरे साधयेत् तच्-चतुर्-गुणे ।
बृंहणं वात-पित्त-घ्नं बल-शुक्राग्नि-वर्धनम् ॥ ६१ ॥

४.६१av पिष्ट्वा तैलं घृतं क्षीरे ४.६१bv साधयेत् च चतुर्-गुणे रजः-शुक्रामय-हरं पुत्रीयं चानुवासनम् ।
सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ॥ ६२ ॥

४.६२av रजः-शुक्रानिल-हरं ४.६२bv पुत्रीयम् अनुवासनम् ह्रीवेरं मधुकं भार्गी देवदारु स-कट्फलम् ।
नागरं पुष्करं मेदा चविका चित्रकः शठी ॥ ६३ ॥

४.६३av ह्रीवेरं पद्मकं भार्गी विडङ्गातिविषे श्यामा हरेणुर् नीलिनी स्थिरा ।
बिल्वाजमोद-चपला दन्ती रास्ना च तैः समैः ॥ ६४ ॥

४.६४av विडङ्गातिविषा-श्यामा ४.६४cv बिल्वाजमोदा-चपला ४.६४cv बिल्वाजमोदे चपला साध्यम् एरण्ड-तैलं वा तैलं वा कफ-रोग-नुत् ।
वर्ध्मोदावर्त-गुल्मार्शः-प्लीह-मेहाढ्य-मारुतान् ॥ ६५ ॥

४.६५av साध्यम् एरण्ड-जं तैलं ४.६५bv कफ-वात-ज-रोग-नुत् आनाहम् अश्मरीं चाशु हन्यात् तद् अनुवासनम् ।
साधितं पञ्च-मूलेन तैलं बिल्वादिनाथ-वा ॥ ६६ ॥

कफ-घ्नं कल्पयेत् तैलं द्रव्यैर् वा कफ-घातिभिः ।
फलैर् अष्ट-गुणैश् चाम्लैः सिद्धम् अन्वासनं कफे ॥ ६७ ॥

४.६७cv फलैर् अष्ट-गुणे चाम्ले मृदु-वस्ति-जडी-भूते तीक्ष्णो ऽन्यो वस्तिर् इष्यते ।
तीक्ष्णैर् विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः ॥ ६८ ॥

४.६८av मृदु-वस्तौ जडी-भूते तीक्ष्ण-त्वं मूत्र-पील्व्-अग्नि-लवण-क्षार-सर्षपैः ।
प्राप्त-कालं विधातव्यं क्षीराज्याद्यैस् तु मार्दवम् ॥ ६९ ॥

४.६९av तीक्ष्ण-त्वं मूत्र-बिल्वाग्नि- ४.६९dv क्षीराज्याद्यैश् च मार्दवम् ४.६९dv क्षीराद्यैश् चैव मार्दवम् ४.६९dv घृत-क्षीरैस् तु मार्दवम् बल-काल-रोग-दोष-प्रकृतीः प्रविभज्य योजितो वस्तिः ।
स्वैः स्वैर् औषध-वर्गैः स्वान् स्वान् रोगान् निवर्तयति ॥ ७० ॥

४.७०bv -प्रकृतीः प्रविवीक्ष्य योजितो वस्तिः ४.७०dv स्वान् स्वान् दोषान् निवर्तयति उष्णार्तानां शीतात्र् छीतार्तानां तथा सुखोष्णांश् च ।
तद्-योग्यौषध-युक्तान् वस्तीन् संतर्क्य युञ्जीत ॥ ७१ ॥

वस्तीन् न बृंहणीयान् दद्याद् व्याधिषु विशोधनीयेषु ।
मेदस्विनो विशोध्या ये च नराः कुष्ठ-मेहार्ताः ॥ ७२ ॥

४.७२bv दद्याद् व्याधिषु च शोधनीयेषु न क्षीण-क्षत-दुर्-बल-मूर्छित-कृश-शुष्क-शुद्ध-देहानाम् ।
दद्याद् विशोधनीयान् दोष-निबद्धायुषो ये च ॥ ७३ ॥

# अध्याय 05

अ-स्निग्ध-स्विन्न-देहस्य गुरु-कोष्ठस्य योजितः ।
शीतो ऽल्प-स्नेह-लवण-द्रव्य-मात्रो घनो ऽपि वा ॥ १ ॥

५.१dv -द्रव-मात्रो घनो ऽपि वा वस्तिः संक्षोभ्य तं दोषं दुर्-बल-त्वाद् अ-निर्हरन् ।
करोत्य् अ-योगं तेन स्याद् वात-मूत्र-शकृद्-ग्रहः ॥ २ ॥

५.२av वस्तिः संस्तभ्य तं दोषं नाभि-वस्ति-रुजा दाहो हृल्-लेपः श्वयथुर् गुदे ।
कण्डूर् गण्डानि वैवर्ण्यम् अ-रतिर् वह्नि-मार्दवम् ॥ ३ ॥

५.३av नाभि-वस्ति-रुजानाहो ५.३cv कण्डूर् गण्डाति-वैवर्ण्यम् ५.३cv कण्डूर् गण्डाक्षि-वैवर्ण्यम् क्वाथ-द्वयं प्राग्-विहितं मध्य-दोषे ऽतिसारिणि ।
उष्णस्य तस्माद् एकस्य तत्र पानं प्रशस्यते ॥ ४ ॥

५.४dv तत्र पानं विधीयते फल-वर्त्यस् तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
बिल्व-मूल-त्रिवृद्-दारु-यव-कोल-कुलत्थ-वान् ॥ ५ ॥

सुरादि-मूत्र-वान् वस्तिः स-प्राक्-पेष्यस् तम् आनयेत् ।
युक्तो ऽल्प-वीर्यो दोषाढ्ये रूक्षे क्रूराशये ऽथ-वा ॥ ६ ॥

५.६av सुरादि-मांस् तत्र वस्तिः वस्तिर् दोषावृतो रुद्ध-मार्गो रुन्ध्यात् समीरणम् ।
स वि-मार्गो ऽनिलः कुर्याद् आध्मानं मर्म-पीडनम् ॥ ७ ॥

विदाहं गुद-कोष्ठस्य मुष्क-वङ्क्षण-वेदनाम् ।
रुणद्धि हृदयं शूलैर् इतश् चेतश् च धावति ॥ ८ ॥

स्व्-अभ्यक्त-स्विन्न-गात्रस्य तत्र वर्तिं प्रयोजयेत् ।
बिल्वादिश् च निरूहः स्यात् पीलु-सर्षप-मूत्र-वान् ॥ ९ ॥

५.९av अभ्यक्त-स्विन्न-गात्रस्य ५.९av स्व्-अभ्यक्त-स्विन्न-गात्राय ५.९av स्व्-अभ्यक्त-स्विन्न-देहस्य सरलामरदारुभ्यां साधितं चानुवासनम् ।
कुर्वतो वेग-संरोधं पीडितो वाति-मात्रया ॥ १० ॥

५.१०bv साधितं वानुवासनम् ५.१०dv पीडितश् चाति-मात्रया अ-स्निग्ध-लवणोष्णो वा वस्तिर् अल्पो ऽल्प-भेषजः ।
मृदुर् वा मारुतेनोर्ध्वं विक्षिप्तो मुख-नासिकात् ॥ ११ ॥

निरेति मूर्छा-हृल्-लास-तृड्-दाहादीन् प्रवर्तयन् ।
मूर्छा-विकारं दृष्ट्वास्य सिञ्चेच् छीताम्बुना मुखम् ॥ १२ ॥

५.१२bv -तृड्-दाहादीन् प्रकल्पयेत् ५.१२bv -तृड्-दाहादीन् प्रवर्तयेत् व्यजेद् आ-क्लम-नाशाच् च प्राणायामं च कारयेत् ।
पृष्ठ-पार्श्वोदरं मृज्यात् करैर् उष्णैर् अधो-मुखम् ॥ १३ ॥

५.१३av वीजेत् क्लम-विनाशाच् च ५.१३av वीजेद् आ-क्लम-नाशाच् च ५.१३av वीज्येद् आ-क्लम-नाशाच् च ५.१३cv पृष्ठ-पार्श्वोदरं मृद्यात् केशेषूत्क्षिप्य धुन्वीत भीषयेद् व्याल-दंष्ट्रिभिः ।
शस्त्रोल्का-राज-पुरुषैर् वस्तिर् एति तथा ह्य् अधः ॥ १४ ॥

५.१४bv भाययेद् व्याल-दंष्ट्रिभिःव् ५.१४bv भापयेद् व्याल-दंष्ट्रिभिः पाणि-वस्त्रैर् गलापीडं कुर्यान् न म्रियते तथा ।
प्राणोदान-निरोधाद् धि सु-प्रसिद्ध-तरायनः ॥ १५ ॥

अपानः पवनो वस्तिं तम् आश्व् एवापकर्षति ।
कुष्ठ-क्रमुक-कल्कं च पाययेताम्ल-संयुतम् ॥ १६ ॥

५.१६bv तथाश्व् एवापकर्षति ५.१६cv कुष्ठ-क्रमुक-कल्कं वा ५.१६dv पाययेद् अम्ल-संयुतम् औष्ण्यात् तैक्ष्ण्यात् सर-त्वाच् च वस्तिं सो ऽस्यानुलोमयेत् ।
गो-मूत्रेण त्रिवृत्-पथ्या-कल्कं वाधो-ऽनुलोमनम् ॥ १७ ॥

५.१७dv -कल्कं चाधो-ऽनुलोमनम् पक्वाशय-स्थिते स्विन्ने निरूहो दाशमूलिकः ।
यव-कोल-कुलत्थैश् च विधेयो मूत्र-साधितैः ॥ १८ ॥

५.१८dv विधेयो मूत्र-साधितः वस्तिर् गो-मूत्र-सिद्धैर् वा सामृता-वंश-पल्लवैः ।
पूति-करञ्ज-त्वक्-पत्र-शठी-देवाह्व-रोहिषैः ॥ १९ ॥

स-तैल-गुड-सिन्धूत्थो विरेकौषध-कल्क-वान् ।
बिल्वादि-पञ्च-मूलेन सिद्धो वस्तिर् उरः-स्थिते ॥ २० ॥

शिरः-स्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ।
वस्तिर् अत्य्-उष्ण-तीक्ष्णाम्ल-घनो ऽति-स्वेदितस्य वा ॥ २१ ॥

अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ।
अति-योग-त्वम् आपन्नो भवेत् कुक्षि-रुजा-करः ॥ २२ ॥

विरेचनाति-योगेन स तुल्याकृति-साधनः ।
वस्तिः क्षाराम्ल-तीक्ष्णोष्ण-लवणः पैत्तिकस्य वा ॥ २३ ॥

५.२३dv -लवणः पैत्तिकस्य च गुदं दहन् लिखन् क्षिण्वन् करोत्य् अस्य परिस्रवम् ।
स विदग्धं स्रवत्य् अस्रं वर्णैः पित्तं च भूरिभिः ॥ २४ ॥

५.२४bv करोत्य् अस्र-परिस्रवम् बहु-शश् चाति-वेगेन मोहं गच्छति सो ऽ-सकृत् ।
रक्त-पित्तातिसार-घ्नी क्रिया तत्र प्रशस्यते ॥ २५ ॥

५.२५av बहु-शश् चाति-योगेन ५.२५bv मोहं गच्छति चा-सकृत् ५.२५bv मोहं गच्छति वा-सकृत् दाहादिषु त्रिवृत्-कल्कं मृद्वीका-वारिणा पिबेत् ।
तद् धि पित्त-शकृद्-वातान् हृत्वा दाहादिकाञ् जयेत् ॥ २६ ॥

५.२६dv हत्वा दाहादिकाञ् जयेत् विशुद्धश् च पिबेच् छीतां यवागूं शर्करा-युताम् ।
युञ्ज्याद् वाति-विरिक्तस्य क्षीण-विट्कस्य भोजनम् ॥ २७ ॥

५.२७bv यवागूं शर्करान्विताम् माष-यूषेण कुल्माषान् पानं दध्य् अथ-वा सुराम् ।
सिद्धिर् वस्त्य्-आपदाम् एवं स्नेह-वस्तेस् तु वक्ष्यते ॥ २८ ॥

५.२८dv स्नेह-वस्तिषु वक्ष्यते ५.२८dv स्नेह-कल्पस् तु वक्ष्यते शीतो ऽल्पो वाधिके वाते पित्ते ऽत्य्-उष्णः कफे मृदुः ।
अति-भुक्ते गुरुर् वर्चः-संचये ऽल्प-बलस् तथा ॥ २९ ॥

दत्तस् तैर् आवृतः स्नेहो नायात्य् अभिभवाद् अपि ।
स्तम्भोरु-सदनाध्मान-ज्वर-शूलाङ्ग-मर्दनैः ॥ ३० ॥

५.३०bv नायात्य् अभिभवाद् अधः पार्श्व-रुग्-वेष्टनैर् विद्याद् वायुना स्नेहम् आवृतम् ।
स्निग्धाम्ल-लवणोष्णैस् तं रास्ना-पीतद्रु-तैलिकैः ॥ ३१ ॥

सौवीरक-सुरा-कोल-कुलत्थ-यव-साधितैः ।
निरूहैर् निर्हरेत् सम्यक् स-मूत्रैः पाञ्चमूलिकैः ॥ ३२ ॥

५.३२av सौवीरक-सुराङ्कोल्ल- ५.३२dv स-मूत्रैः पाञ्चमौलिकैः ताभ्याम् एव च तैलाभ्यां सायं भुक्ते ऽनुवासयेत् ।
तृड्-दाह-राग-संमोह-वैवर्ण्य-तमक-ज्वरैः ॥ ३३ ॥

५.३३av ताभ्याम् एव तु तैलाभ्यां ५.३३av तैलाभ्याम् एव ताभ्यां वा विद्यात् पित्तावृतं स्वादु-तिक्तैस् तं वस्तिभिर् हरेत् ।
तन्द्रा-शीत-ज्वरालस्य-प्रसेका-रुचि-गौरवैः ॥ ३४ ॥

५.३४bv -तिक्तैस् तं च विनिर्हरेत् संमूर्छा-ग्लानिभिर् विद्याच् छलेष्मणा स्नेहम् आवृतम् ।
कषाय-तिक्त-कटुकैः सुरा-मूत्रोपसाधितैः ॥ ३५ ॥

५.३५av स-मूर्छा-ग्लानिभिर् विद्याच् ५.३५dv सुरा-मूत्रैः प्रसाधितैः ५.३५dv सुरा-गो-मूत्र-साधितैः फल-तैल-युतैः साम्लैर् वस्तिभिस् तं विनिर्हरेत् ।
छर्दि-मूर्छा-रुचि-ग्लानि-शूल-निद्राङ्ग-मर्दनैः ॥ ३६ ॥

५.३६dv -शूल-तन्द्राङ्ग-मर्दनैः आम-लिङ्गैः स-दाहैस् तं विद्याद् अत्य्-अशनावृतम् ।
कटूनां लवणानां च क्वाथैश् चूर्णैश् च पाचनम् ॥ ३७ ॥

५.३७bv विद्याद् आमावृतं तु तम् मृदुर् विरेकः सर्वं च तत्राम-विहितं हितम् ।
विण्-मूत्रानिल-सङ्गार्ति-गुरु-त्वाध्मान-हृद्-ग्रहैः ॥ ३८ ॥

स्नेहं विड्-आवृतं ज्ञात्वा स्नेह-स्वेदैः स-वर्तिभिः ।
श्यामा-बिल्वादि-सिद्धैश् च निरूहैः सानुवासनैः ॥ ३९ ॥

निर्हरेद् विधिना सम्यग् उदावर्त-हरेण च ।
अ-भुक्ते शून-पायौ वा पेया-मात्राशितस्य वा ॥ ४० ॥

५.४०bv उदावर्त-हरेण वा ५.४०dv पेया-मात्राशितस्य च गुदे प्रणिहितः स्नेहो वेगाद् धावत्य् अन्-आवृतः ।
ऊर्ध्वं कायं ततः कण्ठाद् ऊर्ध्वेभ्यः खेभ्य एत्य् अपि ॥ ४१ ॥

५.४१cv ऊर्ध्व-कायं ततः कण्ठाद् मूत्र-श्यामा-त्रिवृत्-सिद्धो यव-कोल-कुलत्थ-वान् ।
तत्-सिद्ध-तैलो देयः स्यान् निरूहः सानुवासनः ॥ ४२ ॥

कण्ठाद् आगच्छतः स्तम्भ-कण्ठ-ग्रह-विरेचनैः ।
छर्दि-घ्नीभिः क्रियाभिश् च तस्य कुर्यान् निबर्हणम् ॥ ४३ ॥

ना-पक्वं प्रणयेत् स्नेहं गुदं स ह्य् उपलिम्पति ।
ततः कुर्यात् स-रुङ्-मोह-कण्डू-शोफान् क्रियात्र च ॥ ४४ ॥

५.४४av ना-पक्वं स्नेहयेत् स्नेहं ५.४४cv ततः कुर्यात् स-तृण्-मोह- ५.४४cv स कुर्यात् सक्थि-रुङ्-मोह- तीक्ष्णो वस्तिस् तथा तैलम् अर्क-पत्र-रसे शृतम् ।
अन्-उच्छवास्य तु बद्धे वा दत्ते निःशेष एव वा ॥ ४५ ॥

५.४५cv अन्-उच्छवास्य नु बद्धे वा ५.४५cv अन्-उच्छवास्यानुबद्धे वा ५.४५dv दत्ते निःशेष एव च प्रविश्य क्षुभितो वायुः शूल-तोद-करो भवेत् ।
तत्राभ्यङ्गो गुदे स्वेदो वात-घ्नान्य् अशनानि च ॥ ४६ ॥

५.४६dv वात-घ्नान्य् अशनान्य् अथ द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात् कटी-गुद-जङ्घोरु-वस्ति-स्तम्भार्ति-भेदनम् ॥ ४७ ॥

भोजनं तत्र वात-घ्नं स्वेदाभ्यङ्गाः स-वस्तयः ।
पीड्यमाने ऽन्तरा मुक्ते गुदे प्रतिहतो ऽनिलः ॥ ४८ ॥

उरः-शिरो-रुजं सादम् ऊर्वोश् च जनयेद् बली ।
वस्तिः स्यात् तत्र बिल्वादि-फल-श्यामादि-मूत्र-वान् ॥ ४९ ॥

५.४९cv वस्तिः स्यात् तत्र बिल्वादिः ५.४९dv फल-श्यामादि-मूत्र-वान् अति-प्रपीडितः कोष्ठे तिष्ठत्य् आयाति वा गलम् ।
तत्र वस्तिर् विरेकश् च गल-पीडादि कर्म च ॥ ५० ॥

५.५०bv तिष्ठन्न् आयाति वा गलम् वमनाद्यैर् विशुद्धं च क्षाम-देह-बलानलम् ।
यथाण्डं तरुणं पूर्णं तैल-पात्रं यथा तथा ॥ ५१ ॥

५.५१av कर्मभिर् वमनाद्यैश् च ५.५१av वमनाद्यैर् विशुद्धं तु भिषक् प्रयत्नतो रक्षेत् सर्वस्माद् अपचारतः ।
दद्यान् मधुर-हृद्यानि ततो ऽम्ल-लवणौ रसौ ॥ ५२ ॥

५.५२bv सर्वस्माद् अपवादतः स्वादु-तिक्तौ ततो भूयः कषाय-कटुकौ ततः ।
अन्यो-ऽन्य-प्रत्य्-अनीकानां रसानां स्निग्ध-रूक्षयोः ॥ ५३ ॥

व्यत्यासाद् उपयोगेन क्रमात् तं प्रकृतिं नयेत् ।
सर्वं-सहः स्थिर-बलो विज्ञेयः प्रकृतिं गतः ॥ ५४ ॥

# अध्याय 06

धन्वे साधारणे देशे समे सन्-मृत्तिके शुचौ ।
श्मशान-चैत्यायतन-श्वभ्र-वल्मीक-वर्जिते ॥ १ ॥

६.१av धन्व-साधारणे देशे ६.१cv श्मशान-चैत्याद्यतन- मृदौ प्रदक्षिण-जले कुश-रोहिष-संस्तृते ।
अ-फाल-कृष्टे ऽन्-आक्रान्ते पादपैर् बल-वत्-तरैः ॥ २ ॥

६.२bv कुश-रोहिष-संस्कृते शस्यते भेषजं जातं युक्तं वर्ण-रसादिभिः ।
जन्त्व्-अ-जग्धं दवा-दग्धम् अ-विदग्धं च वैकृतैः ॥ ३ ॥

६.३cv जन्त्व्-अ-जुष्टं दवा-दग्धम् ६.३dv अ-विजग्धं च वैकृतैः भूतैश् छायातपाम्ब्व्-आद्यैर् यथा-कालं च सेवितम् ।
अवगाढ-महा-मूलम् उदीचीं दिशम् आश्रितम् ॥ ४ ॥

६.४dv उदीचीं दिशम् आस्थितम् महेन्द्र-राम-कृष्णानां ब्राह्मणानां गवाम् अपि ।
तपसा तेजसा वापि प्रशाम्यध्वं शिवाय वै ॥ ४+(१) ॥
६.४+(१)च्व् तपसां तेजसां वापि ६.४+(१)द्व् प्रशाम्यध्वं शमाय वै मन्त्रेणानेन मति-मान् सर्वम् अप्य् औषधं नयेत् ॥ ४+(२)अब् ॥
अथ कल्याण-चरितः श्राद्धः शुचिर् उपोषितः ।
गृह्णीयाद् औषधं सु-स्थं स्थितं काले च कल्पयेत् ॥ ५ ॥

स-क्षीरं तद् अ-संपत्ताव् अन्-अतिक्रान्त-वत्सरम् ।
ऋते गुड-घृत-क्षौद्र-धान्य-कृष्णा-विडङ्गतः ॥ ६ ॥

६.६cv ऋते घृत-गुड-क्षौद्र- पयो बाष्कयणं ग्राह्यं विण्-मूत्रं तच् च नी-रुजाम् ।
वयो-बल-वतां धातु-पिच्छ-शृङ्ग-खुरादिकम् ॥ ७ ॥

६.७bv विण्-मूत्रं तच् च नी-रुजि ६.७bv विण्-मूत्रं तच् च नी-रुजम् ६.७dv -पुच्छ-शृङ्ग-खुरादिकम् ६.७dv -पित्त-शृङ्ग-खुरादिकम् कषाय-योनयः पञ्च रसा लवण-वर्जिताः ।
रसः कल्कः शृतः शीतः फाण्टश् चेति प्रकल्पना ॥ ८ ॥

६.८dv फाण्टश् चेति प्रकल्पनाः पञ्च-धैव कषायाणां पूर्वं पूर्वं बलाधिका ।
सद्यः-समुद्धृतात् क्षुण्णाद् यः स्रवेत् पट-पीडितात् ॥ ९ ॥

६.९av पञ्च चैव कषायाणां ६.९bv पूर्वं पूर्वं बलाधिकाः ६.९bv पूर्वं पूर्वं बलावहाः ६.९cv सद्यः-समुद्धृत-क्षुण्णाद् ६.९dv यः स्रवेत् पट-पीडनात् स्व-रसः स समुद्दिष्टः कल्कः पिष्टो द्रवाप्लुतः ।
चूर्णो ऽ-प्लुतः शृतः क्वाथः शीतो रात्रिं द्रवे स्थितः ॥ १० ॥

६.१०dv शीतो रात्रौ द्रवे स्थितः सद्यो-ऽभिषुत-पूतस् तु फाण्टस् तन्-मान-कल्पने ।
युञ्ज्याद् व्याध्य्-आदि-बलतस् तथा च वचनं मुनेः ॥ ११ ॥

६.११av सद्यो-ऽभिक्षुण्ण-पूतस् तु मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देश-कालौ च योज्या तद्-वच् च कल्पना ॥ १२ ॥

६.१२av मात्राया नास्त्य् अवस्थानं ६.१२bv दोषम् अग्निं बलं वयः मध्यं तु मानं निर्दिष्टं स्व-रसस्य चतुः-पलम् ।
पेष्यस्य कर्षम् आलोड्यं तद् द्रवस्य पल-त्रये ॥ १३ ॥

६.१३av मध्य-मानं विनिर्दिष्टं क्वाथं द्रव्य-पले कुर्यात् प्रस्थार्धं पाद-शेषितम् ।
शीतं पले पलैः षड्भिश् चतुर्भिस् तु ततो ऽपरम् ॥ १४ ॥

६.१४dv चतुर्भिश् च ततो ऽपरम् ६.१४dv चतुर्भिस् तु ततः परम् स्नेह-पाके त्व् अ-मानोक्तौ चतुर्-गुण-विवर्धितम् ।
कल्क-स्नेह-द्रवं योज्यम् अधीते शौनकः पुनः ॥ १५ ॥

स्नेहे सिध्यति शुद्धाम्बु-निःक्वाथ-स्व-रसैः क्रमात् ।
कल्कस्य योजयेद् अंशं चतुर्थं षष्ठम् अष्टमम् ॥ १६ ॥

पृथक् स्नेह-समं दद्यात् पञ्च-प्रभृति तु द्रवम् ।
नाङ्गुली-ग्राहि-ता कल्के न स्नेहे ऽग्नौ स-शब्द-ता ॥ १७ ॥

६.१७av द्रवं तु पञ्च-प्रभृति ६.१७bv पृथक् स्नेह-समं क्षिपेत् शुष्क-द्रव्यं यदा न स्यात् तदा सद्यः-समुद्धृतम् ।
द्वि-गुणं तत् प्रयोक्तव्यं कुडवादि द्रवं तथा ॥ १७.१+१ ॥

वर्णादि-संपच् च यदा तदैनं शीघ्रम् आहरेत् ।
घृतस्य फेनोपशमस् तैलस्य तु तद्-उद्भवः ॥ १८ ॥

६.१८द्च् तैलस्य च तद्-उद्भवः लेहस्य तन्तु-मत्-ताप्सु मज्जनं सरणं न च ।
पाकस् तु त्रि-विधो मन्दश् चिक्कणः खर-चिक्कणः ॥ १९ ॥

६.१९bv मज्जनं शरणं न च मन्दः कल्क-समे किट्टे चिक्कणो मदनोपमे ।
किञ्-चित् सीदति कृष्णे च वर्त्य-माने च पश्चिमः ॥ २० ॥

६.२०dv वर्ति-माने च पश्चिमः ६.२०dv वर्तमाने च पश्चिमः ६.२०dv वर्तमाने तु पश्चिमः दग्धो ऽत ऊर्ध्वं निष्कार्यः स्याद् आमस् त्व् अग्नि-साद-कृत् ।
मृदुर् नस्ये खरो ऽभ्यङ्गे पाने वस्तौ च चिक्कणः ॥ २१ ॥

शाणं पाणि-तलं मुष्टिं कुडवं प्रस्थम् आढकम् ।
द्रोणं वहं च क्रम-शो विजानीयाच् चतुर्-गुणम् ॥ २२ ॥

द्वि-गुणं योजयेद् आर्द्रं कुडवादि तथा द्रवम् ।
पेषणालोडने वारि स्नेह-पाके च निर्-द्रवे ॥ २३ ॥

कल्पयेत् सदृशान् भागान् प्रमाणं यत्र नोदितम् ।
कल्की-कुर्याच् च भैषज्यम् अ-निरूपित-कल्पनम् ॥ २४ ॥

अङ्गान्-उक्तौ तु मूलं स्याद् अ-प्रसिद्धौ तद् एव तु ।
द्वौ शाणौ वटकः कोलं बदरं द्रङ्क्षणश् च तौ ॥ २५ ॥

६.२५av अ-निर्दिष्टा-प्रसिद्धेषु ६.२५bv मूलं ग्राह्यं त्वग्-आदिषु ६.२५cv द्वौ शाणौ वटकः कोलो षड् वंश्यस् तु मरीचिः स्यात् षण् मरीच्यस् तु सर्षपः ।
तण्डुलः सर्षपास् त्व् अष्टौ धान्य-माषस् तु तौ यवः ॥ २५.१+(१) ॥
६.२५.१+(१)द्व् धान्य-माषश् च तौ यवः ताव् अण्डिका चतुर्भिस् तैर् माषकः शाणकस् तथा ॥ २५.१+(२)अब् ॥
६.२५.१+(२)अव् तावन्तो गदिता माषाः ६.२५.१+(२)अव् तैस् तुर्यैर् गुञ्जका माषस् ६.२५.१+(२)ब्व् शाणो ऽयं मुनिभिः स्मृतः ६.२५.१+(२)ब्व् तुर्याभिः शाणकः स्मृतः अक्षं पिचुः पाणि-तलं सुवर्णं कवड-ग्रहः ।
कर्षो बिडाल-पदकं तिन्दुकः पाणि-मानिका ॥ २६ ॥

६.२६bv सुवर्णं कवड-ग्रहम् ६.२६dv तिन्दुकं पाणि-मानिका शब्दान्य-त्वम् अ-भिन्ने ऽर्थे शुक्तिर् अष्टमिका पिचू ।
पलं प्रकुञ्चो बिल्वं च मुष्टिर् आम्रं चतुर्थिका ॥ २७ ॥

६.२७av शब्दान् एवम् अ-भिन्ने ऽर्थे ६.२७av शब्दा ह्य् अमी अ-भिन्ने ऽर्थे द्वे पले प्रसृतस् तौ द्वाव् अञ्जलिस् तौ तु मानिका ।
आढकं भाजनं कंसो द्रोणः कुम्भो घटो ऽर्मणम् ॥ २८ ॥

६.२८av द्वे पले प्रसृतिस् तौ द्वाव् तुला पल-शतं तानि विंशतिर् भार उच्यते ।
हिमवद्-विन्ध्य-शैलाभ्यां प्रायो व्याप्ता वसुन्धरा ॥ २९ ॥

६.२९av तुला पल-शतं तासां सौम्यं पथ्यं च तत्राद्यम् आग्नेयं वैन्ध्यम् औषधम् ॥ २९अब् ॥
६.२९अव् सौम्यं तत्राद्यम् आग्नेयं ६.२९ब्व् वैन्ध्यम् औषधम् ईरितम्

# अध्याय 01

जात-मात्रं विशोध्योल्बाद् बालं सैन्धव-सर्पिषा ।
प्रसूति-क्लेशितं चानु बला-तैलेन सेचयेत् ॥ १ ॥

अश्मनोर् वादनं चास्य कर्ण-मूले समाचरेत् ।
अथास्य दक्षिणे कर्णे मन्त्रम् उच्चारयेद् इमम् ॥ २ ॥

अङ्गाद् अङ्गात् संभवसि हृदयाद् अभिजायसे ।
आत्मा वै पुत्र-नामासि संजीव शरदां शतम् ॥ ३ ॥

१.३dv संजीव शरदः शतम् शतायुः शत-वर्षो ऽसि दीर्घम् आयुर् अवाप्नुहि ।
नक्षत्राणि दिशो रात्रिर् अहश् च त्वाभिरक्षतु ॥ ४ ॥

१.४dv अहश् चत्वारि रक्षतु स्वस्थी-भूतस्य नाभिं च सूत्रेण चतुर्-अङ्गुलात् ।
बद्ध्वोर्ध्वं वर्धयित्वा च ग्रीवायाम् अवसञ्जयेत् ॥ ५ ॥

१.५cv बद्ध्वोर्ध्वं वर्धयित्वा तु १.५dv ग्रीवायाम् अवसज्जयेत् नाभिं च कुष्ठ-तैलेन सेचयेत् स्नापयेद् अनु ।
क्षीरि-वृक्ष-कषायेण सर्व-गन्धोदकेन वा ॥ ६ ॥

१.६av नाभिं तु कुष्ठ-तैलेन १.६bv सेचयेत् स्नपयेद् अनु कोष्णेन तप्त-रजत-तपनीय-निमज्जनैः ।
ततो दक्षिण-तर्जन्या तालून्नम्यावगुण्ठयेत् ॥ ७ ॥

शिरसि स्नेह-पिचुना प्राश्यं चास्य प्रयोजयेत् ।
हरेणु-मात्रं मेधायुर्-बलार्थम् अभिमन्त्रितम् ॥ ८ ॥

१.८bv प्राशं चास्य प्रयोजयेत् ऐन्द्री-ब्राह्मी-वचा-शङ्खपुष्पी-कल्कं घृतं मधु ।
चामीकर-वचा-ब्राह्मी-ताप्य-पथ्या रजी-कृताः ॥ ९ ॥

१.९dv -कुष्ठ-पथ्या रजी-कृताः लिह्यान् मधु-घृतोपेता हेम-धात्री-रजो ऽथ-वा ।
गर्भाम्भः सैन्धव-वता सर्पिषा वामयेत् ततः ॥ १० ॥

१.१०cv गर्भाम्भः सैन्धव-वचा- १.१०dv -सर्पिषा वामयेत् ततः प्राजापत्येन विधिना जात-कर्माणि कारयेत् ।
सिराणां हृदय-स्थानां विवृत-त्वात् प्रसूतितः ॥ ११ ॥

तृतीये ऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते ।
प्रथमे दिवसे तस्मात् त्रि-कालं मधु-सर्पिषी ॥ १२ ॥

अनन्ता-मिश्रिते मन्त्र-पाविते प्राशयेच् छिशुम् ।
द्वितीये लक्ष्मणा-सिद्धं तृतीये च घृतं ततः ॥ १३ ॥

प्राङ्-निषिद्ध-स्तनस्यास्य तत्-पाणि-तल-संमितम् ।
स्तन्यानु-पानं द्वौ कालौ नव-नीतं प्रयोजयेत् ॥ १४ ॥

मातुर् एव पिबेत् स्तन्यं तद् ध्य् अलं देह-वृद्धये ।
स्तन्य-धात्र्याव् उभे कार्ये तद्-अ-संपदि वत्सले ॥ १५ ॥

१.१५bv तत् परं देह-वृद्धये अ-व्यङ्गे ब्रह्म-चारिण्यौ वर्ण-प्रकृतितः समे ।
नी-रुजे मध्य-वयसौ जीवद्-वत्से न लोलुपे ॥ १६ ॥

हिताहार-विहारेण यत्नाद् उपचरेच् च ते ।
शुक्-क्रोध-लङ्घनायासाः स्तन्य-नाशस्य हेतवः ॥ १७ ॥

स्तन्यस्य सीधु-वर्ज्यानि मद्यान्य् आनूप-जा रसाः ।
क्षीरं क्षीरिण्य ओषध्यः शोकादेश् च विपर्ययः ॥ १८ ॥

१.१८cv क्षीरं क्षीरिण्य् औषधयः विरुद्धाहार-भुक्तायाः क्षुधिताया वि-चेतसः ।
प्रदुष्ट-धातोर् गर्भिण्याः स्तन्यं रोग-करं शिशोः ॥ १९ ॥

१.१९av विरुद्धाहार-चेष्टायाः स्तन्या-भावे पयश् छागं गव्यं वा तद्-गुणं पिबेत् ।
ह्रस्वेन पञ्च-मूलेन स्थिराभ्यां वा सिता-युतम् ॥ २० ॥

१.२०cv मूलैः सिद्धं बृहत्य्-आद्यैः षष्ठीं निशां विशेषेण कृत-रक्षा-बलि-क्रियाः ।
जागृयुर् बान्धवास् तस्य दधतः परमां मुदम् ॥ २१ ॥

दशमे दिवसे पूर्णे विधिभिः स्व-कुलोचितैः ।
कारयेत् सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २२ ॥

१.२२bv विधि-वत् स्व-कुलोचितैः बिभ्रतो ऽङ्गैर् मनोहवाल-रोचनागुरु-चन्दनम् ।
नक्षत्र-देवता-युक्तं बान्धवं वा समाक्षरम् ॥ २३ ॥

ततः प्रकृति-भेदोक्त-रूपैर् आयुः-परीक्षणम् ।
प्राग्-उदक्-शिरसः कुर्याद् बालस्य ज्ञान-वान् भिषक् ॥ २४ ॥

शुचि-धौतोपधानानि निर्-वलीनि मृदूनि च ।
शय्यास्तरण-वासांसि रक्षो-घ्नैर् धूपितानि च ॥ २५ ॥

काको विशस्तः शस्तश् च धूपने त्रिवृतान्वितः ।
जीवत्-खड्गादि-शृङ्गोत्थान् सदा बालः शुभान् मणीन् ॥ २६ ॥

१.२६av कङ्को विशस्तः शस्तश् च १.२६cv जीवत्-खड्गादि-शृङ्ग-स्थान् धारयेद् औषधीः श्रेष्ठाः ब्राह्म्य्-ऐन्द्री-जीवकादिकाः ।
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात् सततं वचाम् ॥ २७ ॥

१.२७av धारयेच् चौषधीः श्रेष्ठा १.२७av धारयेद् औषधीश् चेष्टा आयुर्-मेधा-स्मृति-स्वास्थ्य-करीं रक्षो-ऽभिरक्षिणीम् ।
षट्-सप्ताष्टम-मासेषु नी-रुजस्य शुभे ऽहनि ॥ २८ ॥

१.२८cv षट्-सप्ताष्टसु मासेषु कर्णौ हिमागमे विध्येद् धात्र्य्-अङ्क-स्थस्य सान्त्वयन् ।
प्राग् दक्षिणं कुमारस्य भिषग् वामं तु योषितः ॥ २९ ॥

दक्षिणेन दधत् सूचीं पालीम् अन्येन पाणिना ।
मध्यतः कर्ण-पीठस्य किञ्-चिद् गण्डाश्रयं प्रति ॥ ३० ॥

जरायु-मात्र-प्रच्छन्ने रवि-रश्म्य्-अवभासिते ।
घृतस्य निश्-चलं सम्यग् अलक्तक-रसाङ्किते ॥ ३१ ॥

विध्येद् दैव-कृते च्छिद्रे सकृद् एवर्जु लाघवात् ।
नोर्ध्वं न पार्श्वतो नाधः सिरास् तत्र हि संश्रिताः ॥ ३२ ॥

कालिका-मर्मरी-रक्तास् तद्-व्यधाद् राग-रुग्-ज्वराः ।
स-शोफ-दाह-संरम्भ-मन्या-स्तम्भापतानकाः ॥ ३३ ॥

१.३३bv तद्-बाधाद् राग-रुग्-ज्वराः तेषां यथामयं कुर्याद् विभज्याशु चिकित्सितम् ।
स्थाने व्यधान् न रुधिरं न रुग्-रागादि-संभवः ॥ ३४ ॥

१.३४cv स्थान-व्यधान् न रुधिरं स्नेहाक्तं सूच्य्-अनुस्यूतं सूत्रं चानु निधापयेत् ।
आम-तैलेन सिञ्चेच् च बहलां तद्-वद् आरया ॥ ३५ ॥

विध्येत् पालीं हित-भुजः संचार्याथ स्थवीयसी ।
वर्तिस् त्र्य्-अहात् ततो रूढं वर्धयेत शनैः शनैः ॥ ३६ ॥

१.३६bv संचार्यान्या स्थवीयसी १.३६cv वर्तिस् त्र्य्-अहात् ततो रूढां अथैनं जात-दशनं क्रमेणापनयेत् स्तनात् ।
पूर्वोक्तं योजयेत् क्षीरम् अन्नं च लघु बृंहणम् ॥ ३७ ॥

१.३७av जात-दन्तं शिशुं शीते १.३७bv क्रम-शो ऽपनयेत् स्तनात् प्रियाल-मज्ज-मधुक-मधु-लाज-सितोपलैः ।
अप-स्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥ ३८ ॥

दीपनो बाल-बिल्वैला-शर्करा-लाज-सक्तुभिः ।
संग्राही धातकी-पुष्प-शर्करा-लाज-तर्पणैः ॥ ३९ ॥

रोगांश् चास्य जयेत् सौम्यैर् भेषजैर् अ-विषादकैः ।
अन्य-त्रात्ययिकाद् व्याधेर् विरेकं सु-तरां त्यजेत् ॥ ४० ॥

१.४०bv भेषजैर् अ-विषादिकैः १.४०bv भेषजैर् अ-विपादिकैः १.४०bv भेषजैर् अ-विपादकैः त्रासयेन् ना-विधेयं तं त्रस्तं गृह्णन्ति हि ग्रहाः ।
वस्त्र-वातात् पर-स्पर्शात् पालयेल् लङ्घनाच् च तम् ॥ ४१ ॥

१.४१av त्रासयेन् ना-विधेयं च १.४१cv वस्त्र-पातात् खर-स्पर्शात् १.४१cv वस्त्र-पातात् पर-स्पर्शात् १.४१dv पालयेल् लङ्घिताच् च तम् ब्राह्मी-सिद्धार्थक-वचा-शारिवा-कुष्ठ-सैन्धवैः ।
स-कणैः साधितं पीतं वाङ्-मेधा-स्मृति-कृद् घृतम् ॥ ४२ ॥

आयुष्यं पाप्म-रक्षो-घ्नं भूतोन्माद-निबर्हणम् ।
वचेन्दुलेखा-मण्डूकी-शङ्खपुष्पी-शतावरीः ॥ ४३ ॥

१.४३cv वचेन्दुलेखा मण्डूकी १.४३dv शङ्खपुष्पी शतावरी ब्रह्मसोमामृता-ब्राह्मीः कल्की-कृत्य पलांशिकाः ।
अष्टाङ्गं विपचेत् सर्पिः प्रस्थं क्षीर-चतुर्-गुणम् ॥ ४४ ॥

१.४४av ब्रह्मसोमांर्ता ब्राह्मी १.४४bv कल्की-कृत्य पलांशिकैः १.४४dv प्रस्थं क्षीरं चतुर्-गुणम् तत् पीतं धन्यम् आयुष्यं वाङ्-मेधा-स्मृति-बुद्धि-कृत् ।
अजा-क्षीराभया-व्योष-पाठोग्रा-शिग्रु-सैन्धवैः ॥ ४५ ॥

१.४५bv वाङ्-मेधा-स्मृति-कृत् परम् १.४५bv वाङ्-मेधा-स्मृति-वह्नि-कृत् १.४५dv -पाठोग्रा-शक्र-सैन्धवैः सिद्धं सारस्वतं सर्पिर् वाङ्-मेधा-स्मृति-वह्नि-कृत् ।
वचामृता-शठी-पथ्या-शङ्खिनी-वेल्ल-नागरैः ॥ ४६ ॥

१.४६bv वाङ्-मेधा-स्मृति-बुद्धि-कृत् १.४६cv वचामृता-वरी-पथ्या- अपामार्गेण च घृतं साधितं पूर्व-वद् गुणैः ।
हेम श्वेत-वचा कुष्ठम् अर्कपुष्पी स-काञ्चना ॥ ४७ ॥

१.४७cv हेम श्वेत-वचा कुष्ठं १.४७dv शङ्खपुष्पी स-काञ्चना १.४७dv शङ्खपुष्पी स-रोचना हेम मत्स्याक्षकः शङ्खः कैडर्यः कनकं वचा ।
चत्वार एते पादोक्ताः प्राशा मधु-घृत-प्लुताः ॥ ४८ ॥

१.४८av हेम मत्स्याक्षकः फञ्जी १.४८bv कैडर्यं कनकं वचा १.४८dv प्राश्या मधु-घृत-प्लुताः वर्षं लीढा वपुर्-मेधा-बल-वर्ण-कराः शुभाः ।
वचा-यष्ट्य्-आह्व-सिन्धूत्थ-पथ्या-नागर-दीप्यकैः ॥ ४९ ॥

शुध्यते वाग् घविर्-लीढैः स-कुष्ठ-कण-जीरकैः ॥ ४९अब् ॥
१.४९अव् शुध्यते वाग् घृतालीढैः

# अध्याय 02

त्रि-विधः कथितो बालः क्षीरान्नोभय-वर्तनः ।
स्वास्थ्यं ताभ्याम् अ-दुष्टाभ्यां दुष्टाभ्यां रोग-संभवः ॥ १ ॥

यद् अद्भिर् एक-तां याति न च दोषैर् अधिष्ठितम् ।
तद् विशुद्धं पयो वाताद् दुष्टं तु प्लवते ऽम्भसि ॥ २ ॥

२.२dv दुष्टं तु प्लवते जले कषायं फेनिलं रूक्षं वर्चो-मूत्र-विबन्ध-कृत् ।
पित्ताद् उष्णाम्ल-कटुकं पीत-राज्य् अप्सु दाह-कृत् ॥ ३ ॥

कफात् स-लवणं सान्द्रं जले मज्जति पिच्छिलम् ।
संसृष्ट-लिङ्गं संसर्गात् त्रि-लिङ्गं सांनिपातिकम् ॥ ४ ॥

यथा-स्व-लिङ्गांस् तद् व्याधीन् जनयत्य् उपयोजितम् ।
शिशोस् तीक्ष्णम् अभीक्ष्णं च रोदनाल् लक्षयेद् रुजम् ॥ ५ ॥

२.५cv शिशोस् तीक्ष्णम् अ-तीक्ष्णं च स यं स्पृशेद् भृशं देशं यत्र च स्पर्शना-क्षमः ।
तत्र विद्याद् रुजं मूर्ध्नि रुजं चाक्षि-निमीलनात् ॥ ६ ॥

२.६av स्वयं स्पृशेद् भृशं देशं २.६bv यत्र च स्पर्शना-क्षमम् हृदि जिह्वौष्ठ-दशन-श्वास-मुष्टि-निपीडनैः ।
कोष्ठे विबन्ध-वमथु-स्तन-दंशान्त्र-कूजनैः ॥ ७ ॥

२.७bv -श्वास-मुष्टि-निपीडितैः २.७dv -स्तन्य-द्वेषान्त्र-कूजनैः आध्मान-पृष्ठ-नमन-जठरोन्नमनैर् अपि ।
वस्तौ गुह्ये च विण्-मूत्र-सङ्गोत्त्रास-दिग्-ईक्षणैः ॥ ८ ॥

अथ धात्र्याः क्रियां कुर्याद् यथा-दोषं यथामयम् ।
तत्र वातात्मके स्तन्ये दश-मूलं त्र्य्-अहं पिबेत् ॥ ९ ॥

अथ-वाग्नि-वचा-पाठा-कटुका-कुष्ठ-दीप्यकम् ।
स-भार्गी-दारु-सरल-वृश्चिकाली-कणोषणम् ॥ १० ॥

ततः पिबेद् अन्य-तमं वात-व्याधि-हरं घृतम् ।
अनु चाच्छ-सुराम् एवं स्निग्धां मृदु विरेचयेत् ॥ ११ ॥

२.११bv वात-व्याधि-हितं घृतम् वस्ति-कर्म ततः कुर्यात् स्वेदादींश् चानिलापहान् ।
रास्नाजमोदा-सरल-देवदारु-रजो-ऽन्वितम् ॥ १२ ॥

बालो लिह्याद् घृतं तैर् वा विपक्वं स-सितोपलम् ।
पित्त-दुष्टे ऽमृताभीरु-पटोली-निम्ब-चन्दनम् ॥ १३ ॥

धात्री कुमारश् च पिबेत् क्वाथयित्वा स-शारिवम् ।
अथ-वा त्रि-फला-मुस्त-भूनिम्ब-कटु-रोहिणीः ॥ १४ ॥

शारिवादिं पटोलादिं पद्मकादिं तथा गणम् ।
घृतान्य् एभिश् च सिद्धानि पित्त-घ्नं च विरेचनम् ॥ १५ ॥

शीतांश् चाभ्यङ्ग-लेपादीन् युञ्ज्याच् छ्लेष्मात्मके पुनः ।
यष्ट्य्-आह्व-सैन्धव-युतं कुमारं पाययेद् घृतम् ॥ १६ ॥

सिन्धूत्थ-पिप्पली-मद् वा पिष्टैः क्षौद्र-युतैर् अथ ।
राठ-पुष्पैः स्तनौ लिम्पेच् छिशोश् च दशन-च्छदौ ॥ १७ ॥

२.१७av सिन्धूत्थ-पिप्पली-मद्य- २.१७av सिन्धूत्थ-पिप्पली-मुस्ता- २.१७av सिन्धूत्थ-पिप्पली-मूर्वा- २.१७bv -पिष्टैः क्षौद्र-युतैर् अथ सुखम्
एवं वमेद् बालः तीक्ष्णैर् धात्रीं तु वामयेत् ।
अथाचरित-संसर्गी मुस्तादिं क्वथितं पिबेत् ॥ १८ ॥

तद्-वत् तगर-पृथ्वीका-सुरदारु-कलिङ्गकान् ।
अथ-वातिविषा-मुस्त-षड्ग्रन्था-पञ्च-कोलकम् ॥ १९ ॥

२.१९bv -सुरदारु-कलिङ्गकम् २.१९dv -षड्ग्रन्था-पञ्च-कोलकान् स्तन्ये त्रि-दोष-मलिने दुर्-गन्ध्य् आमं जलोपमम् ।
विबद्धम् अच्छं विच्छिन्नं फेनिलं चोपवेश्यते ॥ २० ॥

शकृन् नाना-व्यथा-वर्णं मूत्रं पीतं सितं घनम् ।
ज्वरा-रोचक-तृट्-छर्दि-शुष्कोद्गार-विजृम्भिकाः ॥ २१ ॥

अङ्ग-भङ्गो ऽङ्ग-विक्षेपः कूजनं वेपथुर् भ्रमः ।
घ्राणाक्षि-मुख-पाकाद्या जायन्ते ऽन्ये ऽपि तं गदम् ॥ २२ ॥

२.२२bv क्वणनं वेपथुर् भ्रमः क्षीरालसकम् इत्य् आहुर् अत्ययं चाति-दारुणम् ।
तत्राशु धात्रीं बालं च वमनेनोपपादयेत् ॥ २३ ॥

विहितायां च संसर्ग्यां वचादिं योजयेद् गणम् ।
निशादिं वाथ-वा माद्री-पाठा-तिक्ता-घनामयान् ॥ २४ ॥

पाठा-शुण्ठ्य्-अमृता-तिक्त-तिक्ता-देवाह्व-शारिवाः ।
स-मुस्त-मूर्वेन्द्रयवाः स्तन्य-दोष-हराः परम् ॥ २५ ॥

अनुबन्धे यथा-व्याधि प्रतिकुर्वीत काल-वित् ।
दन्तोद्भेदश् च रोगाणां सर्वेषाम् अपि कारणम् ॥ २६ ॥

विशेषाज् ज्वर-विड्-भेद-कास-च्छर्दि-शिरो-रुजाम् ।
अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥ २७ ॥

पृष्ठ-भङ्गे बिडालानां बर्हिणां च शिखोद्भवे ।
दन्तोद्भेदे च बालानां न हि किञ्-चिन् न दूयते ॥ २८ ॥

२.२८cv दन्तोद्भवे च बालानां यथा-दोषं यथा-रोगं यथोद्रेकं यथा-भयम् ।
विभज्य देश-कालादींस् तत्र योज्यं भिषग्-जितम् ॥ २९ ॥

२.२९bv यथोद्रेकं यथा-बलम् २.२९bv यथोद्रेकं यथा-वयः २.२९bv यथोद्रेकं यथाशयम् त एव दोषा दूष्याश् च ज्वराद्या व्याधयश् च यत् ।
अतस् तद् एव भैषज्यं मात्रा त्व् अस्य कनीयसी ॥ ३० ॥

२.३०bv ज्वराद्या व्याधयश् च ते सौकुमार्याल्प-काय-त्वात् सर्वान्नान्-उपसेवनात् ।
स्निग्धा एव सदा बाला घृत-क्षीर-निषेवणात् ॥ ३१ ॥

२.३१bv सर्वान्नान्-उपसेवनैः सद्यस् तान् वमनं तस्मात् पाययेन् मति-मान् मृदु ।
स्तन्यस्य तृप्तं वमयेत् क्षीर-क्षीरान्न-सेविनम् ॥ ३२ ॥

पीत-वन्तं तनुं पेयाम् अन्नादं घृत-संयुताम् ।
वस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनम् ॥ ३३ ॥

युञ्ज्याद् विरेचनादींस् तु धात्र्या एव यथोदितान् ।
मूर्वा-व्योष-वरा-कोल-जम्बू-त्वग्-दारु-सर्षपाः ॥ ३४ ॥

२.३४av युञ्ज्याद् विरेचनादींश् च २.३४cv मूर्वा-व्योष-वचा-कोल- २.३४cv मूर्वा-व्योष-वराङ्कोल्ल- स-पाठा मधुना लीढाः स्तन्य-दोष-हराः परम् ।
दन्त-पालीं स-मधुना चूर्णेन प्रतिसारयेत् ॥ ३५ ॥

२.३५bv स्तन्य-दोष-निबर्हणाः पिप्पल्या धातकी-पुष्प-धात्री-फल-कृतेन वा ।
लाव-तित्तिरि-वल्लूर-रजः पुष्प-रस-द्रुतम् ॥ ३६ ॥

२.३६bv -धात्री-फल-रसेन वा २.३६dv -रजः पुष्प-रस-प्लुतम् २.३६dv -रजः पुष्प-रसाप्लुतम् द्रुतं करोति बालानां दन्त-केसर-वन् मुखम् ।
वचा-द्वि-बृहती-पाठा-कटुकातिविषा-घनैः ॥ ३७ ॥

मधुरैश् च घृतं सिद्धं सिद्धं दशन-जन्मनि ।
रजनी-दारु-सरल-श्रेयसी-बृहती-द्वयम् ॥ ३८ ॥

२.३८cv रजनी-दारु-सरलाः २.३८dv श्रेयसी-बृहती-द्वयम् पृश्निपर्णी शताह्वा च लीढं माक्षिक-सर्पिषा ।
ग्रहणी-दीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥ ३९ ॥

अतीसार-ज्वर-श्वास-कामला-पाण्डु-कास-नुत् ।
बालस्य सर्व-रोगेषु पूजितं बल-वर्ण-दम् ॥ ४० ॥

२.४०bv -कामला-पाण्डु-रोग-नुत् समङ्गा-धातकी-लोध्र-कुटन्नट-बला-द्वयैः ।
महा-सहा-क्षुद्र-सहा-मुद्ग-बिल्व-शलाटुभिः ॥ ४१ ॥

२.४१bv -कुटन्नट-बलाह्वयैः २.४१bv -कुटन्नट-वटाह्वयैः स-कार्पासी-फलैस् तोये साधितैः साधितं घृतम् ।
क्षीर-मस्तु-युतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ॥ ४२ ॥

विविधान् आमयान् एतद् वृद्ध-काश्यप-निर्मितम् ।
दन्तोद्भवेषु रोगेषु न बालम् अतियन्त्रयेत् ॥ ४३ ॥

२.४३cv दन्तोद्भेदोत्थ-रोगेषु स्वयम् अप्य् उपशाम्यन्ति जात-दन्तस्य यद्-गदाः ।
अत्य्-अहः-स्वप्न-शीताम्बु-श्लैष्मिक-स्तन्य-सेविनः ॥ ४४ ॥

२.४४dv -श्लैष्मिक-स्तन्य-पायिनः शिशोः कफेन रुद्धेषु स्रोतःसु रस-वाहिषु ।
अ-रोचकः प्रतिश्यायो ज्वरः कासश् च जायते ॥ ४५ ॥

कुमारः शुष्यति ततः स्निग्ध-शुक्ल-मुखेक्षणः ।
सैन्धव-व्योष-शार्ङ्गष्टा-पाठा-गिरि-कदम्बकान् ॥ ४६ ॥

२.४६dv -पाठा-गिरि-कदम्बकम् शुष्यतो मधु-सर्पिर्भ्याम् अ-रुच्य्-आदिषु योजयेत् ।
अशोक-रोहिणी-युक्तं पञ्च-कोलं च चूर्णितम् ॥ ४७ ॥

बदरी-धातकी-धात्री-चूर्णं वा सर्पिषा द्रुतम् ।
स्थिरा-वचा-द्वि-बृहती-काकोली-पिप्पली-नतैः ॥ ४८ ॥

२.४८bv -चूर्णं वा सर्पिषाप्लुतम् निचुलोत्पल-वर्षाभू-भार्गी-मुस्तैश् च कार्षिकैः ।
सिद्धं प्रस्थार्धम् आज्यस्य स्रोतसां शोधनं परम् ॥ ४९ ॥

सिंह्य्-अश्वगन्धा-सुरसा-कणा-गर्भं च तद्-गुणम् ।
यष्ट्य्-आह्व-पिप्पली-लोध्र-पद्मकोत्पल-चन्दनैः ॥ ५० ॥

तालीश-शारिवाभ्यां च साधितं शोष-जिद् घृतम् ।
शृङ्गी-मधूलिका-भार्गी-पिप्पली-देवदारुभिः ॥ ५१ ॥

अश्वगन्धा-द्वि-काकोली-रास्नर्षभक-जीवकैः ।
शूर्पपर्णी-विडङ्गैश् च कल्कितैः साधितं घृतम् ॥ ५२ ॥

शशोत्तमाङ्ग-निर्यूहे शुष्यतः पुष्टि-कृत् परम् ।
वचा-वयःस्था-तगर-कायस्था-चोरकैः शृतम् ॥ ५३ ॥

बस्त-मूत्र-सुराभ्यां च तैलम् अभ्यञ्जने हितम् ।
लाक्षा-रस-समं तैल-प्रस्थं मस्तु चतुर्-गुणम् ॥ ५४ ॥

२.५४bv तैलान् मस्तु चतुर्-गुणम् २.५४cv लाक्षा-रस-समं तैलं २.५४dv प्रस्थं मस्तु चतुर्-गुणम् अश्वगन्धा-निशा-दारु-कौन्ती-कुष्ठाब्द-चन्दनैः ।
स-मूर्वा-रोहिणी-रास्ना-शताह्वा-मधुकैः समैः ॥ ५५ ॥

सिद्धं लाक्षादिकं नाम तैलम् अभ्यञ्जनाद् इदम् ।
बल्यं ज्वर-क्षयोन्माद-श्वासापस्मार-वात-नुत् ॥ ५६ ॥

यक्ष-राक्षस-भूत-घ्नं गर्भिणीनां च शस्यते ।
मधुनातिविषा-शृङ्गी-पिप्पलीर् लेहयेच् छिशुम् ॥ ५७ ॥

एकां वातिविषां कास-ज्वर-च्छर्दिर्-उपद्रुतम् ।
पीतं पीतं वमति यः स्तन्यं तं मधु-सर्पिषा ॥ ५८ ॥

२.५८bv -ज्वर-च्छर्दिभिर् अर्दितम् २.५८cv पीतं पीतं च वमति २.५८dv यः स्तन्यं मधु-सर्पिषा द्वि-वार्ताकी-फल-रसं पञ्च-कोलं च लेहयेत् ।
पिप्पली-पञ्च-लवणं कृमिजित्-पारिभद्रकम् ॥ ५९ ॥

२.५९cv पिप्पली-पञ्च-लवण- २.५९dv -कृमिजित्-पारिभद्रकम् २.५९dv विडङ्गं पारिभद्रकम् तद्-वल् लिह्यात् तथा व्योषं मषीं वा रोम-चर्मणाम् ।
लाभतः शल्यक-श्वाविद्-गोधर्क्ष-शिखि-जन्मनाम् ॥ ६० ॥

खदिरार्जुन-तालीश-कुष्ठ-चन्दन-जे रसे ।
स-क्षीरं साधितं सर्पिर् वमथुं विनियच्छति ॥ ६१ ॥

हनु-मूल-गतो वायुर् दन्त-देशास्थि-गो-चरः ।
यदा शिशोः प्रकुपितो नोत्तिष्ठन्ति तदा द्वि-जाः ॥ ६१+(१) ॥
२.६१+(१)अव् हनु-मूलाश्रितो वायुर् २.६१+(१)ब्व् दन्त-देशान् विशोषयेत् २.६१+(१)ब्व् दन्त-देशान् विशोधयेत् रूक्षाशिनो वातिकस्य चालयत्य् अनिलः सिराः ।
हन्व्-आश्रयाः प्रसुप्तस्य दन्तैः शब्दं करोत्य् अतः ॥ ६१+(२) ॥
स-दन्तो जायते यस् तु दन्ताः प्राग् यस्य चोत्तराः ।
कुर्वीत तस्मिन्न् उत्पाते शान्तिं तं च द्वि-जातये ॥ ६२ ॥

२.६२dv शान्तिकं च द्वि-जातये दद्यात् स-दक्षिणं बालं नैगमेषं च पूजयेत् ।
तालु-मांसे कफः क्रुद्धः कुरुते तालु-कण्टकम् ॥ ६३ ॥

२.६३bv सैनिकेशं च पूजयेत् तेन तालु-प्रदेशस्य निम्न-ता मूर्ध्नि जायते ।
तालु-पातः स्तन-द्वेषः कृच्छ्रात् पानं शकृद्-द्रवम् ॥ ६४ ॥

तृड्-आस्य-कण्ड्व्-अक्षि-रुजा ग्रीवा-दुर्-धर-ता वमिः ।
तत्रोत्क्षिप्य यव-क्षार-क्षौद्राभ्यां प्रतिसारयेत् ॥ ६५ ॥

तालु तद्-वत् कणा-शुण्ठी-गो-शकृद्-रस-सैन्धवैः ।
शृङ्गवेर-निशा-भृङ्गं कल्कितं वट-पल्लवैः ॥ ६६ ॥

बद्ध्वा गो-शकृता लिप्तम् कुकूले स्वेदयेत् ततः ।
रसेन लिम्पेत् ताल्व्-आस्यं नेत्रे च परिषेचयेत् ॥ ६७ ॥

हरीतकी-वचा-कुष्ठ-कल्कं माक्षिक-संयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालु-कण्टकात् ॥ ६८ ॥

मलोपलेपात् स्वेदाद् वा गुदे रक्त-कफोद्भवः ।
ताम्रो व्रणो ऽन्तः कण्डू-मान् जायते भूर्य्-उपद्रवः ॥ ६९ ॥

के-चित् तं मातृका-दोषं वदन्त्य् अन्ये ऽहि-पूतनम् ।
पृष्ठारुर् गुद-कुट्टं च के-चिच् च तम् अ-नामिकम् ॥ ७० ॥

२.७०av के-चिच् च तम् अ-नामकम् २.७०bv वदन्त्य् अन्ये ऽपि पूतनम् २.७०bv वदन्त्य् अन्ये तु पूतनम् २.७०ब्च् वदन्त्य् अन्ये हि पूतनम् २.७०cv पृष्ठारुर् गुद-कण्डूं च २.७०cv पृष्ठारुर् गुद-किट्टं च २.७०cv पृष्ठारुर् गुद-कुष्ठं च तत्र धात्र्याः पयः शोध्यं पित्त-श्लेष्म-हरौषधैः ।
शृत-शीतं च शीताम्बु-युक्तम् अन्तर-पानकम् ॥ ७१ ॥

२.७१cv सित-शीतं च शीताम्बु- स-क्षौद्र-तार्क्ष्य-शैलेन व्रणं तेन च लेपयेत् ।
त्रि-फला-बदरी-प्लक्ष-त्वक्-क्वाथ-परिषेचितम् ॥ ७२ ॥

कासीस-रोचना-तुत्थ-मनोह्वाल-रसाञ्जनैः ।
लेपयेद् अम्ल-पिष्टैर् वा चूर्णितैर् वावचूर्णयेत् ॥ ७३ ॥

सु-श्लक्ष्णैर् अथ-वा यष्टी-शङ्ख-सौवीरकाञ्जनैः ।
शारिवा-शङ्खनाभिभ्याम् असनस्य त्वचाथ-वा ॥ ७४ ॥

राग-कण्डूत्कटे कुर्याद् रक्त-स्रावं जलौकसा ।
सर्वं च पित्त-व्रण-जिच् छस्यते गुद-कुट्टके ॥ ७५ ॥

२.७५dv छस्यते गुद-किट्टके पाठा-वेल्ल-द्वि-रजनी-मुस्त-भार्गी-पुनर्नवैः ।
स-बिल्व-त्र्य्-ऊषणैः सर्पिः वृश्चिकाली-युतैः शृतम् ॥ ७६ ॥

लिहानो मात्रया रोगैर् मुच्यते मृत्तिकोद्भवैः ॥ ७७अब् ॥
व्याधेर् यद्य् अस्य भैषज्यं स्तनस् तेन प्रलेपितः ॥ ७७च्द् ॥
स्थितो मुहूर्तं धौतो ऽनु पीतस् तं तं जयेद् गदम् ॥ ७७एf ॥
२.७७fव् पीतस् तत् तं जयेद् गदम्

# अध्याय 03

पुरा गुहस्य रक्षार्थं निर्मिताः शूल-पाणिना ।
मनुष्य-विग्रहाः पञ्च सप्त स्त्री-विग्रहा ग्रहाः ॥ १ ॥

स्कन्दो विशाखो मेषाख्यः श्व-ग्रहः पितृ-संज्ञितः ।
शकुनिः पूतना शीत-पूतना-दृष्टि-पूतना ॥ २ ॥

३.२av स्कन्दो विशाखो मेषास्यः मुख-मण्डितिका तद्-वद् रेवती शुष्क-रेवती ।
तेषां ग्रहीष्यतां रूपं प्रततं रोदनं ज्वरः ॥ ३ ॥

३.३av मुख-मण्डनिका तद्-वद् ३.३av मुख-मण्डिनिका तद्-वद् सामान्यं रूपम् उत्त्रास-जृम्भा-भ्रू-क्षेप-दीन-ताः ।
फेन-स्रावोर्ध्व-दृष्ट्य्-ओष्ठ-दन्त-दंश-प्रजागराः ॥ ४ ॥

३.४bv -जृम्भा-भ्रूत्क्षेप-दीन-ताः रोदनं कूजनं स्तन्य-विद्वेषः स्वर-वैकृतम् ।
नखैर् अ-कस्मात् परितः स्व-धात्र्य्-अङ्ग-विलेखनम् ॥ ५ ॥

तत्रैक-नयन-स्रावी शिरो विक्षिपते मुहुः ।
हतैक-पक्षः स्तब्धाङ्गः स-स्वेदो नत-कन्धरः ॥ ६ ॥

३.६bv शिरो विक्षेपते मुहुः ३.६bv शिरो विक्षिप्यते मुहुः दन्त-खादी स्तन-द्वेषी त्रस्यन् रोदिति वि-स्वरम् ।
वक्र-वक्त्रो वमन् लालां भृशम् ऊर्ध्वं निरीक्षते ॥ ७ ॥

३.७bv त्रसन् रोदिति वि-स्वरम् ३.७cv वक्र-वक्त्रो वमेल् लालां वसासृग्-गन्धिर् उद्विग्नो बद्ध-मुष्टि-शकृच् छिशुः ।
चलितैकाक्षि-गण्ड-भ्रूः संरक्तोभय-लोचनः ॥ ८ ॥

स्कन्दार्तस् तेन वैकल्यं मरणं वा भवेद् ध्रुवम् ।
संज्ञा-नाशो मुहुः केश-लुञ्चनं कन्धरा-नतिः ॥ ९ ॥

३.९bv मरणं वा भवेद् द्रुतम् ३.९cv संज्ञा-नाशो भवेत् केश- विनम्य जृम्भमाणस्य शकृन्-मूत्र-प्रवर्तनम् ।
फेनोद्वमनम् ऊर्ध्वेक्षा हस्त-भ्रू-पाद-नर्तनम् ॥ १० ॥

स्तन-स्व-जिह्वा-संदंश-संरम्भ-ज्वर-जागराः ।
पूय-शोणित-गन्धश् च स्कन्दापस्मार-लक्षणम् ॥ ११ ॥

आध्मानं पाणि-पादस्य स्पन्दनं फेन-निर्वमः ।
तृण्-मुष्टि-बन्धातीसार-स्वर-दैन्य-वि-वर्ण-ताः ॥ १२ ॥

३.१२av आध्मानं पाणि-पादास्य- ३.१२bv -स्पन्दनं फेन-निर्वमः ३.१२bv स्पन्दनं फेन-निर्गमः ३.१२bv स्पन्दनं हननं भ्रमः कूजनं स्तननं छर्दिः कास-हिध्मा-प्रजागराः ।
ओष्ठ-दंशाङ्ग-संकोच-स्तम्भ-बस्ताभ-गन्ध-ताः ॥ १३ ॥

३.१३av कूजनं श्वसनं छर्दिः ३.१३av कूजनं स्तम्भनं छर्दिः ३.१३av कूजनं स्वननं छर्दिः ऊर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः ।
मूर्छैक-नेत्र-शोफश् च नैगमेष-ग्रहाकृतिः ॥ १४ ॥

कम्पो हृषित-रोम-त्वं स्वेदश् चक्षुर्-निमीलनम् ।
बहिर्-आयामनं जिह्वा-दंशो ऽन्तः-कण्ठ-कूजनम् ॥ १५ ॥

३.१५av कम्पो हर्षित-रोम-त्वं धावनं विट्-स-गन्ध-त्वं क्रोशनं च श्व-वच् छुनि ।
रोम-हर्षो मुहुस् त्रासः सहसा रोदनं ज्वरः ॥ १६ ॥

३.१६bv क्रोशनं श्वान-वच् छुनि ३.१६cv रोम-हर्षो मुहुः श्वासः कासातीसार-वमथु-जृम्भा-तृट्-शव-गन्ध-ताः ।
अङ्गेष्व् आक्षेप-विक्षेप-शोष-स्तम्भ-वि-वर्ण-ताः ॥ १७ ॥

मुष्टि-बन्धः स्रुतिश् चाक्ष्णोर् बालस्य स्युः पितृ-ग्रहे ।
स्रस्ताङ्ग-त्वम् अतीसारो जिह्वा-तालु-गले व्रणाः ॥ १८ ॥

स्फोटाः स-दाह-रुक्-पाकाः संधिषु स्युः पुनः पुनः ।
निश्य् अह्नि प्रविलीयन्ते पाको वक्त्रे गुदे ऽपि वा ॥ १९ ॥

भयं शकुनि-गन्ध-त्वं ज्वरश् च शकुनि-ग्रहे ।
पूतनायां वमिः कम्पस् तन्द्रा रात्रौ प्रजागरः ॥ २० ॥

हिध्माध्मानं शकृद्-भेदः पिपासा मूत्र-निग्रहः ।
स्रस्त-हृष्टाङ्ग-रोम-त्वं काक-वत् पूति-गन्धि-ता ॥ २१ ॥

शीत-पूतनया कम्पो रोदनं तिर्यग्-ईक्षणम् ।
तृष्णान्त्र-कूजो ऽतीसारो वसा-वद् विस्र-गन्ध-ता ॥ २२ ॥

पार्श्वस्यैकस्य शीत-त्वम् उष्ण-त्वम् अपरस्य च ।
अन्ध-पूतनया छर्दिर् ज्वरः कासो ऽल्प-निद्र-ता ॥ २३ ॥

३.२३dv ज्वरः कासो ऽल्प-वह्नि-ता वर्चसो भेद-वैवर्ण्य-दौर्गन्ध्यान्य् अङ्ग-शोषणम् ।
दृष्टेः सादाति-रुक्-कण्डू-पोथकी-जन्म-शून-ताः ॥ २४ ॥

३.२४cv दृष्टि-प्रसादो रुक्-कण्डू- ३.२४cv दृष्टि-सादो ऽक्षि-रुक्-कण्डू- ३.२४cv दृष्टि-सादो ऽति-रुक् कण्डूः ३.२४cv दृष्टि-सादो ऽति-रुक्-कण्डू- ३.२४cv दृष्टेः सादो ऽक्षि-रुक्-कण्डू- ३.२४dv पोथकी-जन्म शून-ता ३.२४dv -पोथकी-जन्म शून-ता ३.२४dv -पोथकी-जन्म शून्य-ता
हिध्मोद्वेग-स्तन-द्वेष-वैवर्ण्य-स्वर-तीक्ष्ण-ताः ।
वेपथुर् मत्स्य-गन्ध-त्वम् अथ-वा साम्ल-गन्ध-ता ॥ २५ ॥

३.२५bv -वैवर्ण्यं स्वर-तीक्ष्ण-ता ३.२५cv वमथुर् मत्स्य-गन्ध-त्वम् मुख-मण्डितया पाणि-पादास्य-रमणीय-ता ।
सिराभिर् असिताभाभिर् आचितोदर-ता ज्वरः ॥ २६ ॥

३.२६av मुख-मण्डिकया पाणि- ३.२६bv -पादस्य रमणीय-ता अ-रोचको ऽङ्ग-ग्लपनं गो-मूत्र-सम-गन्ध-ता ।
रेवत्यां श्याव-नील-त्वं कर्ण-नासाक्षि-मर्दनम् ॥ २७ ॥

३.२७cv रेवत्या श्याव-नील-त्वं कास-हिध्माक्षि-विक्षेप-वक्र-वक्त्र-त्व-रक्त-ताः ।
बस्त-गन्धो ज्वरः शोषः पुरीषं हरितं द्रवम् ॥ २८ ॥

जायते शुष्क-रेवत्यां क्रमात् सर्वाङ्ग-संक्षयः ।
केश-शातो ऽन्न-विद्वेषः स्वर-दैन्यं वि-वर्ण-ता ॥ २९ ॥

३.२९av जायते शुष्क-रेवत्या नाना-वर्ण-पुरीष-त्वम् उदरे ग्रन्थयः सिराः ॥ २९+१अब् ॥
रोदनं गृध्र-गन्ध-त्वं दीर्घ-कालानुवर्तनम् ।
उदरे ग्रन्थयो वृत्ता यस्य नाना-विधं शकृत् ॥ ३० ॥

जिह्वाया निम्न-ता मध्ये श्यावं तालु च तं त्यजेत् ।
भुञ्जानो ऽन्नं बहु-विधं यो बालः परिहीयते ॥ ३१ ॥

३.३१av जिह्वायां निम्न-ता मध्ये तृष्णा-गृहीतः क्षामाक्षो हन्ति तं शुष्क-रेवती ।
हिंसा-रत्य्-अर्चनाकाङ्क्षा ग्रह-ग्रहण-कारणम् ॥ ३२ ॥

तत्र हिंसात्मके बालो महान् वा स्रुत-नासिकः ।
क्षत-जिह्वः क्वणेद् बाढम् अ-सुखी साश्रु-लोचनः ॥ ३३ ॥

३.३३cv क्षत-जिह्वः क्वणन् बाढम् ३.३३cv क्षत-जिह्वः क्वणेद् गाढम् ३.३३cv क्षत-जिह्वो वमेद् बाढम् ३.३३dv अ-सुखी सास्र-लोचनः दुर्-वर्णो हीन-वचनः पूति-गन्धिश् च जायते ।
क्षामो मूत्र-पुरीषं स्वं मृद्नाति न जुगुप्सते ॥ ३४ ॥

३.३४bv पूति-गन्धिस् तु जायते ३.३४dv गृह्णाति न जुगुप्सते हस्तौ चोद्यम्य संरब्धो हन्त्य् आत्मानं तथा परम् ।
तद्-वच् च शस्त्र-काष्ठाद्यैर् अग्निं वा दीप्तम् आविशेत् ॥ ३५ ॥

३.३५av हस्तौ चोद्यम्य संक्रुद्धो अप्सु मज्जेत् पतेत् कूपे कुर्याद् अन्यच् च तद्-विधम् ।
तृड्-दाह-मोहान् पूयस्य च्छर्दनं च प्रवर्तयेत् ॥ ३६ ॥

३.३६cv तृड्-दाह-मोहाः पूयस्य रक्तं च सर्व-मार्गेभ्यो रिष्टोत्पत्तिं च तं त्यजेत् ।
रहः-स्त्री-रति-संलाप-गन्ध-स्रग्-भूषण-प्रियः ॥ ३७ ॥

३.३७bv रिष्टोत्पत्तिश् च तं त्यजेत् हृष्टः शान्तश् च दुः-साध्यो रति-कामेन पीडितः ।
दीनः परिमृशन् वक्त्रं शुष्कौष्ठ-गल-तालुकः ॥ ३८ ॥

३.३८cv दीनः परिमृशेद् वक्त्रं शङ्कितं वीक्षते रौति ध्यायत्य् आयाति दीन-ताम् ।
अन्नम् अन्नाभिलाषे ऽपि दत्तं नाति बुभुक्षते ॥ ३९ ॥

गृहीतं बलि-कामेन तं विद्यात् सुख-साधनम् ।
हन्तु-कामं जयेद् धोमैः सिद्ध-मन्त्र-प्रवर्तितैः ॥ ४० ॥

३.४०av गृहीतं मह-कामेन इतरौ तु यथा-कामं रति-बल्य्-आदि-दानतः ।
अथ साध्य-ग्रहं बालं विविक्ते शरणे स्थितम् ॥ ४१ ॥

त्रिर् अह्नः सिक्त-संमृष्टे सदा संनिहितानले ।
विकीर्ण-भूति-कुसुम-पत्त्र-बीजान्न-सर्षपे ॥ ४२ ॥

३.४२av त्रिर् अह्नं सिक्त-संमृष्टे ३.४२av त्रिर् अह्नः सिक्त-संसृष्टे ३.४२av त्रिर् अह्नि सिक्त-संमृष्टे ३.४२av त्रिर् अह्नि सिक्त-संसृष्टे ३.४२cv विकीर्ण-भूरि-कुसुम- रक्षो-घ्न-तैल-ज्वलित-प्रदीप-हत-पाप्मनि ।
व्यवाय-मद्य-पिशित-निवृत्त-परिचारके ॥ ४३ ॥

३.४३bv -प्रदीपे हत-पाप्मनि पुराण-सर्पिषाभ्यक्तं परिषिक्तं सुखाम्बुना ।
साधितेन बला-निम्ब-वैजयन्ती-नृपद्रुमैः ॥ ४४ ॥

पारिभद्रक-कट्वङ्ग-जम्बू-वरुण-कट्तृणैः ।
कपोतवङ्कापामार्ग-पाटला-मधु-शिग्रुभिः ॥ ४५ ॥

३.४५dv -पाटली-मधुशिग्रुभिः ३.४५dv -मालती-मधुशिग्रुभिः काकजङ्घा-महाश्वेता-कपित्थ-क्षीरि-पादपैः ।
स-कदम्ब-करञ्जैश् च धूपं स्नातस्य चाचरेत् ॥ ४६ ॥

३.४६bv -कपित्थ-क्षीर-पादपैः द्वीपि-व्याघ्राहि-सिंहर्क्ष-चर्मभिर् घृत-मिश्रितैः ।
पूति-दशाङ्ग-सिद्धार्थ-वचा-भल्लात-दीप्यकैः ॥ ४७ ॥

३.४७cv पूति-दशाङ्गी-सिद्धार्थ- स-कुष्ठैः स-घृतैर् धूपः सर्व-ग्रह-विमोक्षणः ।
सर्षपा निम्ब-पत्त्राणि मूलम् अश्वखुरा वचा ॥ ४८ ॥

३.४८av स-कुष्ठैः साधितो धूपः ३.४८dv मूत्रम् अश्वखुरा वचा ३.४८dv मूलम् अश्वखुरं वचा भूर्ज-पत्त्रं घृतं धूपः सर्व-ग्रह-निवारणः ।
अनन्ताम्रास्थि-तगरं मरिचं मधुरो गणः ॥ ४९ ॥

३.४९bv सर्व-ग्रह-निबर्हणः ३.४९cv अनन्ताम्रास्थि-तगर- ३.४९dv -मरिचं मधुरो गणः शृगालविन्ना मुस्ता च कल्कितैस् तैर् घृतं पचेत् ।
दश-मूल-रस-क्षीर-युक्तं तद् ग्रह-जित् परम् ॥ ५० ॥

रास्ना-द्व्य्-अंशुमती-वृद्ध-पञ्च-मूल-बला-घनात् ।
क्वाथे सर्पिः पचेत् पिष्टैः शारिवा-व्योष-चित्रकैः ॥ ५१ ॥

३.५१av रास्ना-द्व्य्-अंशुमती-पत्त्र- ३.५१av रास्ना-द्व्य्-अंशुमती-लोध्र- ३.५१bv -पञ्च-मूल-वचा-घनात् पाठा-विडङ्ग-मधुक-पयस्या-हिङ्गु-दारुभिः ।
स-ग्रन्थिकैः सेन्द्रयवैः शिशोस् तत् सततं हितम् ॥ ५२ ॥

३.५२dv शिशोस् तु सततं हितम् सर्व-रोग-ग्रह-हरं दीपनं बल-वर्ण-दम् ।
शारिवा-सुरभि-ब्राह्मी-शङ्खिनी-कुष्ठ-सर्षपैः ॥ ५३ ॥

३.५३bv दीपनं बल-वर्धनम् ३.५३dv -शङ्खिनी-कृष्ण-सर्षपैः वचाश्वगन्धा-सुरस-युक्तैः सर्पिर् विपाचयेत् ।
तन् नाशयेद् ग्रहान् सर्वान् पानेनाभ्यञ्जनेन च ॥ ५४ ॥

३.५४av वचाश्वगन्धा-सुरसा- गो-शृङ्ग-चर्म-वालाहि-निर्मोकं वृष-दंश-विट् ।
निम्ब-पत्त्राज्य-कटुका-मदनं बृहती-द्वयम् ॥ ५५ ॥

३.५५av गो-शृङ्ग-चर्म-वालास्थि- ३.५५av गो-शृङ्ग-रोम-वालाहि- कार्पासास्थि-यव-च्छाग-रोम-देवाह्व-सर्षपम् ।
मयूर-पत्त्र-श्रीवासं तुष-केशं स-रामठम् ॥ ५६ ॥

३.५६av कार्पासास्थि-यव-वचा- ३.५६av कार्पासास्थि-वचा-बिल्व- ३.५६av कार्पासास्थि-वचा-लोध्र- ३.५६av मयूर-पिच्छ-श्रीवास- ३.५६av मयूर-पिच्छ-श्रीवासं ३.५६bv -लोध्र-देवाह्व-सर्षपम् ३.५६bv -देवाह्वं यव-सर्षपम् ३.५६cv मयूर-पत्त्र-श्रीवास- ३.५६dv -नर-केशं स-रामठम् मृद्-भाण्डे बस्त-मूत्रेण भावितं श्लक्ष्ण-चूर्णितम् ।
धूपनं च हितं सर्व-भूतेषु विषम-ज्वरे ॥ ५७ ॥

३.५७cv धूपनार्थं हितं सर्व- घृतानि भूत-विद्यायां वक्ष्यन्ते यानि तानि च ।
युञ्ज्यात् तथा बलिं होमं स्नपनं मन्त्र-तन्त्र-वित् ॥ ५८ ॥

पूति-करञ्ज-त्वक्-पत्त्रं क्षीरिभ्यो बर्बराद् अपि ।
तुम्बी-विशालारलुक-शमी-बिल्व-कपित्थतः ॥ ५९ ॥

३.५९av पूति-करञ्ज-त्वक्-पत्त्र- ३.५९av पूति-करञ्जात् त्वक्-पत्त्रं ३.५९bv -क्षीरिभ्यो वेदराद् अपि ३.५९bv -मूलेभ्यो बर्बराद् अपि ३.५९bv -मूलेभ्यो वर्धराद् अपि ३.५९dv -शमी-बिल्व-कपित्थकम् उत्क्वाथ्य तोयं तद् रात्रौ बालानां स्नपनं शिवम् ।
अनुबन्धान् यथा-कृच्छ्रं ग्रहापाये ऽप्य् उपद्रवान् ॥ ६० ॥

३.६०dv ग्रह-व्यापद्य् उपद्रवान् बालामय-निषेधोक्त-भेषजैः समुपाचरेत् ॥ ६०अब् ॥
३.६०ब्व् -भैषज्यैः समुपाचरेत्

# अध्याय 04

लक्षयेज् ज्ञान-विज्ञान-वाक्-चेष्टा-बल-पौरुषम् ।
पुरुषे ऽ-पौरुषं यत्र तत्र भूत-ग्रहं वदेत् ॥ १ ॥

भूतस्य रूप-प्रकृति-भाषा-गत्य्-आदि-चेष्टितैः ।
यस्यानुकारं कुरुते तेनाविष्टं तम् आदिशेत् ॥ २ ॥

सो ऽष्टा-दश-विधो देव-दानवादि-विभेदतः ।
हेतुस् तद्-अनुषक्तौ तु सद्यः पूर्व-कृतो ऽथ-वा ॥ ३ ॥

४.३dv सद्यः पूर्वं कृतो ऽथ-वा प्रज्ञापराधः सु-तरां तेन कामादि-जन्मना ।
लुप्त-धर्म-व्रताचारः पूज्यान् अप्य् अतिवर्तते ॥ ४ ॥

४.४dv पूज्यानाम् अतिवर्तनैः तं तथा भिन्न-मर्यादं पापम् आत्मोपघातिनम् ।
देवादयो ऽप्य् अनुघ्नन्ति ग्रहाश् छिद्र-प्रहारिणः ॥ ५ ॥

छिद्रं पाप-क्रियारम्भः पाको ऽन्-इष्टस्य कर्मणः ।
एकस्य शून्ये ऽवस्थानं श्मशानादिषु वा निशि ॥ ६ ॥

दिग्-वासस्-त्वं गुरोर् निन्दा रतेर् अ-विधि-सेवनम् ।
अ-शुचेर् देवतार्चादि पर-सूतक-संकरः ॥ ७ ॥

४.७cv अ-शुचेर् देवताराद्धिः ४.७dv पर-सूतक-संकरात् होम-मन्त्र-बलीज्यानां वि-गुणं परिकर्म च ।
समासाद् दिन-चर्यादि-प्रोक्ताचार-व्यतिक्रमः ॥ ८ ॥

४.८dv -प्रोक्तानां च विपर्ययः गृह्णन्ति शुक्ल-प्रतिपत्-त्रयो-दश्योः सुरा नरम् ।
शुक्ल-त्रयो-दशी-कृष्ण-द्वा-दश्योर् दानवा ग्रहाः ॥ ९ ॥

४.९dv -द्वा-दश्योर् दानव-ग्रहाः गन्धर्वास् तु चतुर्-दश्यां द्वा-दश्यां चोरगाः पुनः ।
पञ्चम्यां शुक्ल-सप्तम्य्-एका-दश्योस् तु धनेश्वराः ॥ १० ॥

४.१०cv पञ्चम्यां शुक्ल-सप्तम्याम् ४.१०dv एका-दश्यां धनेश्वराः शुक्लाष्ट-पञ्चमी-पौर्णमासीषु ब्रह्म-राक्षसाः ।
कृष्णे रक्षः-पिशाचाद्या नव-द्वा-दश-पर्वसु ॥ ११ ॥

४.११av शुक्लाष्ट-पञ्चमी-पूर्ण- ४.११bv -मासीषु ब्रह्म-राक्षसाः दशामावास्ययोर् अष्ट-नवम्योः पितरो ऽपरे ।
गुरु-वृद्धादयः प्रायः कालं संध्यासु लक्षयेत् ॥ १२ ॥

४.१२av दर्शामावास्ययोर् अष्ट- ४.१२av दशामावास्ययोः षष्ठी- फुल्ल-पद्मोपम-मुखं सौम्य-दृष्टिम् अ-कोपनम् ।
अल्प-वाक्-स्वेद-विण्-मूत्रं भोजनान्-अभिलाषिणम् ॥ १३ ॥

४.१३cv स्व्-अल्प-वाक्-स्वेद-विण्-मूत्रं देव-द्वि-जाति-परमं शुचिं संस्कृत-वादिनम् ।
मीलयन्तं चिरान् नेत्रे सुरभिं वर-दायिनम् ॥ १४ ॥

शुक्ल-माल्याम्बर-सरिच्-छैलोच्च-भवन-प्रियम् ।
अ-निद्रम् अ-प्रधृष्यं च विद्याद् देव-वशी-कृतम् ॥ १५ ॥

४.१५av शुक्ल-माल्याम्बर-धरं ४.१५bv शैलोच्च-भवन-प्रियम् जिह्म-दृष्टिं दुर्-आत्मानं गुरु-देव-द्वि-ज-द्विषम् ।
निर्-भयं मानिनं शूरं क्रोधनं व्यवसायिनम् ॥ १६ ॥

४.१६cv निर्-भयं मानिनं क्रूरं रुद्रः स्कन्दो विशाखो ऽहम् इन्द्रो ऽहम् इति वादिनम् ।
सुरा-मांस-रुचिं विद्याद् दैत्य-ग्रह-गृहीतकम् ॥ १७ ॥

४.१७av रुद्रः स्कन्दः पिशाचो ऽहम् ४.१७cv मद्य-मांस-रुचिं विद्याद् ४.१७dv दैत्य-ग्रह-वशी-कृतम् स्व्-आचारं सुरभिं हृष्टं गीत-नर्तन-कारिणम् ।
स्नानोद्यान-रुचिं रक्त-वस्त्र-माल्यानुलेपनम् ॥ १८ ॥

४.१८av स्व्-आचार-सुरभि-शिष्ट- ४.१८av स्वे-चरं सुरभिं हृष्टं ४.१८bv -गीत-नर्तन-कारिणम् ४.१८cv स्नानोद्यान-रतं रक्त- शृङ्गार-लीलाभिरतं गन्धर्वाध्युषितं वदेत् ।
रक्ताक्षं क्रोधनं स्तब्ध-दृष्टिं वक्र-गतिं चलम् ॥ १९ ॥

४.१९av शृङ्गार-माल्याभिरतं ४.१९av शृङ्गार-लीलाभिहितं श्वसन्तम् अ-निशं जिह्वा-लोलिनं सृक्किणी-लिहम् ।
प्रिय-दुग्ध-गुड-स्नानम् अधो-वदन-शायिनम् ॥ २० ॥

उरगाधिष्ठितं विद्यात् त्रस्यन्तं चातप-त्रतः ।
विप्लुत-त्रस्त-रक्ताक्षं शुभ-गन्धं सु-तेजसम् ॥ २१ ॥

प्रिय-नृत्य-कथा-गीत-स्नान-माल्यानुलेपनम् ।
मत्स्य-मांस-रुचिं हृष्टं तुष्टं बलिनम् अ-व्यथम् ॥ २२ ॥

४.२२av प्रिय-नर्त-कथा-गीत- ४.२२cv मत्स्य-मांस-रुचिं हृष्ट- ४.२२dv -तुष्टं बलिनम् अ-व्यथम् ४.२२dv तुष्टं बलिनम् अ-व्ययम् चलिताग्र-करं कस्मै किं ददामीति वादिनम् ।
रहस्य-भाषिणं वैद्य-द्वि-जाति-परिभाविनम् ॥ २३ ॥

४.२३dv -द्वि-जाति-परिवादिनम् अल्प-रोषं द्रुत-गतिं विद्याद् यक्ष-गृहीतकम् ।
हास्य-नृत्य-प्रियं रौद्र-चेष्टं छिद्र-प्रहारिणम् ॥ २४ ॥

४.२४av अल्प-रोषं ह्रुत-गतिं ४.२४cv हास्य-नृत्त-प्रियं रौद्र- ४.२४cv हास्य-नृत्य-करं रौद्र- आक्रोशिनं शीघ्र-गतिं देव-द्वि-ज-भिषग्-द्विषम् ।
आत्मानं काष्ठ-शस्त्राद्यैर् घ्नन्तं भोः-शब्द-वादिनम् ॥ २५ ॥

४.२५dv घ्नन्तं गो-शब्द-वादिनम् शास्त्र-वेद-पठं विद्याद् गृहीतं ब्रह्म-राक्षसैः ।
स-क्रोध-दृष्टिं भ्रू-कुटीम् उद्वहन्तं स-संभ्रमं ॥ २६ ॥

४.२६bv गृहीतं ब्रह्म-राक्षसा प्रहरन्तं प्रधावन्तं शब्दन्तं भैरवाननम् ।
अन्नाद् विनापि बलिनं नष्ट-निद्रं निशा-चरम् ॥ २७ ॥

४.२७bv रुदन्तं भैरवाननम् निर्-लज्जम् अ-शुचिं शूरं क्रूरं परुष-भाषिणम् ।
रोषणं रक्त-माल्य-स्त्री-रक्त-मद्यामिष-प्रियम् ॥ २८ ॥

४.२८dv -मेघ-मद्यामिष-प्रियम् दृष्ट्वा च रक्तं मांसं वालिहानं दशन-च्छदौ ।
हसन्तम् अन्न-काले च राक्षसाधिष्ठितं वदेत् ॥ २९ ॥

४.२९av दृष्ट्वा च रक्त-मांसानि ४.२९bv लिहानं दशन-च्छदौ अ-स्वस्थ-चित्तं नैक-त्र तिष्ठन्तं परिधाविनम् ।
उच्छिष्ट-नृत्य-गन्धर्व-हास-मद्यामिष-प्रियम् ॥ ३० ॥

निर्भर्त्सनाद् दीन-मुखं रुदन्तम् अ-निमित्ततः ।
नखैर् लिखन्तम् आत्मानं रूक्ष-ध्वस्त-वपुः-स्वरम् ॥ ३१ ॥

आवेदयन्तम् दुःखादि संबद्धा-बद्ध-भाषिणम् ।
नष्ट-स्मृतिं शून्य-रतिं लोलं नग्नं मलीमसम् ॥ ३२ ॥

४.३२av आवेदयन्तम् दुःखानि रथ्या-चैल-परीधानं तृण-माला-विभूषणम् ।
आरोहन्तं च काष्ठाश्वं तथा संकर-कूटकम् ॥ ३३ ॥

४.३३cv आरोहन्तं च काष्ठाश्म- ४.३३dv -राशिं संकर-कूटकम् ४.३३dv तथा संकार-कूटकम् बह्व्-आशिनं पिशाचेन विजानीयाद् अधिष्ठितम् ।
प्रेताकृति-क्रिया-गन्धं भीतम् आहार-विद्विषम् ॥ ३४ ॥

४.३४dv भीरुम् आहार-विद्विषम् तृण-च्छिदं च प्रेतेन गृहीतं नरम् आदिशेत् ।
बहु-प्रलापं कृष्णास्यं प्रविलम्बित-यायिनम् ॥ ३५ ॥

शून-प्रलम्ब-वृषणं कूष्माण्डाधिष्ठितं वदेत् ।
गृहीत्वा काष्ठ-लोष्टादि भ्रमन्तं चीर-वाससम् ॥ ३६ ॥

४.३६cv गृहीत्वा काष्ठ-लोहादि नग्नं धावन्तम् उत्त्रस्त-दृष्टिं तृण-विभूषणम् ।
श्मशान-शून्यायतन-रथ्यैक-द्रुम-सेविनम् ॥ ३७ ॥

तिलान्न-मद्य-मांसेषु सततं सक्त-लोचनं ।
निषादाधिष्ठितं विद्याद् वदन्तं परुषाणि च ॥ ३८ ॥

४.३८bv संसक्तं रक्त-लोचनम् ४.३८bv सततं रक्त-लोचनम् ४.३८bv स-रक्तं रक्त-लोचनम् ४.३८cv कर्कोटाधिष्ठितं विन्द्याद् याचन्तम् उदकं चान्नं त्रस्त-लोहित-लोचनम् ।
उग्र-वाक्यं च जानीयान् नरम् औकिरणार्दितम् ॥ ३९ ॥

४.३९av धावन्तम् उदकं नान्नं ४.३९av याचन्तम् उदकं नान्नं ४.३९av याचन्तम् उदकान्नं च ४.३९bv रक्त-वित्रस्त-लोचनम् ४.३९dv नरम् औत्किरणार्दितम् ४.३९dv नरं मौकिरणार्दितम् ४.३९dv नरम् उत्तरुणार्दितम् गन्ध-माल्य-रतिं सत्य-वादिनं परिवेपिनम् ।
बहु-निद्रं च जानीयाद् वेतालेन वशी-कृतम् ॥ ४० ॥

४.४०av गन्ध-माल्य-रतं सत्य- ४.४०av गन्ध-माल्य-रुचिं सत्य- ४.४०bv -वादिनं परिवेदिनम् ४.४०bv -वादिनं परिदेविनम् ४.४०dv वैतालेन वशी-कृतम् अ-प्रसन्न-दृशं दीन-वदनं शुष्क-तालुकम् ।
चलन्-नयन-पक्ष्माणं निद्रालुं मन्द-पावकम् ॥ ४१ ॥

अपसव्य-परीधानं तिल-मांस-गुड-प्रियम् ।
स्खलद्-वाचं च जानीयात् पितृ-ग्रह-वशी-कृतम् ॥ ४२ ॥

४.४२cv स्खलद्-वाचं विजानीयात् गुरु-वृद्धर्षि-सिद्धाभिशाप-चिन्तानुरूपतः ।
व्याहाराहार-चेष्टाभिर् यथा-स्वं तद्-ग्रहं वदेत् ॥ ४३ ॥

४.४३av गुरु-वृद्धर्षि-सिद्धानां ४.४३bv शाप-चिन्तानुरूपतः ४.४३bv ॑शाप-चित्तानुरूपतः ४.४३bv शाप-चित्तानुरूपतः ४.४३cv विहाराहार-चेष्टाभिर् ४.४३dv यथा-स्वं तं ग्रहं वदेत् कुमार-वृन्दानुगतं नग्नम् उद्धत-मूर्ध-जम् ।
अ-स्वस्थ-मनसं दैर्घ्य-कालिकं स-ग्रहं त्यजेत् ॥ ४४ ॥

# अध्याय 05

भूतं जयेद् अ-हिंसेच्छं जप-होम-बलि-व्रतैः ।
तपः-शील-समाधान-दान-ज्ञान-दयादिभिः ॥ १ ॥

५.१av भूतं जयेद् अ-हिंसोत्थं ५.१cv तपः-शील-समाध्यान- हिङ्गु-व्योषाल-नेपाली-लशुनार्क-जटा-जटाः ।
अजलोमी स-गोलोमी भूतकेशी वचा लता ॥ २ ॥

५.२bv -लशुनार्क-जटामयाः ५.२dv भूतकेशी-वचा-लताः ५.२dv भूतकेशी वचा बला कुक्कुटी सर्पगन्धाख्या तिलाः काण-विकाणिके ।
वज्रप्रोक्ता वयःस्था च शृङ्गी मोहनवल्ल्य् अपि ॥ ३ ॥

५.३bv तिलाः काल-विकाणिके ५.३bv तिलाः काण-विषाणिके ५.३bv तथा काण-विकाणिके ५.३cv वज्रप्रोक्ता वयःस्था वा स्रोतो-जाञ्जन-रक्षोघ्नं रक्षो-घ्नं चान्यद् औषधम् ।
खराश्व-श्वाविद्-उष्ट्रर्क्ष-गोधा-नकुल-शल्यकात् ॥ ४ ॥

५.४dv -गोधा-नकुल-मत्स्यकात् द्वीपि-मार्जार-गो-सिंह-व्याघ्र-सामुद्र-सत्-त्वतः ।
चर्म-पित्त-द्वि-ज-नखा वर्गे ऽस्मिन् साधयेद् घृतम् ॥ ५ ॥

पुराणम् अथ-वा तैलं नवं तत् पान-नस्ययोः ।
अभ्यङ्गे च प्रयोक्तव्यम् एषां चूर्णं च धूपने ॥ ६ ॥

एभिश् च गुटिकां युञ्ज्याद् अञ्जने सावपीडने ।
प्रलेपे कल्कम् एतेषां क्वाथं च परिषेचने ॥ ७ ॥

५.७bv अञ्जने सावपीडके प्रयोगो ऽयं ग्रहोन्मादान् सापस्माराञ् छमं नयेत् ।
गजाह्वा-पिप्पली-मूल-व्योषामलक-सर्षपान् ॥ ८ ॥

गोधा-नकुल-मार्जार-झष-पित्त-प्रपेषितान् ।
नावनाभ्यङ्ग-सेकेषु विदधीत ग्रहापहान् ॥ ९ ॥

५.९bv -शश-पित्त-प्रपेषितान् ५.९bv -ऋक्ष-पित्त-प्रपेषितान् सिद्धार्थक-वचा-हिङ्गु-प्रियङ्गु-रजनी-द्वयम् ।
मञ्जिष्ठा श्वेत-कटभी वरा श्वेताद्रिकर्णिका ॥ १० ॥

५.१०cv मञ्जिष्ठा-श्वेत-कटभी- ५.१०dv -वरा-श्वेताद्रिकर्णिकाः निम्बस्य पत्त्रं बीजं तु नक्तमाल-शिरीषयोः ।
सुराह्वं त्र्य्-ऊषणं सर्पिर् गो-मूत्रे तैश् चतुर्-गुणे ॥ ११ ॥

५.११dv गो-मूत्रे च चतुर्-गुणे सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितम् ।
ग्रहान् सर्वान् निहन्त्य् आशु विशेषाद् आसुरान् ग्रहान् ॥ १२ ॥

कृत्या-लक्ष्मी-विषोन्माद-ज्वरापस्मार-पाप्म च ।
एभिर् एवौषधैर् बस्त-वारिणा कल्पितो ऽ-गदः ॥ १३ ॥

५.१३bv -ज्वरापस्मार-पाप्म-नुत् पान-नस्याञ्जनालेप-स्नानोद्घर्षण-योजितः ।
गुणैः पूर्व-वद् उद्दिष्टो राज-द्वारे च सिद्धि-कृत् ॥ १४ ॥

५.१४cv स गुणैः पूर्व-वद् दिष्टो सिद्धार्थक-व्योष-वचाश्वगन्धा निशा-द्वयं हिङ्गु-पलाण्डु-कन्दः ।
बीजं करञ्जात् कुसुमं शिरीषात् फलं च वल्कं च कपित्थ-वृक्षात् ॥ १५ ॥

५.१५bv निशा-द्वयं हिङ्गु-पलाण्डु-कन्दम् ५.१५dv फलं च कल्कश् च कपित्थ-वृक्षात् ५.१५dv फलं च पुष्पं च कपित्थ-वृक्षात् ५.१५dv फलं च वल्कश् च कपित्थ-वृक्षात् स-माणिमन्थं स-नतं स-कुष्ठं श्योणाक-मूलं किणिही सिता च ।
बस्तस्य मूत्रेण सु-भावितं तत् पित्तेन गव्येन गुडान् विदध्यात् ॥ १६ ॥

दुष्ट-व्रणोन्माद-तमो-निशान्धान् उद्बन्धकान् वारि-निमग्न-देहान् ।
दिग्धाहतान् दर्पित-सर्प-दष्टांस् ते साधयन्त्य् अञ्जन-नस्य-लेपैः ॥ १७ ॥

५.१७av दुष्ट-व्रणोन्माद-तमो-निशान्ध्यम् ५.१७bv उद्बद्धकान् वारि-निमग्न-देहान् ५.१७dv तान् साधयन्त्य् अञ्जन-नस्य-लेपैः ५.१७dv ते साधयन्त्य् अञ्जन-पान-लेपैः कार्पासास्थि-मयूर-पत्त्र-बृहती-निर्माल्य-पिण्डीतक- ॥ १८अ ॥
५.१८av कार्पासास्थि-मयूर-पिच्छ-बृहती-निर्माल्य-पिण्डीतक- -त्वङ्-मांसी-वृष-दंश-विट्-तुष-वचा-केशाहि-निर्मोककैः ॥ १८ब् ॥
५.१८bv -त्वग्-वांशी-वृष-दंश-विट्-तुष-वचा-केशाहि-निर्मोचनैः ५.१८bv -त्वग्-वांशी-वृष-दंश-विण्-नख-वचा-केशाहि-निर्मोचनैः ५.१८bv -त्वङ्-मांसी-वृष-दंश-विट्-तुष-वचा-केशाहि-निर्मोचनैः नागेन्द्र-द्वि-ज-शृङ्ग-हिङ्गु-मरिचैस् तुल्यैः कृतं धूपनं ॥ १८च् ॥
स्कन्दोन्माद-पिशाच-राक्षस-सुरावेश-ज्वर-घ्नं परम् ॥ १८द् ॥
५.१८dv स्कन्दोन्माद-पिशाच-राक्षस-सुरावेश-ग्रह-घ्नं परम् त्रि-कटुक-दल-कुङ्कुम-ग्रन्थिक-क्षार-सिंही-निशा-दारु-सिद्धार्थ-युग्माम्बु-शक्राह्व् अयैः ॥ १९अ ॥
सित-लशुन-फल-त्रयोशीर-तिक्ता-वचा-तुत्थ-यष्टी-बला-लोहितैला-शिला-पद्मकैः ॥ १९ब् ॥
दधि-तगर-मधूक-सार-प्रियाह्वा-विषाख्या-विषा-ताक्ष्र्य-शैलैः स-चव्यामयैः कल्कितैः ॥ १९च् ॥
घृतम् अ-नवम् अ-शेष-मूत्रांश-सिद्धं मतं भूत-रावाह्वयं पानतस् तद् ग्रह-घ्नं परम् ॥ १९द् ॥

नत-मधुक-करञ्ज-लाक्षा-पटोली-समङ्गा-वचा-पाटली-हिङ्गु-सिद्धार्थ-सिंही-निशा-युग् -लता-रोहिणी- ॥ २०अ ॥
५.२०av नत-मधुक-करञ्ज-लाक्षा-पटोली-समङ्गा-वचा-पाटला-हिङ्गु-सिद्धार्थ-सिंही-निशा-युग् -लता-रोहिणी-

-बदर-कटु-फल-त्रिका-काण्ड-दारु-कृमिघ्नाजगन्धामराङ्कोल्ल-कोशातकी-शिग्रु-निम्बा म्बु देन्द्राह्वयैः ॥ २०ब् ॥
५.२०bv -बदर-कटु-फल-त्रिका-काण्ड-दारु-कृमिघ्नाजगन्धा-सुराङ्कोल्ल-कोशातकी-शिग्रु-निम्बा म्बुदेन्द्राह्वयैः ५.२०bv -मदन-कटु-फल-त्रिका-काण्ड-दारु-कृमिघ्नाजगन्धामराङ्कोल्ल-कोशातकी-शिग्रु-निम्बा म्बुदेन्द्राह्वयैः ५.२०bv मदन-कटु-फल-त्रिका-काण्ड-दारु-कृमिघ्नाजगन्धा-सुराङ्कोल्ल-कोशातकी-शिग्रु-निम्बा म्बुदेन्द्राह्वयैः ५.२०bv -मदन-कटु-फल-त्रिका-काण्ड-दारु-कृमिघ्नाजगन्धामृता-कोल-कोशातकी-शिग्रु-निम्बा म्बुदेन्द्राह्वयैः गद-शुकतरु-पुष्प-बीजोग्र-यष्ट्य्-अद्रिकर्णी-निकुम्भाग्नि-बिल्वैः समैः कल्कितैर् मूत्र-वर्गेण सिद्धं घृतं ॥ २०च् ॥
विधि-विनिहितम् आशु सर्वैः क्रमैर् योजितं हन्ति सर्व-ग्रहोन्माद-कुष्ठ-ज्वरांस् तन् महा-भूत- रावं स्मृतम् ॥ २०द् ॥
५.२०dv विधि-वन् निहितम् आशु सर्वैः क्रमैर् योजितं हन्ति सर्व-ग्रहोन्माद-कुष्ठ-ज्वरांस् तन् महा-भूत- रावं स्मृतम् ५.२०dv चिर-विनिहितम् आशु सर्वैः क्रमैर् योजितं हन्ति सर्व-ग्रहोन्माद-कुष्ठ-ज्वरांस् तन् महा-भूत-रावं स्मृतम् ग्रहा गृह्णन्ति ये येषु तेषां तेषु विशेषतः ।
दिनेषु बलि-होमादीन् प्रयुञ्जीत चिकित्सकः ॥ २१ ॥

स्नान-वस्त्र-वसा-मांस-मद्य-क्षीर-गुडादि च ।
रोचते यद् यदा येभ्यस् तत् तेषाम् आहरेत् तदा ॥ २२ ॥

५.२२av स्नानं वस्त्रं वसा मांसं ५.२२bv मद्यं क्षीर-गुडानि वा रत्नानि गन्ध-माल्यानि बीजानि मधु-सर्पिषी ।
भक्ष्याश् च सर्वे सर्वेषां सामान्यो विधिर् इत्य् अयम् ॥ २३ ॥

५.२३av रक्तानि गन्ध-माल्यानि ५.२३cv भक्षाश् च सर्वे सर्वेषां सुरर्षि-गुरु-वृद्धेभ्यः सिद्धेभ्यश् च सुरालये ।
दिश्य् उत्तरस्यां तत्रापि देवायोपहरेद् बलिम् ॥ २४ ॥

पश्चिमायां यथा-कालं दैत्य-भूताय चत्वरे ।
गन्धर्वाय गवां मार्गे स-वस्त्राभरणं बलिम् ॥ २५ ॥

पितृ-नाग-ग्रहे नद्यां नागेभ्यः पूर्व-दक्षिणे ।
यक्षाय यक्षायतने सरितोर् वा समागमे ॥ २६ ॥

५.२६av पितृ-नाम-ग्रहे नद्यां चतुष्-पथे राक्षसाय भीमेषु गहनेषु च ।
रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्म-रक्षसाम् ॥ २७ ॥

५.२७bv भीमेषु गहनेषु वा शून्यालये पिशाचाय पश्चिमां दिशम् आस्थिते ।
शुचि-शुक्लानि माल्यानि गन्धाः क्षैरेयम् ओदनम् ॥ २८ ॥

५.२८bv पश्चिमां दिशम् आश्रिते ५.२८bv पश्चिमायां दिशि स्थिते दधि च्छत्त्रं च धवलं देवानां बलिर् इष्यते ।
हिङ्गु-सर्षप-षड्ग्रन्था-व्योषैर् अर्ध-पलोन्मितैः ॥ २९ ॥

चतुर्-गुणे गवां मूत्रे घृत-प्रस्थं विपाचयेत् ।
तत्-पान-नावनाभ्यङ्गैर् देव-ग्रह-विमोक्षणम् ॥ ३० ॥

नस्याञ्जनं वचा-हिङ्गु-लशुनं बस्त-वारिणा ।
दैत्ये बलिर् बहु-फलः सोशीर-कमलोत्पलः ॥ ३१ ॥

५.३१av नस्याञ्जने वचा-हिङ्गु- नागानां सुमनो-लाज-गुडापूप-गुडौदनैः ।
परमान्न-मधु-क्षीर-कृष्ण-मृन्-नागकेसरैः ॥ ३२ ॥

वचा-पद्म-पुरोशीर-रक्तोत्पल-दलैर् बलिः ।
श्वेतपत्त्रं च लोध्रं च तगरं नाग-सर्षपाः ॥ ३३ ॥

५.३३av वचा-पाठा-पुरोशीर- शीतेन वारिणा पिष्टं नावनाञ्जनयोर् हितम् ।
यक्षाणां क्षीर-दध्य्-आज्य-मिश्रकौदन-गुग्गुलु ॥ ३४ ॥

देवदारूत्पलं पद्मं उशीरं वस्त्र-काञ्चनम् ।
हिरण्यं च बलिर् योज्यो मूत्राज्य-क्षीरम् एकतः ॥ ३५ ॥

५.३५bv उशीरं वस्त्र-चन्दनम् ५.३५bv उशीरं वस्त्र-कम्बलम् सिद्धं समोन्मितं पान-नावनाभ्यञ्जने हितम् ।
हरीतकी हरिद्रे द्वे लशुनो मरिचं वचा ॥ ३६ ॥

५.३६av सिद्धं पलोन्मितं पान- निम्ब-पत्त्रं च बस्ताम्बु-कल्कितं नावनाञ्जनम् ।
ब्रह्म-रक्षो-बलिः सिद्धं यवानां पूर्णम् आढकम् ॥ ३७ ॥

५.३७dv यवानां चूर्णम् आढकम् तोयस्य कुम्भः पललं छत्त्रं वस्त्रम् विलेपनम् ।
गायत्री-विंशति-पल-क्वाथे ऽर्ध-पलिकैः पचेत् ॥ ३८ ॥

५.३८av तोय-कुम्भं च पललं त्र्य्-ऊषण-त्रि-फला-हिङ्गु-षड्ग्रन्था-मिशि-सर्षपैः ।
स-निम्ब-पत्त्र-लशुनैः कुडवान् सप्त सर्पिषः ॥ ३९ ॥

गो-मूत्रे त्रि-गुणे पान-नस्याभ्यङ्गेषु तद् धितम् ।
रक्षसां पललं शुक्लं कुसुमं मिश्रकौदनम् ॥ ४० ॥

५.४०av गो-मूत्रे त्रि-गुणे सिद्धं ५.४०bv पानाभ्यङ्गेषु तद् धितम् ५.४०dv कुसुमं मिश्रकौदनः बलिः पक्वाम-मांसानि निष्पावा रुधिरोक्षिताः ।
नक्तमाल-शिरीष-त्वङ्-मूल-पुष्प-फलानि च ॥ ४१ ॥

५.४१dv -मूलं पुष्पं फलानि च ५.४१dv -मूले पुष्पं फलानि च तद्-वच् च कृष्ण-पाटल्या बिल्व-मूलं कटु-त्रिकम् ।
हिङ्ग्व्-इन्द्रयव-सिद्धार्थ-लशुनामलकी-फलम् ॥ ४२ ॥

नावनाञ्जनयोर् योज्यो बस्त-मूत्र-युतो ऽ-गदः ।
एभिर् एव घृतं सिद्धं गवां मूत्रे चतुर्-गुणे ॥ ४३ ॥

५.४३bv बस्त-मूत्र-हृतो ऽ-गदः ५.४३bv बस्त-मूत्र-द्रुतो ऽ-गदः रक्षो-ग्रहान् वारयते पानाभ्यञ्जन-नावनैः ।
पिशाचानां बलिः सीधुः पिण्याकः पललं दधि ॥ ४४ ॥

मूलकं लवणं सर्पिः स-भूतौदन-यावकम् ।
हरिद्रा-द्वय-मञ्जिष्ठा-मिशि-सैन्धव-नागरम् ॥ ४५ ॥

५.४५bv प्रभूतौदन-यावकम् ५.४५bv प्राग्-भूतौदन-यावकम् ५.४५dv -मिशि-सैन्धव-नागरैः हिङ्गु-प्रियङ्गु-त्रि-कटु-लशुन-त्रि-फला वचा ।
पाटली-श्वेत-कटभी-शिरीष-कुसुमैर् घृतम् ॥ ४६ ॥

५.४६bv -लशुन-त्रि-फला-वचाः ५.४६cv पटोली-श्वेत-कटभी- ५.४६cv पाटला-श्वेत-कटभी- गो-मूत्र-पादिकं सिद्धं पानाभ्यञ्जनयोर् हितम् ।
बस्ताम्बु-पिष्टैस् तैर् एव योज्यम् अञ्जन-नावनम् ॥ ४७ ॥

देवर्षि-पितृ-गन्धर्वे तीक्ष्णं नस्यादि वर्जयेत् ।
सर्पिः-पानादि मृद्व् अस्मिन् भैषज्यम् अवचारयेत् ॥ ४८ ॥

ऋते पिशाचात् सर्वेषु प्रतिकूलं च नाचरेत् ।
स-वैद्यम् आतुरं घ्नन्ति क्रुद्धास् ते हि महौजसः ॥ ४९ ॥

ईश्वरं द्वा-दश-भुजं नाथम् आर्यावलोकितम् ।
सर्व-व्याधि-चिकित्सां च जपन् सर्व-ग्रहान् जयेत् ॥ ५० ॥

५.५०cv सर्व-व्याधि-चिकित्सन्तं ५.५०cv सर्व-व्याधि-चिकित्सं च ५.५०cv सर्व-व्याधि-चिकित्सितं तथोन्मादान् अपस्मारान् अन्यं वा चित्त-विप्लवम् ।
महा-विद्यां च मायूरीं शुचिं तं श्रावयेत् सदा ॥ ५१ ॥

५.५१bv अन्यान् वा चित्त-विभ्रमान् ५.५१dv शुचिस् तं श्रावयेत् सदा भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश् च तद्-गणान् ।
जपन् सिद्धांश् च तन्-मन्त्रान् ग्रहान् सर्वान् अपोहति ॥ ५२ ॥

यच् चान्-अन्तरयोः किञ्-चिद् वक्ष्यते ऽध्याययोर् हितम् ।
यच् चोक्तम् इह तत् सर्वं प्रयुञ्जीत परस्-परम् ॥ ५३ ॥

५.५३cv यथोक्तम् इह तत् सर्वं

# अध्याय 06

उन्मादाः षट् पृथग्-दोष-निचयाधि-विषोद्भवाः ।
उन्मादो नाम मनसो दोषैर् उन्मार्ग-गैर् मदः ॥ १ ॥

शारीर-मानसैर् दुष्टैर् अ-हिताद् अन्न-पानतः ।
विकृता-सात्म्य-स-मलाद् विषमाद् उपयोगतः ॥ २ ॥

६.२av शारीर-मानसैर् दोषैर् ६.२cv विकृता-सात्म्य-स-मल- ६.२dv -विषमाद् उपयोगतः विषण्णस्याल्प-सत्-त्वस्य व्याधि-वेग-समुद्गमात् ।
क्षीणस्य चेष्टा-वैषम्यात् पूज्य-पूजा-व्यतिक्रमात् ॥ ३ ॥

६.३bv व्याधि-वेग-समुद्भवात् ६.३bv व्याधि-वेग-समुद्भ्रमात् आधिभिर् चित्त-विभ्रंशाद् विषेणोपविषेण च ।
एभिर् हि हीन-सत्-त्वस्य हृदि दोषाः प्रदूषिताः ॥ ४ ॥

६.४bv विषेणोपविषेण वा ६.४cv एभिर् विहीन-सत्-त्वस्य धियो विधाय कालुष्यं हृत्वा मार्गान् मनो-वहान् ।
उन्मादं कुर्वते तेन धी-विज्ञान-स्मृति-भ्रमात् ॥ ५ ॥

देहो दुःख-सुख-भ्रष्टो भ्रष्ट-सारथि-वद् रथः ।
भ्रमत्य् अ-चिन्तितारम्भस् तत्र वातात् कृशाङ्ग-ता ॥ ६ ॥

६.६av देही दुःख-सुख-भ्रष्टो अ-स्थाने रोदनाक्रोश-हसित-स्मित-नर्तनम् ।
गीत-वादित्र-वाग्-अङ्ग-विक्षेपास्फोटनानि च ॥ ७ ॥

अ-साम्ना वेणु-वीणादि-शब्दानुकरणं मुहुः ।
आस्यात् फेनागमो ऽजस्रम् अटनं बहु-भाषि-ता ॥ ८ ॥

६.८av अभीक्ष्णं वेणु-वीणादि- ६.८av आस्येन वेणु-वीणादि- ६.८bv -शब्दादि-करणं मुहुः ६.८dv अटनं बहु-भाषितम् अलङ्कारो ऽन्-अलङ्कारैर् अ-यानैर् गमनोद्यमः ।
गृद्धिर् अभ्यवहार्येषु तल्-लाभे चावमान-ता ॥ ९ ॥

६.९dv तल्-लाभे वावमान-ता ६.९dv तल्-लाभेष्व् अवमान-ता उत्पिण्डितारुणाक्षि-त्वं जीर्णे चान्ने गदोद्भवः ।
पित्तात् संतर्जनं क्रोधो मुष्टि-लोष्टाद्य्-अभिद्रवः ॥ १० ॥

६.१०av उत्पीडितारुणाक्षि-त्वं शीत-च्छायोदकाकाङ्क्षा नग्न-त्वं पीत-वर्ण-ता ।
अ-सत्य-ज्वलन-ज्वाला-तारका-दीप-दर्शनम् ॥ ११ ॥

६.११bv नेत्र-त्वक्-पीत-वर्ण-ता ६.११cv अ-सति ज्वलने ज्वाला- ६.११cv अ-सत्य-ज्वलनोल्कादि- कफाद् अ-रोचकश् छर्दिर् अल्पेहाहार-वाक्य-ता ।
स्त्री-काम-ता रहः-प्रीतिर् लाला-सिङ्घाणक-स्रुतिः ॥ १२ ॥

बैभत्स्यं शौच-विद्वेषो निद्रा श्वयथुर् आनने ।
उन्मादो बल-वान् रात्रौ भुक्त-मात्रे च जायते ॥ १३ ॥

सर्वायतन-संस्थान-संनिपाते तद्-आत्मकम् ।
उन्मादं दारुणं विद्यात् तं भिषक् परिवर्जयेत् ॥ १४ ॥

६.१४bv -संनिपातात् तद्-आत्मकम् धन-कान्तादि-नाशेन दुः-सहेनाभिषङ्ग-वान् ।
पाण्डुर् दीनो मुहुर् मुह्यन् हाहेति परिदेवते ॥ १५ ॥

रोदित्य् अ-कस्मान् म्रियते तद्-गुणान् बहु मन्यते ।
शोक-क्लिष्ट-मना ध्यायञ् जागरूको विचेष्टते ॥ १६ ॥

६.१६av रोदित्य् अ-कस्मात् स्मयते विषेण श्याव-वदनो नष्ट-च्छाया-बलेन्द्रियः ।
वेगान्तरे ऽपि संभ्रान्तो रक्ताक्षस् तं विवर्जयेत् ॥ १७ ॥

६.१७bv नष्ट-च्छायो ऽ-बलेन्द्रियः अथानिल-ज उन्मादे स्नेह-पानं प्रयोजयेत् ।
पूर्वम् आवृत-मार्गे तु स-स्नेहं मृदु शोधनम् ॥ १८ ॥

कफ-पित्त-भवे ऽप्य् आदौ वमनं स-विरेचनम् ।
स्निग्ध-स्विन्नस्य वस्तिं च शिरसः स-विरेचनम् ॥ १९ ॥

६.१९av कफ-पित्तोद्भवे ऽप्य् आदौ ६.१९cv स्निग्ध-स्विन्नस्य वस्तींश् च ६.१९dv शिरसश् च विरेचनम् तथास्य शुद्ध-देहस्य प्रसादं लभते मनः ।
इत्थम् अप्य् अनुवृत्तौ तु तीक्ष्णं नावनम् अञ्जनम् ॥ २० ॥

६.२०av तथैव शुद्ध-देहस्य हर्षणाश्वासनोत्त्रास-भय-ताडन-तर्जनम् ।
अभ्यङ्गोद्वर्तनालेप-धूपान् पानं च सर्पिषः ॥ २१ ॥

६.२१dv -धूमान् पानं च सर्पिषः युञ्ज्यात् तानि हि शुद्धस्य नयन्ति प्रकृतिं मनः ।
हिङ्गु-सौवर्चल-व्योषैर् द्वि-पलांशैर् घृताढकम् ॥ २२ ॥

सिद्धं स-मूत्रम् उन्माद-भूतापस्मार-नुत् परम् ।
द्वौ प्रस्थौ स्व-रसाद् ब्राह्म्या घृत-प्रस्थं च साधितम् ॥ २३ ॥

व्योष-श्यामा-त्रिवृद्-दन्ती-शङ्खपुष्पी-नृपद्रुमैः ।
स-सप्तला-कृमिहरैः कल्कितैर् अक्ष-संमितैः ॥ २४ ॥

६.२४av व्योष-श्यामा-त्रिवृद्-बिम्बी- ६.२४cv सातला-कृमिजित्-कल्कैः ६.२४dv सर्वैस् तैर् अक्ष-संमितैः पल-वृद्ध्या प्रयुञ्जीत परं मात्रा चतुः-पलम् ।
उन्माद-कुष्ठापस्मार-हरं वन्ध्या-सुत-प्रदम् ॥ २५ ॥

वाक्-स्वर-स्मृति-मेधा-कृद् धन्यं ब्राह्मी-घृतं स्मृतम् ।
वरा-विशाला-भद्रैला-देवदार्व्-एलवालुकैः ॥ २६ ॥

६.२६cv वरा-विशालाकौत्पला- ६.२६cv वरा-विशाला-पत्त्रैला- द्वि-शारिवा-द्वि-रजनी-द्वि-स्थिरा-फलिनी-नतैः ।
बृहती-कुष्ठ-मञ्जिष्ठा-नागकेसर-दाडिमैः ॥ २७ ॥

वेल्ल-तालीश-पत्त्रैला-मालती-मुकुलोत्पलैः ।
स-दन्ती-पद्मक-हिमैः कर्षांशैः सर्पिषः पचेत् ॥ २८ ॥

६.२८bv -मालती-कुमुदोत्पलैः ६.२८cv रुदन्ती-पद्मक-हिमैः प्रस्थं भूत-ग्रहोन्माद-कासापस्मार-पाप्मसु ।
पाण्डु-कण्डू-विषे शोषे मोहे मेहे गरे ज्वरे ॥ २९ ॥

६.२९bv -कासापस्मार-पाप्म-जित् ६.२९cv पाण्डु-कण्डू-विषे शोफे अ-रेतस्य् अ-प्रजसि वा दैवोपहत-चेतसि ।
अ-मेधसि स्खलद्-वाचि स्मृति-कामे ऽल्प-पावके ॥ ३० ॥

६.३०av अ-रेतस्य् अल्प-रजसि बल्यं मङ्गल्यम् आयुष्यं कान्ति-सौभाग्य-पुष्टि-दम् ।
कल्याणकम् इदं सर्पिः श्रेष्ठं पुं-सवनेषु च ॥ ३१ ॥

एभ्यो द्वि-शारिवादीनि जले पक्त्वैक-विंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर् गृष्टि-क्षीर-चतुर्-गुणम् ॥ ३२ ॥

६.३२dv गृष्टि-क्षीरे चतुर्-गुणे ६.३२dv गृष्टि-क्षीरं चतुर्-गुणम् वीरा-द्वि-मेदा-काकोली-कपिकच्छू-विषाणिभिः ।
शूर्पपर्णी-युतैर् एतन् महा-कल्याणकं परम् ॥ ३३ ॥

६.३३av वीरर्द्धि-मेदा-काकोली- ६.३३dv महा-कल्याणकं स्मृतम् बृंहणं संनिपात-घ्नं पूर्वस्माद् अधिकं गुणैः ।
जटिला पूतना केशी चारटी मर्कटी वचा ॥ ३४ ॥

त्रायमाणा जया वीरा चोरकः कटु-रोहिणी ।
वयःस्था शूकरी छत्त्रा सातिच्छत्त्रा पलङ्कषा ॥ ३५ ॥

६.३५dv अतिच्छत्त्रा पलङ्कषा महापुरुषदन्ता च कायस्था नाकुली-द्वयम् ।
कटम्भरा वृश्चिकाली शालिपर्णी च तैर् घृतम् ॥ ३६ ॥

६.३६cv कटम्भरा-वृश्चिकाली- ६.३६dv -स्थिराश् चाहृत्य तैर् घृतम् सिद्धं चातुर्थिकोन्माद-ग्रहापस्मार-नाशनम् ।
महा-पैशाचकं नाम घृतम् एतद् यथामृतम् ॥ ३७ ॥

६.३७av सिद्धं चतुर्थकोन्माद- ६.३७av सिद्धं चातुर्थकोन्माद- बुद्धि-मेधा-स्मृति-करं बालानां चाङ्ग-वर्धनम् ।
ब्राह्मीम् ऐन्द्रीं विडङ्गानि व्योषं हिङ्गु जटां मुराम् ॥ ३८ ॥

६.३८av स्मृति-बुद्धि-करं चैव ६.३८bv बालानाम् अङ्ग-वर्धनम् रास्नां विषघ्नां लशुनं विशल्यां सुरसां वचाम् ।
ज्योतिष्मतीं नागविन्नाम् अनन्तां स-हरीतकीम् ॥ ३९ ॥

६.३९av रास्नां विषघ्नीं लशुनं काङ्क्षीं च हस्ति-मूत्रेण पिष्ट्वा छाया-विशोषीता ।
वर्तिर् नस्याञ्जनालेप-धूपैर् उन्माद-सूदनी ॥ ४० ॥

६.४०av काच्छीं च हस्ति-मूत्रेण ६.४०av सौराष्ट्रीं बस्त-मूत्रेण ६.४०dv -धूपैर् उन्माद-नाशिनी अवपीडाश् च विविधाः सर्षपाः स्नेह-संयुताः ।
कटु-तैलेन चाभ्यङ्गो ध्मापयेच् चास्य तद् रजः ॥ ४१ ॥

स-हिङ्गुस् तीक्ष्ण-धूमश् च सूत्र-स्थानोदितो हितः ।
शृगाल-शल्यकोलूक-जलौका-वृष-बस्त-जैः ॥ ४२ ॥

६.४२av स-हिङ्गु तीक्ष्ण-धूमश् च ६.४२dv -जलूका-वृष-बस्त-जैः ६.४२dv -जलौका-वृक-बस्त-जैः मूत्र-पित्त-शकृद्-रोम-नख-चर्मभिर् आचरेत् ।
धूप-धूमाञ्जनाभ्यङ्ग-प्रदेह-परिषेचनम् ॥ ४३ ॥

धूपयेत् सततं चैनं श्व-गो-मत्स्यैः सु-पूतिभिः ।
वात-श्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते ॥ ४४ ॥

तिक्तकं जीवनीयं च सर्पिः स्नेहश् च मिश्रकः ।
शीतानि चान्न-पानानि मधुराणि लघूनि च ॥ ४५ ॥

विध्येत् सिरां यथोक्तां वा तृप्तं मेद्यामिषस्य वा ।
निवाते शाययेद् एवं मुच्यते मति-विभ्रमात् ॥ ४६ ॥

६.४६av विध्येत् सिरां यथोक्तां च प्रक्षिप्या-सलिले कूपे शोषयेद् वा बुभुक्षया ।
आश्वासयेत् सुहृत् तं वा वाक्यैर् धर्मार्थ-संहितैः ॥ ४७ ॥

६.४७cv आश्वासयेत् सुहृद्भिस् तं ब्रूयाद् इष्ट-विनाशं वा दर्शयेद् अद्भुतानि वा ।
बद्धं सर्षप-तैलाक्तं न्यसेद् वोत्तानम् आतपे ॥ ४८ ॥

६.४८av ब्रूयाद् इष्टस्य नाशं वा ६.४८dv न्यस्तं चोत्तानम् आतपे कपिकच्छ्वाथ-वा तप्तैर् लोह-तैल-जलैः स्पृशेत् ।
कशाभिस् ताडयित्वा वा बद्धं श्वभ्रे विनिःक्षिपेत् ॥ ४९ ॥

६.४९dv बद्ध्वा श्वभ्रे विनिःक्षिपेत् अथ-वा वीत-शस्त्राश्म-जने संतमसे गृहे ।
सर्पेणोद्धृत-दंष्ट्रेण दान्तैः सिंहैर् गजैश् च तम् ॥ ५० ॥

त्रासयेच् छस्त्र-हस्तैर् वा किरातारातितस्करैः ॥ ५०+(१)अब् ॥
६.५०+(१)ब्व् तस्करैः शत्रुभिस् तथा अथ-वा राज-पुरुषा बहिर् नीत्वा सु-संयतम् ।
भापयेयुर् वधेनैनं तर्जयन्तो नृपाज्ञया ॥ ५१ ॥

देह-दुःख-भयेभ्यो हि परं प्राण-भयं मतम् ।
तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ ५२ ॥

६.५२dv सर्वतो ऽपसृतं मनः सिद्धा क्रिया प्रयोज्येयं देश-कालाद्य-अपेक्षया ।
इष्ट-द्रव्य-विनाशात् तु मनो यस्योपहन्यते ॥ ५३ ॥

६.५३av सिद्धाः क्रिया प्रयोक्तव्या तस्य तत्-सदृश-प्राप्ति-सान्त्वाश्वासैः शमं नयेत् ।
काम-शोक-भय-क्रोध-हर्षेर्ष्या-लोभ-संभवान् ॥ ५४ ॥

६.५४av तस्य तत्-सदृश-प्राप्तिः ६.५४bv -सान्त्वाश्वासैः प्रसादयेत् ६.५४bv -प्रियाश्वासैः प्रदर्शयेत् ६.५४bv सान्त्वाश्वासैः शमं नयेत् परस्-पर-प्रति-द्वन्द्वैर् एभिर् एव शमं नयेत् ।
भूतानुबन्धम् ईक्षेत प्रोक्त-लिङ्गाधिकाकृतिम् ॥ ५५ ॥

६.५५cv भूतानुबद्धम् ईक्षेत यद्य् उन्मादे ततः कुर्याद् भूत-निर्दिष्टम् औषधम् ।
बलिं च दद्यात् पललं यावकं सक्तु-पिण्डिकाम् ॥ ५६ ॥

६.५६av यद्य् उन्मादे च तत् कुर्याद् स्निग्धं मधुरम् आहारं तण्डुलान् रुधिरोक्षितान् ।
पक्वामकानि मांसानि सुरां मैरेयम् आसवम् ॥ ५७ ॥

६.५७cv पक्वामाहवानि मांसानि ६.५७dv सुरा-मैरेयम् आसवम् अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ।
चतुष्-पथे गवां तीर्थे नदीनां संगमेषु च ॥ ५८ ॥

निवृत्तामिष-मद्यो यो हिताशी प्रयतः शुचिः ।
निजागन्तुभिर् उन्मादैः सत्-त्व-वान् न स युज्यते ॥ ५९ ॥

६.५९av निवृत्तामिष-मद्यो ऽपि प्रसाद इन्द्रियार्थानां बुद्ध्य्-आत्म-मनसां तथा ।
धातूनां प्रकृति-स्थ-त्वं विगतोन्माद-लक्षणम् ॥ ६० ॥

६.६०av इन्द्रियाणां प्रसन्न-त्वं ६.६०dv गतोन्मादस्य लक्षणम्

# अध्याय 07

स्मृत्य्-अपायो ह्य् अपस्मारः स धी-सत्-त्वाभिसंप्लवात् ।
जायते ऽभिहते चित्ते चिन्ता-शोक-भयादिभिः ॥ १ ॥

७.१bv स धी-सत्-त्वादि-संप्लवात् उन्माद-वत् प्रकुपितैश् चित्त-देह-गतैर् मलैः ।
हते सत्-त्वे हृदि व्याप्ते संज्ञा-वाहिषु खेषु च ॥ २ ॥

तमो विशन् मूढ-मतिर् बीभत्साः कुरुते क्रियाः ।
दन्तान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन् ॥ ३ ॥

७.३dv हस्तौ पादौ च कम्पयन् पश्यन्न् अ-सन्ति रूपाणि प्रस्खलन् पतति क्षितौ ।
विजिह्माक्षि-भ्रुवो दोष-वेगे ऽतीते विबुध्यते ॥ ४ ॥

कालान्तरेण स पुनश् चैवम् एव विचेष्टते ।
अपस्मारश् चतुर्-भेदो वाताद्यैर् निचयेन च ॥ ५ ॥

रूपम् उत्पत्स्यमाने ऽस्मिन् हृत्-कम्पः शून्य-ता भ्रमः ।
तमसो दर्शनं ध्यानं भ्रू-व्युदासो ऽक्षि-वैकृतम् ॥ ६ ॥

७.६av रूपम् उत्पद्यमाने ऽस्मिन् अ-शब्द-श्रवणं स्वेदो लाला-सिङ्घाणक-स्रुतिः ।
अ-विपाको ऽ-रुचिर् मूर्छा कुक्ष्य्-आटोपो बल-क्षयः ॥ ७ ॥

निद्रा-नाशो ऽङ्ग-मर्दस् तृट् स्वप्ने गानं स-नर्तनम् ।
पानं तैलस्य मद्यस्य तयोर् एव च मेहनम् ॥ ८ ॥

तत्र वातात् स्फुरत्-सक्थिः प्रपतंश् च मुहुर् मुहुः ।
अपस्मरति संज्ञां च लभते वि-स्वरं रुदन् ॥ ९ ॥

७.९bv प्रततं च मुहुर् मुहुः उत्पिण्डिताक्षः श्वसिति फेनं वमति कम्पते ।
आविध्यति शिरो दन्तान् दशत्य् आध्मात-कन्धरः ॥ १० ॥

परितो विक्षिपत्य् अङ्गं विषमं विनताङ्गुलिः ।
रूक्ष-श्यावारुणाक्षि-त्वङ्-नखास्यः कृष्णम् ईक्षते ॥ ११ ॥

चपलं परुषं रूपं वि-रूपं विकृताननम् ।
अपस्मरति पित्तेन मुहुः संज्ञां च विन्दति ॥ १२ ॥

७.१२av चपलं परमं रूपं ७.१२av चपलं परुषं रूक्षं पीत-फेनाक्षि-वक्त्र-त्वग् आस्फालयति मेदिनीम् ।
भैरवादीप्त-रुषित-रूप-दर्शी तृषान्वितः ॥ १३ ॥

कफाच् चिरेण ग्रहणं चिरेणैव विबोधनम् ।
चेष्टाल्पा भूयसी लाला शुक्ल-नेत्र-नखास्य-ता ॥ १४ ॥

शुक्लाभ-रूप-दर्शि-त्वं सर्व-लिङ्गं तु वर्जयेत् ।
अथावृतानां धी-चित्त-हृत्-खानां प्राक्-प्रबोधनम् ॥ १५ ॥

तीक्ष्णैः कुर्याद् अपस्मारे कर्मभिर् वमनादिभिः ।
वातिकं वस्ति-भूयिष्ठैः पैत्तं प्रायो विरेचनैः ॥ १६ ॥

श्लैष्मिकं वमन-प्रायैर् अपस्मारम् उपाचरेत् ।
सर्वतः सु-विशुद्धस्य सम्यग् आश्वासितस्य च ॥ १७ ॥

अपस्मार-विमोक्षार्थं योगान् संशमनाञ् छृणु ।
गो-मय-स्व-रस-क्षीर-दधि-मूत्रैः शृतं हविः ॥ १८ ॥

अपस्मार-ज्वरोन्माद-कामलान्त-करं पिबेत् ।
द्वि-पञ्च-मूल-त्रि-फला-द्वि-निशा-कुटज-त्वचः ॥ १९ ॥

७.१९cv द्वि-पञ्च-मूली-त्रि-फला- सप्तपर्णम् अपामार्गं नीलिनीं कटु-रोहिणीम् ।
शम्याक-पुष्कर-जटा-फल्गु-मूल-दुरालभाः ॥ २० ॥

७.२०cv श्योणाक-पुष्कर-जटा- द्वि-पलाः सलिल-द्रोणे पक्त्वा पादावशेषिते ।
भार्गी-पाठाढकी-कुम्भ-निकुम्भ-व्योष-रोहिषैः ॥ २१ ॥

७.२१av द्वि-पलानि जल-द्रोणे मूर्वा-भूतिक-भूनिम्ब-श्रेयसी-शारिवा-द्वयैः ।
मदयन्त्य्-अग्नि-निचुलैर् अक्षांशैः सर्पिषः पचेत् ॥ २२ ॥

७.२२av मूर्वा-पूतिक-भूनिम्ब- प्रस्थं तद्-वद् द्रवैः पूर्वैः पञ्च-गव्यम् इदं महत् ।
ज्वरापस्मार-जठर-भगन्दर-हरं परम् ॥ २३ ॥

शोफार्शः-कामला-पाण्डु-गुल्म-कास-ग्रहापहम् ।
ब्राह्मी-रस-वचा-कुष्ठ-शङ्खपुष्पी-शृतं घृतम् ॥ २४ ॥

७.२४bv -गुल्म-कास-भ्रमापहम् पुराणं मेध्यम् उन्मादा-लक्ष्म्य्-अपस्मार-पाप्म-जित् ।
तैल-प्रस्थं घृत-प्रस्थं जीवनीयैः पलोन्मितैः ॥ २५ ॥

क्षीर-द्रोणे पचेत् सिद्धम् अपस्मार-विमोक्षणम् ।
कंसे क्षीरेक्षु-रसयोः काश्मर्ये ऽष्ट-गुणे रसे ॥ २६ ॥

कार्षिकैर् जीवनीयैश् च सर्पिः-प्रस्थं विपाचयेत् ।
वात-पित्तोद्भवं क्षिप्रम् अपस्मारं निहन्ति तत् ॥ २७ ॥

तद्-वत् काश-विदारीक्षु-कुश-क्वाथ-शृतं पयः ।
कूष्माण्ड-स्व-रसे सर्पिर् अष्टा-दश-गुणे शृतम् ॥ २८ ॥

७.२८bv -कुश-क्वाथे शृतं पयः ७.२८bv -कुश-क्वाथैः शृतं पयः यष्टी-कल्कम् अपस्मार-हरं धी-वाक्-स्वर-प्रदम् ।
कपिलानां गवां पित्तं नावने परमं हितम् ॥ २९ ॥

७.२९av यष्टी-कल्कं अपस्मारं ७.२९bv नावनं परमं हितम् ७.२९bv हरेद् धी-वाक्-स्वर-प्रदम् श्व-शृगाल-बिडालानां सिंहादीनां च पूजितम् ।
गोधा-नकुल-नागानां पृषतर्क्ष-गवाम् अपि ॥ ३० ॥

७.३०dv वृषभर्क्ष-गवाम् अपि ७.३०dv वृक-चर्क-गवाम् अपि पित्तेषु साधितं तैलं नस्ये ऽभ्यङ्गे च शस्यते ।
त्रि-फला-व्योष-पीतद्रु-यव-क्षार-फणिज्जकैः ॥ ३१ ॥

७.३१av पित्तेषु साधयेत् तैलं ७.३१bv नस्याभ्यङ्गेषु शस्यते श्र्य्-आह्वापामार्ग-कारञ्ज-बीजैस् तैलं विपाचितम् ।
बस्त-मूत्रे हितं नस्यं चूर्णं वा ध्मापयेद् भिषक् ॥ ३२ ॥

७.३२av श्यामापामार्ग-कारञ्ज- ७.३२bv -बीजैस् तैलं प्रसाधितम् ७.३२bv -बीजैस् तैलं विपाचयेत् नकुलोलूक-मार्जार-गृध्र-कीटाहि-काक-जैः ।
तुण्डैः पक्षैः पुरीषैश् च धूपम् अस्य प्रयोजयेत् ॥ ३३ ॥

७.३३dv धूमम् अस्य प्रयोजयेत् ७.३३dv धूपम् अस्मै प्रयोजयेत् शीलयेत् तैल-लशुनं पयसा वा शतावरीम् ।
ब्राह्मी-रसं कुष्ठ-रसं वचां वा मधु-संयुताम् ॥ ३४ ॥

समं क्रुद्धैर् अपस्मारो दोषैः शारीर-मानसैः ।
यज् जायते यतश् चैष महा-मर्म-समाश्रयः ॥ ३५ ॥

तस्माद् रसायनैर् एनं दुश्-चिकित्स्यम् उपाचरेत् ।
तद्-आर्तं चाग्नि-तोयादेर् विषमात् पालयेत् सदा ॥ ३६ ॥

७.३६av तस्माद् रसायनेनैनं ७.३६cv तद्-आर्तं चाग्नि-तोयादि- ७.३६dv -विषमात् पालयेत् सदा मुक्तं मनो-विकारेण त्वम् इत्थं कृत-वान् इति ।
न ब्रूयाद् विषयैर् इष्टैः क्लिष्टं चेतो ऽस्य बृंहयेत् ॥ ३७ ॥

# अध्याय 08

सर्व-रोग-निदानोक्तैर् अ-हितैः कुपिता मलाः ।
अ-चक्षुष्यैर् विशेषेण प्रायः पित्तानुसारिणः ॥ १ ॥

सिराभिर् ऊर्ध्वं प्रसृता नेत्रावयवम् आश्रिताः ।
वर्त्म संधिं सितं कृष्णं दृष्टिं वा सर्वम् अक्षि वा ॥ २ ॥

रोगान् कुर्युश् चलस् तत्र प्राप्य वर्त्माश्रयाः सिराः ।
सुप्तोत्थितस्य कुरुते वर्त्म-स्तम्भं स-वेदनम् ॥ ३ ॥

पांसु-पूर्णाभ-नेत्र-त्वं कृच्छ्रोन्मीलनम् अश्रु च ।
विमर्दनात् स्याच् च शमः कृच्छ्रोन्मूलं वदन्ति तत् ॥ ४ ॥

चालयन् वर्त्मनी वायुर् निमेषोन्मेषणं मुहुः ।
करोत्य् अ-रुङ् निमेषो ऽसौ वर्त्म यत् तु निमील्यते ॥ ५ ॥

विमुक्त-संधि निश्-चेष्टं हीनं वात-हतं हि तत् ।
कृष्णाः पित्तेन बह्व्यो ऽन्तर्-वर्त्म कुम्भीक-बीज-वत् ॥ ६ ॥

८.६cv पित्तेन वर्त्मनो ऽन्तर्-जा ८.६dv बह्व्यः कुम्भीक-बीज-वत् आध्मायन्ते पुनर् भिन्नाः पिटिकाः कुम्भि-संज्ञिताः ।
स-दाह-क्लेद-निस्तोदं रक्ताभं स्पर्शना-क्षमम् ॥ ७ ॥

८.७bv पिटिकाः कुम्भि-संज्ञकाः पित्तेन जायते वर्त्म पित्तोत्क्लिष्टम् उशन्ति तत् ।
करोति कण्डूं दाहं च पित्तं पक्ष्ांन्तम् आस्थितम् ॥ ८ ॥

८.८dv पित्तं पक्ष्ांन्तम् आश्रितम् पक्ष्मणां शातनं चानु पक्ष्म-शातं वदन्ति तम् ।
पोथक्यः पिटिकाः श्वेताः सर्षपाभा घनाः कफात् ॥ ९ ॥

८.९av पक्ष्मणां शतनं चानु ८.९av पक्ष्मणां सदनं चानु शोफोपदेह-रुक्-कण्डू-पिच्छिलाश्रु-समन्विताः ।
कफोत्क्लिष्टं भवेद् वर्त्म स्तम्भ-क्लेदोपदेह-वत् ॥ १० ॥

ग्रन्थिः पाण्डुर-रुक्-पाकः कण्डू-मान् कठिनः कफात् ।
कोल-मात्रः स लगणः किञ्-चिद् अल्पस् ततो ऽथ-वा ॥ ११ ॥

८.११dv किञ्-चिद् अल्पस् ततो ऽपि वा रक्ता रक्तेन पिटिका तत्-तुल्य-पिटिकाचिता ।
उत्सङ्गाख्या तथोत्क्लिष्टं राजी-मत् स्पर्शना-क्षमम् ॥ १२ ॥

८.१२av रक्ता रक्तेन पिटिकास् ८.१२bv तत्-तुल्य-पिटिकाचिताः ८.१२cv उत्सङ्गाख्यास् तथोत्क्लिष्टं अर्शो ऽधि-मांसं वर्त्मान्तः स्तब्धं स्निग्धं स-दाह-रुक् ।
रक्तं रक्तेन तत्-स्रावि च्छिन्नं छिन्नं च वर्धते ॥ १३ ॥

मध्ये वा वर्त्मनो ऽन्ते वा कण्डूषा-रुग्-वती स्थिरा ।
मुद्ग-मात्रासृजा ताम्रा पिटिकाञ्जन-नामिका ॥ १४ ॥

दोषैर् वर्त्म बहिः शूनं यद् अन्तः सूक्ष्म-खाचितम् ।
स-स्रावम् अन्तर्-उदकं बिसाभं बिस-वर्त्म तत् ॥ १५ ॥

यद् वर्त्मोत्क्लिष्टम् उत्क्लिष्टम् अ-कस्मान् म्लान-ताम् इयात् ।
रक्त-दोष-त्रयोत्क्लेशाद् भवत्य् उत्क्लिष्ट-वर्त्म तत् ॥ १६ ॥

८.१६dv वदन्त्य् उत्क्लिष्ट-वर्त्म तत् श्याव-वर्त्म मलैः सास्रैः श्यावं रुक्-क्लेद-शोफ-वत् ।
श्लिष्टाख्यं वर्त्मनी श्लिष्टे कण्डू-श्वयथु-रागिणी ॥ १७ ॥

वर्त्मनो ऽन्तः खरा रूक्षाः पिटिकाः सिकतोपमाः ।
सिकता-वर्त्म कृष्णं तु कर्दमं कर्दमोपमम् ॥ १८ ॥

बहलं बहलैर् मांसैः स-वर्णैश् चीयते समैः ।
कुकूणकः शिशोर् एव दन्तोत्पत्ति-निमित्त-जः ॥ १९ ॥

स्यात् तेन शिशुर् उच्छून-ताम्राक्षो वीक्षणा-क्षमः ।
स-वर्त्म-शूल-पैच्छिल्यः कर्ण-नासाक्षि-मर्दनः ॥ २० ॥

८.२०bv -ताम्राक्षो वीक्षणे ऽ-क्षमः पक्ष्मोपरोधे संकोचो वर्त्मनां जायते तथा ।
खर-तान्तर्-मुख-त्वं च रोम्णाम् अन्यानि वा पुनः ॥ २१ ॥

८.२१bv वर्त्मनो जायते तथा कण्टकैर् इव तीक्ष्णाग्रैर् घृष्टं तैर् अक्षि शूयते ।
उष्यते चानिलादि-द्विड् अल्पाहः शान्तिर् उद्धृतैः ॥ २२ ॥

८.२२bv घृष्टं तैर् अक्षि सूयते ८.२२cv उष्यते वानिलादि-द्विड् ८.२२cv उष्यते चानिलाद्यैश् च ८.२२dv अल्पाहं शान्तिर् उद्धृतैः कनीनके बहिर्-वर्त्म कठिनो ग्रन्थिर् उन्नतः ।
ताम्रः पक्वो ऽस्र-पूय-स्रुद् अलज्य् आध्मायते मुहुः ॥ २३ ॥

वर्त्मान्तर् मांस-पिण्डाभः श्वयथुर् ग्रथितो ऽ-रुजः ।
सास्रैः स्याद् अर्बुदो दोषैर् विषमो बाह्यतश् चलः ॥ २४ ॥

चतुर्-विंशतिर् इत्य् एते व्याधयो वर्त्म-संश्रयाः ।
आद्यो ऽत्र भेषजैः साध्यो द्वौ ततो ऽर्शश् च वर्यजेत् ॥ २५ ॥

पक्ष्मोपरोधो याप्यः स्याच् छेषाञ् छस्त्रेण साधयेत् ।
कुट्टयेत् पक्ष्म-सदनं छिन्द्यात् तेष्व् अपि चार्बुदम् ॥ २६ ॥

८.२६cv कुट्टयेत् पक्ष्म-शदनं भिन्द्याल् लगण-कुम्भीका-बिसोत्सङ्गाञ्जनालजीः ।
पोथकी-श्याव-सिकता-श्लिष्टोत्क्लिष्ट-चतुष्टयम् ॥ २७ ॥

स-कर्दमं स-बहलं विलिखेत् स-कुकूणकम् ॥ २७ अब् ॥

# अध्याय 09

कृच्छ्रोन्मीले पुराणाज्यं द्राक्षा-कल्काम्बु-साधितम् ।
स-सितं योजयेत् स्निग्धं नस्य-धूमाञ्जनादि च ॥ १ ॥

कुम्भीका-वर्त्म-लिखितं सैन्धव-प्रतिसारितम् ।
यष्टी-धात्री-पटोलीनां क्वाथेन परिषेचयेत् ॥ २ ॥

निवाते ऽधिष्ठितस्याप्तैः शुद्धस्योत्तान-शायिनः ।
बहिः कोष्णाम्बु-तप्तेन स्वेदितं वर्त्म वाससा ॥ ३ ॥

निर्भुज्य वस्त्रान्तरितं वामाङ्गुष्ठाङ्गुली-धृतम् ।
न स्रंसते चलति वा वर्त्मैवं सर्वतस् ततः ॥ ४ ॥

९.४cv न स्रंसते न चलति मण्डलाग्रेण तत् तिर्यक् कृत्वा शस्त्र-पदाङ्कितम् ।
लिखेत् तेनैव पत्त्रैर् वा शाक-शेफालिकादि-जैः ॥ ५ ॥

९.५dv शाक-शेफालिकादिकैः ९.५dv शाक-शेफालिकादिभिः फेनेन तोय-राशेर् वा पिचुना प्रमृजन्न् असृक् ।
स्थिते रक्ते सु-लिखितं स-क्षौद्रैः प्रतिसारयेत् ॥ ६ ॥

यथा-स्वम् उक्तैर् अनु च प्रक्षाल्योष्णेन वारिणा ।
घृतेन सिक्तम् अभ्यक्तं बध्नीयान् मधु-सर्पिषा ॥ ७ ॥

९.७cv घृतेनासिक्तम् अभ्यक्तं ऊर्ध्वाधः कर्णयोर् दत्त्वा पिण्डीं च यव-सक्तुभिः ।
द्वितीये ऽहनि मुक्तस्य परिषेकं यथा-यथम् ॥ ८ ॥

कुर्याच् चतुर्थे नस्यादीन् मुञ्चेद् एवाह्नि पञ्चमे ।
समं नख-निभं शोफ-कण्डू-घर्षाद्य-पीडितम् ॥ ९ ॥

विद्यात् सु-लिखितं वर्त्म लिखेद् भूयो विपर्यये ।
रुक्-पक्ष्म-वर्त्म-सदन-स्रंसनान्य् अति-लेखनात् ॥ १० ॥

स्नेह-स्वेदादिकस् तस्मिन्न् इष्टो वात-हरः क्रमः ।
अभ्यज्य नव-नीतेन श्वेत-लोध्रं प्रलेपयेत् ॥ ११ ॥

एरण्ड-मूल-कल्केन पुट-पाके पचेत् ततः ।
स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटली-कृतम् ॥ १२ ॥

स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्र-सेचनम् ।
शालि-तण्डुल-कल्केन लिप्तं तद्-वत् परिष्कृतम् ॥ १३ ॥

९.१३av स्त्रियाः क्षीरे छागले वा कुर्यान् नेत्रे ऽति-लिखिते मृदितं दधि-मस्तुना ।
केवलेनापि वा सेकं मस्तुना जाङ्गलाशिनः ॥ १४ ॥

पिटिका व्रीहि-वक्त्रेण भित्त्वा तु कठिनोन्नताः ।
निष्पीडयेद् अनु विधिः परिशेषस् तु पूर्व-वत् ॥ १५ ॥

९.१५av पिटिकां व्रीहि-वक्त्रेण ९.१५bv भित्त्वा तु कठिनोन्नताम् लेखने भेदने चायं क्रमः सर्व-त्र वर्त्मनि ।
पित्तास्रोत्क्लिष्टयोः स्वादु-स्कन्ध-सिद्धेन सर्पिषा ॥ १६ ॥

सिरा-विमोक्षः स्निग्धस्य त्रिवृच् छ्रेष्ठं विरेचनम् ।
लिखिते स्रुत-रक्ते च वर्त्मनि क्षालनं हितम् ॥ १७ ॥

९.१७bv त्रिवृच् छ्रेष्ठा विरेचने ९.१७cv लिखिते निःसृते रक्ते यष्टी-कषायः सेकस् तु क्षीरं चन्दन-साधितम् ।
पक्ष्मणां सदने सूच्या रोम-कूपान् विकुट्टयेत् ॥ १८ ॥

९.१८av यष्टी-क्वाथेन सेकस् तु ग्राहयेद् वा जलौकोभिः पयसेक्षु-रसेन वा ।
वमनं नावनं सर्पिः शृतं मधुर-शीतलैः ॥ १९ ॥

संचूर्ण्य पुष्प-कासीसं भावयेत् सुरसा-रसैः ।
ताम्रे दशाहं परमं पक्ष्म-शाते तद् अञ्जनम् ॥ २० ॥

पोथकीर् लिखिताः शुण्ठी-सैन्धव-प्रतिसारिताः ।
उष्णाम्बु-क्षालिताः सिञ्चेत् खदिराढकि-शिग्रुभिः ॥ २१ ॥

९.२१av पोथकीं लिखितं शुण्ठी- ९.२१bv -सैन्धव-प्रतिसारिताम् ९.२१cv उष्णाम्बु-क्षालितां सिञ्चेत् अप्-सिद्धैर् द्वि-निषा-श्रेष्ठा-मधुकैर् वा स-माक्षिकैः ।
कफोत्क्लिष्टे विलिखिते स-क्षौद्रैः प्रतिसारणम् ॥ २२ ॥

सूक्ष्मैः सैन्धव-कासीस-मनोह्वा-कण-तार्क्ष्य-जैः ।
वमनाञ्जन-नस्यादि सर्वं च कफ-जिद् धितम् ॥ २३ ॥

कर्तव्यं लगणे ऽप्य् एतद् अ-शान्ताव् अग्निना दहेत् ।
कुकूणे खदिर-श्रेष्ठा-निम्ब-पत्त्र-शृतं घृतम् ॥ २४ ॥

९.२४dv -निम्ब-पत्त्रैः शृतं घृतम् स्विन्नां भित्त्वा विनिष्पीड्य भिषग् अञ्जन-नामिकाम् ।
शिलैला-सैन्धव-नतैः स-क्षौद्रैः प्रतिसारयेत् ॥ २४.१+(१) ॥
९.२४.१+(१)अव् स्विन्नां भित्त्वा विनिष्पीड्योत् ९.२४.१+(१)ब्व् ंसङ्गां चाञ्जन-नामिकाम् पीत्वा धात्री वमेत् कृष्णा-यष्टी-सर्षप-सैन्धवैः ।
अभया-पिप्पली-द्राक्षा-क्वाथेनैनां विरेचयेत् ॥ २५ ॥

मुस्ता-द्वि-रजनी-कृष्णा-कल्केनालेपयेत् स्तनौ ।
धूपयेत् सर्षपैः साज्यैः शुद्धां क्वाथं च पाययेत् ॥ २६ ॥

पटोल-मुस्त-मृद्वीका-गुडूची-त्रि-फलोद्भवम् ।
शिशोस् तु लिखितं वर्त्म स्रुतासृग् वाम्बु-जन्मभिः ॥ २७ ॥

धात्र्य्-अश्मन्तक-जम्बूत्थ-पत्त्र-क्वाथेन सेचयेत् ।
प्रायः क्षीर-घृताशि-त्वाद् बालानां श्लेष्म-जा गदाः ॥ २८ ॥

तस्माद् वमनम् एवाग्रे सर्व-व्याधिषु पूजितम् ।
सिन्धूत्थ-कृष्णापामार्ग-बीजाज्य-स्तन्य-माक्षिकम् ॥ २९ ॥

चूर्णो वचायाः स-क्षौद्रो मदनं मधुकान्वितम् ।
क्षीरं क्षीरान्नम् अन्नं च भजतः क्रमतः शिशोः ॥ ३० ॥

९.३०dv भजतः क्रम-शः शिशोः वमनं सर्व-रोगेषु विशेषेण कुकूणके ।
सप्तला-रस-सिद्धाज्यं योज्यं चोभय-शोधनम् ॥ ३१ ॥

द्वि-निशा-लोध्र-यष्ट्य्-आह्व-रोहिणी-निम्ब-पल्लवैः ।
कुकूणके हिता वर्तिः पिष्टैस् ताम्र-रजो-ऽन्वितैः ॥ ३२ ॥

क्षीर-क्षौद्र-घृतोपेतं दग्धं वा लोह-जं रजः ।
एला-लशुन-कतक-शङ्खोषण-फणिज्जकैः ॥ ३३ ॥

९.३३bv दग्धं वा लोध्र-जं रजः वर्तिः कुकूण-पोथक्योः सुरा-पिष्टैः स-कट्फलैः ।
पक्ष्म-रोधे प्रवृद्धेषु शुद्ध-देहस्य रोमसु ॥ ३४ ॥

उत्सृज्य द्वौ भ्रुवो ऽधस्-ताद् भागौ भागं च पक्ष्मतः ।
यव-मात्रं यवाकारं तिर्यक् छित्त्वार्द्र-वाससा ॥ ३५ ॥

अपनेयम् असृक् तस्मिन्न् अल्पी-भवति शोणिते ।
सीव्येत् कुटिलया सूच्या मुद्ग-मात्रान्तरैः पदैः ॥ ३६ ॥

बद्ध्वा ललाटे पट्टं च तत्र सीवन-सूत्रकम् ।
नाति-गाढ-श्लथं सूच्या निक्षिपेद् अथ योजयेत् ॥ ३७ ॥

मधु-सर्पिः-कवलिकां न चास्मिन् बन्धम् आचरेत् ।
न्यग्रोधादि-कषायैश् च स-क्षीरैः सेचयेद् रुजि ॥ ३८ ॥

पञ्चमे दिवसे सूत्रम् अपनीयावचूर्णयेत् ।
गैरिकेण व्रणं युञ्ज्यात् तीक्ष्णं नस्याञ्जनादि च ॥ ३९ ॥

९.३९dv तीक्ष्ण-नस्याञ्जनादि च ९.३९dv तीक्ष्ण-नस्याञ्जनानि च ९.३९dv तीक्ष्णं नस्याञ्जनानि च दहेद् अ-शान्तौ निर्भुज्य वर्त्म-दोषाश्रयां वलीम् ।
संदंशेनाधिकं पक्ष्म हृत्वा तस्याश्रयं दहेत् ॥ ४० ॥

सूच्य्-अग्रेणाग्नि-वर्णेन दाहो बाह्यालजेः पुनः ।
भिन्नस्य क्षार-वह्निभ्यां सु-च्छिन्नस्यार्बुदस्य च ॥ ४१ ॥

# अध्याय 10

वायुः क्रुद्धः सिराः प्राप्य जलाभं जल-वाहिनीः ।
अश्रु स्रावयते वर्त्म-शुक्ल-संधेः कनीनकात् ॥ १ ॥

१०.१dv -शुक्ल-संधि-कनीनिकात् तेन नेत्रं स-रुग्-राग-शोफं स्यात् स जलास्रवः ।
कफात् कफास्रवे श्वेतं पिच्छिलं बहलं स्रवेत् ॥ २ ॥

१०.२cv कफात् कफ-श्रवे श्वेतं १०.२cv कफात् कफ-स्रवे श्वेतं कफेन शोफस् तीक्ष्णाग्रः क्षार-बुद्बुदकोपमः ।
पृथु-मूल-बलः स्निग्धः स-वर्णो मृदु-पिच्छिलः ॥ ३ ॥

१०.३dv स-वर्ण-मृदु-पिच्छिलः महान् अ-पाकः कण्डू-मान् उपनाहः स नी-रुजः ।
रक्ताद् रक्तास्रावे ताम्रं बहूष्णं चाश्रु संस्रवेत् ॥ ४ ॥

१०.४cv रक्ताद् रक्त-स्रवे ताम्रं १०.४cv रक्ताद् रक्तं स्रवेत् ताम्रं १०.४dv बहूष्णं वाश्रु संस्रवेत् वर्त्म-संध्य्-आश्रया शुक्ले पिटिका दाह-शूलिनी ।
ताम्रा मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी ॥ ५ ॥

पूयास्रवे मलाः सास्रा वर्त्म-संधेः कनीनकात् ।
स्रावयन्ति मुहुः पूयं सास्रं त्वङ्-मांस-पाकतः ॥ ६ ॥

१०.६bv वर्त्म-संधि-कनीनकात् १०.६dv सास्र-त्वङ्-मांस-पाकतः १०.६dv साश्रु-त्वङ्-मांस-पाकतः पूयालसो व्रणः सूक्ष्मः शोफ-संरम्भ-पूर्वकः ।
कनीन-संधाव् आध्मायी पूयास्रावी स-वेदनः ॥ ७ ॥

कनीनस्यान्तर् अलजी शोफो रुक्-तोद-दाह-वान् ।
अपाङ्गे वा कनीने वा कण्डूषा-पक्ष्म-पोट-वान् ॥ ८ ॥

पूयास्रावी कृमि-ग्रन्थिर् ग्रन्थिः कृमि-युतो ऽर्ति-मान् ।
उपनाह-कृमि-ग्रन्थि-पूयालसक-पर्वणीः ॥ ९ ॥

शस्त्रेण साधयेत् पञ्च सालजीन् आस्रवांस् त्यजेत् ।
पित्तं कुर्यात् सिते बिन्दून् असित-श्याव-पीतकान् ॥ १० ॥

मलाक्तादर्श-तुल्यं वा सर्वं शुक्लं स-दाह-रुक् ।
रोगो ऽयं शुक्तिका-संज्ञः स-शकृद्-भेद-तृड्-ज्वरः ॥ ११ ॥

१०.११bv सर्वं शुक्लम् अ-दाह-रुक् कफाच् छुक्ले समं श्वेतं चिर-वृद्ध्य्-अधि-मांसकम् ।
शुक्लार्म शोफस् त्व् अ-रुजः स-वर्णो बहलो ऽ-मृदुः ॥ १२ ॥

गुरुः स्निग्धो ऽम्बु-बिन्द्व्-आभो बलास-ग्रथितं स्मृतं ।
बिन्दुभिः पिष्ट-धवलैर् उत्सन्नैः पिष्टकं वदेत् ॥ १३ ॥

१०.१३dv बलास-ग्रन्थि स स्मृतः रक्त-राजी-ततं शुक्लम् उष्यते यत् स-वेदनम् ।
अ-शोफाश्रूपदेहं च सिरोत्पातः स शोणितात् ॥ १४ ॥

१०.१४cv स-शोथाश्रूपदेहं च उपेक्षितह् सिरोत्पातो राजीस् ता एव वर्धयन् ।
कुर्यात् सास्रं सिरा-हर्षं तेनाक्ष्य्-उद्वीक्षणा-क्षमम् ॥ १५ ॥

१०.१५cv कुर्यात् साश्रुं सिरा-हर्षं १०.१५dv तेनाक्षं वीक्षणा-क्षमम् सिरा-जाले सिरा-जालं बृहद् रक्तं घनोन्नतम् ।
शोणितार्म समं श्लक्ष्णं पद्माभम् अधि-मांसकम् ॥ १६ ॥

नी-रुक् श्लक्ष्णो ऽर्जुनं बिन्दुः शश-लोहित-लोहितः ।
मृद्व्-आशु-वृद्ध्य्-अ-रुङ्-मांसं प्रस्तारि श्याव-लोहितम् ॥ १७ ॥

प्रस्तार्य्-अर्म मलैः सास्रैः स्नावार्म स्नाव-संनिभम् ।
शुष्कासृक्-पिण्ड-वच् छ्यावं यन् मांसं बहलं पृथु ॥ १८ ॥

अधि-मांसार्म तद् दाह-घर्ष-वत्यः सिरावृताः ।
कृष्णासन्नाः सिरा-संज्ञाः पिटिकाः सर्षपोपमाः ॥ १९ ॥

१०.१९av अधि-मांसार्म रुग्-दाह- शुक्ति-हर्ष-सिरोत्पात-पिष्टक-ग्रथितार्जुनम् ।
साधयेद् औषधैः षट्कं शेषं शस्त्रेण सप्तकम् ॥ २० ॥

१०.२०av शुक्ति-हर्ष-सिरोत्पातान् १०.२०bv पिष्टक-ग्रथितार्जुनम् नवोत्थं तद् अपि द्रव्यैर् अर्मोक्तं यच् च पञ्च-धा ।
तच् छेद्यम् असित-प्राप्तं मांस-स्नाव-सिरावृतम् ॥ २१ ॥

१०.२१bv अर्मोक्तं यत् तु पञ्च-धा चर्मोद्दाल-वद् उच्छ्रायि दृष्टि-प्राप्तं च वर्जयेत् ।
पित्तं कृष्णे ऽथ-वा दृष्टौ शुक्रं तोदाश्रु-राग-वत् ॥ २२ ॥

१०.२२bv दृष्टि-प्राप्तं तु वर्जयेत् १०.२२dv शुक्रं तोदास्र-राग-वत् छित्त्वा त्वचं जनयति तेन स्यात् कृष्ण-मण्डलम् ।
पक्व-जम्बू-निभं किञ्-चिन् निम्नं च क्षत-शुक्रकम् ॥ २३ ॥

तत् कृच्छ्र-साध्यं याप्यं तु द्वितीय-पटल-व्यधात् ।
तत्र तोदादि-बाहुल्यं सूची-विद्धाभ-कृष्ण-ता ॥ २४ ॥

तृतीय-पटल-च्छेदाद् अ-साध्यं निचितं व्रणैः ।
शङ्ख-शुक्लं कफात् साध्यं नाति-रुक् शुद्ध-शुक्रकम् ॥ २५ ॥

आ-ताम्र-पिच्छिलास्र-स्रुद् आ-ताम्र-पिटिकाति-रुक् ।
अजा-विट्-सदृशोच्छ्राय-कार्ष्ण्या वर्ज्यासृजाजका ॥ २६ ॥

१०.२६av आ-ताम्र-पिच्छिलाश्रुः स्याद् १०.२६av आ-ताम्र-पिच्छिलासृक् स्याद् १०.२६cv अजा-विट्-सदृशोच्छ्राया १०.२६dv कृष्णा वर्ज्यासृजाजका सिरा-शुक्रं मलैः सास्रैस् तज्-जुष्टं कृष्ण-मण्डलम् ।
स-तोद-दाह-ताम्राभिः सिराभिर् अवतन्यते ॥ २७ ॥

अ-निमित्तोष्ण-शीताच्छ-घनास्र-स्रुच् च तत् त्यजेत् ।
दोषैः सास्रैः सकृत् कृष्णं नीयते शुक्ल-रूप-ताम् ॥ २८ ॥

१०.२८bv -घनाश्रु स्याच् च तत् त्यजेत् १०.२८bv -घनाश्रु-स्रावि तत् त्यजेत् १०.२८ब्च् -घनाश्रु-स्रुच् च तत् त्यजेत् १०.२८cv दोषैः सास्रैः स-दृक् कृष्णं धवलाभ्रोपलिप्ताभं निष्पावार्ध-दलाकृति ।
अति-तीव्र-रुजा-राग-दाह-श्वयथु-पीडितम् ॥ २९ ॥

पाकात्ययेन तच् छुक्रं वर्जयेत् तीव्र-वेदनम् ।
यस्य वा लिङ्ग-नाशो ऽन्तः श्यावं यद् वा स-लोहितम् ॥ ३० ॥

अत्य्-उत्सेधावगाढं वा साश्रु नाडी-व्रणावृतम् ।
पुराणं विषमं मध्ये विच्छिन्नं यच् च शुक्रकम् ॥ ३१ ॥

१०.३१bv सास्र-नाडी-व्रणावृतम् पञ्चेत्य् उक्ता गदाः कृष्णे साध्या-साध्य-विभागतः ॥ ३१अब् ॥

# अध्याय 11

उपनाहं भिषक् स्विन्नं भिन्नं व्रीहि-मुखेन च ।
लेखयेन् मण्डलाग्रेण ततश् च प्रतिसारयेत् ॥ १ ॥

११.१bv भिन्नं व्रीहि-मुखेन तु पिप्पली-क्षौद्र-सिन्धूत्थैर् बध्नीयात् पूर्व-वत् ततः ।
पटोल-पत्त्रामलक-क्वाथेनाश्च्योतयेच् च तम् ॥ २ ॥

पर्वणी बडिशेनात्ता बाह्य-संधि-त्रि-भागतः ।
वृद्धि-पत्त्रेण वर्ध्यार्धे स्याद् अश्रु-गतिर् अन्य-था ॥ ३ ॥

११.३av पर्वणी बडिशेनान्तर्- ११.३bv -बाह्य-संधि-त्रि-भागतः ११.३dv स्याद् अस्र-गतिर् अन्य-था ११.३dv स्याद् अस्र-स्रुतिर् अन्य-था
चिकित्सा चार्म-वत् क्षौद्र-सैन्धव-प्रतिसारिता ।
पूयालसे सिरां विध्येत् ततस् तम् उपनाहयेत् ॥ ४ ॥

११.४dv ततस् तद् उपनाहयेत् कुर्वीत चाक्षि-पाकोक्तं सर्वं कर्म यथा-विधि ।
सैन्धवार्द्रक-कासीस-लोह-ताम्रैः सु-चूर्णितैः ॥ ५ ॥

चूर्णाञ्जनं प्रयुञ्जीत स-क्षौद्रैर् वा रस-क्रियाम् ।
कृमि-ग्रन्थिं करीषेण स्विन्नं भित्त्वा विलिख्य च ॥ ६ ॥

त्रि-फला-क्षौद्र-कासीस-सैन्धवैः प्रतिसारयेत् ।
पित्ताभिष्यन्द-वच् छुक्तिं बलासाह्वय-पिष्टके ॥ ७ ॥

११.७dv बलासाह्वय-पिष्टकौ कफाभिष्यन्द-वन् मुक्त्वा सिरा-व्यधम् उपाचरेत् ।
बीजपूर-रसाक्तं च व्योष-कट्फलम् अञ्जनम् ॥ ८ ॥

जाती-मुकुल-सिन्धूत्थ-देवदारु-महौषधैः ।
पिष्टैः प्रसन्नया वर्तिः शोफ-कण्डू-घ्नम् अञ्जनम् ॥ ९ ॥

११.९dv शोफ-कण्डू-घ्नम् औषधम् रक्त-स्यन्द-वद् उत्पात-हर्ष-जालार्जुन-क्रिया ।
सिरोत्पाते विशेषेण घृत-माक्षिकम् अञ्जनम् ॥ १० ॥

सिरा-हर्षे तु मधुना श्लक्ष्ण-घृष्टं रसाञ्जनम् ।
अर्जुने शर्करा-मस्तु-क्षौद्रैर् आश्च्योतनं हितम् ॥ ११ ॥

स्फटिकः कुङ्कुमं शङ्खो मधुकं मधुनाञ्जनम् ।
मधुना चाञ्जनं शङ्खः फेनो वा सितया सह ॥ १२ ॥

११.१२av स्फटिकं कुङ्कुमं शङ्खं ११.१२bv कासीसं मधुनाञ्जनम् अर्मोक्तं पञ्च-धा तत्र तनु धूमाविलं च यत् ।
रक्तं दधि-निभं यच् च शुक्र-वत् तस्य भेषजम् ॥ १३ ॥

उत्तानस्येतरत् स्विन्नं स-सिन्धूत्थेन चाञ्जितम् ।
रसेन बीजपूरस्य निमील्याक्षि विमर्दयेत् ॥ १४ ॥

इत्थं संरोषिताक्षस्य प्रचले ऽर्माधि-मांसके ।
घृतस्य निश्-चलं मूर्ध्नि वर्त्मनोश् च विशेषतः ॥ १५ ॥

११.१५bv प्रबले ऽर्माधि-मांसके अपाङ्गम् ईक्षमाणस्य वृद्धे ऽर्मणि कनीनकात् ।
वली स्याद् यत्र तत्रार्म बडिशेनावलम्बितम् ॥ १६ ॥

नात्य्-आयतं मुचुण्ड्या वा सूच्या सूत्रेण वा ततः ।
समन्तान् मण्डलाग्रेण मोचयेद् अथ मोक्षितम् ॥ १७ ॥

११.१७av नात्य्-आयतं समुत्पाट्य कनीनकम् उपानीय चतुर्-भागावशेषितम् ।
छिन्द्यात् कनीनकं रक्षेद् वाहिनीश् चाश्रु-वाहिनीः ॥ १८ ॥

११.१८cv छिन्द्यात् कनीनकं रक्षन् ११.१८cv छिन्द्यात् कनीनकं रक्ष्ये कनीनक-व्यधाद् अश्रु नाडी चाक्ष्णि प्रवर्तते ।
वृद्धे ऽर्मणि तथापाङ्गात् पश्यतो ऽस्य कनीनकम् ॥ १९ ॥

११.१९av कनीनक-वधाद् अश्रु ११.१९av कनीनक-वधाद् आशु ११.१९av कनीनक-व्यधाद् अ-सृ- ११.१९bv -नाडी चाक्ष्णि प्रवर्तते सम्यक्-छिन्नं
मधु-व्योष-सैन्धव-प्रतिसारितम् ।
उष्णेन सर्पिषा सिक्तम् अभ्यक्तं मधु-सर्पिषा ॥ २० ॥

बध्नीयात् सेचयेन् मुक्त्वा तृतीयादि-दिनेषु च ।
करञ्ज-बीज-सिद्धेन क्षीरेण क्वथितैस् तथा ॥ २१ ॥

स-क्षौद्रैर् द्वि-निशा-लोध्र-पटोली-यष्टि-किंशुकैः ।
कुरण्ट-मुकुलोपेतैर् मुञ्चेद् एवाह्नि सप्तमे ॥ २२ ॥

११.२२cv कोरण्ट-मुकुलोपेतैर् सम्यक्-छिन्ने भवेत् स्वास्थ्यं हीनाति-च्छेद-जान् गदान् ।
सेकाञ्जन-प्रभृतिभिर् जयेल् लेखन-बृंहणैः ॥ २३ ॥

सिता-मनःशिलैलेय-लवणोत्तम-नागरम् ।
अर्ध-कर्षोन्मितं तार्क्ष्यं पलार्धं च मधु-द्रुतम् ॥ २४ ॥

११.२४dv पलार्धं च मधु-प्लुतम् अञ्जनं श्लेष्म-तिमिर-पिल्ल-शुक्रार्म-शोष-जित् ।
त्रि-फलैक-तम-द्रव्य-त्वचं पानीय-कल्किताम् ॥ २५ ॥

११.२५bv -पिल्ल-शुक्रार्म-काच-जित् शराव-पिहितां दग्ध्वा कपाले चूर्णयेत् ततः ।
पृथक्-शेषौषध-रसैः पृथग् एव च भाविता ॥ २६ ॥

सा मषी शोषिता पेष्या भूयो द्वि-लवणान्विता ।
त्रीण्य् एतान्य् अञ्जनान्य् आह लेखनानि परं निमिः ॥ २७ ॥

सिरा-जाले सिरा यास् तु कठिना लेखनौषधैः ।
न सिध्यन्त्य् अर्म-वत् तासां पिटिकानां च साधनम् ॥ २८ ॥

दोषानुरोधाच् छुक्रेषु स्निग्ध-रूक्षा वरा घृतम् ।
तिक्तम् ऊर्ध्वम् असृक्-स्रावो रेक-सेकादि चेष्यते ॥ २९ ॥

११.२९av दोषानुबन्धाच् छुक्रेषु ११.२९bv स्निग्धा रूक्षा वरा घृतम् ११.२९bv स्निग्ध-रूक्ष-वरा घृतम् ११.२९cv तिक्तम् ऊर्ध्वम् असृक्-स्राव-
११.२९dv -रेक-सेकादि चेष्यते त्रिस् त्रिवृद्-वारिणा पक्वं क्षत-शुक्रे घृतं पिबेत् ।
सिरयानु हरेद् रक्तं जलौकोभिश् च लोचनात् ॥ ३० ॥

सिद्धेनोत्पल-काकोली-द्राक्षा-यष्टी-विदारिभिः ।
स-सितेनाज-पयसा सेचनं सलिलेन वा ॥ ३१ ॥

रागाश्रु-वेदना-शान्तौ परं लेखनम् अञ्जनम् ।
वर्तयो जाति-मुकुल-लाक्षा-गैरिक-चन्दनैः ॥ ३२ ॥

प्रसादयन्ति पित्तास्रं घ्नन्ति च क्षत-शुक्रकम् ।
दन्तैर् दन्ति-वराहोष्ट्र-गवाश्वाज-खरोद्भवैः ॥ ३३ ॥

११.३३av प्रसादयन्ति पित्तासृक् ११.३३dv -गो-रासभ-समुद्भवैः स-शङ्ख-मौक्तिकाम्भो-धि-फेनैर् मरिच-पादिकैः ।
क्षत-शुक्रम् अपि व्यापि दन्त-वर्तिर् निवर्तयेत् ॥ ३४ ॥

तमाल-पत्त्रं गो-दन्त-शङ्ख-फेनो ऽस्थि गार्दभम् ।
ताम्रं च वर्तिर् मूत्रेण सर्व-शुक्रक-नाशिनी ॥ ३५ ॥

११.३५cv ताम्रं च बस्त-मूत्रेण रत्नानि दन्ताः शृङ्गाणि धातवस् त्र्य्-ऊषणं त्रुटी ।
करञ्ज-बीजं लशुनो व्रण-सादि च भेषजम् ॥ ३६ ॥

स-व्रणा-व्रण-गम्भीर-त्वक्-स्थ-शुक्र-घ्नम् अञ्जनम् ।
निम्नम् उन्नमयेत् स्नेह-पान-नस्य-रसाञ्जनैः ॥ ३७ ॥

स-रुजं नी-रुजं तृप्ति-पुट-पाकेन शुक्रकम् ।
शुद्ध-शुक्रे निशा-यष्टी-शारिवा-शाबराम्भसा ॥ ३८ ॥

११.३८dv -शारिवा-साधिताम्भसा सेचनं लोध्र-पोटल्या कोष्णाम्भो-मग्नयाथ-वा ।
बृहती-मूल-यष्ट्य्-आह्व-ताम्र-सैन्धव-नागरैः ॥ ३९ ॥

धात्री-फलाम्बुना पिष्टैर् लेपितं ताम्र-भाजनम् ।
यवाज्यामलकी-पत्त्रैर् बहु-शो धूपयेत् ततः ॥ ४० ॥

तत्र कुर्वीत गुटिकास् ता जल-क्षौद्र-पेषिताः ।
महा-नीला इति ख्याताः शुद्ध-शुक्र-हराः परम् ॥ ४१ ॥

स्थिरे शुक्रे घने चास्य बहु-शो ऽपहरेद् असृक् ।
शिरः-काय-विरेकांश् च पुट-पाकांश् च भूरि-शः ॥ ४२ ॥

कुर्यान् मरिच-वैदेही-शिरीष-फल-सैन्धवैः ।
हर्षणं त्रि-फला-क्वाथ-पीतेन लवणेन वा ॥ ४३ ॥

११.४३cv घर्षणं त्रि-फला-क्वाथ- ११.४३cv सर्षप-त्रि-फला-क्वाथ- कुर्याद् अञ्जन-योगौ वा श्लोकार्ध-गदिताव् इमौ ।
शङ्ख-कोलास्थि-कतक-द्राक्षा-मधुक-माक्षिकैः ॥ ४४ ॥

सुरा-दन्तार्णव-मलैः शिरीष-कुसुमान्वितैः ।
धात्री-फणिज्जक-रसे क्षारो लाङ्गलिकोद्भवः ॥ ४५ ॥

११.४५av खर-दन्तार्णव-मलैः ११.४५dv क्षारो लाङ्गलिका-भवः ११.४५dv क्षारो लाङ्गलिकी-भवः उषितः शोषितश् चूर्णः शुक्र-हर्षणम् अञ्जनम् ।
मुद्गा वा निस्-तुषाः पिष्टाः शङ्ख-क्षौद्र-समायुताः ॥ ४६ ॥

११.४६bv शुक्र-घर्षणम् अञ्जनम् सारो मधूकान् मधु-मान् मज्जा वाक्षात् स-माक्षिका ।
गो-खराश्वोष्ट्र-दशनाः शङ्खः फेनः समुद्र-जः ॥ ४७ ॥

११.४७av सारो मधूकात् स-मधुर् ११.४७av सारो मधूकान् मधुना वर्तिर् अर्जुन-तोयेन हृष्ट-शुक्रक-नाशिनी ।
उत्सन्नं वा स-शल्यं वा शूक्रं वालादिभिर् लिखेत् ॥ ४८ ॥

११.४८bv पिष्टा शुक्रक-नाशिनी ११.४८bv दुष्ट-शुक्रक-नाशिनी सिरा-शुक्रे त्व् अ-दृष्टि-घ्ने चिकित्सा व्रण-शुक्र-वत् ।
पुण्ड्र-यष्ट्य्-आह्व-काकोली-सिंही-लोह-निशाञ्जनम् ॥ ४९ ॥

कल्कितं छाग-दुग्धेन स-घृतैर् धूपितं यवैः ।
धात्री-पत्त्रैश् च पर्यायाद् वर्तिर् अत्राञ्जनं परम् ॥ ५० ॥

११.५०dv वर्तिर् अत्राञ्जनं हितम् ११.५०dv वर्तिर् नेत्राञ्जनं परम् अ-शान्ताव् अर्म-वच् छस्त्रम् अजकाख्ये च योजयेत् ।
अजकायाम् अ-साध्यायां शुक्रे ऽन्य-त्र च तद्-विधे ॥ ५१ ॥

वेदनोपशमं स्नेह-पानासृक्-स्रावणादिभिः ।
कुर्याद् बीभत्स-तां जेतुं शुक्रस्योत्सेध-साधनम् ॥ ५२ ॥

११.५२dv शुक्ल-त्वोत्सेध-साधनम् नारिकेलास्थि-भल्लात-ताल-वंश-करीर-जम् ।
भस्माद्भिः स्रावयेत् ताभिर् भावयेत् करभास्थि-जम् ॥ ५३ ॥

चूर्णं शुक्रेष्व् अ-साध्येषु तद् वैवर्ण्य-घ्नम् अञ्जनम् ।
साध्येषु साधनायालम् इदम् एव च शीलितम् ॥ ५४ ॥

अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानु पूरयेत् ॥ ५५ ॥

व्रणं गो-मांस-चूर्णेन बद्धं बद्धं विमुच्य च ।
सप्त-रात्राद् व्रणे रूढे कृष्ण-भागे समे स्थिरे ॥ ५६ ॥

स्नेहाञ्जनं च कर्तव्यं नस्यं च क्षीर-सर्पिषा ।
तथापि पुनर्-आध्माने भेद-च्छेदादिकां क्रियाम् ॥ ७७ ॥

११.७७cv तथापि पुनर्-आध्माते युक्त्या कुर्याद् यथा नाति-च्छेदेन स्यात् निमज्जनम् ॥ ७७अब् ॥
११.७७अव् युक्त्या युञ्ज्याद् यथा नाति- नित्यं च शुक्रेषु शृतं यथा-स्वं पाने च मर्शे च घृतं विदध्यात् ।
न हीयते लब्ध-बला तथान्तस् तीक्ष्णाञ्जनैर् दृक् सततं प्रयुक्तैः ॥ ७८ ॥

११.७८dv तीक्ष्णाञ्जनैर् दृक् प्रततं प्रयुक्तैः

# अध्याय 12

सिरानुसारिणि मले प्रथमं पटलं श्रिते ।
अ-व्यक्तम् ईक्षते रूपं व्यक्तम् अप्य् अ-निमित्ततः ॥ १ ॥

१२.१bv प्रथमं पटलं गते १२.१cv अ-व्यक्तम् ईक्ष्यते रूपं प्राप्ते द्वितीयं पटलं अ-भूतम् अपि पश्यति ।
भूतं तु यत्नाद् आसन्नं दूरे सूक्ष्मं च नेक्षते ॥ २ ॥

१२.२dv दूरं सूक्ष्मं च नेक्षते दूरान्तिक-स्थं रूपं च विपर्यासेन मन्यते ।
दोषे मण्डल-संस्थाने मण्डलानीव पश्यति ॥ ३ ॥

द्वि-धैकं दृष्टि-मध्य-स्थे बहु-धा बहु-धा-स्थिते ।
दृष्टेर् अभ्यन्तर-गते ह्रस्व-वृद्ध-विपर्ययम् ॥ ४ ॥

१२.४dv ह्रस्व-दीर्घ-विपर्ययम् १२.४dv ह्रस्वं बहु विपर्ययम् नान्तिक-स्थम् अधः-संस्थे दूर-गं नोपरि स्थिते ।
पार्श्वे पश्येन् न पार्श्व-स्थे तिमिराख्यो ऽयम् आमयः ॥ ५ ॥

प्राप्नोति काच-तां दोषे तृतीय-पटलाश्रिते ।
तेनोर्ध्वम् ईक्षते नाधस् तनु-चैलावृतोपमम् ॥ ६ ॥

१२.६cv तेनोर्ध्वम् ईक्ष्यते नाधस् यथा-वर्णं च रज्येत दृष्टिर् हीयेत च क्रमात् ।
तथाप्य् उपेक्षमाणस्य चतुर्थं पटलं गतः ॥ ७ ॥

१२.७av यथा-दोषं च रज्येत लिङ्ग-नाशं मलः कुर्वंश् छादयेद् दृष्टि-मण्डलम् ।
तत्र वातेन तिमिरे व्याविद्धम् इव पश्यति ॥ ८ ॥

चलाविलारुणाभासं प्रसन्नं चेक्षते मुहुः ।
जालानि केशान् मशकान् रश्मींश् चोपेक्षिते ऽत्र च ॥ ९ ॥

१२.९av धूमाविलारुणाभासं १२.९bv प्रसन्नं वीक्षते मुहुः १२.९dv रश्मींश् चोपेक्षिते ऽत्र तु काची-भूते दृग् अरुणा पश्यत्य् आस्यम् अ-नासिकम् ।
चन्द्र-दीपाद्य्-अनेक-त्वं वक्रम् ऋज्व् अपि मन्यते ॥ १० ॥

वृद्धः काचो दृशं कुर्याद् रजो-धूमावृताम् इव ।
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हत-दर्शनाम् ॥ ११ ॥

१२.११cv स्फुटारुणाभां विस्तीर्णां स लिङ्ग-नाशो वाते तु संकोचयति दृक्-सिराः ।
दृङ्-मण्डलं विशत्य् अन्तर् गम्भीरा दृग् असौ स्मृता ॥ १२ ॥

पित्त-जे तिमिरे विद्युत्-खद्योत-द्योत-दीपितम् ।
शिखि-तित्तिरि-पत्त्राभं प्रायो नीलं च पश्यति ॥ १३ ॥

१२.१३bv -खद्योतोद्योत-दीपितम् १२.१३cv शिखि-तित्तिरि-पिच्छाभं काचे दृग् काच-नीलाभा तादृग् एव च पश्यति ।
अर्केन्दु-परिवेषाग्नि-मरीचीन्द्र-धनूंषि च ॥ १४ ॥

१२.१४av काचे दृग् कांस्य-नीलाभा भृङ्ग-नीला निर्-आलोका दृक् स्निग्धा लिङ्ग-नाशतः ।
दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्व-दर्शिनी ॥ १५ ॥

भवेत् पित्त-विदग्धाख्या पीता पीताभ-दर्शना ।
कफेन तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति ॥ १६ ॥

१२.१६bv पीता पीताभ-दर्शिनी शङ्खेन्दु-कुन्द-कुसुमैः कुमुदैर् इव चाचितम् ।
काचे तु निष्-प्रभेन्द्व्-अर्क-प्रदीपाद्यैर् इवाचितम् ॥ १७ ॥

१२.१७bv कुमुदैर् इव वाचितम् सिताभा सा च दृष्टिः स्याल् लिङ्ग-नाशे तु लक्ष्यते ।
मूर्तः कफो दृष्टि-गतः स्निग्धो दर्शन-नाशनः ॥ १८ ॥

बिन्दुर् जलस्येव चलः पद्मिनी-पुट-संस्थितः ।
उष्णे संकोचम् आयाति च्छायायां परिसर्पति ॥ १९ ॥

१२.१९bv पद्मिनी-पुट-संश्रितः १२.१९bv पद्मिनी-पत्त्र-संश्रितः शङ्ख-कुन्देन्दु-कुमुद-स्फटिकोपम-शुक्लिमा ।
रक्तेन तिमिरे रक्तं तमो-भूतं च पश्यति ॥ २० ॥

काचेन रक्ता कृष्णा वा दृष्टिस् तादृक् च पश्यति ।
लिङ्ग-नाशे ऽपि तादृग् दृङ् निष्-प्रभा हत-दर्शना ॥ २१ ॥

संसर्ग-संनिपातेषु विद्यात् संकीर्ण-लक्षणान् ।
तिमिरादीन् अ-कस्माच् च तैः स्याद् व्यक्ताकुलेक्षणः ॥ २२ ॥

१२.२२dv तैः स्याद् वक्राकुलेक्षणः १२.२२dv तैः स्याद् व्यक्ताकुलेक्षणम् तिमिरे शेषयोर् दृष्टौ चित्रो रागः प्रजायते ।
द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः ॥ २३ ॥

नकुलान्धः स तत्राह्नि चित्रं पश्यति नो निशि ।
अर्के ऽस्त-मस्तक-न्यस्त-गभस्तौ स्तम्भम् आगताः ॥ २४ ॥

स्थगयन्ति दृशं दोषा दोषान्धः स गदो ऽपरः ।
दिवा-कर-कर-स्पृष्टा भ्रष्टा दृष्टि-पथान् मलाः ॥ २५ ॥

विलीन-लीना यच्छन्ति व्यक्तम् अत्राह्नि दर्शनम् ।
उष्ण-तप्तस्य सहसा शीत-वारि-निमज्जनात् ॥ २६ ॥

त्रि-दोष-रक्त-संपृक्तो यात्य् ऊष्मोर्ध्वं ततो ऽक्षिणि ।
दाहोषे मलिनं शुक्लम् अहन्य् आविल-दर्शनम् ॥ २७ ॥

रात्राव् आन्ध्यं च जायेत विदग्धोष्णेन सा स्मृता ।
भृशम् अम्लाशनाद् दोषैः सास्रैर् या दृष्टिर् आचिता ॥ २८ ॥

स-क्लेद-कण्डू-कलुषा विदग्धाम्लेन सा स्मृता ।
शोक-ज्वर-शिरो-रोग-संतप्तस्यानिलादयः ॥ २९ ॥

१२.२९bv विदग्धाम्लेन सा मता धूमाविलां धूम-दृशं दृशं कुर्युः स धूमरः ।
सहसैवाल्प-सत्-त्वस्य पश्यतो रूपम् अद्भुतम् ॥ ३० ॥

१२.३०av धूमाविलां धूम-दृशां १२.३०bv दृशं कुर्युः स धूसरः १२.३०bv दृशं कुर्युः स धूमकः भास्वरं भास्-करादिं वा वाताद्या नयनाश्रिताः ।
कुर्वन्ति तेजः संशोष्य दृष्टिं मुषित-दर्शनाम् ॥ ३१ ॥

१२.३१av भासुरं भास्-करादिं वा वैडूर्य-वर्णां स्तिमितां प्रकृति-स्थाम् इवा-व्यथाम् ।
औपसर्गिक इत्य् एष लिङ्ग-नाशो ऽत्र वर्जयेत् ॥ ३२ ॥

विना कफाल् लिङ्ग-नाशान् गम्भीरां ह्रस्व-जाम् अपि ।
षट् काचा नकुलान्धश् च याप्याः शेषांस् तु साधयेत् ॥ ३३ ॥

१२.३३cv षट् काचा नकुलान्ध्यश् च द्वा-दशेति गदा दृष्टौ निर्दिष्टाः सप्त-विंशतिः ॥ ३३अब् ॥

# अध्याय 13

तिमिरं काच-तां याति काचो ऽप्य् आन्ध्यम् उपेक्षया ।
नेत्र-रोगेष्व् अतो घोरं तिमिरं साधयेद् द्रुतम् ॥ १ ॥

तुलां पचेत जीवन्त्या द्रोणे ऽपां पाद-शेषिते ।
तत्-क्वाथे द्वि-गुण-क्षीरं घृत-प्रस्थं विपाचयेत् ॥ २ ॥

१३.२cv तत्-क्वाथे द्वि-गुणं क्षीरं प्रपौण्डरीक-काकोली-पिप्पली-लोध्र-सैन्धवैः ।
शताह्वा-मधुक-द्राक्षा-सिता-दारु-फल-त्रयैः ॥ ३ ॥

कार्षिकैर् निशि तत् पीतं तिमिरापहरं परम् ।
द्राक्षा-चन्दन-मञ्जिष्ठा-काकोली-द्वय-जीवकैः ॥ ४ ॥

१३.४bv तिमिराणां हरं परम् सिता-शतावरी-मेदा-पुण्ड्राह्व-मधुकोत्पलैः ।
पचेज् जीर्ण-घृत-प्रस्थं सम-क्षीरं पिचून्मितैः ॥ ५ ॥

१३.५cv पचेज् जीर्णं घृत-प्रस्थं हन्ति तत् काच-तिमिर-रक्त-राजी-शिरो-रुजः ।
पटोल-निम्ब-कटुका-दार्वी-सेव्य-वरा-वृषम् ॥ ६ ॥

स-धन्वयास-त्रायन्ती-पर्पटं पालिकं पृथक् ।
प्रस्थम् आमलकानां च क्वाथयेन् नल्वणे ऽम्भसि ॥ ७ ॥

तद्-आढके ऽर्ध-पलिकैः पिष्टैः प्रस्थं घृतात् पचेत् ।
मुस्त-भूनिम्ब-यष्ट्य्-आह्व-कुटजोदीच्य-चन्दनैः ॥ ८ ॥

१३.८av तद्-आढके ऽर्ध-पलिकैर् १३.८bv घृत-प्रस्थं विपाचयेत् स-पिप्पलीकैस् तत् सर्पिर् घ्राण-कर्णास्य-रोग-जित् ।
विद्रधि-ज्वर-दुष्टारुर्-विसर्पापचि-कुष्ठ-नुत् ॥ ९ ॥

१३.९av स-व्योष-चव्यैस् तत् सर्पिर् १३.९bv घ्राण-कर्णाक्षि-रोग-जित् १३.९cv विद्रधि-ज्वर-दुष्टास्र- विशेषाच् छुक्र-तिमिर-नक्तान्ध्योष्णाम्ल-दाह-हृत् ।
त्रि-फलाष्ट-पलं क्वाथ्यं पाद-शेषं जलाढके ॥ १० ॥

१३.१०bv -नक्तान्ध्योष्णाम्ल-दाह-नुत् १३.१०dv पाद-शेषे जलाढके तेन तुल्य-पयस्केन त्रि-फला-पल-कल्क-वान् ।
अर्ध-प्रस्थो घृतात् सिद्धः सितया माक्षिकेण वा ॥ ११ ॥

युक्तं पिबेत् तत् तिमिरी तद्-युक्तं वा वरा-रसम् ।
यष्टीमधु-द्वि-काकोली-व्याघ्री-कृष्णामृतोत्पलैः ॥ १२ ॥

पालिकैः स-सिता-द्राक्षैर् घृत-प्रस्थं पचेत् समैः ।
अजा-क्षीर-वरा-वसा-मार्कव-स्व-रसैः पृथक् ॥ १३ ॥

महा-त्रैफलम् इत्य् एतत् परं दृष्टि-विकार-जित् ।
त्रैफलेनाथ हविषा लिहानस् त्रि-फलां निशि ॥ १४ ॥

१३.१४bv परं दृष्टि-विकार-नुत् यष्टीमधुक-संयुक्तां मधुना च परिप्लुताम् ।
मासम् एकं हिताहारः पिबन्न् आमलकोदकम् ॥ १५ ॥

सौपर्णं लभते चक्षुर् इत्य् आह भग-वान् निमिः ।
ताप्यायो-हेम-यष्ट्य्-आह्व-सिता-जीर्णाज्य-माक्षिकैः ॥ १६ ॥

संयोजिता यथा-कामं तिमिर-घ्नी वरा वरा ।
स-घृतं वा वरा-क्वाथं शीलयेत् तिमिरामयी ॥ १७ ॥

अपूप-सूप-सक्तून् वा त्रि-फला-चूर्ण-संयुतान् ।
पायसं वा वरा-युक्तं शीतं स-मधु-शर्करम् ॥ १८ ॥

१३.१८av अपूप-तक्र-सक्तून् वा प्रातर् भक्तस्य वा पूर्वम् अद्यात् पथ्यां पृथक् पृथक् ।
मृद्वीका-शर्करा-क्षौद्रैः सततं तिमिरातुरः ॥ १९ ॥

१३.१९av प्रातर् भुक्तस्य वा पूर्वम् स्रोतो-जांशांश् चतुः-षष्टिं ताम्रायो-रूप्य-काञ्चनैः ।
युक्तान् प्रत्य्-एकम् एकांशैर् अन्ध-मूषोदर-स्थितान् ॥ २० ॥

ध्मापयित्वा समावृत्तं ततस् तच् च निषेचयेत् ।
रस-स्कन्ध-कषायेषु सप्त-कृत्वः पृथक् पृथक् ॥ २१ ॥

वैडूर्य-मुक्ता-शङ्खानां त्रिभिर् भागैर् युतं ततः ।
चूर्णाञ्जनं प्रयुञ्जीत तत् सर्व-तिमिरापहम् ॥ २२ ॥

१३.२२dv तत् सर्वं तिमिरापहम् मांसी-त्रि-जातकायः-कुङ्कुम-नीलोत्पलाभया-तुत्थैः ।
सित-काच-शङ्ख-फेनक-मरिचाञ्जन-पिप्पली-मधुकैः ॥ २३ ॥

चन्द्रे ऽश्विनी-स-नाथे सु-चूर्णितैर् अञ्जयेद् युगलं अक्ष्णोः ।
तिमिरार्म-रक्त-राजी-कण्डू-काचादि-शमम् इच्छन् ॥ २४ ॥

मरिच-वर-लवण-भागौ भागौ द्वौ कण-समुद्र-फेनाभ्याम् ।
सौवीर-भाग-नवकं चित्रायां चूर्णितं कफामय-जित् ॥ २५ ॥

१३.२५dv चित्रा-संचूर्णितं कफामय-जित् मनोह्वा-तुत्थ-कस्तूरी-मांसी-मलय-रोचनाः ।
दश-कर्पूर-संयुक्तम् अशीति-गुणम् अञ्जनम् ॥ २५+(१) ॥
१३.२५+(१)च्व् दर-कर्पूर-संयुक्तम् पिष्टं चित्राश्विनी-पुष्ये षड्-विधे तिमिरे हितम् ।
प्रसादनं च दृष्टेः स्याच् चक्षुषेणावभाषितम् ॥ २५+(२) ॥
द्राक्षा-मृणाली-स्व-रसे क्षीर-मद्य-वसासु च ।
पृथक् दिव्याप्सु स्रोतो-जं सप्त-कृत्वो निषेचयेत् ॥ २६ ॥

तच् चूर्णितं स्थितं शङ्खे दृक्-प्रसादनम् अञ्जनम् ।
शस्तं सर्वाक्षि-रोगेषु विदेह-पति-निर्मितम् ॥ २७ ॥

१३.२७av तच् चूर्णितं घृतं शङ्खे निर्दग्धं बादराङ्गारैस् तुत्थं चेत्थं निषेचितम् ।
क्रमाद् अजा-पयः-सर्पिः-क्षौद्रे तस्मात् पल-द्वयम् ॥ २८ ॥

१३.२८bv तुत्थं चैवं निषेचितम् १३.२८cv क्रमाच् छाग-पयः-सर्पिः- कार्षिकैस् ताप्य-मरिच-स्रोतो-ज-कटुका-नतैः ।
पटु-लोध्र-शिला-पथ्या-कणैलाञ्जन-फेनकैः ॥ २९ ॥

युक्तं पलेन यष्ट्याश् च मूषान्तर्-ध्मात-चूर्णितम् ।
हन्ति काचार्म-नक्तान्ध्य-रक्त-राजीः सु-शीलितः ॥ ३० ॥

चूर्णो विशेषात् तिमिरं भास्-करो भास्-करो यथा ।
त्रिंशद्-भागा भुजङ्गस्य गन्ध-पाषाण-पञ्चकम् ॥ ३१ ॥

शुल्ब-तालकयोर् द्वौ द्वौ वङ्गस्यैको ऽञ्जनात् त्रयम् ।
अन्ध-मूषी-कृतं ध्मातं पक्वं वि-मलम् अञ्जनम् ॥ ३२ ॥

१३.३२av शुल्ब-तारकयोर् द्वौ द्वौ १३.३२cv अन्ध-मूषा-गतं ध्मातं तिमिरान्त-करं लोके द्वितीय इव भास्-करः ॥ ३३अब् ॥
१३.३३av तिमिरापहरं लोके गो-मूत्रे छगण-रसे ऽम्ल-काञ्जिके च स्त्री-स्तन्ये ॥ ३३च् ॥
१३.३३cv गो-मूत्रे छगल-रसे ऽम्ल-काञ्जिके च हविषि विषे च माक्षिके च ॥ ३३द् ॥
यत् तुत्थं ज्वलितम् अनेक-शो निषिक्तं ॥ ३३ए ॥
तत् कुर्याद् गरुड-समं नरस्य चक्षुः ॥ ३३f ॥
तुत्थं स-काशं कनकं स-फलं शङ्ख-शिला-गैरिकम् अञ्जनं च ।
नरः कपाल-सहि-कूङ्कुडाण्डं सप्त-द्वि-सप्त-त्रि-समयो गतः ॥ ३३+१ ॥

भृङ्गोद्भव-स्व-रस-भावितम् आज-दुग्धे मूत्रे गवाम् पयसि च त्रि-फला-कषाये ।
द्राक्षा-रसे च परिशुद्धम् इति क्रमेण सौवीरम् अञ्जनम् इदं तिमिरं निहन्ति ॥ ३३+२ ॥
श्रेष्ठा-जलं भृङ्ग-रसं स-विषाज्यम् अजा-पयः ।
यष्टी-रसं च यत् सीसं सप्त-कृत्वः पृथक् पृथक् ॥ ३४ ॥

१३.३४av श्रेष्ठा-रसं भृङ्ग-रसं तप्तं तप्तं पायितं तच्-छलाका नेत्रे युक्ता साञ्जनान्-अञ्जना वा ।
तैमिर्यार्म-स्राव-पैच्छिल्य-पैल्लं कण्डूं जाड्यं रक्त-राजीं च हन्ति ॥ ३५ ॥

रसेन्द्र-भुजगौ तुल्यौ तयोस् तुल्यम् अथाञ्जनम् ।
ईषत्-कर्पूर-संयुक्तम् अञ्जनं तिमिरापहम् ॥ ३६ ॥

१३.३६cv ईषत्-कर्पूर-सहितम् १३.३६dv अञ्जनं तिमिरे वरम् १३.३६dv अञ्जनं नयनामृतम् यो गृध्रस् तरुण-रवि-प्रकाश-गल्लस् तस्यास्यं समय-मृतस्य गो-शकृद्भिः ।
निर्दग्धं सम-घृतम् अञ्जनं च पेष्यं योगो ऽयं नयन-बलं करोति गार्ध्रम् ॥ ३७ ॥
कृष्ण-सर्प-वदने स-हविष्कं दग्धम् अञ्जन-निःसृत-धूमम् ।
चूर्णितं नलद-पत्र-विमिश्रं भिन्न-तारम् अपि रक्षति चक्षुः ॥ ३८ ॥

१३.३८bv दग्धम् अञ्जन-निर्गत-धूमम् १३.३८cv योजितं नलद-पत्र-विमिश्रं नागाञ्जनाश्माल-शिलार्क-वङ्गैस् त्रिंशद्-द्वि-पञ्च-द्वयम् अ-द्विकैकैः ।
अन्ध-मूषी-कृतैश् छाग-पयो-निषिक्तैर् दृष्टेर् इदं भास्-करम् अञ्जनं स्यात् ॥ ३८+१ ॥

स्रोतो-ऽश्म-वीरं ... वेष्ट्याजमोदा-वट-च्छदैः ।
षट्कं तिमिर-जित् क्लिष्टं मृल्-लिप्तं गो-मयाग्निना ॥ ३८+२ ॥

ताम्रायस्-कान्त-गन्धाह्वा-तार्क्षा यत् सु-च्छलं रजः ।
लोहे भृङ्गरजो भृष्टं सप्ताहं दृष्टि-रोग-जित् ॥ ३८+३ ॥

१३.३८+३bv -तार्क्ष्या यत् सु-च्छलं रजः कृष्ण-सर्पं मृतं न्यस्य चतुरश् चापि वृश्चिकान् ।
क्षीर-कुम्भे त्रि-सप्ताहं क्लेदयित्वा प्रमन्थयेत् ॥ ३९ ॥

१३.३९dv क्लेदयित्वानु मन्थयेत् १३.३९dv क्लेदयित्वाथ मन्थयेत् तत्र यन् नव-नीतं स्यात् पुष्णीयात् तेन कुक्कुटम् ।
अन्धस् तस्य पुरूईषेण प्रेक्षते ध्रुवम् अञ्जनात् ॥ ४० ॥

कृष्ण-सर्प-वसा शङ्खः कतकात् फलम् अञ्जनम् ।
रस-क्रियेयम् अ-चिराद् अन्धानां दर्शन-प्रदा ॥ ४१ ॥

मरिचानि दशार्ध-पिचुस् ताप्यात् तुत्थात् पलं पिचुर् यष्ट्याः ।
क्षीरार्द्र-दग्धम् अञ्जनम् अ-प्रतिसाराख्यम् उत्तमं तिमिरे ॥ ४२ ॥

१३.४२cv मरिचानि दश द्वि-पलं अक्ष-बीज-मरिचामलक-त्वक्-तुत्थ-यष्टिमधुकैर् जल-पिष्टैः ।
छाययैव गुटिकाः परिशुष्का नाशयन्ति तिमिराण्य् अ-चिरेण ॥ ४३ ॥

मरिचामलक-जलोद्भव-तुत्थाञ्जन-ताप्य-धातुभिः क्रम-वृद्धैः ।
षण्-माक्षिक इति योगस् तिमिरार्म-क्लेद-काच-कण्डू-हन्ता ॥ ४४ ॥

१३.४४dv तिमिरार्म-क्लेद-काच-कण्डू-हा १३.४४dv तिमिरार्म-क्लेद-काच-कण्डू-घ्नः रत्नानि रूप्यं स्फटिकं सुवर्णं स्रोतो-ऽञ्जनं ताम्रम् अयः स-शङ्खं ।
कु-चन्दनं लोहित-गैरिकं च चूर्णाञ्जनं सर्व-दृग्-आमय-घ्नम् ॥ ४५ ॥

तिल-तैलम् अक्ष-तैलं भृङ्ग-स्व-रसो ऽसनाच् च निर्यूहः ।
आयस-पात्र-विपक्वं करोति दृष्टेर् बलं नस्यम् ॥ ४६ ॥

१३.४६dv करोति दृष्टेर् बलं नस्यात् दोषानुरोधेन च नैक-शस् तं स्नेहास्र-विस्रावण-रेक-नस्यैः ।
उपाचरेद् अञ्जन-मूर्ध-वस्ति-वस्ति-क्रिया-तर्पण-लेप-सेकैः ॥ ४७ ॥

सामान्यं साधनम् इदं प्रति-दोषम् अतः शृणु ॥ ४८अब् ॥
वात-जे तिमिरे तत्र दश-मूलाम्भसा घृतम् ।
क्षीरे चतुर्-गुणे श्रेष्ठा-कल्क-पक्वं पिबेत् ततः ॥ ४९ ॥

त्रि-फला-पञ्च-मूलानां कषायं क्षीर-संयुतम् ।
एरण्ड-तैल-संयुक्तं योजयेच् च विरेचनम् ॥ ५० ॥

१३.५०cv एरण्ड-तैल-संमिश्रं १३.५०dv योजयेत विरेचनम् स-मूल-जाल-जीवन्ती-तुलां द्रोणे ऽम्भसः पचेत् ।
अष्ट-भाग-स्थिते तस्मिंस् तैल-प्रस्थं पयः-समे ॥ ५१ ॥

१३.५१dv तैल-प्रस्थं पयः-समम् बला-त्रितय-जीवन्ती-वरी-मूलैः पलोन्मितैः ।
यष्टी-पलैश् चतुर्भिश् च लोह-पात्रे विपाचयेत् ॥ ५२ ॥

१३.५२av बला-त्रि-जात-जीवन्ती- लोह एव स्थितं मासं नावनाद् ऊर्ध्व-जत्रु-जान् ।
वात-पित्तामयान् हन्ति तद् विशेषाद् दृग्-आश्रयान् ॥ ५३ ॥

१३.५३av लोह-पात्र-स्थितं मासं १३.५३dv तद् विशेषाद् दृग्-आमयान् केशास्य-कन्धरा-स्कन्ध-पुष्टि-लावण्य-कान्ति-दम् ।
सितैरण्ड-जटा-सिंही-फल-दारु-वचा-नतैः ॥ ५४ ॥

१३.५४bv -पुष्टि-लावण्य-कान्ति-कृत् घोषया बिल्व-मूलैश् च तैलं पक्वं पयो-ऽन्वितम् ।
नस्यं सर्वोर्ध्व-जत्रूत्थ-वात-श्लेष्मामयार्ति-जित् ॥ ५५ ॥

१३.५५av शताह्वा-बिल्व-मूलैश् च वसाञ्जने च वैयाघ्री वाराही वा प्रशस्यते ।
गृध्राहि-कुक्कुटोत्था वा मधुकेनान्विता पृथक् ॥ ५६ ॥

प्रत्यञ्जने च स्रोतो-जं रस-क्षीर-घृते क्रमात् ।
निषिक्तं पूर्व-वद् योज्यं तिमिर-घ्नम् अन्-उत्तमम् ॥ ५७ ॥

१३.५७bv रस-क्षीर-घृतैः क्रमात् न चेद् एवं शमं याति ततस् तर्पणम् आचरेत् ।
शताह्वा-कुष्ठ-नलद-काकोली-द्वय-यष्टिभिः ॥ ५८ ॥

प्रपौण्डरीक-सरल-पिप्पली-देवदारुभिः ।
सर्पिर् अष्ट-गुण-क्षीरं पक्वं तर्पणम् उत्तमम् ॥ ५९ ॥

मेदसस् तद्-वद् ऐणेयाद् दुग्ध-सिद्धात् खजाहतात् ।
उद्धृतं साधितं तेजो मधुकोशीर-चन्दनैः ॥ ६० ॥

श्वाविच्-छल्यक-गोधानां दक्ष-तित्तिरि-बर्हिणाम् ।
पृथक् पृथग् अनेनैव विधिना कल्पयेद् वसाम् ॥ ६१ ॥

१३.६१av श्वाविच्-छल्यक-गोधानाम् १३.६१av श्वा-विष्किराक-गोधानाम् १३.६१bv ऋक्ष-तित्तिरि-बर्हिणाम् प्रसादनं स्नेहनं च पुट-पाकं प्रयोजयेत् ।
वात-पीनस-वच् चात्र निरूहं सानुवासनम् ॥ ६२ ॥

१३.६२dv निरूहं चानुवासनम् पित्त-जे तिमिरे सर्पिर् जीवनीय-फल-त्रयैः ।
विपाचितं पाययित्वा स्निग्धस्य व्यधयेत् सिराम् ॥ ६३ ॥

शर्करैला-त्रिवृच्-चूर्णैर् मधु-युक्तैर् विरेचयेत् ।
सु-शीतान् सेक-लेपादीन् युञ्ज्यान् नेत्रास्य-मूर्धसु ॥ ६४ ॥

शारिवा-पद्मकोशीर-मुक्ता-शाबर-चन्दनैः ।
वर्तिः शस्ताञ्जने चूर्णस् तथा पत्त्रोत्पलाञ्जनैः ॥ ६५ ॥

१३.६५cv वर्तिः शस्ताञ्जनं चूर्णस् १३.६५dv तथा पद्मोत्पलाञ्जनैः स-नागपुष्प-कर्पूर-यष्ट्य्-आह्व-स्वर्ण-गैरिकैः ।
सौवीराञ्जन-तुत्थक-शृङ्गी-धात्री-फल-स्फटिक-कर्पूरम् ॥ ६६ ॥

पञ्चांशं पञ्चांशं त्र्य्-अंशम् अथैकांशम् अञ्जनं तिमिर-घ्नम् ।
नस्यं चाज्यं शृतं क्षीर-जीवनीय-सितोत्पलैः ॥ ६७ ॥

श्लेष्मोद्भवे ऽमृता-क्वाथ-वरा-कण-शृतं घृतम् ।
विध्येत् सिरां पीत-वतो दद्याच् चानु विरेचनम् ॥ ६८ ॥

क्वाथं पूगाभया-शुण्ठी-कृष्णा-कुम्भ-निकुम्भ-जम् ।
ह्रीवेर-दारु-द्वि-निशा-कृष्णा-कल्कैः पयो-ऽन्वितैः ॥ ६९ ॥

द्वि-पञ्च-मूल-निर्यूहे तैलं पक्वं च नावनम् ।
शङ्ख-प्रियङ्गु-नेपाली-कटु-त्रिक-फल-त्रिकैः ॥ ७० ॥

दृग्-वैमल्याय वि-मला वर्तिः स्यात् कोकिला पुनः ।
कृष्ण-लोह-रजो-व्योष-सैन्धव-त्रि-फलाञ्जनैः ॥ ७१ ॥

१३.७१bv वर्तिः स्यात् कौलिका पुनः शश-गो-खर-सिंहोष्ट्र-द्वि-जा लालाटम् अस्थि च ।
श्वेत-गो-वाल-मरिच-शङ्ख-चन्दन-फेनकम् ॥ ७२ ॥

पिष्टं स्तन्याज्य-दुग्धाभ्यां वर्तिस् तिमिर-शुक्र-जित् ।
रक्त-जे पित्त-वत् सिद्धिः शीतैश् चास्रं प्रसादयेत् ॥ ७३ ॥

मधूक-साराञ्जन-ताम्र-त्रि-कटुक-विडङ्ग-पौण्डरीकाणि ।
स-लवण-तुत्थ-त्रि-फला-लोध्राणि नभो-ऽम्बु-पिष्टानि ॥ ७३+१ ॥

वर्तिश् चतुर्-दशाङ्गी नयनामय-नाशनी शिला-स्तम्भे ।
लिखिता हिताय जगतस् तिमिरापहरी विशेषेण ॥ ७३+२ ॥

एक-गुणा मागधिका द्वि-गुणा च हरीतकी सलिल-पिष्टा ।
वर्तिर् इयं तिमिर-पटल-काच-कण्ड्व्-अस्र-हरी ॥ ७३+३ ॥

द्राक्षया नलद-लोध्र-यष्टिभिः शङ्ख-ताम्र-हिम-पद्म-पद्मकैः ।
सोत्पलैश् छगल-दुग्ध-वर्तितैर् अस्र-जं तिमिरम् आशु नश्यति ॥ ७४ ॥

१३.७४av द्राक्षया नलद-लोध्र-यष्टिका- १३.७४bv -शङ्ख-ताम्र-हिम-पद्म-पद्मकैः १३.७४bv -शङ्ख-ताम्र-हिम-पद्म-पत्रकैः संसर्ग-संनिपातोत्थे यथा-दोषोदयं क्रिया ।
सिद्धं मधूक-कृमिजिन्-मरिचामरदारुभिः ॥ ७५ ॥

स-क्षीरं नावनं तैलं पिष्टैर् लेपो मुखस्य च ।
नत-नीलोत्पलानन्ता-यष्ट्य्-आह्व-सुनिषण्णकैः ॥ ७६ ॥

साधितं नावने तैलं शिरो-वस्तौ च शस्यते ।
दद्याद् उशीर-निर्यूहे चूर्णितं कण-सैन्धवम् ॥ ७७ ॥

१३.७७av साधितं नावनं तैलं तत् स्रुतं स-घृतं भूयः पचेत् क्षौद्रं घने क्षिपेत् ।
शीते चास्मिन् हितम् इदं सर्व-जे तिमिरे ऽञ्जनम् ॥ ७८ ॥

१३.७८av तच् छ्तं स-घृतं भूयः अस्थीनि मज्ज-पूर्णानि सत्-त्वानां रात्रि-चारिणाम् ।
स्रोतो-जाञ्जन-युक्तानि वहत्य् अम्भसि वासयेत् ॥ ७९ ॥

१३.७९cv स्रोतो-ऽञ्जनेन युक्तानि मासं विंशति-रात्रं वा ततश् चोद्धृत्य शोषयेत् ।
स-मेषशृङ्गी-पुष्पाणि स-यष्ट्य्-आह्वानि तान्य् अनु ॥ ८० ॥

१३.८०dv स-यष्ट्य्-आह्वानि तानि तु चूर्णितान्य् अञ्जनं श्रेष्ठं तिमिरे सांनिपातिके ।
काचे ऽप्य् एषा क्रिया मुक्त्वा सिरां यन्त्र-निपीडिताः ॥ ८१ ॥

१३.८१dv सिरा यन्त्र-निपीडिताः १३.८१dv सिरां यन्त्र-निपीडनात् आन्ध्याय स्युर् मला दद्यात् स्राव्ये त्व् अस्रे जलौकसः ।
गुडः फेनो ऽञ्जनं कृष्णा मरिचं कुङ्कुमाद् रजः ॥ ८२ ॥

१३.८२av आन्ध्याय स्युर् अतो दद्यात् रस-क्रियेयं स-क्षौद्रा काच-यापनम् अञ्जनम् ।
नकुलान्धे त्रि-दोषोत्थे तैमिर्य-विहितो विधिः ॥ ८३ ॥

१३.८३dv तैमिर्य-विधि-वत् क्रियाः रस-क्रिया घृत-क्षौद्र-गो-मय-स्व-रस-द्रुतैः ।
ताक्ष्र्य-गैरिक-तालीशैर् निशान्धे हितम् अञ्जनम् ॥ ८४ ॥

१३.८४dv निशान्ध्ये हितम् अञ्जनम् दध्ना विघृष्टं मरिचं रात्र्य्-अन्धे ऽञ्जनम् उत्तमम् ।
करञ्जिकोत्पल-स्वर्ण-गैरिकाम्भो-ज-केसरैः ॥ ८५ ॥

१३.८५bv रात्र्य्-अन्धाञ्जनम् उत्तमम् १३.८५cv कारञ्जिकोत्पल-स्वर्ण- पिष्टैर् गो-मय-तोयेन वर्तिर् दोषान्ध-नासिनी ।
अजा-मूत्रेण वा कौन्ती-कृष्णा-स्रोतो-ज-सैन्धवैः ॥ ८६ ॥

१३.८६bv वर्तिर् दोषान्ध्य-नासिनी कालानुसारी-त्रि-कटु-त्रि-फलाल-मनःशिलाः ।
स-फेनाश् छाग-दुग्धेन रात्र्य्-अन्धे वर्तयो हिताः ॥ ८७ ॥

१३.८७dv रात्र्य्-आन्ध्ये वर्तयो हिताः संनिवेश्य यकृन्-मध्ये पिप्पलीर् अ-दहन् पचेत् ।
ताः शुष्का मधुना घृष्टा निशान्धे श्रेष्ठम् अञ्जनम् ॥ ८८ ॥

१३.८८dv निशान्ध्ये श्रेष्ठम् अञ्जनम् १३.८८dv नक्तान्ध्ये श्रेष्ठम् अञ्जनम् खादेच् च प्लीह-यकृती माहिषे तैल-सर्पिषा ।
घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत् ॥ ८९ ॥

तथातिमुक्तकैरण्ड-शेफाल्य्-अभीरु-जानि च ।
भृष्टं घृतं कुम्भयोनेः पत्त्रैः पाने च पूजितम् ॥ ९० ॥

१३.९०cv सिद्धं घृतं कुम्भ-योनेः १३.९०dv पत्त्रैः पाने ऽति-पूजितम् धूमराख्याम्ल-पित्तोष्ण-विदाहे जीर्ण-सर्पिषा ।
स्निग्धं विरेचयेच् छीतैः शीतैर् दिह्याच् च सर्वतः ॥ ९१ ॥

गो-शकृद्-रस-दुग्धाज्यैर् विपक्वं शस्यते ऽञ्जनम् ।
स्वर्ण-गैरिक-तालीश-चूर्णावापा रस-क्रिया ॥ ९२ ॥

मेदा-शाबरकानन्ता-मञ्जिष्ठा-दार्वि-यष्टिभिः ।
क्षीराष्टांशं घृतं पक्वं स-तैलं नावनं हितम् ॥ ९३ ॥

तर्पणं क्षीर-सर्पिः स्याद् अ-शाम्यति सिरा-व्यधः ।
चिन्ताभिघात-भी-शोक-रौक्ष्यात् सोत्कटकासनात् ॥ ९४ ॥

१३.९४dv -रूक्षाम्ल-कटुकाशनात् विरेक-नस्य-वमन-पुट-पाकादि-विभ्रमात् ।
विदग्धाहार-वमनात् क्षुत्-तृष्णादि-विधारणात् ॥ ९५ ॥

अक्षि-रोगावसानाच् च पश्येत् तिमिर-रोगि-वत् ।
यथा-स्वं तत्र युञ्जीत दोषादीन् वीक्ष्य भेषजम् ॥ ९६ ॥

सूर्योपरागानल-विद्युद्-आदि-विलोकनेनोपहतेक्षणस्य ।
संतर्पणं स्निग्ध-हिमादि कार्यं तथाञ्जनं हेम घृतेन घृष्टम् ॥ ९७ ॥

चक्षू-रक्षायां सर्व-कालं मनुष्यैर् यत्नः कर्तव्यो जीविते यावद् इच्छा ।
व्यर्थो लोको ऽयं तुल्य-रात्रिन्-दिवानां पुंसाम् अन्धानां विद्यमाने ऽपि वित्ते ॥ ९८ ॥

त्रि-फला रुधिर-स्रुतिर् विशुद्धिर् मनसो निर्वृतिर् अञ्जनं स-नस्यम् ।
शकुनाशन-ता स-पाद-पूजा घृत-पानं च सदैव नेत्र-रक्षा ॥ ९९ ॥

१३.९९bv मनसो निर्वृतिर् अञ्जनं च नस्यम् १३.९९cv शयनासन-ता स-पाद-पूजा १३.९९cv शयनासन-तोष-पाद-पूजा अ-हिताद् अशनात् सदा निवृत्तिर् भृश-भास्-वच्-चल-सूक्ष्म-वीक्षणाच् च ।
मुनिना निमिनोपदिष्टम् एतत् परमं रक्षणम् ईक्षणस्य पुंसाम् ॥ १०० ॥

# अध्याय 14

विध्येत् सु-जातं निष्-प्रेक्ष्यं लिङ्ग-नाशं कफोद्भवम् ।
आवर्तक्य्-आदिभिः षड्भिर् विवर्जितम् उपद्रवैः ॥ १ ॥

सो ऽ-संजातो हि विषमो दधि-मस्तु-निभस् तनुः ।
शलाकयावकृष्टो ऽपि पुनर् ऊर्ध्वं प्रपद्यते ॥ २ ॥

१४.२dv पुनर् ऊर्ध्वं प्रवर्तते करोति वेदनां तीव्रां दृष्टिं च स्थगयेत् पुनः ।
श्लेष्मलैः पूर्यते चाशु सो ऽन्यैः सोपद्रवश् चिरात् ॥ ३ ॥

१४.३dv सो ऽन्यैः सोपद्रवैश् चिरात् श्लैष्मिको लिङ्ग-नाशो हि सित-त्वाच् छलेष्मणः सितः ।
तस्यान्य-दोषाभिभवाद् भवत्य् आ-नील-ता गदः ॥ ४ ॥

१४.४dv भवत्य् आ-नील-ता गदे १४.४dv भवत्य् आ-नीलिका गदे तत्रावर्त-चला दृष्टिर् आवर्तक्य् अरुणासिता ।
शर्करार्क-पयो-लेश-निचितेव घनाति च ॥ ५ ॥

१४.५bv आवर्तक्य् अरुणा सिता राजी-मती दृङ् निचिता शालि-शूकाभ-राजिभिः ।
विषम-च्छिन्न-दग्धाभा स-रुक् छिन्नांशुका स्मृता ॥ ६ ॥

दृष्टिः कांस्य-सम-च्छाया चन्द्रकी चन्द्रकाकृतिः ।
छत्राभा नैक-वर्णा च छत्रकी नाम नीलिका ॥ ७ ॥

न विध्येद् अ-सिरार्हाणां न तृट्-पीनस-कासिनाम् ।
ना-जीर्णि-भीरु-वमित-शिरः-कर्णाक्षि-शूलिनाम् ॥ ८ ॥

१४.८bv न दृक्-पीनस-कासिनाम् अथ साधारणे काले शुद्ध-संभोजितात्मनः ।
देशे प्रकाशे पूर्वाह्णे भिषग् जानूच्च-पीठ-गः ॥ ९ ॥

यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।
अङ्गुष्ठ-मृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ १० ॥

स्वां नासां प्रेक्षमाणस्य निष्-कम्पं मूर्ध्नि धारिते ।
कृष्णाद् अर्धाङ्गुलं मुक्त्वा तथार्धार्धम् अपाङ्गतः ॥ ११ ॥

१४.११av स्व-नासां प्रेक्षमाणस्य १४.११dv तद् अर्धार्धम् अपाङ्गतः तर्जनी-मध्यमाङ्गुष्ठैः शलाकां निश्-चलं धृताम् ।
दैव-च्छिद्रं नयेत् पार्श्वाद् ऊर्ध्वम् आमन्थयन् इव ॥ १२ ॥

सव्यं दक्षिण-हस्तेन नेत्रं सव्येन चेतरत् ।
विध्येत् सु-विद्धे शब्दः स्याद् अ-रुक् चाम्बु-लव-स्रुतिः ॥ १३ ॥

सान्त्वयन्न् आतुरं चानु नेत्रं स्तन्येन सेचयेत् ।
शलाकायास् ततो ऽग्रेण निर्लिखेन् नेत्र-मण्डलम् ॥ १४ ॥

१४.१४dv निर्लिखेद् दृष्टि-मण्डलम् अ-बाधमानः शनकैर् नासां प्रति नुदंस् ततः ।
उच्छिङ्घनाच् चापहरेद् दृष्टि-मण्डल-गं कफम् ॥ १५ ॥

१४.१५cv उच्छिङ्खनाच् चापहरेद् स्थिरे दोषे चले वाति स्वेदयेद् अक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकाम् आहरेच् छनैः ॥ १६ ॥

१४.१६av स्थिरे दोषे चले वापि घृताप्लुतं पिचुं दत्त्वा बद्धाक्षं शाययेत् ततः ।
विद्ध्याद् अन्येन पार्श्वेन तम् उत्तानं द्वयोर् व्यधे ॥ १७ ॥

१४.१७cv व्यधाद् अन्येन पार्श्वेन निवाते शयने ऽभ्यक्त-शिरः-पादं हिते रतम् ।
क्षवथुं कासम् उद्गारं ष्ठीवनं पानम् अम्भसः ॥ १८ ॥

१४.१८bv -शिरो-गात्रं हिते रतम् अधो-मुख-स्थितिं स्नानं दन्त-धावन-भक्षणम् ।
सप्ताहं नाचरेत् स्नेह-पीत-वच् चात्र यन्त्रणा ॥ १९ ॥

शक्तितो लङ्घयेत् सेको रुजि कोष्णेन सर्पिषा ।
स-व्योषामलकं वाट्यम् अश्नीयात् स-घृतं द्रवम् ॥ २० ॥

विलेपीं वा त्र्य्-अहाच् चास्य क्वाथैर् मुक्त्वाक्षि सेचयेत् ।
वात-घ्नैः सप्तमे त्व् अह्नि सर्व-थैवाक्षि मोचयेत् ॥ २१ ॥

यन्त्रणाम् अनुरुध्येत दृष्टेर् आ-स्थैर्य-लाभतः ।
रूपाणि सूक्ष्म-दीप्तानि सहसा नावलोकयेत् ॥ २२ ॥

शोफ-राग-रुजादीनाम् अधिमन्थस्य चोद्भवः ।
अ-हितैर् वेध-दोषाच् च यथा-स्वं तान् उपाचरेत् ॥ २३ ॥

१४.२३cv अ-हितैर् वेध्य-दोषाच् च १४.२३dv यथा-स्वं तान् उपक्रमेत् कल्किताः स-घृता दूर्वा-यव-गैरिक-शारिवाः ।
मुखालेपे प्रयोक्तव्या रुजा-रागोपशान्तये ॥ २४ ॥

स-सर्षपास् तिलास् तद्-वन् मातुलुङ्ग-रसाप्लुताः ।
पयस्या-शारिवा-पत्त्र-मञ्जिष्ठा-मधुयष्टिभिः ॥ २५ ॥

अजा-क्षीर-युतैर् लेपः सुखोष्णः शर्म-कृत् परम् ।
लोध्र-सैन्धव-मृद्वीका-मधुकैश् छागलं पयः ॥ २६ ॥

१४.२६av अजा-क्षीरान्वितैर् लेपः शृतम् आश्च्योतनं योज्यं रुजा-राग-विनाशनम् ।
मधुकोत्पल-कुष्ठैर् वा द्राक्षा-लाक्षा-सितान्वितैः ॥ २७ ॥

१४.२७cv मधुकोत्पल-कुष्ठैला- १४.२७dv द्राक्षा-लाक्षा-रसान्वितैः १४.२७dv -द्राक्षा-लाक्षा-सितान्वितैः १४.२७dv -द्राक्षा-लाक्षा-रसान्वितैः वात-घ्न-सिद्धे पयसि शृतं सर्पिश् चतुर्-गुणे ।
पद्मकादि-प्रतीवापं सर्व-कर्मसु शस्यते ॥ २८ ॥

सिरां तथान्-उपशमे स्निग्ध-स्विन्नस्य मोक्षयेत् ।
मन्थोक्तां च क्रियां कुर्याद् वेधे रूढे ऽञ्जनं मृदु ॥ २९ ॥

१४.२९dv व्यधे रूढे ऽञ्जनं मृदु आढकी-मूल-मरिच-हरिताल-रसाञ्जनैः ।
विद्धे ऽक्ष्णि स-गुडा वर्तिर् योज्या दिव्याम्बु-पेषिता ॥ ३० ॥

जाती-शिरीष-धव-मेषविषाणि-पुष्प-वैडूर्य-मौक्तिक-फलं पयसा सु-पिष्टम् ।
आजेन ताम्रम् अमुना प्रतनु प्रदिग्धं सप्ताहतः पुनर् इदं पयसैव पिष्टम् ॥ ३१ ॥
१४.३१av जाती-शिरीष-धव-मेषविषाण-पुष्प- पिण्डाञ्जनं हितम् अन्-आतप-शुष्कम् अक्ष्णि विद्धे प्रसाद-जननं बल-कृच् च दृष्टेः ।
स्रोतो-ज-विद्रुम-शिलाम्बु-धि-फेन-तीक्ष्णैर् अस्यैव तुल्यम् उदितं गुण-कल्पनाभिः ॥
३२ ॥

१४.३२cv स्रोतो-ज-विद्रुम-शिलार्णव-फेन-तीक्ष्णैर्

# अध्याय 15

वातेन नेत्रे ऽभिष्यण्णे नासानाहो ऽल्प-शोफ-ता ।
शङ्खाक्षि-भ्रू-ललाटस्य तोद-स्फुरण-भेदनम् ॥ १ ॥

१५.१av वातेन नेत्रे ऽभिष्यन्दे १५.१cv शङ्खाक्षि-भ्रू-ललाटास्य- १५.१dv -तोद-स्फुरण-भेदनम् शुष्काल्पा दूषिका शीतम् अच्छं चाश्रु चला रुजः ।
निमेषोन्मेषणं कृच्छ्राज् जन्तूनाम् इव सर्पणम् ॥ २ ॥

१५.२bv अच्छम् अश्रु चला रुजः अक्ष्य् आध्मातम् इवाभाति सूक्ष्मैः शल्यैर् इवाचितम् ।
स्निग्धोष्णैश् चोपशमनं सो ऽभिष्यन्द उपेक्षितः ॥ ३ ॥

१५.३cv स्निग्धोष्णेच्छोपशमनं अधिमन्थो भवेत् तत्र कर्णयोर् नदनं भ्रमः ।
अरण्येव च मथ्यन्ते ललाटाक्षि-भ्रुवादयः ॥ ४ ॥

हताधिमन्थः सो ऽपि स्यात् प्रमादात् तेन वेदनाः ।
अनेक-रूपा जायन्ते व्रणो दृष्टौ च दृष्टि-हा ॥ ५ ॥

मन्याक्षि-शङ्खतो वायुर् अन्यतो वा प्रवर्तयन् ।
व्यथां तीव्राम् अ-पैच्छिल्य-राग-शोफं विलोचनम् ॥ ६ ॥

१५.६bv अन्यतो वा प्रवर्तयेत् संकोचयति पर्य्-अश्रु सो ऽन्यतो-वात-संज्ञितः ।
तद्-वज् जिह्मं भवेन् नेत्रम् ऊनं वा वात-पर्यये ॥ ७ ॥

१५.७cv तद्-वज् जिह्मं भवेन् नेत्रं १५.७cv तद्-वन् नेत्रं भवेज् जिह्मम् १५.७dv शूनं वा वात-पर्यये दाहो धूमायनं शोफः श्याव-ता वर्त्मनो बहिः ।
अन्तः-क्लेदो ऽश्रु पीतोष्णं रागः पीताभ-दर्शनम् ॥ ८ ॥

क्षारोक्षित-क्षताक्षि-त्वं पित्ताभिष्यन्द-लक्षणम् ।
ज्वलद्-अङ्गार-कीर्णाभं यकृत्-पिण्ड-सम-प्रभम् ॥ ९ ॥

अधिमन्थे भवेन् नेत्रं स्यन्दे तु कफ-संभवे ।
जाड्यं शोफो महान् कण्डूर् निद्रान्नान्-अभिनन्दनम् ॥ १० ॥

सान्द्र-स्निग्ध-बहु-श्वेत-पिच्छा-वद्-दूषिकाश्रु-ता ।
अधिमन्थे नतं कृष्णम् उन्नतं शुक्ल-मण्डलम् ॥ ११ ॥

१५.११bv -पिच्छा-वद्-दूषिकास्र-ता प्रसेको नासिकाध्मानं पांसु-पूर्णम् इवेक्षणम् ।
रक्ताश्रु-राजी-दूषीका-रक्त-मण्डल-दर्शनम् ॥ १२ ॥

१५.१२cv रक्तास्र-राजी-दूषीका- १५.१२dv -शुक्ल-मण्डल-दर्शनम् रक्त-स्यन्देन नयनं स-पित्त-स्यन्द-लक्षणम् ।
मन्थे ऽक्षि ताम्र-पर्य्-अन्तम् उत्पाटन-समान-रुक् ॥ १३ ॥

रागेण बन्धूक-निभं ताम्यति स्पर्शना-क्षमम् ।
असृङ्-निमग्नारिष्टाभं कृष्णम् अग्न्य्-आभ-दर्शनम् ॥ १४ ॥

अधिमन्था यथा-स्वं च सर्वे स्यन्दाधिक-व्यथाः ।
शङ्ख-दन्त-कपोलेषु कपाले चाति-रुक्-कराः ॥ १५ ॥

वात-पित्तातुरं घर्ष-तोद-भेदोपदेह-वत् ।
रूक्ष-दारुण-वर्त्माक्षि कृच्छ्रोन्मील-निमीलनम् ॥ १६ ॥

१५.१६av वात-पित्तोत्तरं घर्ष- विकूणन-विशुष्क-त्व-शीतेच्छा-शूल-पाक-वत् ।
उक्तः शुष्कादि-पाको यं स-शोफः स्यात् त्रिभिर् मलैः ॥ १७ ॥

१५.१७av विकूणनं विशुष्कं च १५.१७av विकूणेन विशुष्क-त्वं १५.१७bv शीतेच्छा-शूल-पाक-वत् स-रक्तैस् तत्र शोफो ऽति-रुग्-दाह-ष्ठीवनादि-मान् ।
पक्वोदुम्बर-संकाशं जायते शुक्ल-मण्डलम् ॥ १८ ॥

अश्रूष्ण-शीत-विशद-पिच्छिलाच्छ-घनं मुहुः ।
अल्प-शोफे ऽल्प-शोफस् तु पाको ऽन्यैर् लक्षणैस् तथा ॥ १९ ॥

१५.१९cv अल्प-शोफो ऽल्प-शोफस् तु अक्षि-पाकात्यये शोफः संरम्भः कलुषाश्रु-ता ।
कफोपदिग्धम् असितं सितं प्रक्लेद-राग-वत् ॥ २० ॥

१५.२०cv कफेन दिग्धम् असितं दाहो दर्शन-संरोधो वेदनाश् चान्-अवस्थिताः ।
अन्न-सारो ऽम्ल-तां नीतः पित्त-रक्तोल्बणैर् मलैः ॥ २१ ॥

सिराभिर् नेत्रम् आरूढः करोति श्याव-लोहितम् ।
स-शोफ-दाह-पाकाश्रु भृशं चाविल-दर्शनम् ॥ २२ ॥

अम्लोषितो ऽयम् इत्य् उक्ता गदाः षो-डश सर्व-गाः ।
हताधिमन्थम् एतेषु साक्षि-पाकात्ययं त्यजेत् ॥ २३ ॥

१५.२३cv हताधिमन्थं चैतेषु वातोद्भूतः पञ्च-रात्रेण दृष्टिं सप्ताहेन श्लेष्म-जातो ऽधिमन्थः ।
रक्तोत्पन्नो हन्ति तद्-वत् त्रि-रात्रान् मिथ्याचारात् पैत्तिकः सद्य एव ॥ २४ ॥

१५.२४bv सप्ताहेन श्लेष्म-जश् चाधिमन्थः

# अध्याय 16

प्राग्-रूप एव स्यन्देषु तीक्ष्णं गण्डूष-नावनम् ।
कारयेद् उपवासं च कोपाद् अन्य-त्र वात-जात् ॥ १ ॥

दाहोपदेह-रागाश्रु-शोफ-शान्त्यै बिडालकम् ।
कुर्यात् सर्व-त्र पत्त्रैला-मरिच-स्वर्ण-गैरिकैः ॥ २ ॥

स-रसाञ्जन-यष्ट्य्-आह्व-नत-चन्दन-सैन्धवैः ।
सैन्धवं नागरं तार्क्ष्यं भृष्टं मण्डेन सर्पिषः ॥ ३ ॥

१६.३dv घृष्टं मण्डेन सर्पिषः बदरी-पत्त्र-यष्ट्य्-आह्व-पथ्यामलक-तुत्थकम् ।
अन्तर्-धूमं दहेत् सद्यः कोपे तच्-चूर्णं वात-जे ॥ ३.१+१ ॥

वात-जे घृत-भृष्टं वा योज्यं शबर-देश-जम् ।
मांसी-पद्मक-कालीय-यष्ट्य्-आह्वैः पित्त-रक्तयोः ॥ ४ ॥

१६.४bv योज्यं शाबर-देश-जम् १६.४cv मांसी-पद्मक-काकोली- मनोह्वा-फलिनी-क्षौद्रैः कफे सर्वैस् तु सर्व-जे ॥ ५अब् ॥
सित-मरिच-भागम् एकं चतुर्-मनोह्वं द्विर् अष्ट-शाबरकम् ॥ ५च्द् ॥
संचूर्ण्य वस्त्र-बद्धं प्रकुपित-मात्रे ऽवगुण्ठनं नेत्रे ॥ ५एf ॥
१६.५एव् संचूर्ण्यम् अति-प्रबद्धं १६.५fव् प्रकुपित-मात्रे ऽवगुण्ठनम् इदं नेत्रे धातु-शुण्ठ्य्-अभया-तार्क्ष्यं बहिर्-लेपो ऽक्षि-रोग-हा ॥ ५.१(१)+१अब् ॥
१६.५.१(१)+१av धातु-शुण्ठ्य्-अभया-तार्क्ष्य- १६.५.१(१)+१bv -बहिर्-लेपो ऽक्षि-रोग-हा हरीतकी-सैन्धव-तार्क्ष्य-शीलैः स-गैरिकैः स्व-स्व-कर-प्रमृष्टैः ।
बहिः-प्रलेपं नयनस्य कुर्यात् सर्वाक्षि-रोग-प्रशमार्थम् एतत् ॥ ५.१(२)+१ ॥

आरण्याश् छगण-रसे पटावबद्धाः सु-स्विन्ना नख-वि-तुषी-कृताः कुलत्थाः ।
तच्-चूर्णं सकृद् अवचूर्णनान् निशीथे नेत्राणां विधमति सद्य एव कोपम् ॥ ६ ॥

१६.६av आरण्याश् छगण-रसे पटावनद्धाः घोषाभया-तुत्थक-यष्टि-लोध्रैर् मूती सु-सूक्ष्मैः श्लथ-वस्त्र-बद्धैः ।
ताम्र-स्थ-धान्याम्ल-निमग्न-मूर्तिर् अर्तिं जयत्य् अक्षिणि नैक-रूपाम् ॥ ७ ॥

१६.७av घोषाभया-तुत्थक-यष्टि-लोध्रैः १६.७av व्योषाभया-तुत्थक-यष्टि-लोध्रैर् १६.७bv गुण्डी सु-सूक्ष्मैः श्लथ-वस्त्र-बद्धैः १६.७bv पिष्टैः सु-सूक्ष्मैः श्लथ-वस्त्र-बद्धैः १६.७cv ताम्राच्छ-धान्याम्ल-निमग्न-मूर्तिर् षो-डशभिः सलिल-पलैः पलं तथैकं कटङ्कटेर्याः सिद्धम् ।
सेको ऽष्ट-भाग-शिष्टः क्षौद्र-युतः सर्व-दोष-कुपिते नेत्रे ॥ ८ ॥

१६.८dv क्षौद्र-युतः सर्व-दोष-प्रकुपिते नेत्रे वात-पित्त-कफ-संनिपात-जां नेत्रयोर् बहु-विधाम् अपि व्यथाम् ।
शीघ्रम् एव जयति प्रयोजितः शिग्रु-पल्लव-रसः स-माक्षिकः ॥ ९ ॥

तरुणम् उरुबूक-पत्त्रं मूलं च विभिद्य सिद्धम् आजे क्षीरे ।
वाताभिष्यन्द-रुजं सद्यो विनिहन्ति सक्तु-पिण्डिका चोष्णा ॥ १० ॥

१६.१०bv मूलं च विचूर्ण्य सिद्धम् आजे क्षीरे आश्च्योतनं मारुत-जे क्वाथो बिल्वादिभिर् हितः ।
कोष्णः सहैरण्ड-जटा-बृहती-मधु-शिग्रुभिः ॥ ११ ॥

ह्रीवेर-वक्र-शार्ङ्गष्टोदुम्बर-त्वक्षु साधितम् ।
साम्भसा पयसाजेन शूलाश्च्योतनम् उत्तमम् ॥ १२ ॥

१६.१२bv ुदुम्बर-त्वक्-प्रसाधितम् १६.१२bv ुदुम्बर-प्लक्ष-साधितम् लोध्रामलक-रसाञ्ज[न]-बिम्बितिका-पत्त्र-तुबरिका-तुत्थैः ।
आश्च्योतनम् इदम् अक्ष्णोः प्रसह्य सद्यः प्रकोप-हरम् ॥ १२+१ ॥

मञ्जिष्ठा-रजनी-लाक्षा-द्राक्षर्द्धि-मधुकोत्पलैः ।
क्वाथः स-शर्करः शीतः सेचनं रक्त-पित्त-जित् ॥ १३ ॥

१६.१३bv -द्राक्षा-द्वि-मधुकोत्पलैः कसेरु-यष्ट्य्-आह्व-रजस् तान्तवे शिथिलं स्थितम् ।
अप्सु दिव्यासु निहितं हितं स्यन्दे ऽस्र-पित्त-जे ॥ १४ ॥

१६.१४bv तान्तवे शिथिले स्थितम् पुण्ड्र-यष्टी-निशा-मूती प्लुता स्तन्ये स-शर्करे ।
छाग-दुग्धे ऽथ-वा दाह-रुग्-रागाश्रु-निवर्तनी ॥ १५ ॥

श्वेत-लोध्रं स-मधुकं घृत-भृष्टं सु-चूर्णितम् ।
वस्त्र-स्थं स्तन्य-मृदितं पित्त-रक्ताभिघात-जित् ॥ १६ ॥

नागर-त्रि-फला-निम्ब-वासा-लोध्र-रसः कफे ।
कोष्णम् आश्च्योतनं मिश्रैर् भेषजैः सांनिपातिके ॥ १७ ॥

१६.१७bv -वासा-लोध्र-रसाः कफे १६.१७bv -वासा-लोध्र-रसं कफे सर्पिः पुराणं पवने पित्ते शर्करयान्वितम् ।
व्योष-सिद्धं कफे पीत्वा यव-क्षारावचूर्णितम् ॥ १८ ॥

१६.१८bv पित्ते शर्करया युतम् स्रावयेद् रुधिरं भूयस् ततः स्निग्धं विरेचयेत् ।
आनूप-वेसवारेण शिरो-वदन-लेपनम् ॥ १९ ॥

उष्णेन शूले दाहे तु पयः-सर्पिर्-युतैर् हिमैः ।
तिमिर-प्रतिषेधं च वीक्ष्य युञ्ज्याद् यथा-यथम् ॥ २० ॥

अयम् एव विधिः सर्वो मन्थादिष्व् अपि शस्यते ।
अ-शान्तौ सर्व-था मन्थे भ्रुवोर् उपरि दाहयेत् ॥ २१ ॥

रूप्यं रूक्षेण गो-दध्ना लिम्पेन् नील-त्वम् आगते ।
शुष्के तु मस्तुना वर्तिर् वाताक्ष्य्-आमय-नाशिनी ॥ २२ ॥

१६.२२bv लिप्तं नील-त्वम् आगते १६.२२bv लिप्ते नील-त्वम् आगते सुमनः-कोरकाः शङ्खस् त्रि-फला मधुकं बला ।
पित्त-रक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥ २३ ॥

१६.२३av सुमनः-क्षारकाः शङ्खस् सैन्धवं त्रि-फला व्योषं शङ्खनाभिः समुद्र-जः ।
फेन ऐलेयकं सर्जो वर्तिः श्लेष्माक्षि-रोग-नुत् ॥ २४ ॥

प्रपौण्डरीकं यष्ट्य्-आह्वं दार्वी चाष्ट-पलं पचेत् ।
जल-द्रोणे रसे पूते पुनः पक्वे घने क्षिपेत् ॥ २५ ॥

पुष्पाञ्जनाद् दश-पलं कर्षं च मरिचात् ततः ।
कृतश् चूर्णो ऽथ-वा वर्तिः सर्वाभिष्यन्द-संभवान् ॥ २६ ॥

हन्ति राग-रुजा-घर्षान् सद्यो दृष्टिं प्रसादयेत् ।
अयं पाशुपतो योगो रहस्यं भिषजां परम् ॥ २७ ॥

शुष्काक्षि-पाके हविषः पानम् अक्ष्णोश् च तर्पणम् ।
घृतेन जीवनीयेन नस्यं तैलेन वाणुना ॥ २८ ॥

१६.२८dv नस्यं तैलेन चाणुना परिषेको हितश् चात्र पयः कोष्णं स-सैन्धवम् ।
सर्पिर्-युक्तं स्तन्य-पिष्टम् अञ्जनं च महौषधम् ॥ २९ ॥

१६.२९cv सर्पिर्-युक्तं स्तन्य-घृष्टम् वसा वानूप-सत्-त्वोत्था किञ्-चित्-सैन्धव-नागरा ।
घृताक्तान् दर्पणे घृष्टान् केशान् मल्लक-संपुटे ॥ ३० ॥

१६.३०av वसा चानूप-सत्-त्वोत्था दग्ध्वाज्य-पिष्टा लोह-स्था सा मषी श्रेष्ठम् अञ्जनम् ।
स-शोफे वाल्प-शोफे च स्निग्धस्य व्यधयेत् सिराम् ॥ ३१ ॥

१६.३१cv स-शोफे चाल्प-शोफे च रेकः स्निग्धे पुनर् द्राक्षा-पथ्या-क्वाथ-त्रिवृद्-घृतैः ।
श्वेत-लोध्रं घृते भृष्टं चूर्णितं तान्तव-स्थितम् ॥ ३२ ॥

१६.३२cv श्वेत-लोध्रं घृत-भृष्टं उष्णाम्बुना विमृदितं सेकः शूल-हरः परम् ।
दार्वी-प्रपौण्डरीकस्य क्वाथो वाश्च्योतने हितः ॥ ३३ ॥

१६.३३cv दार्व्याः प्रपौण्डरीकस्य यष्टी-हिमोत्पल-क्षीरैः कुर्यान् मूर्धस्य लेपनम् ॥ ३३+१अब् ॥
संधावांश् च प्रयुञ्जीत घर्ष-रागाश्रु-रुग्-घरान् ॥ ३३अब् ॥
ताम्रं लोहे मूत्र-घृष्टं प्रयुक्तं नेत्रे सर्पिर्-धूपितं वेदना-घ्नम् ।
ताम्रे घृष्टो गव्य-दध्नः सरो वा युक्तः कृष्णा-सैन्धवाभ्यां वरिष्ठः ॥ ३४ ॥

शङ्खं ताम्रे स्तन्य-घृष्टं घृताक्तैः शम्याः पत्त्रैर् धूपितं तद् यवैश् च ।
नेत्रे युक्तं हन्ति संधाव-संज्ञं क्षिप्रं घर्षं वेदनां चाति-तीव्राम् ॥ ३५ ॥

उदुम्बर-फलं लोहे घृष्टं स्तन्येन धूपितम् ॥ ३६अब् ॥
साज्यैः शमी-च्छदैर् दाह-शूल-रागाश्रु-हर्ष-जित् ।
शिग्रु-पल्लव-निर्यासः सु-घृष्टस् ताम्र-संपुटे ॥ ३७ ॥

१६.३७cv शिग्रु-पल्लव-निर्यासो १६.३७dv घृष्टस् ताम्रस्य संपुटे द्वि-निशा-त्रि-फला-मुस्तैः प्रमदा-दुग्ध-पेषितैः ।
सेकः स-शर्करा-क्षौद्रैर् अभिघात-रुजापहः ॥ ३७.१+१ ॥

१६.३७.१+१bv प्रमदा-दुग्ध-कल्कितैः निषिक्तं तुत्थकं वारान् गो-जले पञ्च-विंशतिम् ।
स्तन्ये वा छाग-दुग्धे वा सद्यः-कोपे तद् अञ्जनम् ॥ ३७.१+२ ॥

घृतेन धूपितो हन्ति शोफ-घर्षाश्रु-वेदनाः ।
तिलाम्भसा मृत्-कपालं कांस्ये घृष्टं सु-धूपितम् ॥ ३८ ॥

निम्ब-पत्त्रैर् घृताभ्यक्तैर् घर्ष-शूलाश्रु-राग-जित् ।
संधावेनाञ्जिते नेत्रे विगतौषध-वेदने ॥ ३९ ॥

स्तन्येनाश्च्योतनं कार्यं त्रिः परं नाञ्जयेच् च तैः ।
तालीश-पत्त्र-चपला-नत-लोह-रजोऽञ्जनैः ॥ ४० ॥

१६.४०dv -नत-लोह-रसाञ्जनैः जाती-मुकुल-कासीस-सैन्धवैर् मूत्र-पेषितैः ।
ताम्रम् आलिप्य सप्ताहं धारयेत् पेषयेत् ततः ॥ ४१ ॥

मूत्रेणैवानु गुटिकाः कार्याश् छाया-विशोषिताः ।
ताः स्तन्य-घृष्टा घर्षाश्रु-शोफ-कण्डू-विनाशनाः ॥ ४२ ॥

१६.४२av मूत्रेण चानु गुटिकाः १६.४२bv कुर्याच् छाया-विशोषिताः व्याघ्री-त्वङ्-मधुकं ताम्र-रजो ऽजा-क्षीर-कल्कितम् ।
शम्य्-आमलक-पत्त्राज्य-धूपितं शोफ-रुक्-प्रणुत् ॥ ४३ ॥

१६.४३bv -रजो ऽजा-क्षीर-पेषितम् अम्लोषिते प्रयुञ्जीत पित्ताभिष्यन्द-साधनम् ।
उत्क्लिष्टाः कफ-पित्तास्र-निचयोत्थाः कुकूणकः ॥ ४४ ॥

पक्ष्मोपरोधं शुष्काक्षि-पाकः पूयालसो बिसः ।
पोथक्य्-अम्लोषितो ऽल्पाख्यः स्यन्द-मन्था विनानिलात् ॥ ४५ ॥

एते ऽष्टा-दश पिल्लाख्या दीर्घ-कालानुबन्धिनः ।
चिकित्सा पृथग् एतेषां स्वं स्वम् उक्ताथ वक्ष्यते ॥ ४६ ॥

१६.४६dv स्वं स्वम् उक्ताथ कथ्यते पिल्ली-भूतेषु सामान्याद् अथ पिल्लाख्य-रोगिणः ।
स्निग्धस्य छर्दित-वतः सिरा-व्यध-हृतासृजः ॥ ४७ ॥

१६.४७bv अथ पिल्लाक्षि-रोगिणः विरिक्तस्य च वर्त्मानु निर्लिखेद् आ-विशुद्धितः ।
तुत्थकस्य पलं श्वेत-मरिचानि च विंशतिः ॥ ४८ ॥

१६.४८av विरिक्तस्य तु वर्त्मानु १६.४८bv विलिखेद् आ-विशुद्धितः त्रिंशता काञ्जिक-पलैः पिष्ट्वा ताम्रे निधापयेत् ।
पिल्लान् अ-पिल्लान् कुरुते बहु-वर्षोत्थितान् अपि ॥ ४९ ॥

तत् सेकेनोपदेहाश्रु-कण्डू-शोफांश् च नाशयेत् ।
करञ्ज-बीजं सुरसं सुमनः-कोरकाणि च ॥ ५० ॥

१६.५०dv सुमनः-क्षारकाणि च संक्षुद्य साधयेत् क्वाथे पूते तत्र रस-क्रिया ।
अञ्जनं पिल्ल-भैषज्यं पक्ष्मणां च प्ररोहणम् ॥ ५१ ॥

रसाञ्जनं सर्ज-रसो रीति-पुष्पं मनःशिला ।
समुद्र-फेनो लवणं गैरिकं मरिचानि च ॥ ५२ ॥

१६.५२bv जाती-पुष्पं मनःशिला १६.५२cv समुद्र-फेनं लवणं अञ्जनं मधुना पिष्टं क्लेद-कण्डू-घ्नम् उत्तमम् ।
अभया-रस-पिष्टं वा तगरं पिल्ल-नाशनम् ॥ ५३ ॥

भावितं बस्त-मूत्रेण स-स्नेहं देवदारु च ।
सैन्धव-त्रि-फला-कृष्णा-कटुका-शङ्खनाभयः ॥ ५४ ॥

१६.५४bv स-स्नेहं देवदारु वा स-ताम्र-रजसो वर्तिः पिल्ल-शुक्रक-नाशिनी ।
पुष्प-कासीस-चूर्णो वा सुरसा-रस-भावितः ॥ ५५ ॥

ताम्रे दशाहं तत् पैल्ल्य-पक्ष्म-शात-जिद् अञ्जनम् ॥ ५५अब् ॥
अलं च सौवीरकम् अञ्जनं च ताभ्यां समं ताम्र-रजः सु-सूक्ष्मम् ।
पिल्लेषु रोमाणि निषेवितो ऽसौ चूर्णः करोत्य् एक-शलाकयापि ॥ ५६ ॥

१६.५६bv ताभ्यां समं ताम्र-रजश् च सूक्ष्मम् १६.५६cv पिल्लेषु रोमाणि निषेवितो ऽयं लाक्षा-निर्गुण्डी-भृङ्ग-दार्वी-रसेन श्रेष्ठं कार्पासं भावितं सप्त-कृत्वः ।
दीपः प्रज्वाल्यः सर्पिषा तत्-समुत्था श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ५७ ॥

१६.५७dv श्रेष्ठा पिल्लानां रोपणार्थं मषी सा वर्त्मावलेखं बहु-शस् तद्-वच् छोणित-मोक्षणम् ॥ ५८अब् ॥
पुनः पुनर् विरेकं च नित्यम् आश्च्योतनाञ्जनम् ।
नावनं धूम-पानं च पिल्ल-रोगातुरो भजेत् ॥ ५९ ॥

पूयालसे त्व् अ-शान्ते ऽन्ते दाहः सूक्ष्म-शलाकया ।
चतुर्-णवतिर् इत्य् अक्ष्णो हेतु-लक्षण-साधनैः ॥ ६० ॥

१६.६०av पूयालसे त्व् अ-शान्ते तु १६.६०cv चतुर्-णवतिर् इत्य् अक्ष्णोर् परस्-परम् अ-संकीर्णाः कात्स्न्र्येन गदिता गदाः ।
सर्व-दा च निषेवेत स्वस्थो ऽपि नयन-प्रियः ॥ ६१ ॥

पुराण-यव-गोधूम-शालि-षष्टिक-कोद्रवान् ।
मुद्गादीन् कफ-पित्त-घ्नान् भूरि-सर्पिः-परिप्लुतान् ॥ ६२ ॥

शाकं चैवं-विधं मांसं जाङ्गलं दाडिमं सिताम् ।
सैन्धवं त्रि-फलां द्राक्षां वारि पाने च नाभसम् ॥ ६३ ॥

आतप-त्रं पद-त्राणं विधि-वद् दोष-शोधनम् ।
वर्जयेद् वेग-संरोधम् अ-जीर्णाध्यशनानि च ॥ ६४ ॥

१६.६४dv अ-जीर्णाध्यशनादि च क्रोध-शोक-दिवा-स्वप्न-रात्रि-जागरणातपान् ।
विदाहि विष्टम्भ-करं यच् चेहाहार-भेषजम् ॥ ६५ ॥

१६.६५bv -निशा-जागरणानि च १६.६५cv विदाह-विष्टम्भ-करं १६.६५dv यद् यद् आहार-भेषजम् १६.६५dv विहाराहार-भेषजम् द्वे पाद-मध्ये पृथु-संनिवेशे सिरे गते ते बहु-धा च नेत्रे ।
ता म्रक्षणोद्वर्तन-लेपनादीन् पाद-प्रयुक्तान् नयने नयन्ति ॥ ६६ ॥

१६.६६av द्वे पाद-मध्ये पृथु-संनिविष्टे १६.६६dv पाद-प्रयुक्तान् नयनं नयन्ति मलौष्ण्य-संघट्टन-पीडनाद्यैस् ता दूषयन्ते नयनानि दुष्टाः ।
भजेत् सदा दृष्टि-हितानि तस्माद् उपानद्-अभ्यञ्जन-धावनानि ॥ ६७ ॥

१६.६७av तलोष्ण-संघट्टन-पीडनाद्यैस् १६.६७av मृल्-लोष्ट-संघट्टन-पीडनाद्यैस्

# अध्याय 17

प्रतिश्याय-जल-क्रीडा-कर्ण-कण्डूयनैर् मरुत् ।
मिथ्या-योगेन शब्दस्य कुपितो ऽन्यैश् च कोपनैः ॥ १ ॥

प्राप्य श्रोत्र-सिराः कुर्याच् छूलं स्रोतसि वेग-वत् ।
अर्धावभेदकं स्तम्भं शिशिरान्-अभिनन्दनम् ॥ २ ॥

चिराच् च पाकं पक्वं तु लसीकाम् अल्प-शः स्रवेत् ।
श्रोत्रं शून्यम् अ-कस्माच् च स्यात् संचार-विचार-वत् ॥ ३ ॥

शूलं पित्तात् स-दाहोषा-शीतेच्छा-श्वयथु-ज्वरम् ।
आशु-पाकं प्रपक्वं च स-पीत-लसिका-स्रुति ॥ ४ ॥

१७.४bv -शीतेच्छा-श्वयथुर् ज्वरः सा लसीका स्पृशेद् यद् यत् तत् तत् पाकम् उपैति च ।
कफाच् छिरो-हनु-ग्रीवा-गौरवं मन्द-ता रुजः ॥ ५ ॥

कण्डूः श्वयथुर् उष्णेच्छा पाकाच् छ्वेत-घन-स्रुतिः ।
करोति श्रवणे शूलम् अभिघातादि-दूषितम् ॥ ६ ॥

१७.६bv पाकाच् छ्वेत-घना स्रुतिः रक्तं पित्त-समानार्ति किञ्-चिद् वाधिक-लक्षणम् ।
शूलं समुदितैर् दोषैः स-शोफ-ज्वर-तीव्र-रुक् ॥ ७ ॥

पर्यायाद् उष्ण-शीतेच्छां जायते श्रुति-जाड्य-वत् ।
पक्वं सितासिता-रक्त-घन-पूय-प्रवाहि च ॥ ८ ॥

शब्द-वाहि-सिरा-संस्थे शृणोति पवने मुहुः ।
नादान् अ-कस्माद् विविधान् कर्ण-नादं वदन्ति तम् ॥ ९ ॥

श्लेष्मणानुगतो वायुर् नादो वा समुपेक्षितः ।
उच्चैः कृच्छ्राच् छ्रुतिं कुर्याद् बधिर-त्वं क्रमेण च ॥ १० ॥

१७.१०dv बधिर-त्वं क्रमेण वा वातेन शोषितः श्लेष्मा श्रोतो लिम्पेत् ततो भवेत् ।
रुग्-गौरवं पिधानं च स प्रतीनाह-संज्ञितः ॥ ११ ॥

कण्डू-शोफौ कफाच् छ्रोत्रे स्थिरौ तत्-संज्ञया स्मृतौ ।
कफो विदग्धः पित्तेन स-रुजं नी-रुजं त्व् अपि ॥ १२ ॥

१७.१२bv स्थिरौ तत्-संज्ञितौ स्मृतौ १७.१२dv स-रुजं नी-रुजं त्व् अथ घन-पूति-बहु-क्लेदं कुरुते पूति-कर्णकम् ।
वातादि-दूषितं श्रोत्रं मांसासृक्-क्लेद-जा रुजम् ॥ १३ ॥

१७.१३dv मांसासृक्-क्लेद-जां रुजम् खादन्तो जन्तवः कुर्युस् तीव्रां स कृमि-कर्णकः ।
श्रोत्र-कण्डूयनाज् जाते क्षते स्यात् पूर्व-लक्षणः ॥ १४ ॥

१७.१४cv श्रोतः-कण्डूयनाज् जाते विद्रधिः पूर्व-वच् चान्यः शोफो ऽर्शो ऽर्बुदम् ईरितम् ।
तेषु रुक् पूति-कर्ण-त्वं बधिर-त्वं च बाधते ॥ १५ ॥

१७.१५bv षो-ढार्शो ऽर्बुदम् ईरितम् १७.१५dv बधिर-त्वं च जायते गर्भे ऽनिलात् संकुचिता शष्कुली कुचि-कर्णकः ।
एको नी-रुग् अनेको वा गर्भे मांसाङ्कुरः स्थिरः ॥ १६ ॥

१७.१६bv शष्कुली कुञ्चि-कर्णकः १७.१६bv शष्कुली कूचि-कर्णकः १७.१६dv गर्भे मांसाङ्कुरः स्थितः पिप्पली पिप्पली-मानः संनिपाताद् विदारिका ।
स-वर्णः स-रुजः स्तब्धः श्वयथुः स उपेक्षितः ॥ १७ ॥

कटु-तैल-निभं पक्वः स्रवेत् कृच्छ्रेण रोहति ।
संकोचयति रूढा च सा ध्रुवं कर्ण-शष्कुलीम् ॥ १८ ॥

१७.१८bv स्रवन् कृच्छ्रेण रोहति सिरा-स्थः कुरुते वायुः पाली-शोषं तद्-आह्वयम् ।
कृशा दृढा च तन्त्री-वत् पाली वातेन तन्त्रिका ॥ १९ ॥

सु-कुमारे चिरोत्सर्गात् सहसैव प्रवर्धिते ।
कर्णे शोफः स-रुक् पाल्याम् अरुणः परिपोट-वान् ॥ २० ॥

परिपोटः स पवनाद् उत्पातः पित्त-शोणितात् ।
गुर्व्-आभरण-भाराद्यैः श्यावो रुग्-दाह-पाक-वान् ॥ २१ ॥

श्वयथुः स्फोट-पिटिका-रागोषा-क्लेद-संयुतः ।
पाल्यां शोफो ऽनिल-कफात् सर्वतो निर्-व्यथः स्थिरः ॥ २२ ॥

स्तब्धः स-वर्णः कण्डू-मान् उन्मन्थो गल्लिरश् च सः ।
दुर्-विद्धे वर्धिते कर्णे स-कण्डू-दाह-पाक-रुक् ॥ २३ ॥

१७.२३bv उन्मन्थो गल्लिकश् च सः श्वयथुः संनिपातोत्थः स नाम्ना दुःख-वर्धनः ।
कफासृक्-कृमि-जाः सूक्ष्माः स-कण्डू-क्लेद-वेदनाः ॥ २४ ॥

लिह्युः पालीम् उपेक्षिताः लेह्याख्याः पिटिकास् ता हि ।
पिप्पली सर्व-जं शूलं विदारी कुचि-कर्णकः ॥ २५ ॥

१७.२५av लिह्याख्याः पिटिकास् ता हि १७.२५dv विदारी कूचि-कर्णकः एषाम् अ-साध्या याप्यैका तन्त्रिकान्यांस् तु साधयेत् ।
पञ्च-विंशतिर् इत्य् उक्ताः कर्ण-रोगा विभागतः ॥ २६ ॥

# अध्याय 18

कर्ण-शूले पवन-जे पिबेद् रात्रौ रसाशितः ।
वात-घ्न-साधितं सर्पिः कर्णं स्विन्नं च पूरयेत् ॥ १ ॥

पत्त्राणां पृथग् अश्वत्थ-बिल्वार्कैरण्ड-जन्मनाम् ।
तैल-सिन्धूत्थ-दिग्धानां स्विन्नानां पुट-पाकतः ॥ २ ॥

रसैः कवोष्णैस् तद्-वच् च मूलकस्यारलोर् अपि ।
गणे वात-हरे ऽम्लेषु मूत्रेषु च विपाचितः ॥ ३ ॥

महा-स्नेहो द्रुतं हन्ति सु-तीव्राम् अपि वेदनाम् ।
महतः पञ्च-मूलस्य काष्ठात् क्षौमेण वेष्टितात् ॥ ४ ॥

तैल-सिक्तात् प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः ।
योज्यश् चैवं भद्रकाष्ठात् कुष्ठात् काष्ठाच् च सारलात् ॥ ५ ॥

१८.५bv स्नेहः सद्यो रुजा-हरः वात-व्याधि-प्रतिश्याय-विहितं हितम् अत्र च ।
वर्जयेच् छिरसा स्नानं शीताम्भः-पानम् अह्न्य् अपि ॥ ६ ॥

१८.६cv वर्जयेच् छिरसः स्नानं पित्त-शूले सिता-युक्त-घृत-स्निग्धं विरेचयेत् ।
द्राक्षा-यष्टी-शृतं स्तन्यं शस्यते कर्ण-पूरणम् ॥ ७ ॥

यष्ट्य्-अनन्ता-हिमोशीर-काकोली-लोध्र-जीवकैः ।
मृणाल-बिस-मञ्जिष्ठा-शारिवाभिश् च साधयेत् ॥ ८ ॥

यष्टीमधु-रस-प्रस्थ-क्षीर-द्वि-प्रस्थ-संयुतम् ।
तैलस्य कुडवं नस्य-पूरणाभ्यञ्जनैर् इदम् ॥ ९ ॥

निहन्ति शूल-दाहोषाः केवलं क्षौद्रम् एव वा ।
यष्ट्य्-आदिभिश् च स-घृतैः कर्णौ दिह्यात् समन्ततः ॥ १० ॥

वामयेत् पिप्पली-सिद्ध-सर्पिः-स्निग्धं कफोद्भवे ।
धूम-नावन-गण्डूष-स्वेदान् कुर्यात् कफापहान् ॥ ११ ॥

लशुनार्द्रक-शिग्रूणां मुरङ्ग्या मूलकस्य च ।
कदल्याः स्व-रसः श्रेष्ठः कद्-उष्णः कर्ण-पूरणे ॥ १२ ॥

१८.१२bv सुरङ्ग्या मूलकस्य च १८.१२bv भृङ्गस्य मूलकस्य च अर्काङ्कुरान् अम्ल-पिष्टांस् तैलाक्ताõ लवणान्वितान् ।
संनिधाय स्नुही-काण्डे कोरिते तच्-छदावृतान् ॥ १३ ॥

१८.१३dv कोरिते तच् छदावृते स्वेदयेत् पुट-पाकेन स रसः शूल-जित् परम् ।
रसेन बीजपूरस्य कपित्थस्य च पूरयेत् ॥ १४ ॥

शुक्तेन पूरयित्वा वा फेनेनान्व् अवचूर्णयेत् ।
अजावि-मूत्र-वंश-त्वक्-सिद्धं तैलं च पूरणम् ॥ १५ ॥

१८.१५dv -सिद्ध-तैलेन पूरयेत् सिद्धं वा सार्षपं तैलं हिङ्गु-तुम्बुरु-नागरैः ।
रक्त-जे पित्त-वत् कार्यं सिरां चाशु विमोक्षयेत् ॥ १६ ॥

पक्वे पूय-वहे कर्णे धूम-गण्डूष-नावनम् ।
युञ्ज्यान् नाडी-विधानं च दुष्ट-व्रण-हरं च यत् ॥ १७ ॥

स्रोतः प्रमृज्य दिग्धं तु द्वौ कालौ पिचु-वर्तिभिः ।
पुरेण धूपयित्वा तु माक्षिकेण प्रपूरयेत् ॥ १८ ॥

सुरसादि-गण-क्वाथ-फाणिताक्तां च योजयेत् ।
पिचु-वर्तिं सु-सूक्ष्मैश् च तच्-चूर्णैर् अवचूर्णयेत् ॥ १९ ॥

१८.१९bv -फाणिताक्तां च शीलयेत् १८.१९bv -फाणिताक्तां प्रयोजयेत् १८.१९bv -फाणिताक्तां नियोजयेत् शूल-क्लेद-गुरु-त्वानां विधिर् एष निवर्तकः ।
प्रियङ्गु-मधुकाम्बष्ठा-धातक्य्-उत्पल-पर्णिभिः ॥ २० ॥

मञ्जिष्ठा-लोध्र-लाक्षाभिः कपित्थस्य रसेन च ।
पचेत् तैलं तद् आस्रावं निगृह्णात्य् आशु पूरणात् ॥ २१ ॥

नाद-बाधिर्ययोः कुर्याद् वात-शूलोक्तम् औषधम् ।
श्लेष्मानुबन्धे श्लेष्माणम् प्राग् जयेद् वमनादिभिः ॥ २२ ॥

एरण्ड-शिग्रु-वरुण-मूलकात् पत्त्र-जे रसे ।
चतुर्-गुणे पचेत् तैलं क्षीरे चाष्ट-गुणोन्मिते ॥ २३ ॥

१८.२३av एरण्ड-शिग्रु-तरुण- यष्ट्य्-आह्वा-क्षीर-काकोली-कल्क-युक्तं निहन्ति तत् ।
नाद-बाधिर्य-शूलानि नावनाभ्यङ्ग-पूरणैः ॥ २४ ॥

१८.२४bv -कल्क-युक्तं हिनस्ति तत् पक्वं प्रतिविषा-हिङ्गु-मिशि-त्वक्-स्वर्जिकोषणैः ।
स-शुक्तैः पूरणात् तैलं रुक्-स्रावा-श्रुति-नाद-नुत् ॥ २५ ॥

१८.२५dv रुक्-स्राव-श्रुति-नाद-नुत् कर्ण-नादे हितं तैलं सर्षपोत्थं च पूरणे ।
शुष्क-मूलक-खण्डानां क्षारो हिङ्गु महौषधम् ॥ २६ ॥

शतपुष्पा-वचा-कुष्ठ-दारु-शिग्रु-रसाञ्जनम् ।
सौवर्चल-यव-क्षार-स्वर्जिकौद्भिद-सैन्धवम् ॥ २७ ॥

भूर्ज-ग्रन्थि-विडं मुस्ता मधु-शुक्तं चतुर्-गुणम् ।
मातुलुङ्ग-रसस् तद्-वत् कदली-स्व-रसश् च तैः ॥ २८ ॥

पक्वं तैलं जयत्य् आशु सु-कृच्छ्रान् अपि पूरणात् ।
कण्डूं क्लेदं च बाधिर्य-पूति-कर्ण-त्व-रुक्-कृमीन् ॥ २९ ॥

१८.२९cv कण्डू-क्ष्वेडन-बाधिर्य- १८.२९cv कण्डू-ज्वलन-बाधिर्य- क्षार-तैलम् इदं श्रेष्ठं मुख-दन्तामयेषु च ।
अथ सुप्ताव् इव स्यातां कर्णौ रक्तं हरेत् ततः ॥ ३० ॥

१८.३०dv कर्णौ रक्तं हरेत् तयोः स-शोफ-क्लेदयोर् मन्द-श्रुतेर् वमनम् आचरेत् ।
बाधिर्यं वर्जयेद् बाल-वृद्धयोश् चिर-जं च यत् ॥ ३१ ॥

प्रतीनाहे परिक्लेद्य स्नेह-स्वेदैर् विशोधयेत् ।
कर्ण-शोधनकेनानु कर्णं तैलस्य पूरयेत् ॥ ३२ ॥

१८.३२dv कर्णं तैलेन पूरयेत् स-शुक्त-सैन्धव-मधोर् मातुलुङ्ग-रसस्य वा ।
शोधनाद् रूक्ष-तोत्पत्तौ घृत-मण्डस्य पूरणम् ॥ ३३ ॥

१८.३३av स-शुक्त-सैन्धवेनाशु १८.३३bv मातुलुङ्ग-रसेन वा १८.३३dv घृत-मण्डेन पूरणम् क्रमो ऽयं मल-पूर्णे ऽपि कर्णे कण्ड्वां कफापहम् ।
नस्यादि तद्-वच् छोफे ऽपि कटूष्णैश् चात्र लेपनम् ॥ ३४ ॥

१८.३४dv कटूष्णैश् चानु लेपनम् कर्ण-स्रावोदितं कुर्यात् पूति-कृमिण-कर्णयोः ।
पूरणं कटु-तैलेन विशेषात् कृमि-कर्णके ॥ ३५ ॥

१८.३५bv पूति-कृमिल-कर्णयोः १८.३५bv पूति-कृमिक-कर्णयोः वमि-पूर्वा हिता कर्ण-विद्रधौ विद्रधि-क्रिया ।
पित्तोत्थ-कर्ण-शूलोक्तं कर्तव्यं क्षत-विद्रधौ ॥ ३६ ॥

१८.३६av वमिः पूर्वं हिता कर्ण- अर्शो-ऽर्बुदेषु नासा-वद् आमा कर्ण-विदारिका ।
कर्ण-विद्रधि-वत् साध्या यथा-दोषोदयेन च ॥ ३७ ॥

पाली-शोषे ऽनिल-श्रोत्र-शूल-वन् नस्य-लेपनम् ।
स्वेदं च कुर्यात् स्विन्नां च पालीम् उद्वर्तयेत् तिलैः ॥ ३८ ॥

प्रियाल-बीज-यष्ट्य्-आह्व-हयगन्धा-यवान्वितैः ।
ततः पुष्टि-करैः स्नेहैर् अभ्यङ्गं नित्यम् आचरेत् ॥ ३९ ॥

शतावरी-वाजिगन्धा-पयस्यैरण्ड-जीवकैः ।
तैलं विपक्वं स-क्षीरं पालीनां पुष्टि-कृत् परम् ॥ ४० ॥

कल्केन जीवनीयेन तैलं पयसि पाचितम् ।
आनूप-मांस-क्वाथे च पाली-पोषण-वर्धनम् ॥ ४१ ॥

१८.४१cv आनूप-मांस-क्वाथेन पालीं छित्त्वाति-संक्षीणां शेषां संधाय पोषयेत् ।
याप्यैवं तन्त्रिकाख्यापि परिपोटे ऽप्य् अयं विधिः ॥ ४२ ॥

उत्पाते शीतलैर् लेपो जलौको-हृत-शोणिते ।
जम्ब्व्-आम्र-पल्लव-बला-यष्टी-लोध्र-तिलोत्पलैः ॥ ४३ ॥

स-धान्याम्लैः स-मञ्जिष्ठैः स-कदम्बैः स-शारिवैः ।
सिद्धम् अभ्यञ्जने तैलं विसर्पोक्त-घृतानि च ॥ ४४ ॥

१८.४४cv सिद्धम् अभ्यञ्जनं तैलं उन्मन्थे ऽभ्यञ्जनं तैलं गोधा-कर्क-वसान्वितम् ।
तालपत्त्र्य्-अश्वगन्धार्क-वाकुची-फल-सैन्धवैः ॥ ४५ ॥

१८.४५bv गोधा-कर्कि-वसान्वितम् १८.४५dv -वाकुची-तिल-सैन्धवैः सुरसा-लाङ्गलीभ्यां च सिद्धं तीक्ष्णं च नावनम् ।
दुर्-विद्धे ऽश्मन्त-जम्ब्व्-आम्र-पत्त्र-क्वाथेन सेचिताम् ॥ ४६ ॥

१८.४६bv सिद्धं तीक्ष्णं तु नावनम् तैलेन पालीं स्व्-अभ्यक्तां सु-श्लक्ष्णैर् अवचूर्णयेत् ।
चूर्णैर् मधुक-मञ्जिष्ठा-प्रपुण्ड्राह्व-निशोद्भवैः ॥ ४७ ॥

१८.४७dv -प्रपौण्ड्राह्व-निशोद्भवैः १८.४७dv -पौण्डरीक-निशोद्भवैः लाक्षा-विडङ्ग-सिद्धं च तैलम् अभ्यञ्जने हितम् ।
स्विन्नां गो-मय-जैः पिण्डैर् बहु-शः परिलेहिकाम् ॥ ४८ ॥

विडङ्ग-सारैर् आलिम्पेद् उरभ्री-मूत्र-कल्कितैः ।
कौटजेङ्गुद-कारञ्ज-बीज-शम्याक-वल्कलैः ॥ ४९ ॥

अथ-वाभ्यञ्जनं तैर् वा कटु-तैलं विपाचयेत् ।
स-निम्ब-पत्त्र-मरिच-मदनैर् लेहिका-व्रणे ॥ ५० ॥

छिन्नं तु कर्णं शुद्धस्य बन्धम् आलोच्य यौगिकम् ।
शुद्धास्रं लागयेल् लग्ने सद्यश्-छिन्ने विशोधनम् ॥ ५१ ॥

१८.५१dv सम्यक्-छिन्ने विशोधनम् अथ ग्रथित्वा केशान्तं कृत्वा छेदन-लेखनम् ।
निवेश्य संधिं सुषमं न निम्नं न समुन्नतम् ॥ ५२ ॥

अभ्यज्य मधु-सर्पिर्भ्यां पिचु-प्लोतावगुण्ठितम् ।
सूत्रेणा-गाढ-शिथिलं बद्ध्वा चूर्णैर् अवाकिरेत् ॥ ५३ ॥

शोणित-स्थापनैर् व्रण्यम् आचारं चादिशेत् ततः ।
सप्ताहाद् आम-तैलाक्तं शनैर् अपनयेत् पिचुम् ॥ ५४ ॥

१८.५४av शोणितास्थापनैर् व्रण्यम् सु-रूढं जात-रोमाणं श्लिष्ट-संधिं समं स्थिरम् ।
सु-वर्ष्माणम् अ-रोगं च शनैः कर्णं विवर्धयेत् ॥ ५५ ॥

१८.५५cv सु-वर्ष्माणं सु-रोमं च जल-शूकः स्वयङ्गुप्ता रजन्यौ बृहती-फलम् ।
अश्वगन्धा-बला-हस्ति-पिप्पली-गौर-सर्षपाः ॥ ५६ ॥

मूलं कोशातकाश्वघ्न-रूपिका-सप्तपर्ण-जम् ।
छुच्छुन्दरी काल-मृता गृहं मधु-करी-कृतम् ॥ ५७ ॥

जतूका जल-जन्मा च तथा शबरकन्दकम् ।
एभिः कल्कैः खरं पक्वं स-तैलं माहिषं घृतम् ॥ ५८ ॥

१८.५८bv तथा शबरकन्दकः हस्त्य्-अश्व-मूत्रेण परम् अभ्यङ्गात् कर्ण-वर्धनम् ।
अथ कुर्याद् वयः-स्थस्य च्छिन्नां शुद्धस्य नासिकाम् ॥ ५९ ॥

छिन्द्यान् नासा-समं पत्त्रं तत्-तुल्यं च कपोलतः ।
त्वङ्-मांसं नासिकासन्ने रक्षंस् तत् तनु-तां नयेत् ॥ ६० ॥

सीव्येद् गण्डं ततः सूच्या सेविन्या पिचु-युक्तया ।
नासा-च्छेदे ऽथ लिखिते परिवर्त्योपरि त्वचम् ॥ ६१ ॥

१८.६१cv नासा-च्छेदे सु-लिखिते कपोल-वध्रं संदध्यात् सीव्येन् नासां च यत्नतः ।
नाडीभ्याम् उत्क्षिपेद् अन्तः सुखोच्छ्वास-प्रवृत्तये ॥ ६२ ॥

१८.६२av कपोल-बन्धं संदध्यात् १८.६२av कपोल-वध्रीं संदध्यात् आम-तैलेन सिक्त्वानु पत्तङ्ग-मधुकाञ्जनैः ।
शोणित-स्थापनैश् चान्यैः सु-श्लक्ष्णैर् अवचूर्णयेत् ॥ ६३ ॥

१८.६३bv पतङ्ग-मधुकाञ्जनैः १८.६३cv शोणितास्थापनैश् चान्यैः ततो मधु-घृताभ्यक्तं बद्ध्वाचारिकम् आदिशेत् ।
ज्ञात्वावस्थान्तरं कुर्यात् सद्यो-व्रण-विधिं ततः ॥ ६४ ॥

१८.६४bv बद्ध्वाचारम् अथादिशेत् छिन्द्याद् रूढे ऽधिकं मांसं नासोपान्ताच् च चर्म तत् ।
सीव्येत् ततश् च सु-श्लक्ष्णं हीनं संवर्धयेत् पुनः ॥ ६५ ॥

१८.६५bv नासोपान्ताच् च चर्म-वत् निवेशिते यथा-न्यासं सद्यश्-छिन्ने ऽप्य् अयं विधिः ।
नाडी-योगाद् विनौष्ठस्य नासा-संधान-वद् विधिः ॥ ६६ ॥

१८.६६bv सद्यश्-छेदे ऽप्य् अयं विधिः

# अध्याय 19

अवश्यायानिल-रजो-भाष्याति-स्वप्न-जागरैः ।
नीचात्य्-उच्चोपधानेन पीतेनान्येन वारिणा ॥ १ ॥

अत्य्-अम्बु-पान-रमण-च्छर्दि-बाष्प-ग्रहादिभिः ।
क्रुद्धा वातोल्बणा दोषा नासायां स्त्यान-तां गताः ॥ २ ॥

१९.२cv क्षुब्धा वातोल्बणा दोषा १९.२cv वृद्धा वातोल्बणा दोषा जनयन्ति प्रतिश्यायं वर्धमानं क्षय-प्रदम् ।
तत्र वातात् प्रतिश्याये मुख-शोषो भृशं क्षवः ॥ ३ ॥

घ्राणोपरोध-निस्तोद-दन्त-शङ्ख-शिरो-व्यथाः ।
कीटिका इव सर्पन्तीर् मन्यते परितो भ्रुवौ ॥ ४ ॥

१९.४cv कीटका इव सर्पन्ति स्वर-सादश् चिरात् पाकः शिशिराच्छ-कफ-स्रुतिः ।
पित्तात् तृष्णा-ज्वर-घ्राण-पिटिका-संभव-भ्रमाः ॥ ५ ॥

१९.५cv पित्तात् तृष्णा-ज्वरो घ्राणे १९.५dv पिटिका-संभव-भ्रमाः नासाग्र-पाको रूक्षोष्ण-ताम्र-पीत-कफ-स्रुतिः ।
कफात् कासो ऽ-रुचिः श्वासो वमथुर् गात्र-गौरवम् ॥ ६ ॥

माधुर्यं वदने कण्डूः स्निग्ध-शुक्ल-कफ-स्रुतिः ।
सर्व-जो लक्षणैः सर्वैर् अ-कस्माद् वृद्धि-शान्ति-मान् ॥ ७ ॥

१९.७bv स्निग्ध-शुक्ल-घन-स्रुतिः १९.७bv स्निग्ध-शुक्ल-घना स्रुतिः दुष्टं नासा-सिराः प्राप्य प्रतिश्यायं करोत्य् असृक् ।
उरसः सुप्त-ता ताम्र-नेत्र-त्वं श्वास-पूति-ता ॥ ८ ॥

कण्डूः श्रोत्राक्षि-नासासु पित्तोक्तं चात्र लक्षणम् ।
सर्व एव प्रतिश्याया दुष्ट-तां यान्त्य् उपेक्षिताः ॥ ९ ॥

१९.९bv पित्तोत्थं चात्र लक्षणम् यथोक्तोपद्रवाधिक्यात् स सर्वेन्द्रिय-तापनः ।
साग्नि-साद-ज्वर-श्वास-कासोरः-पार्श्व-वेदनः ॥ १० ॥

कुप्यत्य् अ-कस्माद् बहु-शो मुख-दौर्गन्ध्य-शोफ-कृत् ।
नासिका-क्लेद-संशोष-शुद्धि-रोध-करो मुहुः ॥ ११ ॥

१९.११bv मुख-दौर्गन्ध्य-शोष-कृत् पूयोपमासिता-रक्त-ग्रथित-श्लेष्म-संस्रुतिः ।
मूर्छन्ति चात्र कृमयो दीर्घ-स्निग्ध-सिताणवः ॥ १२ ॥

१९.१२av पूयोपमासिता रक्ता १९.१२bv -ग्रथिता श्लेष्म-संस्रुतिः १९.१२bv ग्रथित-श्लेष्म-संस्रुतिः पक्व-लिङ्गानि तेष्व् अङ्ग-लाघवं क्षवथोः शमः ।
श्लेष्मा स-चिक्कणः पीतो ऽ-ज्ञानं च रस-गन्धयोः ॥ १३ ॥

१९.१३dv ज्ञानं च रस-गन्धयोः तीक्ष्णाघ्राणोपयोगार्क-रश्मि-सूत्र-तृणादिभिः ।
वात-कोपिभिर् अन्यैर् वा नासिका-तरुणास्थनि ॥ १४ ॥

१९.१४av तीक्ष्ण-घ्राणोपयोगार्क- विघट्टिते ऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजेत् ।
निवृत्तः कुरुते ऽत्य्-अर्थं क्षवथुं स भृश-क्षवः ॥ १५ ॥

१९.१५bv रुद्धः शृङ्गाटकं व्रजन् १९.१५dv क्षवथुं स भृशङ्-क्षवः शोषयन् नासिका-स्रोतः कफं च कुरुते ऽनिलः ।
शूक-पूर्णाभ-नासा-त्वं कृच्छ्राद् उच्छ्वसनं ततः ॥ १६ ॥

१९.१६av शोषयेन् नासिका-स्रोतः १९.१६cv शूक-पूर्णाभ-कण्ठ-त्वं १९.१६cv शूक-पूर्णाभ-नास-त्वं स्मृतो ऽसौ नासिका-शोषो नासानाहे तु जायते ।
नद्ध-त्वम् इव नासायाः श्लेष्म-रुद्धेन वायुना ॥ १७ ॥

निःश्वासोच्छ्वास-संरोधात् स्रोतसी संवृते इव ।
पचेन् नासा-पुटे पित्तं त्वङ्-मांसं दाह-शूल-वत् ॥ १८ ॥

स घ्राण-पाकः स्रावस् तु तत्-संज्ञः श्लेष्म-संभवः ।
अच्छो जलोपमो ऽजस्रं विशेषान् निशि जायते ॥ १९ ॥

कफः प्रवृद्धो नासायां रुद्ध्वा स्रोतांस्य् अ-पीनसम् ।
कुर्यात् स-घुर्घुर-श्वासं पीनसाधिक-वेदनम् ॥ २० ॥

१९.२०bv रुद्धः स्रोतःसु पीनसम् अवेर् इव स्रवत्य् अस्य प्रक्लिन्ना तेन नासिका ।
अजस्रं पिच्छिलं पीतं पक्वं सिङ्घाणकं घनम् ॥ २१ ॥

रक्तेन नासा दग्धेव बाह्यान्तः-स्पर्शना-सहा ।
भवेद् धूमोपमोच्छ्वासा सा दीप्तिर् दहतीव च ॥ २२ ॥

तालु-मूले मलैर् दुष्टैर् मारुतो मुख-नासिकात् ।
श्लेष्मा च पूतिर् निर्गच्छेत् पूति-नासं वदन्ति तम् ॥ २३ ॥

निचयाद् अभिघाताद् वा पूयासृङ् नासिका स्रवेत् ।
तत् पूय-रक्तम् आख्यातं शिरो-दाह-रुजा-करम् ॥ २४ ॥

पित्त-श्लेष्मावरुद्धो ऽन्तर् नासायां शोषयेन् मरुत् ।
कफं स शुष्कः पुट-तां प्राप्नोति पुटकं तु तत् ॥ २५ ॥

१९.२५cv कफं स शुष्क-पुट-तां अर्शो-ऽर्बुदानि विभजेद् दोष-लिङ्गैर् यथा-यथम् ।
सर्वेषु कृच्छ्रोच्छ्वसनं पीनसः प्रततं क्षुतिः ॥ २६ ॥

१९.२६dv पीनसः प्रततं क्षवः १९.२६dv पीनसः सततं क्षुतिः सानुनासिक-वादि-त्वं पूति-नासः शिरो-व्यथा ।
अष्टा-दशानाम् इत्य् एषां यापयेद् दुष्ट-पीनसम् ॥ २७ ॥

१९.२७bv पूति-नासा शिरो-व्यथा १९.२७bv पूतिर् नासा शिरो-व्यथा १९.२७cv अष्टा-दशानाम् एतेषां १९.२७dv यापयेद् दुष्ट-पीनसान् १९.२७dv वर्जयेद् दुष्ट-पीनसम्

# अध्याय 20

सर्वेषु पीनसेष्व् आदौ निवातागार-गो भजेत् ।
स्नेहन-स्वेद-वमन-धूम-गण्डूष-धारणम् ॥ १ ॥

२०.१bv निवातागार-गो भवेत् वासो गुरूष्णं शिरसः सु-घनं परिवेष्टनम् ।
लघ्व्-अम्ल-लवणं स्निग्धम् उष्णं भोजनम् अ-द्रवम् ॥ २ ॥

२०.२cv लघ्व्-अम्ल-लवण-स्निग्धम् २०.२cv लघ्व् अम्लं लवणं स्निग्धम् धन्व-मांस-गुड-क्षीर-चणक-त्रि-कटूत्कटम् ।
यव-गोधूम-भूयिष्ठं दधि-दाडिम-सारिकम् ॥ ३ ॥

२०.३dv दधि-दाडिम-साधितम् बाल-मूलक-जो यूषः कुलत्थोत्थश् च पूजितः ।
कवोष्णं दश-मूलाम्बु जीर्णां वा वारुणीं पिबेत् ॥ ४ ॥

जिघ्रेच् चोरक-तर्कारी-वचाजाज्य्-उपकुञ्चिकाः ।
व्योष-तालीश-चविका-तिन्तिडीकाम्ल-वेतसम् ॥ ५ ॥

मनःशिला-विडङ्गाल-वचा-त्रि-कटु-हिङ्गुभिः ।
चूर्णी-कृत्य समाघ्रातः प्रतिश्यायो विनश्यति ॥ ५.१+१ ॥

तद्-वद् दोरक-वल्ल्य्-एला-लवा-ताक्ष्र्य-द्वि-जीरकैः ॥ ५.१+२अब् ॥
साग्न्य्-अजाजि द्वि-पलिकं त्वग्-एला-पत्त्र-पादिकम् ।
जीर्णाद् गुडात् तुलार्धेन पक्वेन वटकी-कृतम् ॥ ६ ॥

पीनस-श्वास-कास-घ्नं रुचि-स्वर-करं परम् ।
शताह्वा-त्वग्-बला मूलं श्योणाकैरण्ड-बिल्व-जम् ॥ ७ ॥

सारग्वधं पिबेद् धूमं वसाज्य-मदनान्वितम् ।
अथ-वा स-घृतान् सक्तून् कृत्वा मल्लक-संपुटे ॥ ८ ॥

त्यजेत् स्नानं शुचं क्रोधं भृशं शय्यां हिमं जलम् ।
पिबेद् वात-प्रतिश्याये सर्पिर् वात-घ्न-साधितम् ॥ ९ ॥

पटु-पञ्चक-सिद्धं वा विदार्य्-आदि-गणेन वा ।
स्वेद-नस्यादिकां कुर्यात् चिकित्साम् अर्दितोदिताम् ॥ १० ॥

पित्त-रक्तोत्थयोः पेयं सर्पिर् मधुरकैः शृतम् ।
परिषेकान् प्रदेहांश् च शीतैः कुर्वीत शीतलान् ॥ ११ ॥

धव-त्वक्-त्रि-फला-श्यामा-श्रीपर्णी-यष्टि-तिल्वकैः ।
क्षीरे दश-गुणे तैलं नावनं स-निशैः पचेत् ॥ १२ ॥

२०.१२bv -श्रीपर्णी-यष्टि-बिल्वकैः कफ-जे लङ्घनं लेपः शिरसो गौर-सर्षपैः ।
स-क्षारं वा घृतम् पीत्वा वमेत् पिष्टैस् तु नावनम् ॥ १३ ॥

२०.१३cv स-क्षारं च घृतं पीत्वा २०.१३cv स-क्षारं तु घृतं पीत्वा बस्ताम्बुना पटु-व्योष-वेल्ल-वत्सक-जीरकैः ।
कटु-तीक्ष्णैर् घृतैर् नस्यैः कवडैः सर्व-जं जयेत् ॥ १४ ॥

यक्ष्म-कृमि-क्रमं कुर्वन् यापयेद् दुष्ट-पीनसम् ।
व्योषोरुबूक-कृमिजिद्-दारु-माद्री-गदेङ्गुदम् ॥ १५ ॥

२०.१५av यक्ष्म-कृमि-क्रमं कुर्यात् २०.१५dv -दारु-माद्र्य्-अम्बुदेङ्गुदम् वार्ताक-बीजं त्रिवृता सिद्धार्थः पूति-मत्स्यकः ।
अग्निमन्थस्य पुष्पाणि पीलु-शिग्रु-फलानि च ॥ १६ ॥

अश्व-विड्-रस-मूत्राभ्यां हस्ति-मूत्रेण चैकतः ।
क्षौम-गर्भां कृतां वर्तिं धूमं घ्राणास्यतः पिबेत् ॥ १७ ॥

क्षवथौ पुटकाख्ये च तीक्ष्णैः प्रधमनं हितम् ।
शुण्ठी-कुष्ठ-कणा-वेल्ल-द्राक्षा-कल्क-कषाय-वत् ॥ १८ ॥

साधितं तैलम् आज्यं वा नस्यं क्षव-पुट-प्रणुत् ।
नासा-शोषे बला-तैलं पानादौ भोजनं रसैः ॥ १९ ॥

स्निग्धो धूमस् तथा स्वेदो नासानाहे ऽप्य् अयं विधिः ।
पाके दीप्तौ च पित्त-घ्नं तीक्ष्णं नस्यादि संस्रुतौ ॥ २० ॥

२०.२०dv तीक्ष्णं नस्यादि शस्यते कफ-पीनस-वत् पूति-नासा-पीनसयोः क्रिया ।
लाक्षा-करञ्ज-मरिच-वेल्ल-हिङ्गु-कणा-गुडैः ॥ २१ ॥

अवि-मूत्र-द्रुतैर् नस्यं कारयेद् वमने कृते ।
शिग्रु-सिंही-निकुम्भानां बीजैः स-व्योष-सैन्धवैः ॥ २२ ॥

स-वेल्ल-सुरसैस् तैलं नावनं परमं हितम् ।
पूय-रक्ते नवे कुर्याद् रक्त-पीनस-वत् क्रमम् ॥ २३ ॥

२०.२३dv रक्त-पीनस-वत् क्रियाम् अति-प्रवृद्धे नाडी-वद् दग्धेष्व् अर्शो-ऽर्बुदेषु च ।
निकुम्भ-कुम्भ-सिन्धूत्थ-मनोह्वाल-कणाग्निकैः ॥ २४ ॥

२०.२४bv दग्धेष्व् अर्शो-ऽर्बुदेषु तु कल्कितैर् घृत-मध्व्-अक्तां घ्राणे वर्तिं प्रवेशयेत् ।
शिग्र्व्-आदि-नावनं चात्र पूति-नासोदितं भजेत् ॥ २५ ॥

२०.२५av कल्कितैर् घृत-मध्व्-आक्तां

# अध्याय 21

मात्स्य-माहिष-वाराह-पिशितामक-मूलकम् ।
माष-सूप-दधि-क्षीर-शुक्तेक्षु-रस-फाणितम् ॥ १ ॥

२१.१av मत्स्य-माहिष-वाराह- अवाक्-शय्यां च भजतो द्विषतो दन्त-धावनम् ।
धूम-च्छर्दन-गण्डूषान् उचितं च सिरा-व्यधम् ॥ २ ॥

क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वन्त्य् अन्तर् मुखं गदान् ।
तत्र खण्डौष्ठ इत्य् उक्तो वातेनौष्ठो द्वि-धा कृतः ॥ ३ ॥

२१.३bv कुर्वन्त्य् अन्तर्-मुखे गदान् ओष्ठ-कोपे तु पवनात् स्तब्धाव् ओष्ठौ महा-रुजौ ।
दाल्येते परिपाट्येते परुषासित-कर्कशौ ॥ ४ ॥

पित्तात् तीक्ष्ण-सहौ पीतौ सर्षपाकृतिभिश् चितौ ।
पिटिकाभिर् बहु-क्लेदाव् आशु-पाकौ कफात् पुनः ॥ ५ ॥

२१.५cv पिटिकाभिर् महा-क्लेदाव् शीता-सहौ गुरू शूनौ स-वर्ण-पिटिकाचितौ ।
संनिपाताद् अनेकाभौ दुर्-गन्धास्राव-पिच्छिलौ ॥ ६ ॥

२१.६dv दुर्-गन्ध-स्राव-पिच्छिलौ २१.६dv दुर्-गन्धाव् अति-पिच्छिलौ अ-कस्मान् म्लान-संशून-रुजौ विषम-पाकिनौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणित-प्रभौ ॥ ७ ॥

खर्जूर-सदृशं चात्र क्षीणे रक्ते ऽर्बुदं भवेत् ।
मांस-पिण्डोपमौ मांसात् स्यातां मूर्छत्-कृमी क्रमात् ॥ ८ ॥

तैलाभ-श्वयथु-क्लेदौ स-कण्ड्वौ मेदसा मृदू ।
क्षत-जाव् अवदीर्येते पाट्येते चा-सकृत् पुनः ॥ ९ ॥

२१.९bv स-कण्डू मेदसा मृदू २१.९dv पाट्येते वा-सकृत् पुनः ग्रथितौ च पुनः स्यातां कण्डूलौ दशन-च्छदौ ।
जल-बुद्बुद-वद् वात-कफाद् ओष्ठे जलार्बुदम् ॥ १० ॥

गण्डालजी स्थिरः शोफो गण्डे दाह-ज्वरान्वितः ।
वाताद् उष्ण-सहा दन्ताः शीत-स्पर्शे ऽधिक-व्यथाः ॥ ११ ॥

दाल्यन्त इव शूलेन शीताख्यो दालनश् च सः ।
दन्त-हर्षे प्रवाताम्ल-शीत-भक्षा-क्षमा द्वि-जाः ॥ १२ ॥

२१.१२dv -शीत-भक्ष्या-सहा द्वि-जाः भवन्त्य् अम्लाशनेनेव स-रुजाश् चलिता इव ।
दन्त-भेदे द्वि-जास् तोद-भेद-रुक्-स्फुटनान्विताः ॥ १३ ॥

२१.१३bv स-रुजश् चलिता इव २१.१३dv -भेद-रुक्-वेदनान्विताः चालश् चलद्भिर् दशनैर् भक्षणाद् अधिक-व्यथैः ।
करालस् तु करालानां दशनानां समुद्गमः ॥ १४ ॥

२१.१४dv दशनानां समुद्भवः २१.१४dv दशनानां समुद्भवे दन्तो ऽधिको ऽधि-दन्ताख्यः स चोक्तः खलु वर्धनः ।
जायमाने ऽति-रुग् दन्ते जाते तत्र तु शाम्यति ॥ १५ ॥

२१.१५cv जायते जायमाने ऽति २१.१५dv रुग् जाते तत्र शाम्यति अ-धावनान् मलो दन्ते कफो वा वात-शोषितः ।
पूति-गन्धिः स्थिरी-भूतः शर्करा साप्य् उपेक्षिता ॥ १६ ॥

२१.१६cv पूति-गन्धः स्थिरी-भूतः २१.१६dv शर्करा सो ऽप्य् उपेक्षितः शातयत्य् अणु-शो दन्तात् कपालानि कपालिका ।
श्यावः श्याव-त्वम् आयातो रक्त-पित्तानिलैर् द्वि-जः ॥ १७ ॥

२१.१७av शातयत्य् अणु-शो दन्त- २१.१७bv -कपालानि कपालिका २१.१७cv श्यावः श्याव-त्वम् आयाता २१.१७dv रक्त-पित्तानिलैर् द्वि-जाः
स-मूलं दन्तम् आश्रित्य दोषैर् उल्बण-मारुतैः ।
शोषिते मज्ज्ञि सुषिरे दन्ते ऽन्न-मल-पूरिते ॥ १८ ॥

पूति-त्वात् कृमयः सूक्ष्मा जायन्ते जायते ततः ।
अ-हेतु-तीव्रार्ति-शमः स-संरम्भो ऽसितश् चलः ॥ १९ ॥

प्रलूनः पूय-रक्त-स्रुत् स चोक्तः कृमि-दन्तकः ।
श्लेष्म-रक्तेन पूतीनि वहन्त्य् अस्रम् अ-हेतुकम् ॥ २० ॥

२१.२०av प्रभूत-पूय-रक्त-स्रुत् शीर्यन्ते दन्त-मांसानि मृदु-क्लिन्नासितानि च ।
शीतादो ऽसाव् उप-कुशः पाकः पित्तासृग्-उद्भवः ॥ २१ ॥

दन्त-मांसानि दह्यन्ते रक्तान्य् उत्सेध-वन्त्य् अतः ।
कण्डू-मन्ति स्रवन्त्य् अस्रम् आध्मायन्ते ऽसृजि स्थिते ॥ २२ ॥

चला मन्द-रुजो दन्ताः पूति वक्त्रं च जायते ।
दन्तयोस् त्रिषु वा शोफो बदरास्थि-निभो घनः ॥ २३ ॥

कफास्रात् तीव्र-रुक् शीघ्रं पच्यते दन्त-पुप्पुटः ।
दन्त-मांसे मलैः सास्रैर् बाह्यान्तः श्वयथुर् गुरुः ॥ २४ ॥

स-रुग्-दाहः स्रवेद् भिन्नः पूयास्रं दन्त-विद्रधिः ।
श्वयथुर् दन्त-मूलेषु रुजा-वान् पित्त-रक्त-जः ॥ २५ ॥

२१.२५bv पूयास्रे दन्त-विद्रधिः लाला-स्रावी स सुषिरो दन्त-मांस-प्रशातनः ।
स संनिपाताज् ज्वर-वान् स-पूय-रुधिर-स्रुतिः ॥ २६ ॥

२१.२६cv स संनिपात-ज्वर-वान् महा-सुषिर इत्य् उक्तो विशीर्ण-द्वि-ज-बन्धनः ।
दन्तान्ते कील-वच् छोफो हनु-कर्ण-रुजा-करः ॥ २७ ॥

२१.२७bv विशीर्ण-रद-बन्धनः प्रतिहन्त्य् अभ्यवहृतिम् श्लेष्मणा सो ऽधि-मांसकः ।
घृष्टेषु दन्त-मांसेषु संरम्भो जायते महान् ॥ २८ ॥

यस्मिंश् चलन्ति दन्ताश् च स विदर्भो ऽभिघात-जः ।
दन्त-मांसाश्रितान् रोगान् यः साध्यान् अप्य् उपेक्षते ॥ २९ ॥

२१.२९bv स वैदर्भो ऽभिघात-जः अन्तस् तस्यास्रवन् दोषः सूक्ष्मां संजनयेद् गतिम् ।
पूयं मुहुः सा स्रवति त्वङ्-मांसास्थि-प्रभेदिनी ॥ ३० ॥

ताः पुनः पञ्च विज्ञेया लक्षणैः स्वैर् यथोदितैः ।
शाक-पत्त्र-खरा सुप्ता स्फुटिता वात-दूषिता ॥ ३१ ॥

जिह्वा पित्तात् स-दाहोषा रक्तैर् मांसाङ्कुरैश् चिता ।
शाल्मली-कण्टकाभैस् तु कफेन बहला गुरुः ॥ ३२ ॥

२१.३२dv कफेन बहुला गुरुः कफ-पित्ताद् अधः शोफो जिह्वा-स्तम्भ-कृद् उन्नतः ।
मत्स्य-गन्धिर् भवेत् पक्वः सो ऽलसो मांस-शातनः ॥ ३३ ॥

प्रबन्धने ऽधो जिह्वायाः शोफो जिह्वाग्र-संनिभः ।
साङ्कुरः कफ-पित्तास्रैर् लालोषा-स्तम्भ-वान् खरः ॥ ३४ ॥

२१.३४av प्रलम्बनो ऽधो जिह्वायाः अधि-जिह्वः स-रुक्-कण्डुर् वाक्याहार-विघात-कृत् ।
तादृग् एवोप-जिह्वस् तु जिह्वाया उपरि स्थितः ॥ ३५ ॥

तालु-मांसे ऽनिलाद् दुष्टे पिटिकाः स-रुजः खराः ।
बह्व्यो घनाः स्राव-युतास् तास् तालु-पिटिकाः स्मृताः ॥ ३६ ॥

२१.३६bv पिटिकाः स-रुजाः खराः २१.३६cv बह्व्यो घनाः स्राव-युक्तास् तालु-मूले कफात् सास्रान् मत्स्य-वस्ति-निभो मृदुः ।
प्रलम्बः पिच्छिलः शोफो नासयाहारम् ईरयन् ॥ ३७ ॥

कण्ठोपरोध-तृट्-कास-वमि-कृत् गल-शुण्डिका ।
तालु-मध्ये नि-रुङ् मांसं संहतं तालु-संहतिः ॥ ३८ ॥

पद्माकृतिस् तालु-मध्ये रक्ताच् छ्वयथुर् अर्बुदम् ।
कच्छपः कच्छपाकारश् चिर-वृद्धिः कफाद् अ-रुक् ॥ ३९ ॥

कोलाभः श्लेष्म-मेदोभ्यां पुप्पुटो नी-रुजः स्थिरः ।
पित्तेन पाकः पाकाख्यः पूयास्रावी महा-रुजः ॥ ४० ॥

वात-पित्त-ज्वरायासैस् तालु-शोषस् तद्-आह्वयः ।
जिह्वा-प्रबन्ध-जाः कण्ठे दारुणा मार्ग-रोधिनः ॥ ४१ ॥

मांसाङ्कुराः शीघ्र-चया रोहिणी शीघ्र-कारिणी ।
कण्ठास्य-शोष-कृद् वातात् सा हनु-श्रोत्र-रुक्-करी ॥ ४२ ॥

२१.४२bv रोहिणी साशु-कारिणी पित्ताज् ज्वरोषा-तृण्-मोह-कण्ठ-धूमायनान्विता ।
क्षिप्र-जा क्षिप्र-पाकाति-रागिणी स्पर्शना-सहा ॥ ४३ ॥

कफेन पिच्छिला पाण्डुर् असृजा स्फोटकाचिता ।
तप्ताङ्गार-निभा कर्ण-रुक्-करी पित्त-जाकृतिः ॥ ४४ ॥

गम्भीर-पाका निचयात् सर्व-लिङ्ग-समन्विता ।
दोषैः कफोल्बणैः शोफः कोल-वद् ग्रथितोन्नतः ॥ ४५ ॥

शूक-कण्टक-वत् कण्ठे शालूको मार्ग-रोधनः ।
वृन्दो वृत्तोन्नतो दाह-ज्वर-कृद् गल-पार्श्व-गः ॥ ४६ ॥

हनु-संध्य्-आश्रितः कण्ठे कार्पासी-फल-संनिभः ।
पिच्छिलो मन्द-रुक् शोफः कठिनस् तुण्डिकेरिका ॥ ४७ ॥

२१.४७bv कर्पासी-फल-संनिभः बाह्यान्तः श्वयथुर् घोरो गल-मार्गार्गलोपमः ।
गलौघो मूर्ध-गुरु-ता-तन्द्रा-लाला-ज्वर-प्रदः ॥ ४८ ॥

वलयं नाति-रुक् शोफस् तद्-वद् एवायतोन्नतः ।
मांस-कीलो गले दोषैर् एको ऽनेको ऽथ-वा ऽल्प-रुक् ॥ ४९ ॥

कृच्छ्रोच्छवासाभ्यवहृतिः पृथु-मूलो गिलायुकः ।
भूरि-मांसाङ्कुर-वृता तीव्र-तृड्-ज्वर-मूर्ध-रुक् ॥ ५० ॥

२१.५०bv पृथु-मूलो गलायुकः शत-घ्नी निचिता वर्तिः शत-घ्नीवाति-रुक्-करी ।
व्याप्त-सर्व-गलः शीघ्र-जन्म-पाको महा-रुजः ॥ ५१ ॥

२१.५१av शत-घ्नी-निचितेवान्तः २१.५१bv शत-घ्नी चाति-रुक्-करी पूति-पूय-निभ-स्रावी श्वयथुर् गल-विद्रधिः ।
जिह्वावसाने कण्ठादाव् अ-पाकं श्वयथुं मलाः ॥ ५२ ॥

जनयन्ति स्थिरं रक्तं नी-रुजं तद् गलार्बुदम् ॥ ५३अब् ॥
२१.५३bv नी-रुजं तं गलार्बुदम् पवन-श्लेष्म-मेदोभिर् गल-गण्डो भवेद् बहिः ॥ ५३च्द् ॥
वर्धमानः स कालेन मुष्क-वल् लम्बते ऽति-रुक् ॥ ५३एf ॥
२१.५३fव् मुष्क-वल् लम्बते नि-रुक् कृष्णो ऽरुणो वा तोदाढ्यः स वातात् कृष्ण-राजि-मान् ।
वृद्धस् तालु-गले शोषं कुर्याच् च वि-रसास्य-ताम् ॥ ५४ ॥

स्थिरः स-वर्णः कण्डू-मान् शीत-स्पर्शो गुरुः कफात् ।
वृद्धस् तालु-गले लेपं कुर्याच् च मधुरास्य-ताम् ॥ ५५ ॥

२१.५५cv वृद्धस् तालु-गले शोफं मेदसः श्लेष्म-वद् धानि-वृद्ध्योः सो ऽनुविधीयते ।
देहं वृद्धश् च कुरुते गले शब्दं स्वरे ऽल्प-ताम् ॥ ५६ ॥

श्लेष्म-रुद्धानिल-गतिः शुष्क-कण्ठो हत-स्वरः ।
ताम्यन् प्रसक्तं श्वसिति येन स स्वर-हानिलात् ॥ ५७ ॥

करोति वदनस्यान्तर् व्रणान् सर्व-सरो ऽनिलः ।
संचारिणो ऽरुणान् रूक्षान् ओष्ठौ ताम्रौ चल-त्वचौ ॥ ५८ ॥

जिह्वा शीता-सहा गुर्वी स्फुटिता कण्टकाचिता ।
विवृणोति च कृच्छ्रेण मुखं पाको मुखस्य सः ॥ ५९ ॥

२१.५९dv मुखं पाको मुखस्य च अधः प्रतिहतो वायुर् अर्शो-गुल्म-कफादिभिः ।
यात्य् ऊर्ध्वं वक्त्र-दौर्गन्ध्यं कुर्वन्न् ऊर्ध्व-गुदस् तु सः ॥ ६० ॥

२१.६०dv कुर्वन्न् ऊर्ध्व-गदस् तु सः मुखस्य पित्त-जे पाके दाहोषे तिक्त-वक्त्र-ता ।
क्षारोक्षित-क्षत-समा व्रणास् तद्-वच् च रक्त-जे ॥ ६१ ॥

कफ-जे मधुरास्य-त्वं कण्डू-मत्-पिच्छिला व्रणाः ।
अन्तः-कपोलम् आश्रित्य श्याव-पाण्डु कफो ऽर्बुदम् ॥ ६२ ॥

२१.६२dv श्यावं पाण्डु कफो ऽर्बुदम् कुर्यात् तद् घट्टितं छिन्नं मृदितं च विवर्धते ।
मुख-पाको भवेत् सास्रैः सर्वैः सर्वाकृतिर् मलैः ॥ ६३ ॥

२१.६३av कुर्यात् तत् पाटितं छिन्नं २१.६३av कुर्यात् तद् व्यधितं छिन्नं पूत्य्-आस्य-ता च तैर् एव दन्त-काष्ठादि-विद्विषः ।
ओष्ठे गण्डे द्वि-जे मूले जिह्वायां तालुके गले ॥ ६४ ॥

वक्त्रे सर्व-त्र चेत्य् उक्ताः पञ्च-सप्ततिर् आमयाः ।
एका-दशैको दश च त्रयो-दश तथा च षट् ॥ ६५ ॥

अष्टाव् अष्टा-दशाष्टौ च क्रमात् तेष्व् अन्-उपक्रमाः ।
करालो मांस-रक्तौष्ठाव् अर्बुदानि जलाद् विना ॥ ६६ ॥

२१.६६bv क्रमाद् एष्व् अन्-उपक्रमाः कच्छपस् तालु-पिटिका गलौघः सुषिरो महान् ।
स्वर-घ्नोर्ध्व-गुद-श्याव-शत-घ्नी-वलयालसाः ॥ ६७ ॥

२१.६७cv स्वर-घ्नोर्ध्व-गद-श्याव- नाड्य्-ओष्ठ-कोपौ निचयाद् रक्तात् सर्वैश् च रोहिणी ।
दशने स्फुटिते दन्त-भेदः पक्वोप-जिह्विका ॥ ६८ ॥

गल-गण्डः स्वर-भ्रंशी कृच्छ्रोच्छ्वासो ऽति-वत्सरः ।
याप्यस् तु हर्षो भेदश् च शेषाञ् छस्त्रौषधैर् जयेत् ॥ ६९ ॥

२१.६९av गल-गण्डः स्वर-भ्रंशः

# अध्याय 22

खण्डौष्ठस्य विलिख्यान्तौ स्यूत्वा व्रण-वद् आचरेत् ।
यष्टी-ज्योतिष्मती-लोध्र-श्रावणी-शारिवोत्पलैः ॥ १ ॥

पटोल्या काकमाच्या च तैलम् अभ्यञ्जनं पचेत् ।
नस्यं च तैलं वात-घ्न-मधुर-स्कन्ध-साधितम् ॥ २ ॥

महा-स्नेहेन वातौष्ठे सिद्धेनाक्तः पिचुर् हितः ।
देव-धूप-मधूच्छिष्ट-गुग्गुल्व्-अमरदारुभिः ॥ ३ ॥

यष्ट्य्-आह्व-चूर्ण-युक्तेन तेनैव प्रतिसारणम् ।
नाड्य्-ओष्ठं स्वेदयेद् दुग्ध-सिद्धैर् एरण्ड-पल्लवैः ॥ ४ ॥

२२.४av यष्ट्य्-आह्व-चूर्ण-युक्तैस् तु २२.४bv तैर् एव प्रतिसारणम् खण्डौष्ठ-विहितं नस्यं तस्य मूर्ध्नि च तर्पणम् ।
पित्ताभिघात-जाव् ओष्ठौ जलौकोभिर् उपाचरेत् ॥ ५ ॥

लोध्र-सर्ज-रस-क्षौद्र-मधुकैः प्रतिसारणम् ।
गुडूची-यष्टि-पत्तङ्ग-सिद्धम् अभ्यञ्जने घृतम् ॥ ६ ॥

पित्त-विद्रधि-वच् चात्र क्रिया शोणित-जे ऽपि च ।
इदम् एव नवे कार्यं कर्मौष्ठे तु कफातुरे ॥ ७ ॥

२२.७cv इदम् एव भवेत् कार्यं २२.७dv कर्मौष्ठे तु कफोत्तरे पाठा-क्षार-मधु-व्योषैर् हृतास्रे प्रतिसारणम् ।
धूम-नावन-गण्डूषाः प्रयोज्याश् च कफ-च्छिदः ॥ ८ ॥

स्विन्नं भिन्नं वि-मेदस्कं दहेन् मेदो-जम् अग्निना ।
प्रियङ्गु-लोध्र-त्रि-फला-माक्षिकैः प्रतिसारयेत् ॥ ९ ॥

स-क्षौद्रा घर्षणं तीक्ष्णा भिन्न-शुद्धे जलार्बुदे ।
अवगाढे ऽति-वृद्धे वा क्षारो ऽग्निर् वा प्रतिक्रिया ॥ १० ॥

२२.१०av स-क्षौद्रैर् घर्षणं तीक्ष्णैर् २२.१०dv क्षारो वह्निः प्रतिक्रिया आमाद्य्-अवस्थास्व् अलजीं गण्डे शोफ-वद् आचरेत् ।
स्विन्नस्य शीत-दन्तस्य पालीं विलिखितां दहेत् ॥ ११ ॥

तैलेन प्रतिसार्या च स-क्षौद्र-घन-सैन्धवैः ।
दाडिम-त्वग्-वरा-तार्क्ष्य-कान्ता-जम्ब्व्-अस्थि-नागरैः ॥ १२ ॥

कवडः क्षीरिणां क्वाथैर् अणु-तैलं च नावनम् ।
दन्त-हर्षे तथा भेदे सर्वा वात-हरा क्रिया ॥ १३ ॥

२२.१३cv दन्त-भेदे तथा हर्षे २२.१३dv सर्वा वात-हराः क्रियाः तिल-यष्टीमधु-शृतं क्षीरं गण्डूष-धारणम् ।
स-स्नेहं दश-मूलाम्बु गण्डूषः प्रचलद्-द्वि-जे ॥ १४ ॥

२२.१४cv स-स्नेह-दश-मूलाम्बु- २२.१४dv -गण्डूषाः प्रचले द्वि-जे तुत्थ-लोध्र-कणा-श्रेष्ठा-पत्तङ्ग-पटु-घर्षणम् ।
स्निग्धाः शील्या यथावस्थं नस्यान्न-कवडादयः ॥ १५ ॥

२२.१५dv गण्डूष-कवडादयः अधि-दन्तकम् आलिप्तं यदा क्षारेण जर्जरम् ।
कृमि-दन्तम् इवोत्पाट्य तद्-वच् चोपचरेत् तदा ॥ १६ ॥

अन्-अवस्थित-रक्ते च दग्धे व्रण इव क्रिया ।
अ-हिंसन् दन्त-मूलानि दन्तेभ्यः शर्करां हरेत् ॥ १७ ॥

क्षार-चूर्णैर् मधु-युतैस् ततश् च प्रतिसारयेत् ।
कपालिकायाम् अप्य् एवं हर्षोक्तं च समाचरेत् ॥ १८ ॥

जयेद् विस्रावणैः स्विन्नम् अ-चलं कृमि-दन्तकम् ।
स्निग्धैश् चालेप-गण्डूष-नस्याहारैश् चलापहैः ॥ १९ ॥

२२.१९bv अ-बलं कृमि-दन्तकम् गुडेन पूर्णं सुषिरं मधूच्छिष्टेन वा दहेत् ।
सप्तच्छदार्क-क्षीराभ्यां पूरणं कृमि-शूल-जित् ॥ २० ॥

हिङ्गु-कट्फल-कासीस-स्वर्जिका-कुष्ठ-वेल्ल-जम् ।
रजो रुजं जयत्य् आशु वस्त्र-स्थं दशने घृतम् ॥ २१ ॥

२२.२१dv वस्त्र-स्थं दशनैर् घृतम् अलक्तकं वा सिन्धूत्थं वेल्ल-धूमं स-हिङ्गु वा ।
धान्याम्ल-सिद्धं शेवालं कोष्णं वा दशन-स्थितम् ॥ २१+१ ॥

२२.२१+१bv वेश्म-धूमं स-हिङ्गु वा वराहकर्णी-मूलं वा शरपुङ्खा-जटाथ-वा ।
वर्तिर् वावल्गुज-फलैर् बीजपूर-जटान्वितैः ॥ २१+२ ॥

गण्डूषं ग्राहयेत् तैलम् एभिर् एव च साधितम् ।
क्वाथैर् वा युक्तम् एरण्ड-द्वि-व्याघ्री-भूकदम्ब-जैः ॥ २२ ॥

२२.२२av गण्डूषं धारयेत् तैलम् २२.२२dv -व्याघ्री-भूर्ज-कदम्बकैः क्रिया-योगैर् बहु-विधैर् इत्य् अ-शान्त-रुजं भृशम् ।
दृढम् अप्य् उद्धरेद् दन्तं पूर्वं मूलाद् विमोक्षितम् ॥ २३ ॥

संदंशकेन लघुना दन्त-निर्घातनेन वा ।
तैलं स-यष्ट्य्-आह्व-रजो गण्डूषो मधु वा ततः ॥ २४ ॥

२२.२४dv गण्डूषो मधुना ततः ततो विदारि-यष्ट्य्-आह्व-शृङ्गाटक-कसेरुभिः ।
तैलं दश-गुण-क्षीरं सिद्धं युञ्जीत नावनम् ॥ २५ ॥

कृश-दुर्-बल-वृद्धानां वातार्तानां च नोद्धरेत् ।
नोद्धरेच् चोत्तरं दन्तं बहूपद्रव-कृद् धि सः ॥ २६ ॥

एषाम् अप्य् उद्धृतौ स्निग्ध-स्वादु-शीत-क्रमो हितः ।
विस्रावितास्रे शीतादे स-क्षौद्रैः प्रतिसारणम् ॥ २७ ॥

२२.२७av एषाम् अप्य् उद्धृतैः स्निग्ध- मुस्तार्जुन-त्वक्-त्रि-फला-फलिनी-तार्क्ष्य-नागरैः ।
तत्-क्वाथः कवडो नस्यं तैलं मधुर-साधितम् ॥ २८ ॥

दन्त-मांसान्य् उप-कुशे स्विन्नान्य् उष्णाम्बु-धारणैः ।
मण्डलाग्रेण शाकादि-पत्त्रैर् वा बहु-शो लिखेत् ॥ २९ ॥

ततश् च प्रतिसार्याणि घृत-मण्ड-मधु-द्रुतैः ।
लाक्षा-प्रियङ्गु-पत्तङ्ग-लवणोत्तम-गैरिकैः ॥ ३० ॥

२२.३०bv घृत-मण्ड-मधु-प्लुतैः स-कुष्ठ-शुण्ठी-मरिच-यष्टीमधु-रसाञ्जनैः ।
सुखोष्णो घृत-मण्डो ऽनु तैलं वा कवड-ग्रहः ॥ ३१ ॥

२२.३१dv तैलं वा कवड-ग्रहे घृतं च मधुरैः सिद्धं हितं कवड-नस्ययोः ।
दन्त-पुप्पुटके स्विन्न-च्छिन्न-भिन्न-विलेखिते ॥ ३२ ॥

२२.३२av घृतं वा मधुरैः सिद्धं यष्ट्य्-आह्व-स्वर्जिका-शुण्ठी-सैन्धवैः प्रतिसारणम् ।
विद्रधौ कटु-तीक्ष्णोष्ण-रूक्षैः कवड-लेपनम् ॥ ३३ ॥

घर्षणं कटुका-कुष्ठ-वृश्चिकाली-यवोद्भवैः ।
रक्षेत् पाकं हिमैः पक्वः पाट्यो दाह्यो ऽवगाढकः ॥ ३४ ॥

सुषिरे छिन्न-लिखिते स-क्षौद्रैः प्रतिसारणम् ।
लोध्र-मुस्त-मिशि-श्रेष्ठा-ताक्ष्र्य-पत्तङ्ग-किंशुकैः ॥ ३५ ॥

२२.३५av सौषिरे छिन्न-लिखिते स-कट्फलैः कषायैश् च तेषां गण्डूष इष्यते ।
यष्टी-लोध्रोत्पलानन्ता-शारिवागुरु-चन्दनैः ॥ ३६ ॥

२२.३६av स-कट्फलैः कषायश् च स-गैरिक-सिता-पुण्ड्रैः सिद्धं तैलं च नावनम् ।
छित्त्वाधि-मांसकं चूर्णैः स-क्षौद्रैः प्रतिसारयेत् ॥ ३७ ॥

वचा-तेजोवती-पाठा-स्वर्जिका-यव-शूक-जैः ।
पटोल-निम्ब-त्रि-फला-कषायः कवडो हितः ॥ ३८ ॥

२२.३८bv -स्वर्जिका-याव-शूक-जैः विदर्भे दन्त-मूलानि मण्डलाग्रेण शोधयेत् ।
क्षारं युञ्ज्यात् ततो नस्यं गण्डूषादि च शीतलम् ॥ ३९ ॥

संशोध्योभयतः कायं शिरश् चोपचरेत् ततः ।
नाडीं दन्तानुगां दन्तं समुद्धृत्याग्निना दहेत् ॥ ४० ॥

कुब्जां नैक-गतिं पूर्णां गुडेन मदनेन वा ।
धावनं जाति-मदन-खदिर-स्वादुकण्टकैः ॥ ४१ ॥

२२.४१av न्युब्जां नैक-गतिं पूर्णां २२.४१bv गुडेन मधुनाथ-वा क्षीरि-वृक्षाम्बु-गण्डूषो नस्यं तैलं च तत्-कृतम् ।
कुर्याद् वातौष्ठ-कोपोक्तं कण्टकेष्व् अनिलात्मसु ॥ ४२ ॥

जिह्वायां पित्त-जातेषु घृष्टेषु रुधिरे स्रुते ।
प्रतिसारण-गण्डूष-नावनं मधुरैर् हितम् ॥ ४३ ॥

तीक्ष्णैः कफोत्थेष्व् एवं च सर्षप-त्र्य्-ऊषणादिभिः ।
नवे जिह्वालसे ऽप्य् एवं तं तु शस्त्रेण न स्पृशेत् ॥ ४४ ॥

२२.४४av तीक्ष्णैः कफोत्थेष्व् अप्य् एवं २२.४४av तीक्ष्णैः कफोत्थेष्व् एवं तु उन्नम्य जिह्वाम् आकृष्टां बडिशेनाधि-जिह्विकाम् ।
छेदयेन् मण्डलाग्रेण तीक्ष्णोष्णैर् घर्षणादि च ॥ ४५ ॥

उप-जिह्वां परिस्राव्य यव-क्षारेण घर्षयेत् ।
कफ-घ्नैः शुण्डिका साध्या नस्य-गण्डूष-घर्षणैः ॥ ४६ ॥

एर्वारु-बीज-प्रतिमं वृद्धायाम् अ-सिरा-ततम् ।
अग्रं निविष्टं जिह्वाया बडीशाद्य्-अवलम्बितम् ॥ ४७ ॥

२२.४७cv अग्रं निविष्टं जिह्वायां २२.४७cv अग्रे निविष्टं जिह्वाया छेदयेन् मण्डलाग्रेण नात्य्-अग्रे न च मूलतः ।
छेदे ऽत्य् असृक्-क्षयान् मृत्युर् हीने व्याधिर् विवर्धते ॥ ४८ ॥

२२.४८bv नात्य्-अग्रे नाति-मूलतः मरिचातिविषा-पाठा-वचा-कुष्ठ-कुटन्नटैः ।
छिन्नायां स-पटु-क्षौद्रैर् घर्षणं कवडः पुनः ॥ ४९ ॥

कटुकातिविषा-पाठा-निम्ब-रास्ना-वचाम्बुभिः ।
संघाते पुप्पुटे कूर्मे विलिख्यैवं समाचरेत् ॥ ५० ॥

अ-पक्वे तालु-पाके तु कासीस-क्षौद्र-तार्क्ष्य-जैः ।
घर्षणं कवडः शीत-कषाय-मधुरौषधैः ॥ ५१ ॥

२२.५१cv घर्षणं कवडः शीतः २२.५१dv कषाय-मधुरौषधैः पक्वे ऽष्टा-पद-वद् भिन्ने तीक्ष्णोष्णैः प्रतिसारणम् ।
वृष-निम्ब-पटोलाद्यैस् तिक्तैः कवड-धारणम् ॥ ५२ ॥

तालु-शोषे त्व् अ-तृष्णस्य सर्पिर् उत्तर-भक्तिकम् ।
कणा-शुण्ठी-शृतं पानम् अम्लैर् गण्डूष-धारणम् ॥ ५३ ॥

२२.५३av तालु-शोषे तृषार्तस्य धन्व-मांस-रसाः स्निग्धाः क्षीर-सर्पिश् च नावनम् ।
कण्ठ-रोगेष्व् असृङ्-मोक्षस् तीक्ष्णैर् नस्यादि कर्म च ॥ ५४ ॥

क्वाथः पानं च दार्वी-त्वङ्-निम्ब-तार्क्ष्य-कलिङ्ग-जः ।
हरीतकी-कषायो वा पेयो माक्षिक-संयुतः ॥ ५५ ॥

श्रेष्ठा-व्योष-यव-क्षार-दार्वी-द्वीपि-रसाञ्जनैः ।
स-पाठा-तेजिनी-निम्बैः शुक्त-गो-मूत्र-साधितैः ॥ ५६ ॥

कवडो गुटिका वात्र कल्पिता प्रतिसारणम् ।
निचुलं कटभी मुस्तं देवदारु महौषधम् ॥ ५७ ॥

२२.५७av कवडो गुटिका चात्र २२.५७cv निचुलं कटभी मुस्ता वचा दन्ती च मूर्वा च लेपः कोष्णो ऽर्ति-शोफ-हा ।
अथान्तर्-बाह्यतः स्विन्नां वात-रोहिणिकां लिखेत् ॥ ५८ ॥

अङ्गुली-शस्त्रकेणाशु पटु-युक्त-नखेन वा ।
पञ्च-मूलाम्बु कवडस् तैलं गण्डूष-नावनम् ॥ ५९ ॥

विस्राव्य पित्त-संभूतां सिता-क्षौद्र-प्रियङ्गुभिः ।
घर्षेत् स-लोध्र-पत्तङ्गैः कवडः क्वथितैश् च तैः ॥ ६० ॥

द्राक्षा-परूषक-क्वाथो हितश् च कवड-ग्रहे ।
उपाचरेद् एवम् एव प्रत्याख्यायास्र-संभवाम् ॥ ६१ ॥

सागार-धूमैः कटुकैः कफ-जां प्रतिसारयेत् ।
नस्य-गण्डूषयोस् तैलं साधितं च प्रशस्यते ॥ ६२ ॥

अपामार्ग-फल-श्वेता-दन्ती-जन्तुघ्न-सैन्धवैः ।
तद्-वच् च वृन्द-शालूक-तुण्डिकेरी-गिलायुषु ॥ ६३ ॥

२२.६३dv -तुण्डिकेरी-गलायुषु विद्रधौ स्राविते श्रेष्ठा-रोचना-तार्क्ष्य-गैरिकैः ।
स-लोध्र-पटु-पत्तङ्ग-कणैर् गण्डूष-घर्षणे ॥ ६४ ॥

२२.६४dv -कणैर् गण्डूष-धारणम् २२.६४dv -कणैर् गण्डूष-घर्षणम् गल-गण्डः पवन-जः स्विन्नो निःस्रुत-शोणितः ।
तिलैर् बीजैश् च लट्वोमा-प्रियाल-शण-संभवैः ॥ ६५ ॥

२२.६५bv स्विन्नो विस्रुत-शोणितः उपनाह्यो व्रणे रूढे प्रलेप्यश् च पुनः पुनः ।
शिग्रु-तिल्वक-तर्कारी-गज-कृष्णा-पुनर्नवैः ॥ ६६ ॥

कालामृतार्क-मूलैश् च पुष्पैश् च करहाट-जैः ।
एकैषीकान्वितैः पिष्टैः सुरया काञ्जिकेन वा ॥ ६७ ॥

२२.६७av ताल-मूलार्क-मूलैश् च २२.६७bv पुष्पैश् च करघाट-जैः गुडूची-निम्ब-कुटज-हंसपदी-बला-द्वयैः ।
साधितं पाययेत् तैलं स-कृष्णा-देवदारुभिः ॥ ६८ ॥

कर्तव्यं कफ-जे ऽप्य् एतत् स्वेद-विम्लापने त्व् अति ।
लेपो ऽजगन्धातिविषा-विशल्याः स-विषाणिकाः ॥ ६९ ॥

गुञ्जालाबु-शुकाह्वाश् च पलाश-क्षार-कल्किताः ।
मूत्र-स्रुतं हठ-क्षारं पक्त्वा कोद्रव-भुक् पिबेत् ॥ ७० ॥

२२.७०cv मूत्र-शृतं यव-क्षारं २२.७०cv मूत्र-स्रुतं यव-क्षारं २२.७०cv सूत्र-स्रुतं यव-क्षारं साधितं वत्सकाद्यैर् वा तैलं स-पटु-पञ्चकैः ।
कफ-घ्नान् धूम-वमन-नावनादींश् च शीलयेत् ॥ ७१ ॥

२२.७१cv कफ-घ्नान् धूम-गण्डूषान् २२.७१dv वमनादींश् च शीलयेत् मेदो-भवे सिरां विध्येत् कफ-घ्नं च विधिं भजेत् ।
असनादि-रजश् चैनं प्रातर् मूत्रेण पाययेत् ॥ ७२ ॥

अ-शान्तौ पाचयित्वा च सर्वान् व्रण-वद् आचरेत् ।
मुख-पाकेषु स-क्षौद्रा प्रयोज्या मुख-धावनाः ॥ ७३ ॥

२२.७३av अ-शान्तौ पाटयित्वा च २२.७३dv प्रयोज्या मुख-पावनाः क्वथितास् त्रि-फला-पाठा-मृद्वीका-जाति-पल्लवाः ।
निष्ठेव्या भक्षयित्वा वा कुठेरादिर् गणो ऽथ-वा ॥ ७४ ॥

२२.७४cv निघृष्टव्या भक्षयित्वा मुख-पाके ऽनिलात् कृष्णा-पट्व्-एलाः प्रतिसारणम् ।
तैलं वात-हरैः सिद्धं हितं कवड-नस्ययोः ॥ ७५ ॥

पित्तास्रे पित्त-रक्त-घ्नः कफ-घ्नश् च कफे विधिः ।
लिखेच् छाकादि-पत्रैश् च पिटिकाः कठिनाः स्थिराः ॥ ७६ ॥

२२.७६av पित्तास्रे रक्त-पित्त-घ्नः यथा-दोषोदयं कुर्यात् संनिपाते चिकित्सितम् ।
नवे ऽर्बुदे त्व् अ-संवृद्धे छेदिते प्रतिसारणम् ॥ ७७ ॥

स्वर्जिका-नागर-क्षौद्रैः क्वाथो गण्डूष इष्यते ।
गुडूची-निम्ब-कल्कोत्थो मधु-तैल-समन्वितः ॥ ७८ ॥

यवान्न-भुक् तीक्ष्ण-तैल-नस्याभ्यङ्गांस् तथाचरेत् ।
वमिते पूति-वदने धूमस् तीक्ष्णः स-नावनः ॥ ७९ ॥

समङ्गा-धातकी-लोध्र-फलिनी-पद्मकैर् जलम् ।
धावनं वदनस्यान्तश् चूर्णितैर् अवचूर्णितम् ॥ ८० ॥

२२.८०dv चूर्णितैर् अवचूर्णनम् शीतादोप-कुशोक्तं च नावनादि च शीलयेत् ॥ ८१अब् ॥
फल-त्रय-द्वीपि-किराततिक्त-यष्ट्य्-आह्व-सिद्धार्थ-कटु-त्रिकाणि ॥ ८१च्द् ॥
मुस्ता-हरिद्रा-द्वय-याव-शूक-वृक्षाम्लकाम्लाग्रिम-वेतसाश् च ॥ ८१एf ॥
अश्वत्थ-जम्ब्व्-आम्र-धनञ्जय-त्वक् त्वक् चाहिमारात् खदिरस्य सारः ।
क्वाथेन तेषां घन-तां गतेन तच्-चूर्ण-युक्ता गुटिका विधेयाः ॥ ८२ ॥

ता धारिता घ्नन्ति मुखेन नित्यं कण्ठौष्ठ-ताल्व्-आदि-गदान् सु-कृच्छ्रान् ।
विशेषतो रोहिणिकास्य-शोष-गन्धान् विदेहाधिपति-प्रणीताः ॥ ८३ ॥

खदिर-तुलाम् अम्बु-घटे पक्त्वा तोयेन तेन पिष्टैश् च ।
चन्दन-जोङ्गक-कुङ्कुम-परिपेलव-वालकोशीरैः ॥ ८४ ॥

सुरतरु-लोध्र-द्राक्षा-मञ्जिष्ठा-चोच-पद्मक-विडङ्गैः ।
स्पृक्का-नत-नख-कट्फल-सूक्ष्मैला-ध्यामकैः स-पत्तङ्गैः ॥ ८५ ॥

तैल-प्रस्थं विपचेत् कर्षांशैः पान-नस्य-गण्डूषैस् तत् ।
हत्वास्ये सर्व-गदान् जनयति गार्ध्री दृशं श्रुतिं च वाराहीम् ॥ ८६ ॥

२२.८६bv कर्षांशैः पान-नस्य-गण्डूषैः २२.८६cv हन्त्य् आस्ये सर्व-गदान् उद्वर्तितं च प्रपुनाट-लोध्र-दार्वीभिर् अभ्यक्तम् अनेन वक्त्रम् ।
निर्-व्यङ्ग-नीली-मुख-दूषिकादि संजायते चन्द्र-समान-कान्ति ॥ ८७ ॥

२२.८७cv निर्-व्यङ्ग-नीली-मुख-दूषिकं च पल-शतं बाणात् तोय-घटे पक्त्वा रसे ऽस्मिंश् च पलार्धिकैः ।
खदिर-जम्बू-यष्ट्यानन्ताम्रैर् अहिमार-नीलोत्पलान्वितैः ॥ ८८ ॥

२२.८८cv खदिर-जम्बू-यष्ट्यानन्ता-लोध्रैर् तैल-प्रस्थं पाचयेच् छलक्ष्ण-पिष्टैर् एभिर् द्रव्यैर् धारितं तन् मुखेन ।
रोगान् सर्वान् हन्ति वक्त्रे विशेषात् स्थैर्यं धत्ते दन्त-पङ्क्तेश् चलायाः ॥ ८९ ॥

२२.८९av तैल-प्रस्थं पाचयेत् सूक्ष्म-पिष्टैर् २२.८९bv एभिर् द्रव्यैर् धारितं तत् सुखेन खदिर-साराद् द्वे तुले पचेद् वल्कात् तुलां चारिमेदसः ।
घट-चतुष्के पाद-शेषे ऽस्मिन् पूते पुनः क्वथनाद् घने ॥ ९० ॥

२२.९०av खदिर-साराद् द्वे तुले विपचेद् २२.९०bv वल्क-तुलां चारिमेदसः २२.९०bv वल्कल-तुलां चारिमेदसः २२.९०bv वल्कल-तुलां चारिमेदतः २२.९०dv ऽस्मिन् पूते पुनः क्वाथनाद् घने २२.९०dv ऽस्मिन् पूते पुनः क्वाथयेद् घने आक्षिकं क्षिपेत् सु-सूक्ष्मं रजः सेव्याम्बु-पत्तङ्ग-गैरिकम् ।
चन्दन-द्वय-लोध्र-पुण्ड्राह्व-यष्ट्य्-आह्व-लाक्षाञ्जन-द्वयम् ॥ ९१ ॥

२२.९१av आक्षिकं क्षिपेत् सु-सूक्ष्म-रजः २२.९१av आक्षिकं च क्षिपेत् सूक्ष्म-रजः २२.९१av कार्षिकं क्षिपेत् सु-सूक्ष्म-रजः २२.९१cv चन्दन-द्वय-श्यामा-पुण्ड्राह्व- धातकी-कट्फल-द्वि-निशा-त्रि-फला-चतुर्-जात-जोङ्गकम् ।
मुस्त-मञ्जिष्ठा-न्यग्रोध-प्ररोह-मांसी-यवासकम् ॥ ९२ ॥

२२.९२dv ंध-प्ररोह-वचा-मांसी-यवासकम् पद्मकैला-समङ्गाश् च शीते तस्मिंस् तथा पालिकां पृथक् ।
जातीपत्त्रिकां स-जाति-फलां सह-लवङ्ग-कण्कोल्लकाम् ॥ ९३ ॥

२२.९३av पद्मकैलेय-समङ्गाश् च २२.९३bv शीते तथा पालिकां पृथक् २२.९३dv सह-नख-लवङ्ग-कङ्कोल्लकाम् स्फटिक-शुभ्र-सुरभि-कर्पूर-कुडवं च तत्रावपेत् ततः ।
कारयेद् गुटिकाः सदा चैता धार्या मुखे तद्-गदापहाः ॥ ९४ ॥

२२.९४cv कारयेद् गुटिकाश् चैता २२.९४cv कार्याश् चैता गुटिका क्वाथ्यौषध-व्यत्यय-योजनेन तैलं पचेत् कल्पनयानयैव ।
सर्वास्य-रोगोद्धृतये तद् आहुर् दन्त-स्थिर-त्वे त्व् इदम् एव मुख्यम् ॥ ९५ ॥

२२.९५av क्वाथौषध-व्यत्यय-योजनेन २२.९५cv सर्वास्य-रोग-प्रशमार्थम् उक्तं २२.९५cv सर्वास्य-रोगे व्ययनं तद् आहुर् खदिरेणैता गुटिकास् तैलम् इदं चारिमेदसा प्रथितम् ।
अनुशीलयन् प्रति-दिनं स्वस्थो ऽपि दृढ-द्वि-जो भवति ॥ ९६ ॥

२२.९६dv वृद्धो ऽपि दृढ-द्वि-जो भवति क्षुद्रा-गुडूची-सुमनः-प्रवाल-दार्वी-यवास-त्रि-फला-कषायः ।
क्षौद्रेण युक्तः कवड-ग्रहो ऽयं सर्वामयान् वक्त्र-गतान् निहन्ति ॥ ९७ ॥

२२.९७av द्राक्षा-गुडूची-सुमनः-प्रवाल- पाठा-दार्वी-त्वक्-कुष्ठ-मुस्ता-समङ्गा-तिक्ता-पीताङ्गी-लोध्र-तेजोवतीनाम् ।
चूर्णः स-क्षौद्रो दन्त-मांसार्ति-कण्डू-पाक-स्रावाणां नाशनो घर्षणेन ॥ ९८ ॥

गृह-धूम-तार्क्ष्य-पाठा-व्योष-क्षाराग्न्य्-अयो-वरा-तेजो-ह्वैः ।
मुख-दन्त-गल-विकारे स-क्षौद्रः कालको विधार्यश् चूर्णः ॥ ९९ ॥

२२.९९dv स-क्षौद्रः कालिको विधार्यश् चूर्णः दार्वी-त्वक्-सिन्धूद्भव-मनःशिला-याव-शूक-हरितालैः ।
धार्यः पीतक-चूर्णो दन्तास्य-गलामये स-मध्व्-आज्यः ॥ १०० ॥

द्वि-क्षार-धूमक-वरा-पञ्च-पटु-व्योष-वेल्ल-गिरि-तार्क्ष्यैः ।
गो-मूत्रेण विपक्वा गलामय-घ्नी रस-क्रिया एषा ॥ १०१ ॥

२२.१०१av द्वि-क्षार-गृह-धूमक-वरा- २२.१०१cv गो-मूत्रेण पिबन् क्वाथं गो-मूत्र-क्वथन-विलीन-विग्रहाणां पथ्यानां जल-मिशि-कुष्ठ-भावितानाम् ।
अत्तारं नरम् अणवो ऽपि वक्त्र-रोगाः श्रोतारं नृपम् इव न स्पृशन्त्य् अन्-अर्थाः ॥ १०२ ॥

सप्तच्छदोशीर-पटोल-मुस्त-हरीतकी-तिक्तक-रोहिणीभिः ।
यष्ट्य्-आह्व-राजद्रुम-चन्दनैश् च क्वाथं पिबेत् पाक-हरं मुखस्य ॥ १०३ ॥

पटोल-शुण्ठी-त्रि-फला-विशाला-त्रायन्ति-तिक्ता-द्वि-निशामृतानाम् ।
पीतः कषायो मधुना निहन्ति मुखे स्थितश् चास्य-गदान् अ-शेषान् ॥ १०४ ॥

२२.१०४dv मुखोत्थितांश् चाशु गदान् अ-शेषान् स्व-रसः क्वथितो दार्व्या घनी-भूतः स-गैरिकः ।
आस्य-स्थः स-मधुर् वक्त्र-पाक-नाडी-व्रणापहः ॥ १०५ ॥

पटोल-निम्ब-यष्ट्य्-आह्व-वासा-जात्य्-अरिमेदसाम् ।
खदिरस्य वरायाश् च पृथग् एवं प्रकल्पना ॥ १०६ ॥

खदिरायो-वरा-पार्थ-मदयन्त्य्-अहिमारकैः ।
गण्डूषो ऽम्बु-शृतैर् धार्यो दुर्-बल-द्वि-ज-शान्तये ॥ १०७ ॥

मुख-दन्त-मूल-गल-जाः प्रायो रोगाः कफास्र-भूयिष्ठाः ।
तस्मात् तेषाम् अ-सकृद् रुधिरं विस्रावयेद् दुष्टम् ॥ १०८ ॥

काय-शिरसोर् विरेको वमनं कवड-ग्रहाश् च कटु-तिक्ताः ।
प्रायः शस्तं तेषां कफ-रक्त-हरं तथा कर्म ॥ १०९ ॥

यव-तृण-धान्यं भक्तं विदलैः क्षारोषितैर् अप-स्नेहाः ।
यूषा भक्ष्याश् च हिता यच् चान्यच् छलेष्म-नाशाय ॥ ११० ॥

२२.११०av यव-तृण-धान्यं भुक्तं २२.११०bv विदलैः क्षारोषितैर् अप-स्नेहम् प्राणानिल-पथ-संस्थाः श्वसितम् अपि निरुन्धते प्रमाद-वतः ।
कण्ठामयाश् चिकित्सितम् अतो द्रुतं तेषु कुर्वीत ॥ १११ ॥

# अध्याय 23

धूमातप-तुषाराम्बु-क्रीडाति-स्वप्न-जागरैः ।
उत्स्वेदाधि-पुरो-वात-बाष्प-निग्रह-रोदनैः ॥ १ ॥

२३.१cv उन्मादाधि-पुरो-वात- अत्य्-अम्बु-मद्य-पानेन कृमिभिर् वेग-धारणैः ।
उपधान-मृजाभ्यङ्ग-द्वेषाधः-प्रततेक्षणैः ॥ २ ॥

अ-सात्म्य-गन्ध-दुष्टाम-भाष्याद्यैश् च शिरो-गताः ।
जनयन्त्य् आमयान् दोषास् तत्र मारुत-कोपतः ॥ ३ ॥

२३.३av अ-सात्म्य-गन्ध-दुष्टाम्बु- निस्तुद्येते भृशं शङ्खौ घाटा संभिद्यते तथा ।
भ्रुवोर् मध्यं ललाटं च पततीवाति-वेदनम् ॥ ४ ॥

२३.४cv भ्रुवोर् मध्ये ललाटं च बाध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी ।
घूर्णतीव शिरः सर्वं संधिभ्य इव मुच्यते ॥ ५ ॥

स्फुरत्य् अति सिरा-जालं कन्धरा-हनु-संग्रहः ।
प्रकाशा-सह-ता घ्राण-स्रावो ऽ-कस्माद् व्यथा-शमौ ॥ ६ ॥

मार्दवं मर्दन-स्नेह-स्वेद-बन्धैश् च जायते ।
शिरस्-तापो ऽयम् अर्धे तु मूर्ध्नः सो ऽर्धावभेदकः ॥ ७ ॥

पक्षात् कुप्यति मासाद् वा स्वयम् एव च शाम्यति ।
अति-वृद्धस् तु नयनं श्रवणं वा विनाशयेत् ॥ ८ ॥

शिरो-ऽभितापे पित्तोत्थे शिरो-धूमायनं ज्वरः ।
स्वेदो ऽक्षि-दहनं मूर्छा निशि शीतैश् च मार्दवम् ॥ ९ ॥

अ-रुचिः कफ-जे मूर्ध्नो गुरु-स्तिमित-शीत-ता ।
सिरा-निष्पन्द-तालस्यं रुङ् मन्दाहन्य् अधिका निशि ॥ १० ॥

तन्द्रा शूनाक्षि-कूट-त्वं कर्ण-कण्डूयनं वमिः ।
रक्तात् पित्ताधिक-रुजः सर्वैः स्यात् सर्व-लक्षणः ॥ ११ ॥

संकीर्णैर् भोजनैर् मूर्ध्नि क्लेदिते रुधिरामिषे ।
कोपिते संनिपाते च जायन्ते मूर्ध्नि जन्तवः ॥ १२ ॥

शिरसस् ते पिबन्तो ऽस्रं घोराः कुर्वन्ति वेदनाः ।
चित्त-विभ्रंश-जननीर् ज्वरः कासो बल-क्षयः ॥ १३ ॥

रौक्ष्य-शोफ-व्यध-च्छेद-दाह-स्फुरण-पूति-ताः ।
कपाले तालु-शिरसोः कण्डूः शोषः प्रमीलकः ॥ १४ ॥

२३.१४av रौक्ष्य-शोफे व्यध-च्छेद- २३.१४bv -दाह-स्फुटन-पूति-ताः २३.१४dv कण्डूः शोफः प्रमीलकः २३.१४dv कण्डूः शोफो ऽ-प्रमीलकः ताम्राच्छ-सिङ्घाणक-ता कर्ण-नादश् च जन्तु-जे ।
वातोल्बणाः शिरः-कम्पं तत्-संज्ञं कुर्वते मलाः ॥ १५ ॥

पित्त-प्रधानैर् वातादयैः शङ्खे शोफः स-शोणितैः ।
तीव्र-दाह-रुजा-राग-प्रलाप-ज्वर-तृड्-भ्रमाः ॥ १६ ॥

तिक्तास्यः पीत-वदनः क्षिप्र-कारी स शङ्खकः ।
त्रि-रात्राज् जीवितं हन्ति सिध्यत्य् अप्य् आशु साधितः ॥ १७ ॥

२३.१७dv सिध्यत्य् आशु सु-साधितः पित्तानुबद्धः शङ्खाक्षि-भ्रू-ललाटेषु मारुतः ।
रुजं स-स्पन्दनां कुर्याद् अनु-सूर्योदयोदयाम् ॥ १८ ॥

२३.१८av पित्तानुबन्धः शङ्खाक्षि- आ-मध्याह्नं विवर्धिष्णुः क्षुद्-वतः सा विशेषतः ।
अ-व्यवस्थित-शीतोष्ण-सुखा शाम्यत्य् अतः परम् ॥ १९ ॥

सूर्यावर्तः स इत्य् उक्ता दश रोगाः शिरो-गताः ।
शिरस्य् एव च वक्ष्यन्ते कपाले व्याधयो नव ॥ २० ॥

कपाले पवने दुष्टे गर्भ-स्थस्यापि जायते ।
स-वर्णो नी-रुजः शोफस् तं विद्याद् उप-शीर्षकम् ॥ २१ ॥

यथा-दोषोदयं ब्रूयात् पिटिकार्बुद-विद्रधीन् ।
कपाले क्लेद-बहुलाः पित्तासृक्-श्लेष्म-जन्तुभिः ॥ २२ ॥

कङ्गु-सिद्धार्थक-निभाः पिटिकाः स्युर् अरूंषिकाः ।
कण्डू-केश-च्युति-स्वाप-रौक्ष्य-कृत् स्फुटनं त्वचः ॥ २३ ॥

२३.२३dv -रूक्ष-कृत् स्फुटनं त्वचः सु-सूक्ष्मं कफ-वाताभ्यां विद्याद् दारुणकं तु तत् ।
रोम-कूपानुगं पित्तं वातेन सह मूर्छितम् ॥ २४ ॥

२३.२४bv विद्याद् दारुणकं च तत् प्रच्यावयति रोमाणि ततः श्लेष्मा स-शोणितः ।
रोम-कूपान् रुणद्ध्य् अस्य तेनान्येषाम् अ-संभवः ॥ २५ ॥

तद् इन्द्र-लुप्तं रुज्यां च प्राहुश् चाचेति चापरे ।
खलतेर् अपि जन्मैवं शातनं तत्र तु क्रमात् ॥ २६ ॥

२३.२६av तद् इन्द्र-लुप्तं तज्जां च २३.२६av तद् इन्द्र-लुप्तं तझ्झां च २३.२६av तद् इन्द्र-लुप्तं तहनाश् च २३.२६av तद् इन्द्र-लुप्तं रूढ्यां च २३.२६dv शतनं तत्र तु क्रमात् २३.२६dv शदनं तत्र तु क्रमात् २३.२६dv सदनं तत्र तु क्रमात् सा वाताद् अग्नि-दग्धाभा पित्तात् स्विन्न-सिरावृता ।
कफाद् घन-त्वग् वर्णांश् च यथा-स्वं निर्दिशेत् त्वचि ॥ २७ ॥

२३.२७bv पित्तात् स्निग्ध-सिरावृता २३.२७bv पित्तात् स्निग्धा सिरावृता २३.२७bv पित्तात् पीत-सिरावृता दोषैः सर्वाकृतिः सर्वैर् अ-साध्या सा नख-प्रभा ।
दग्धाग्निनेव नी-रोमा स-दाहा या च जायते ॥ २८ ॥

२३.२८dv स-दाहोषा च जायते शोक-श्रम-क्रोध-कृतः शरीरोष्मा शिरो-गतः ।
केशान् स-दोषः पचति पलितं संभवत्य् अतः ॥ २९ ॥

तद् वातात् स्फुटितं श्यावं खरं रूक्षं जल-प्रभम् ।
पित्तात् स-दाहं पीताभं कफात् स्निग्धं विवृद्धि-मत् ॥ ३० ॥

स्थूलं सु-शुक्लं सर्वैस् तु विद्याद् व्यामिश्र-लक्षणम् ।
शिरो-रुजोद्भवं चान्यद् वि-वर्णं स्पर्शना-सहम् ॥ ३१ ॥

२३.३१av स्थूलं स-शुक्लं सर्वैस् तु अ-साध्या संनिपातेन खलतिः पलितानि च ।
शरीर-परिणामोत्थान्य् अपेक्षन्ते रसायनम् ॥ ३२ ॥

# अध्याय 24

शिरो-ऽभितापे ऽनिल-जे वात-व्याधि-विधिं चरेत् ।
घृतम् अक्त-शिरा रात्रौ पिबेद् उष्ण-पयो-ऽनुपः ॥ १ ॥

२४.१cv घृतम् अक्त-शिरो रात्रौ २४.१cv घृताभ्यक्त-शिरो रात्रौ २४.१dv पिबेत् सर्पिः पयो-ऽनुपः माषान् कुलत्थान् मुद्गान् वा तद्-वत् खादेद् घृतान्वितान् ।
तैलं तिलानां कल्कं वा क्षीरेण सह पाययेत् ॥ २ ॥

पिण्डोपनाह-स्वेदाश् च मांस-धान्य-कृता हिताः ।
वात-घ्न-दश-मूलादि-सिद्ध-क्षीरेण सेचनम् ॥ ३ ॥

स्निग्धं नस्यं तथा धूमः शिरः-श्रवण-तर्पणम् ।
वरणादौ गणे क्षुण्णे क्षीरम् अर्धोदकं पचेत् ॥ ४ ॥

२४.४cv वरुणादौ गणे क्षुण्णे क्षीरावशिष्टं तच् छीतं मथित्वा सारम् आहरेत् ।
ततो मधुरकैः सिद्धं नस्यं तत् पूजितं हविः ॥ ५ ॥

वर्गे ऽत्र पक्वं क्षीरे च पेयं सर्पिः स-शर्करम् ।
कार्पास-मज्जा त्वङ् मुस्ता सुमनः-कोरकाणि च ॥ ६ ॥

२४.६av तस्मिन् विपक्वं क्षीरे च २४.६cv कार्पास-मज्जा त्वङ् मुस्तं २४.६dv सुमनः-क्षारकाणि च नस्यम् उष्णाम्बु-पिष्टानि सर्व-मूर्ध-रुजापहम् ।
शर्करा-कुङ्कुम-शृतं घृतं पित्तासृग्-अन्वये ॥ ७ ॥

प्रलेपैः स-घृतैः कुष्ठ-कुटिलोत्पल-चन्दनैः ।
वातोद्रेक-भयाद् रक्तं न चास्मिन्न् अवसेचयेत् ॥ ८ ॥

इत्य् अ-शान्तौ चले दाहः कफे चेष्टो यथोदितः ।
अर्धावभेदके ऽप्य् एषा तथा दोषान्वयात् क्रिया ॥ ९ ॥

२४.९bv कफे चोष्णं यथोदितम् २४.९dv यथा-दोषान्वया क्रिया २४.९dv यथा-दोषान्वये क्रिया शिरीष-बीजापामार्ग-मूलं नस्यं विडान्वितम् ।
स्थिरा-रसो वा लेपे तु प्रपुन्नाटो ऽम्ल-कल्कितः ॥ १० ॥

२४.१०cv स्थिरा-रसो वा लेपो ऽत्र सूर्यावर्ते ऽपि तस्मिंस् तु सिरयापहरेद् असृक् ।
शिरो-ऽभितापे पित्तोत्थे स्निग्धस्य व्यधयेत् सिराम् ॥ ११ ॥

२४.११av सूर्यावर्ते तु तस्मिंस् तु शीताः शिरो-मुखालेप-सेक-शोधन-वस्तयः ।
जीवनीय-शृते क्षीर-सर्पिषी पान-नस्ययोः ॥ १२ ॥

कर्तव्यं रक्त-जे ऽप्य् एतत् प्रत्याख्याय च शङ्खके ।
श्लेष्माभितापे जीर्णाज्य-स्नेहितैः कटुकैर् वमेत् ॥ १३ ॥

स्वेद-प्रलेप-नस्याद्या रूक्ष-तीक्ष्णोष्ण-भेषजैः ।
शस्यन्ते चोपवासो ऽत्र निचये मिश्रम् आचरेत् ॥ १४ ॥

२४.१४cv शस्यते चोपवासो ऽत्र कृमि-जे शोणितं नस्यं तेन मूर्छन्ति जन्तवः ।
मत्ताः शोणित-गन्धेन निर्यान्ति घ्राण-वक्त्रयोः ॥ १५ ॥

२४.१५dv निर्यान्ति घ्राण-वक्त्रतः सु-तीक्ष्ण-नस्य-धूमाभ्यां कुर्यान् निर्हरणं ततः ।
विडङ्ग-स्वर्जिका-दन्ती-हिङ्गु-गो-मूत्र-साधितम् ॥ १६ ॥

कटु-निम्बेङ्गुदी-पीलु-तैलं नस्यं पृथक् पृथक् ।
अजा-मूत्र-द्रुतं नस्यं कृमिजित् कृमि-जित् परम् ॥ १७ ॥

२४.१७cv अजा-मूत्र-द्रुतं नस्ये पूति-मत्स्य-युतैः कुर्याद् धूमं नावन-भेषजैः ।
कृमिभिः पीत-रक्त-त्वाद् रक्तम् अत्र न निर्हरेद् ॥ १८ ॥

पूति-मत्स्यः कृमीन् हत्वा दुर्-गन्ध-त्वात् तु वात-जे ॥ १८.१+१अब् ॥
वाताभिताप-विहितः कम्पे दाहाद् विना क्रमः ।
नवे जन्मोत्तरं जाते योजयेद् उप-शीर्षके ॥ १९ ॥

वात-व्याधि-क्रियां पक्वे कर्म विद्रधि-चोदितम् ।
आम-पक्वे यथा-योग्यं विद्रधि-पिटिकार्बुदे ॥ २० ॥

अरूंषिका जलौकोभिर् हृतास्रा निम्ब-वारिणा ।
सिक्ता प्रभूत-लवणैर् लिम्पेद् अश्व-शकृद्-रसैः ॥ २१ ॥

पटोल-निम्ब-पत्त्रैर् वा स-हरिद्रैः सु-कल्कितैः ।
गो-मूत्र-जीर्ण-पिण्याक-कृकवाकु-मलैर् अपि ॥ २२ ॥

कपाल-भृष्टं कुष्ठं वा चूर्णितं तैल-संयुतम् ।
रूंषिकालेपनं कण्डू-क्लेद-दाहार्ति-नाशनम् ॥ २३ ॥

मालती-चित्रकाश्वघ्न-नक्तमाल-प्रसाधितम् ।
चाचारूंषिकयोस् तैलम् अभ्यङ्गः क्षुर-घृष्टयोः ॥ २४ ॥

२४.२४dv अभ्यङ्गे क्षुर-घृष्टयोः २४.२४dv अभ्यङ्गः क्षुर-मृष्टयोः अ-शान्तौ शिरसः शुद्ध्यै यतेत वमनादिभिः ।
विध्येत् सिरां दारुणके लालाट्यां शीलयेन् मृजाम् ॥ २५ ॥

नावनं मूर्ध-वस्तिं च लेपयेच् च स-माक्षिकैः ।
प्रियाल-बीज-मधुक-कुष्ठ-माषैः स-सर्षपैः ॥ २६ ॥

२४.२६av नावनं मूर्ध्नि वस्तिं च लाक्षा-शम्याक-पत्त्रैडगज-धात्री-फलैस् तथा ।
कोरदूष-तृण-क्षार-वारि-प्रक्षालनं हितम् ॥ २७ ॥

२४.२७dv -वारि प्रक्षालने हितम् इन्द्र-लुप्ते यथासन्नं सिरां विद्ध्वा प्रलेपयेत् ।
प्रच्छाय गाढं कासीस-मनोह्वा-तुत्थकोषणैः ॥ २८ ॥

२४.२८bv सिरां विद्ध्वा प्रलेपनम् वन्यामरतरुभ्यां वा गुञ्जा-मूल-फलैस् तथा ।
तथा लाङ्गलिका-मूलैः करवीर-रसेन वा ॥ २९ ॥

२४.२९av कुटन्नट-मरुभ्यां वा २४.२९av धान्यामरतरुभ्यां वा स-क्षौद्र-क्षुद्र-वार्ताक-स्व-रसेन रसेन वा ।
धत्तूरकस्य पत्त्राणां भल्लातक-रसेन वा ॥ ३० ॥

२४.३०av स-क्षौद्र-क्षुद्र-बृहती- २४.३०dv भल्लातक-फलेन वा अथ-वा माक्षिक-हविस्-तिल-पुष्प-त्रिकण्टकैः ।
तैलाक्ता हस्ति-दन्तस्य मषी चाचौषधं परम् ॥ ३१ ॥

२४.३१dv मषी वाप्य् औषधं परम् २४.३१dv मषी वा चौषधं परम् शुक्ल-रोमोद्गमे तद्-वन् मषी मेष-विषाण-जा ।
वर्जयेद् वारिणा सेकं यावद् रोम-समुद्भवः ॥ ३२ ॥

२४.३२dv यावद् रोम-समुद्गमः २४.३२dv यावद् रोम-पुनर्-भवः खलतौ पलिते वल्यां हरिद्-रोम्नि च शोधितम् ।
नस्य-वक्त्र-शिरो-ऽभ्यङ्ग-प्रदेहैः समुपाचरेत् ॥ ३३ ॥

सिद्धं तैलं बृहत्य्-आद्यैर् जीवनीयैश् च नावनम् ।
मासं वा निम्ब-जं तैलं क्षीर-भुङ् नावयेद् यतिः ॥ ३४ ॥

नीली-शिरीष-कोरण्ट-भृङ्ग-स्व-रस-भावितम् ।
शेल्व्-अक्ष-तिल-रामाणां बीजं काकाण्डकी-समम् ॥ ३५ ॥

पिष्ट्वाज-पयसा लोहाल् लिप्ताद् अर्कांशु-तापितात् ।
तैलं स्रुतं क्षीर-भुजो नावनात् पलितान्त-कृत् ॥ ३६ ॥

२४.३६av पिष्ट्वाज-पयसा लोह- २४.३६bv -लिप्ताद् अर्कांशु-तापितात् क्षीरात् साहचराद् भृङ्गरजसः सौरसाद् रसात् ।
प्रस्थैस् तैलस्य कुडवः सिद्धो यष्टी-पलान्वितः ॥ ३७ ॥

२४.३७av क्षीरात् सहचराद् भृङ्गं २४.३७av क्षीरात् साहचराद् भृङ्ग- २४.३७bv ◌ंराजतः सौरसाद् रसात् २४.३७bv -रसतः सौरसाद् रसात् नस्यं शैलासने भाण्डे शृङ्गे मेषस्य वा स्थितः ।
क्षीरेण श्लक्ष्ण-पिष्टौ वा दुग्धिका-करवीरकौ ॥ ३८ ॥

२४.३८av नस्यं शिला-मये भाण्डे २४.३८av नस्यं शैलोद्भवे भाण्डे उत्पाट्य पलितं देयाव् आशये पलितापहौ ।
क्षीरं प्रियालं यष्ट्य्-आह्वं जीवनीयो गणस् तिलाः ॥ ३९ ॥

कृष्णाः प्रलेपो वक्त्रस्य हरिद्-रोम-वली-हितः ।
तिलाः सामलकाः पद्म-किञ्जल्को मधुकं मधु ॥ ४० ॥

२४.४०bv हरि-लोप-वली-हितः बृंहयेद् रञ्जयेच् चैतत् केशान् मूर्ध-प्रलेपनात् ।
मांसी कुष्ठं तिलाः कृष्णाः शारिवा नीलम् उत्पलम् ॥ ४१ ॥

२४.४१av बृंहयेच् च रजेच् चैतत् २४.४१bv केशान् मूर्ध्नः प्रलेपनात् क्षौद्रं च क्षीर-पिष्टानि केश-संवर्धनम् परम् ।
अयो-रजो भृङ्गरजस् त्रि-फला कृष्ण-मृत्तिका ॥ ४२ ॥

स्थितम् इक्षु-रसे मासं स-मूलं पलितं रजेत् ।
माष-कोद्रव-धान्याम्लैर् यवागूंस् त्रि-दिनोषिता ॥ ४३ ॥

२४.४३cv यव-कोद्रव-धान्याम्लैर् लोह-शुक्लोत्कटा पिष्टा बलाकाम् अपि रञ्जयेत् ।
प्रपौण्डरीक-मधुक-पिप्पली-चन्दनोत्पलैः ॥ ४४ ॥

२४.४४av लोह-कुष्ठोत्कटा पिष्टा २४.४४av लोह-शुक्तोत्कटा पिष्टा २४.४४av लोहे शुक्तोत्कटा पिष्टा २४.४४av लौहे शुक्लोत्कटा पिष्टा भृङ्गरजस्-त्रि-फलोत्पल-सारि-लोह-पुरीष-समन्वित-कारि ।
तैलम् इदं पच दारुण-हारि लुञ्चित-केश-घन-स्थिर-कारि ॥ ४४.१+१ ॥

२४.४४.१+१bv -लोह-पुरीष-समन्वित-धारि सिद्धं धात्री-रसे तैलं नस्येनाभ्यञ्जनेन च ।
सर्वान् मूर्ध-गदान् हन्ति पलितानि च शीलितम् ॥ ४५ ॥

मधूक-यष्टी-कृमिजिद्-विश्व-भृङ्गैः शृतं हविः ।
षड्-बिन्दु-दानात् तन् नस्यं सर्व-मूर्ध-गदापहम् ॥ ४५+१ ॥

२४.४५+१cv षड्-बिन्दु-नाम तन् नस्यं २४.४५+१cv षड्-बिन्दु-नाम्ना तन् नस्यं वरी-जीवन्ति-निर्यास-पयोभिर् यमकं पचेत् ।
जीवनीयैश् च तन् नस्यं सर्व-जत्रूर्ध्व-रोग-जित् ॥ ४६ ॥

२४.४६av वरी-जीवन्ति-निर्यासैः २४.४६bv -पयोभिर् यद् घृतं पचेत् २४.४६bv स-पयोभिर् घृतं पचेत् मयूरं पक्ष-पित्तान्त्र-पाद-विट्-तुण्ड-वर्जितम् ।
दश-मूल-बला-रास्ना-मधुकैस् त्रि-पलैर् युतम् ॥ ४७ ॥

२४.४७bv -शकृत्-पात्-तुण्ड-वर्जितम् २४.४७dv -मधुकैस् त्रि-पलैः सहम् जले पक्त्वा घृत-प्रस्थं तस्मिन् क्षीर-समं पचेत् ।
कल्कितैर् मधुर-द्रव्यैः सर्व-जत्रूर्ध्व-रोग-जित् ॥ ४८ ॥

तद् अभ्यासी-कृतं पान-वस्त्य्-अभ्यञ्जन-नावनैः ।
एतेनैव कषायेण घृत-प्रस्थं विपाचयेत् ॥ ४९ ॥

चतुर्-गुणेन पयसा कल्कैर् एभिश् च कार्षिकैः ।
जीवन्ती-त्रि-फला-मेदा-मृद्वीकर्द्धि-परूषकैः ॥ ५० ॥

समङ्गा-चविका-भार्गी-काश्मरी-कर्कटाह्वयैः ।
आत्मगुप्ता-महामेदा-ताल-खर्जूर-मस्तकैः ॥ ५१ ॥

२४.५१dv -ताल-खर्जूर-मुस्तकैः मृणाल-बिस-खर्जूर-यष्टीमधुक-जीवकैः ।
शतावरी-विदारीक्षु-बृहती-शारिवा-युगैः ॥ ५२ ॥

२४.५२dv -बृहती-श्रावणी-युगैः मूर्वा-श्वदंष्ट्रर्षभक-शृङ्गाटक-कसेरुकैः ।
रास्ना-स्थिरा-तामलकी-सूक्ष्मैला-शठि-पौष्करैः ॥ ५३ ॥

२४.५३av दूर्वा-श्वदंष्ट्रषभक- पुनर्नवा-तवक्षीरी-काकोली-धन्वयासकैः ।
मधूकाक्षोट-वाताम-मुञ्जाताभिषुकैर् अपि ॥ ५४ ॥

२४.५४cv मधुकाक्षोट-वाताम- महा-मायूरम् इत्य् एतन् मायूराद् अधिकं गुणैः ।
धात्व्-इन्द्रिय-स्वर-भ्रंश-श्वास-कासार्दितापहम् ॥ ५५ ॥

योन्य्-असृक्-शुक्र-दोषेषु शस्तं वन्ध्या-सुत-प्रदम् ।
आखुभिः कुक्कुटैर् हंसैः शशैश् चेति प्रकल्पयेत् ॥ ५६ ॥

२४.५६cv आखुभिः कर्कटैर् हंसैः जत्रूर्ध्व-जानां व्याधीनाम् एक-त्रिंशच्-छत-द्वयम् ।
परस्-परम् अ-संकीर्णं विस्तरेण प्रकाशितम् ॥ ५७ ॥

२४.५७bv एक-त्रिंशं शत-द्वयम् ऊर्ध्व-मूलम् अधः-शाखम् ऋषयः पुरुषं विदुः ।
मूल-प्रहारिणस् तस्माद् रोगाञ् छीघ्र-तरं जयेत् ॥ ५८ ॥

सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः ।
तेन तस्योत्तमाङ्गस्य रक्षायाम् आदृतो भवेत् ॥ ५९ ॥

नीलोत्पलं सोत्पल-कुष्ठ-युक्तं स-पिप्पलीकं मधुकं शताह्वम् ।
स-शृङ्गवेरं शिरसः प्रलेपः सद्यः शिरो-रोग-विनाशनाय ॥ ५९+१ ॥

# अध्याय 25

व्रणो द्वि-धा निजागन्तु-दुष्ट-शुद्ध-विभेदतः ।
निजो दोषैः शरीरोत्थैर् आगन्तुर् बाह्य-हेतु-जः ॥ १ ॥

२५.१dv आगन्तुर् बाह्य-हेतुभिः दोषैर् अधिष्ठितो दुष्टः शुद्धस् तैर् अन्-अधिष्ठितः ।
संवृत-त्वं विवृत-ता काठिन्यं मृदु-ताति वा ॥ २ ॥

२५.२dv काठिन्यं मृदु-तापि वा २५.२dv काठिन्यं मृदु-तापि च अत्य्-उत्सन्नावसन्न-त्वम् अत्य्-औष्ण्यम् अति-शीत-ता ।
रक्त-त्वं पाण्डु-ता कार्ष्ण्यं पूति-पूय-परिस्रुतिः ॥ ३ ॥

पूति-मांस-सिरा-स्नायु-च्छन्न-तोत्सङ्गि-ताति-रुक् ।
संरम्भ-दाह-श्वयथु-कण्ड्व्-आदिभिर् उपद्रुतः ॥ ४ ॥

दीर्घ-कालानुबन्धश् च विद्याद् दुष्ट-व्रणाकृतिम् ।
स पञ्च-दश-धा दोषैः स-रक्तैस् तत्र मारुतात् ॥ ५ ॥

२५.५cv स पञ्च-धा पृथग् दोषैः श्यावः कृष्णो ऽरुणो भस्म-कपोतास्थि-निभो ऽपि वा ।
मस्तु-मांस-पुलाकाम्बु-तुल्य-तन्व्-अल्प-संस्रुतिः ॥ ६ ॥

२५.६bv -कपोतास्थि-निभो ऽथ-वा निर्-मांसस् तोद-भेदाढ्यो रूक्षश् चटचटायते ।
पित्तेन क्षिप्र-जः पीतो नीलः कपिल-पिङ्गलः ॥ ७ ॥

२५.७cv पित्ताद् वह्नि-प्रभः पीतो मूत्र-किंशुक-भस्माम्बु-तैलाभोष्ण-बहु-स्रुतिः ।
क्षारोक्षित-क्षत-सम-व्यथो रागोष्म-पाक-वान् ॥ ८ ॥

कफेन पाण्डुः कण्डू-मान् बहु-श्वेत-घन-स्रुतिः ।
स्थूलौष्ठः कठिनः स्नायु-सिरा-जाल-ततो ऽल्प-रुक् ॥ ९ ॥

प्रवाल-रक्तो रक्तेन स-रक्तं पूयम् उद्गिरेत् ।
वाजि-स्थान-समो गन्धे युक्तो लिङ्गैश् च पैत्तिकैः ॥ १० ॥

२५.१०bv स-रक्तं पूयम् ईरयेत् २५.१०cv वाजि-स्थान-समो गन्धैर् २५.१०cv वाजि-स्थान-समो गन्धो द्वाभ्यां त्रिभिश् च सर्वैश् च विद्याल् लक्षण-संकरात् ।
जिह्वा-प्रभो मृदुः श्लक्ष्णः श्यावौष्ठ-पिटिकः समः ॥ ११ ॥

२५.११dv श्यावौष्ठो ऽ-पिटिकः समः किञ्-चिद्-उन्नत-मध्यो वा व्रणः शुद्धो ऽन्-उपद्रवः ।
त्वग्-आमिष-सिरा-स्नायु-संध्य्-अस्थीनि व्रणाशयाः ॥ १२ ॥

कोष्ठो मर्म च तान्य् अष्टौ दुः-साध्यान्य् उत्तरोत्तरम् ।
सु-साध्यः सत्-त्व-मांसाग्नि-वयो-बल-वति व्रणः ॥ १३ ॥

२५.१३dv -वयो-बल-वतां व्रणः वृत्तो दीर्घस् त्रि-पुटकश् चतुर्-अश्राकृतिश् च यः ।
तथा स्फिक्-पायु-मेढ्रौष्ठ-पृष्ठान्तर्-वक्त्र-गण्ड-गः ॥ १४ ॥

२५.१४dv -पृष्ठान्तर्-वक्त्र-गण्ड-जः २५.१४dv -पृष्ठान्तर्-वक्त्र-गण्डयोः कृच्छ्र-साध्यो ऽक्षि-दशन-नासिकापाङ्ग-नाभिषु ।
सेवनी-जठर-श्रोत्र-पार्श्व-कक्षा-स्तनेषु च ॥ १५ ॥

फेन-पूयानिल-वहः शल्य-वान् ऊर्ध्व-निर्वमी ।
भगन्दरो ऽन्तर्-वदनस् तथा कट्य्-अस्थि-संश्रितः ॥ १६ ॥

कुष्ठिनां विष-जुष्टानां शोषिणां मधु-मेहिनां ।
व्रणाः कृच्छ्रेण सिध्यन्ति येषां च स्युर् व्रणे व्रणाः ॥ १७ ॥

२५.१७dv येषां चापि व्रणे व्रणाः नैव सिध्यन्ति वीसर्प-ज्वरातीसार-कासिनाम् ।
पिपासूनाम् अ-निद्राणां श्वासिनाम् अ-विपाकिनाम् ॥ १८ ॥

२५.१८cv पिपासूनां स-निद्राणां भिन्ने शिरः-कपाले वा मस्तुलुङ्गस्य दर्शने ।
स्नायु-क्लेदात् सिरा-छेदाद् गाम्भीर्यात् कृमि-भक्षणात् ॥ १९ ॥

अस्थि-भेदात् स-शल्य-त्वात् स-विष-त्वाद् अ-तर्कितात् ।
मिथ्या-बन्धाद् अति-स्नेहाद् रौक्ष्याद् रोमादि-घट्टनात् ॥ २० ॥

क्षोभाद् अ-शुद्ध-कोष्ठ-त्वात् सौहित्याद् अति-कर्शनात् ।
मद्य-पानाद् दिवा-स्वप्नाद् व्यवायाद् रात्रि-जागरात् ॥ २१ ॥

२५.२१cv मद्य-पानाद् दिवा-स्वापाद् व्रणो मिथ्योपचाराच् च नैव साध्यो ऽपि सिध्यति ।
कपोत-वर्ण-प्रतिमा यस्यान्तः क्लेद-वर्जिताः ॥ २२ ॥

२५.२२bv नैव साध्यो ऽपि रोहति स्थिराश् चिपिटिका-वन्तो रोहतीति तम् आदिशेत् ।
अथात्र शोफावस्थायां यथासन्नं विशोधनम् ॥ २३ ॥

२५.२३av स्थिराश् च पिटिका-वन्तो योज्यं शोफो हि शुद्धानां व्रणश् चाशु प्रशाम्यति ।
कुर्याच् छीतोपचारं च शोफावस्थस्य संततम् ॥ २४ ॥

२५.२४cv कुर्याच् छीतोपचारं तु दोषाग्निर् अग्नि-वत् तेन प्रयाति सहसा शमम् ।
शोफे व्रणे च कठिने वि-वर्णे वेदनान्विते ॥ २५ ॥

विष-युक्ते विशेषेण जल-जाद्यैर् हरेद् असृक् ।
दुष्टास्रे ऽपगते सद्यः शोफ-राग-रुजां शमः ॥ २६ ॥

२५.२६bv जलौकाद्यैर् हरेद् असृक् हृते हृते च रुधिरे सु-शीतैः स्पर्श-वीर्ययोः ।
सु-श्लक्ष्णैस् तद्-अहः-पिष्टैः क्षीरेक्षु-स्व-रस-द्रवैः ॥ २७ ॥

२५.२७dv क्षीरेक्षु-स्व-रस-द्रुतैः शत-धौत-घृतोपेतैर् मुहुर् अन्यैर् अ-शोषिभिः ।
प्रतिलोमं हितो लेपः सेकाभ्यङ्गाश् च तत्-कृताः ॥ २८ ॥

न्यग्रोधोदुम्बराश्वत्थ-प्लक्ष-वेतस-वल्कलैः ।
प्रदेहो भूरि-सर्पिर्भिः शोफ-निर्वापणः परम् ॥ २९ ॥

२५.२९cv प्रदेहो भूरि-सर्पिश् च वातोल्बणानां स्तब्धानां कठिनानां महा-रुजाम् ।
स्रुतासृजां च शोफानां व्रणानाम् अपि चेदृशाम् ॥ ३० ॥

आनूप-वेसवाराद्यैः स्वेदः सोमास् तिलाः पुनः ।
भृष्टा निर्वापिताः क्षीरे तत्-पिष्टा दाह-रुग्-हराः ॥ ३१ ॥

स्थिरान् मन्द-रुजः शोफान् स्नेहैर् वात-कफापहैः ।
अभ्यज्य स्वेदयित्वा च वेणु-नाड्या शनैः शनैः ॥ ३२ ॥

विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा ।
यव-गोधूम-मुद्गैश् च सिद्ध-पिष्टैः प्रलेपयेत् ॥ ३३ ॥

२५.३३dv सिद्धैः पिष्टैः प्रलेपयेत् २५.३३dv सिद्धं पिष्टं प्रलेपयेत् २५.३३dv दुग्ध-पिष्टैः प्रलेपयेत् विलीयते स चेन् नैवं ततस् तम् उपनाहयेत् ।
अ-विदग्धस् तथा शान्तिं विदग्धः पाकम् अश्नुते ॥ ३४ ॥

स-कोल-तिल-वल्लोमा दध्य्-अम्ला सक्तु-पिण्डिका ।
स-किण्व-कुष्ठ-लवणा कोष्णा शस्तोपनाहने ॥ ३५ ॥

२५.३५av स-कोल-तिल-वल्लूर- २५.३५bv -दध्य्-अम्ला सक्तु-पिण्डिका सु-पक्वे पिण्डिते शोफे पीडनैर् उपपीडिते ।
दारणं दारणार्हस्य सु-कुमारस्य चेष्यते ॥ ३६ ॥

गुग्गुल्व्-अतसि-गो-दन्त-स्वर्णक्षीरी-कपोत-विट् ।
क्षारौषधानि क्षाराश् च पक्व-शोफ-विदारणम् ॥ ३७ ॥

२५.३७cv क्षारौषधानि क्षारश् च पूय-गर्भान् अणु-द्वारान् सोत्सङ्गान् मर्म-गान् अपि ।
निः-स्नेहैः पीडन-द्रव्यैः समन्तात् प्रतिपीडयेत् ॥ ३८ ॥

शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति ।
न मुखे चैनम् आलिम्पेत् तथा दोषः प्रसिच्यते ॥ ३९ ॥

कलाय-यव-गोधूम-माष-मुद्ग-हरेणवः ।
द्रव्याणां पिच्छिलानां च त्वङ्-मूलानि प्रपीडनम् ॥ ४० ॥

२५.४०cv द्रव्याणां पिच्छिलानां तु २५.४०cv द्रव्याणां पिच्छिलानां वा सप्तसु क्षालनाद्येषु सुरसारग्वधादिकौ ।
भृशं दुष्टे व्रणे योज्यौ मेह-कुष्ठ-व्रणेषु च ॥ ४१ ॥

अथ-वा क्षालनं क्वाथः पटोली-निम्ब-पत्त्र-जः ।
अ-विशुद्धे विशुद्धे तु न्यग्रोधादि-त्वग्-उद्भवः ॥ ४२ ॥

२५.४२av अथ-वा क्षालने क्वाथः पटोली-तिल-यष्ट्य्-आह्व-त्रिवृद्-दन्ती-निशा-द्वयम् ।
निम्ब-पत्त्राणि चालेपः स-पटुर् व्रण-शोधनः ॥ ४३ ॥

२५.४३dv स-पटुर् व्रण-शोधनम् व्रणान् विशोधयेद् वर्त्या सूक्ष्मास्यान् संधि-मर्म-गान् ।
कृतया त्रिवृता-दन्ती-लाङ्गली-मधु-सैन्धवैः ॥ ४४ ॥

वाताभिभूतान् सास्रावान् धूपयेद् उग्र-वेदनान् ।
यवाज्य-भूर्ज-मदन-श्रीवेष्टक-सुराह्वयैः ॥ ४५ ॥

निर्वापयेद् भृशं शीतैः पित्त-रक्त-विषोल्बणान् ।
शुष्काल्प-मांसे गम्भीरे व्रण उत्सादनं हितम् ॥ ४६ ॥

न्यग्रोध-पद्मकादिभ्याम् अश्वगन्धा-बला-तिलैः ।
अद्यान् मांसाद-मांसानि विधिनोपहितानि च ॥ ४७ ॥

२५.४७dv विहितोपहितानि च २५.४७dv विधानोपहितानि च मांसं मांसाद-मांसेन वर्धते शुद्ध-चेतसः ।
उत्सन्न-मृदु-मांसानां व्रणानाम् अवसादनम् ॥ ४८ ॥

२५.४८bv वर्धते शुद्ध-तेजसः जाती-मुकुल-कासीस-मनोह्वाल-पुराग्निकैः ।
उत्सन्न-मांसान् कठिनान् कण्डू-युक्तांश् चिरोत्थितान् ॥ ४९ ॥

व्रणान् सु-दुःख-शोध्यांश् च शोधयेत् क्षार-कर्मणा ।
स्रवन्तो ऽश्मरी-जा मूत्रं ये चान्ये रक्त-वाहिनः ॥ ५० ॥

२५.५०av व्रणान् सु-दुःख-साध्यांश् च २५.५०bv योजयेत् क्षार-कर्मणा २५.५०dv ये चान्ये क्षत-वाहिनः छिन्नाश् च संधयो येषां यथोक्तैर् ये च शोधनैः ।
शोध्यमाना न शुध्यन्ति शोध्याः स्युस् ते ऽग्नि-कर्मणा ॥ ५१ ॥

२५.५१bv यथोक्तैर् ये च साधनैः २५.५१cv साध्यमाना न सिध्यन्ति २५.५१dv साध्याः स्युस् ते ऽग्नि-कर्मणा २५.५१dv साध्यास् ते चाग्नि-कर्मणा शुद्धानां रोपणं योज्यम् उत्सादाय यद् ईरितम् ।
अश्वगन्धा रुहा लोध्रं कट्फलं मधुयष्टिका ॥ ५२ ॥

२५.५२av शुद्धानां रोपणे योज्यम् समङ्गा धातकी-पुष्पं परमं व्रण-रोपणम् ।
अपेत-पूति-मांसानां मांस-स्थानाम् अ-रोहताम् ॥ ५३ ॥

कल्कं संरोहणं कुर्यात् तिलानां मधुकान्वितम् ।
स्निग्धोष्ण-तिक्त-मधुर-कषाय-त्वैः स सर्व-जित् ॥ ५४ ॥

२५.५४av कल्कं संरोहणे कुर्यात् २५.५४av कल्कः संरोहणं कुर्यात् २५.५४bv तिलानां मधुकान्वितः २५.५४dv -कषायैर् एष सर्व-जित् स क्षौद्र-निम्ब-पत्त्राभ्यां युक्तः संशोधनं परम् ।
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्याद् आशु रोपणः ॥ ५५ ॥

२५.५५bv युक्तः संशोधनः परम् २५.५५dv युक्तः स्याद् अपि रोपणः तिल-वद् यव-कल्कं तु के-चिद् इच्छन्ति तद्-विदः ।
सास्र-पित्त-विषागन्तु-गम्भीरान् सोष्मणो व्रणान् ॥ ५६ ॥

क्षीर-रोपण-भैषज्य-शृतेनाज्येन रोपयेत् ।
रोपणौषध-सिद्धेन तैलेन कफ-वात-जान् ॥ ५७ ॥

काच्छी-लोध्राभया-सर्ज-सिन्दूराञ्जन-तुत्थकम् ।
चूर्णितं तैल-मदनैर् युक्तं रोपणम् उत्तमम् ॥ ५८ ॥

२५.५८av काक्षी-लोध्राभया-सर्ज- २५.५८av काङ्क्षी-लोध्राभया-सर्ज- समानां स्थिर-मांसानां त्वक्-स्थानां चूर्ण इष्यते ।
ककुभोदुम्बराश्वत्थ-जम्बू-कट्फल-लोध्र-जैः ॥ ५९ ॥

२५.५९bv त्वक्-स्थानां चूर्णम् इष्यते त्वक्-चूर्णैश् चूर्णिता व्रणाः त्वक्-चूर्णैश् चूर्णिता व्रणाः ।
लाक्षा-मनोह्वा-मञ्जिष्ठा-हरिताल-निशा-द्वयैः ॥ ६० ॥

२५.६०av त्वचम् आशु निगृह्णाति २५.६०bv त्वक्-चूर्णैश् चूर्णितो व्रणः प्रलेपः स-घृत-क्षौद्रस् त्वग्-विशुद्धि-करः परम् ।
कालीयक-लताम्रास्थि-हेम-काला-रसोत्तमैः ॥ ६१ ॥

२५.६१av प्रलेपः स-घृत-क्षौद्रैस् लेपः स-गो-मय-रसः स-वर्ण-करणः परम् ।
दग्धो वारण-दन्तो ऽन्तर्-धूमं तैलं रसाञ्जनम् ॥ ६२ ॥

२५.६२bv स-वर्ण-करणो भवेत् २५.६२dv -धूमस् तैलं रसाञ्जनम् रोम-संजननो लेपस् तद्-वत् तैल-परिप्लुता ।
चतुष्-पान्-नख-रोमास्थि-त्वक्-शृङ्ग-खुर-जा मषी ॥ ६३ ॥

व्रणिनः शस्त्र-कर्मोक्तं पथ्या-पथ्यान्नम् आदिशेत् ।
द्वे पञ्च-मूले वर्गश् च वात-घ्नो वातिके हितः ॥ ६४ ॥

२५.६४av व्रणिनां शस्त्र-कर्मोक्तं २५.६४bv यत् पथ्या-पथ्यम् आदिशेत् न्यग्रोध-पद्मकाद्यौ तु तद्-वत् पित्त-प्रदूषिते ।
आरग्वधादिः श्लेष्म-घ्नः कफे मिश्रास् तु मिश्र-जे ॥ ६५ ॥

२५.६५dv कफे मिश्रस् तु मिश्र-जे २५.६५dv कफे मिश्रास् तु मिश्रके एभिः प्रक्षालनं लेपो घृतं तैलं रस-क्रिया ।
चूर्णो वर्तिश् च संयोज्य व्रणे सप्त यथा-यथम् ॥ ६६ ॥

२५.६६av एभिः प्रक्षालनालेप- २५.६६bv -घृत-तैल-रस-क्रियाः जाती-निम्ब-पटोल-पत्त्र-कटुका-दार्वी-निशा-शारिवा- ॥ ६७अ ॥
-मञ्जिष्ठाभय-सिक्थ-तुत्थ-मधुकैर् नक्ताह्व-बीजान्वितैः ॥ ६७ब् ॥
२५.६७bv -मञ्जिष्ठाभय-सिक्थ-तुत्थ-मधुकैर् नक्ताह्व-बीजैस् तथा सर्पिः साध्यम् अनेन सूक्ष्म-वदना मर्माश्रिताः क्लेदिनो ॥ ६७च् ॥
२५.६७cv सर्पिः साध्यम् अनेन सूक्ष्म-वदना मर्माश्रिताः स्राविणो २५.६७cv सर्पिः सिद्धम् अनेन सूक्ष्म-वदना मर्माश्रिताः क्लेदिनो गम्भीराः स-रुजो व्रणाः स-गतयः शुध्यन्ति रोहन्ति च ॥ ६७द् ॥
२५.६७dv गम्भीराः स-रुजो व्रणाः स-गतिकाः शुध्यन्ति रोहन्ति च साधितं स्व-रसे तैलं काकमाच्याश् चतुर्-गुणे ।
गति-भाजाम् अपि हितं व्रणानां रोपणं परम् ॥ ६७+१ ॥

२५.६७+१cv गति-भाजाम् अपि वरं

# अध्याय 26

सद्यो-व्रणा ये सहसा संभवन्त्य् अभिघाततः ।
अन्-अन्तैर् अपि तैर् अङ्गम् उच्यते जुष्टम् अष्ट-धा ॥ १ ॥

घृष्टावकृत्त-विच्छिन्न-प्रविलम्बित-पातितम् ।
विद्धं भिन्नं विदलितं तत्र घृष्टं लसीकया ॥ २ ॥

२६.२bv -प्रविलम्बि-निपातितम् रक्त-लेशेन वा युक्तं स-प्लोषं छेदनात् स्रवेत् ।
अवगाढं ततः कृत्तं विच्छिन्नं स्यात् ततो ऽपि च ॥ ३ ॥

प्रविलम्बि स-शेषे ऽस्थ्नि पतितं पातितं तनोः ।
सूक्ष्मास्य-शल्य-विद्धं तु विद्धं कोष्ठ-विवर्जितम् ॥ ४ ॥

२६.४av प्रविलम्बि स-शेषास्थि भिन्नम् अन्यद् विदलितं मज्ज-रक्त-परिप्लुतम् ।
प्रहार-पीडनोत्पेषात् सहास्थ्ना पृथु-तां गतम् ॥ ५ ॥

२६.५cv प्रहार-पीडनोत्पातैः २६.५cv प्रहार-पीडनात् तेषां सद्यः सद्यो-व्रणं सिञ्चेद् अथ यष्ट्य्-आह्व-सर्पिषा ।
तीव्र-व्यथं कवोष्णेन बला-तैलेन वा पुनः ॥ ६ ॥

क्षतोष्मणो निग्रहार्थं तत्-कालं विसृतस्य च ।
कषाय-शीत-मधुर-स्निग्धा लेपादयो हिताः ॥ ७ ॥

सद्यो-व्रणेष्व् आयतेषु संधानार्थं विशेषतः ।
मधु-सर्पिश् च युञ्जीत पित्त-घ्नीश् च हिमाः क्रियाः ॥ ८ ॥

२६.८cv मधु-सर्पिः प्रयुञ्जीत स-संरम्भेषु कर्तव्यम् ऊर्ध्वं चाधश् च शोधनम् ।
उपवासो हितं भुक्तं प्रततं रक्त-मोक्षणम् ॥ ९ ॥

२६.९cv उपवासो हितस् तत्र घृष्टे विदलिते चैष सु-तराम् इष्यते विधिः ।
तयोर् ह्य् अल्पं स्रवत्य् अस्रं पाकस् तेनाशु जायते ॥ १० ॥

अत्य्-अर्थम् अस्रं स्रवति प्राय-शो ऽन्य-त्र विक्षते ।
ततो रक्त-क्षयाद् वायौ कुपिते ऽति-रुजा-करे ॥ ११ ॥

२६.११av अत्य्-अर्थम् अस्रं वमति २६.११bv प्राय-शो ऽन्य-त्र च क्षते स्नेह-पान-परीषेक-स्वेद-लेपोपनाहनम् ।
स्नेह-वस्तिं च कुर्वीत वात-घ्नौषध-साधितम् ॥ १२ ॥

२६.१२dv स्नेहैर् वस्तिं च कुर्वीत २६.१२dv वात-घ्नौषध-साधितैः इति साप्ताहिकः प्रोक्तः सद्यो-व्रण-हितो विधिः ।
सप्ताहाद् गत-वेगे तु पूर्वोक्तं विधिम् आचरेत् ॥ १३ ॥

२६.१३av इति सप्ताहिकः प्रोक्तः प्रायः सामान्य-कर्मेदं वक्ष्यते तु पृथक् पृथक् ।
घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १४ ॥

कल्कादीन्य् अवकृत्ते तु विच्छिन्न-प्रविलम्बिनोः ।
सीवनं विधिनोक्तेन बन्धनं चानु पीडनम् ॥ १५ ॥

२६.१५dv बन्धनं चाशु पीडनम् अ-साध्यं स्फुटितं नेत्रम् अ-दीर्णं लम्बते तु यत् ।
संनिवेश्य यथा-स्थानम् अ-व्याविद्ध-सिरं भिषक् ॥ १६ ॥

२६.१६bv उदीर्णं लम्बते तु यत् २६.१६cv संनिवेश्य यथा-स्थानं २६.१६dv सूच्या विध्येत् सिरां भिषक् पीडयेत् पाणिना पद्म-पलाशान्तरितेन तत् ।
ततो ऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ १७ ॥

२६.१७dv तर्पणे कथितं हविः विपक्वम् आजं यष्ट्य्-आह्व-जीवकर्षभकोत्पलैः ।
स-पयस्कैः परं तद् धि सर्व-नेत्राभिघात-जित् ॥ १८ ॥

गल-पीडावसन्ने ऽक्ष्णि वमनोत्कासन-क्षवाः ।
प्राणायामो ऽथ-वा कार्यः क्रिया च क्षत-नेत्र-वत् ॥ १९ ॥

२६.१९av गल-पीडो ऽवसन्ने ऽक्ष्णि २६.१९bv वमनोत्क्लेशन-क्षवाः कर्णे स्थानाच् च्युते स्यूते श्रोतस् तैलेन पूरयेत् ।
कृकाटिकायां छिन्नायां निर्गच्छत्य् अपि मारुते ॥ २० ॥

२६.२०av कर्णे स्थान-च्युते स्यूते २६.२०bv स्रोतस् तैलेन पूरयेत् समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निर्-अन्तरम् ।
आजेन सर्पिषा चात्र परिषेकः प्रशस्यते ॥ २१ ॥

२६.२१av समां निवेश्य बध्नीयात् २६.२१cv आजेन सर्पिषा तत्र उत्तानो ऽन्नानि भुञ्जीत शयीत च सु-यन्त्रितः ।
घातं शाखासु तिर्यक्-स्थं गात्रे सम्यङ्-निवेशिते ॥ २२ ॥

स्यूत्वा वेल्लित-बन्धेन बध्नीयाद् घन-वाससा ।
चर्मणा गोष्-फणा-बन्धः कार्यश् चा-संगते व्रणे ॥ २३ ॥

२६.२३dv कार्यश् चांस-गते व्रणे २६.२३dv कार्यश् चांश-गते व्रणे पादौ विलम्बि-मुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ।
प्रवेश्य वृषणौ सीव्येत् सेवन्या तुन्न-संज्ञया ॥ २४ ॥

२६.२४dv सेवन्या पिचु-युक्तया २६.२४dv सीवन्या पिचु-युक्तया कार्यश् च गोष्-फणा-बन्धः कट्याम् आवेश्य पट्टकम् ।
स्नेह-सेकं न कुर्वीत तत्र क्लिद्यति हि व्रणः ॥ २५ ॥

२६.२५dv तत्र क्लिद्यन्ति हि व्रणाः २६.२५dv तेन क्लिद्यन्ति हि व्रणाः कालानुसार्य्-अगुर्व्-एला-जाती-चन्दन-पर्पटैः ।
शिला-दार्व्य्-अमृता-तुत्थैः सिद्धं तैलं च रोपणम् ॥ २६ ॥

२६.२६bv -जाती-चन्दन-पद्मकैः छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन युक्तितः ।
बध्नीयात् कोश-बन्धेन ततो व्रण-वद् आचरेत् ॥ २७ ॥

२६.२७bv दग्ध्वा तैलेन युक्तिभिः कार्या शल्याहृते विद्धे भङ्गाद् विदलिते क्रिया ।
शिरसो ऽपहृते शल्ये वाल-वर्तिं प्रवेशयेत् ॥ २८ ॥

मस्तुलुङ्ग-स्रुतेः क्रुद्धो हन्याद् एनं चलो ऽन्य-था ।
व्रणे रोहति चैकैकं शनैर् अपनयेत् कचम् ॥ २९ ॥

२६.२९av मस्तुलुङ्ग-स्रुते क्रुद्धो मस्तुलुङ्ग-स्रुतौ खादेन् मस्तिष्कान् अन्य-जीव-जान् ।
शल्ये हृते ऽङ्गाद् अन्यस्मात् स्नेह-वर्तिं निधापयेत् ॥ ३० ॥

दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुत-शोणिताः ।
सेचयेच् चक्र-तैलेन सूक्ष्म-नेत्रार्पितेन तान् ॥ ३१ ॥

भिन्ने कोष्ठे ऽसृजा पूर्णे मूर्छा-हृत्-पार्श्व-वेदनाः ।
ज्वरो दाहस् तृड् आध्मानं भक्तस्यान्-अभिनन्दनम् ॥ ३२ ॥

सङ्गो विण्-मूत्र-मरुतां श्वासः स्वेदो ऽक्षि-रक्त-ता ।
लोह-गन्धि-त्वम् आस्यस्य स्याद् गात्रे च वि-गन्ध-ता ॥ ३३ ॥

आमाशय-स्थे रुधिरे रुधिरं छर्दयत्य् अपि ।
आध्मानेनाति-मात्रेण शूलेन च विशस्यते ॥ ३४ ॥

२६.३४dv शूलेन च विनश्यति २६.३४dv शूलेन च विशिष्यते पक्वाशय-स्थे रुधिरे स-शूलं गौरवं भवेत् ।
नाभेर् अधस्-ताच् छीत-त्वं खेभ्यो रक्तस्य चागमः ॥ ३५ ॥

अ-भिन्नो ऽप्य् आशयः सूक्ष्मैः स्रोतोभिर् अभिपूर्यते ।
असृजा स्यन्दमानेन पार्श्वे मूत्रेण वस्ति-वत् ॥ ३६ ॥

तत्रान्तर्-लोहितं शीत-पादोच्छ्वास-करानननम् ।
रक्ताक्षं पाण्डु-वदनम् आनद्धं च विवर्जयेत् ॥ ३७ ॥

आमाशय-स्थे वमनं हितं पक्वाशयाश्रिते ।
विरेचनं निरूहं च निः-स्नेहोष्णैर् विशोधनैः ॥ ३८ ॥

२६.३८bv हितं पक्वाशयाश्रये २६.३८bv हितं पक्वाशय-स्थिते २६.३८dv निः-स्नेहोष्णैर् विशोधनम् यव-कोल-कुलत्थानां रसैः स्नेह-विवर्जितैः ।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धव-संयुताम् ॥ ३९ ॥

२६.३९dv पिबेत् सैन्धव-संयुतम् अति-निःस्रुत-रक्तस् तु भिन्न-कोष्ठः पिबेद् असृक् ।
क्लिष्ट-च्छिन्नान्त्र-भेदेन कोष्ठ-भेदो द्वि-धा स्मृतः ॥ ४० ॥

२६.४०av अति-निःसृत-रक्तस् तु २६.४०cv क्लिन्न-भिन्नान्त्र-भेदेन २६.४०cv श्लिष्ट-च्छिन्नान्त्र-भेदेन मूर्छादयो ऽल्पाः प्रथमे द्वितीये त्व् अति-बाधकाः ।
क्लिष्टान्त्रः संशयी देही छिन्नान्त्रो नैव जीवति ॥ ४१ ॥

२६.४१cv क्लिन्नान्त्रः संशयी देही २६.४१cv क्लिष्टान्त्रः संशये देही २६.४१cv श्लिष्टान्त्रः संशयी देही २६.४१dv भिन्नान्त्रो नैव जीवति यथा-स्वं मार्गम् आपन्ना यस्य विण्-मूत्र-मारुताः ।
व्य्-उपद्रवः स भिन्ने ऽपि कोष्ठे जीवत्य् अ-संशयम् ॥ ४२ ॥

अ-भिन्नम् अन्त्रं निष्क्रान्तं प्रवेश्यं न त्व् अतो ऽन्य-था ।
उत्पङ्गिल-शिरो-ग्रस्तं तद् अप्य् एके वदन्ति तु ॥ ४३ ॥

२६.४३cv उरोगल-शिरो-ग्रस्तं २६.४३cv उरोङ्गिल-शिरो-ग्रस्तं २६.४३cv पुपुङ्गल-शिरो-ग्रस्तं २६.४३cv वयङ्गिल-शिरो-ग्रस्तं प्रक्षाल्य पयसा दिग्धं तृण-शोणित-पांसुभिः ।
प्रवेशयेत् क्लृप्त-नखो घृतेनाक्तं शनैः शनैः ॥ ४४ ॥

क्षीरेणार्द्री-कृतं शुष्कं भूरि-सर्पिः-परिप्लुतम् ।
अङ्गुल्या प्रमृशेत् कण्ठं जलेनोद्वेजयेद् अपि ॥ ४५ ॥

तथान्त्राणि विशन्त्य् अन्तस् तत्-कालं पीडयन्ति च ।
व्रण-सौक्ष्म्याद् बहु-त्वाद् वा कोष्ठम् अन्त्रम् अन्-आविशत् ॥ ४६ ॥

२६.४६bv तत्-कालं पीडयेत च तत्-प्रमाणेन जठरं पाटयित्वा प्रवेशयेत् ।
यथा-स्थानं स्थिते सम्यक् अन्त्रे सीव्येद् अनु व्रणम् ॥ ४७ ॥

२६.४७cv यथा-स्थान-स्थिते सम्यग् स्थानाद् अपेतम् आदत्ते जीवितं कुपितं च तत् ।
वेष्टयित्वानु पट्टेन घृतेन परिषेचयेत् ॥ ४८ ॥

२६.४८bv जीवितं कुपितं च यत् चूर्णैर् यथोक्तैः संधानं कृत्वा क्षौद्र-घृत-प्लुतैः ।
ततः कवलिकां दत्त्वा वेष्टयेद् अनु-पूर्व-शः ॥ ४८.१+१ ॥

पाययेत ततः कोष्णं चित्रा-तैल-युतं पयः ।
मृदु-क्रियार्थं शकृतो वायोश् चाधः-प्रवृत्तये ॥ ४९ ॥

२६.४९av पाययेत् तं ततः कोष्णं २६.४९bv चित्र-तैल-युतं पयः अनुवर्तेत वर्षं च यथोक्तं व्रण-यन्त्रणाम् ।
उदरान् मेदसो वर्तिं निर्गतां भस्मना मृदा ॥ ५० ॥

२६.५०bv यथोक्तं व्रण-यन्त्रणम् अवकीर्य कषायैर् वा श्लक्ष्णैर् मूलैस् ततः समम् ।
दृढं बद्ध्वा च सूत्रेण वर्धयेत् कुशलो भिषक् ॥ ५१ ॥

२६.५१bv श्लक्ष्णैर् मूले ततः समम् २६.५१bv श्लक्ष्णैश् चूर्णैस् ततः समम् तीक्ष्णेनाग्नि-प्रतप्तेन शस्त्रेण सकृद् एव तु ।
स्याद् अन्य-था रुग् आटोपो मृत्युर् वा छिद्यमानया ॥ ५२ ॥

स-क्षौद्रे च व्रणे बद्धे सु-जीर्णे ऽन्ने घृतं पिबेत् ।
क्षीरं वा शर्करा-चित्रा-लाक्षा-गोक्षुरकैः शृतम् ॥ ५३ ॥

२६.५३av स-क्षौद्रे तु व्रणे बद्धे २६.५३bv सु-जीर्णान्नो घृतं पिबेत् रुग्-दाह-जित् स-यष्ट्य्-आह्वैः परं पूर्वोदितो विधिः ।
मेदो-ग्रन्थ्य्-उदितं तत्र तैलम् अभ्यञ्जने हितम् ॥ ५४ ॥

२६.५४cv मेदो-ग्रन्थ्य्-उदितं चात्र तालीशं पद्मकं मांसी हरेण्व्-अगुरु-चन्दनम् ।
हरिद्रे पद्म-बीजानि सोशीरं मधुकं च तैः ॥ ५५ ॥

पक्वं सद्यो-व्रणेषूक्तं तैलं रोपणम् उत्तमम् ।
गूढ-प्रहाराभिहते पतिते विषमोच्चकैः ॥ ५६ ॥

२६.५६cv मूढ-प्रहाराभिहते कार्यं वातास्र-जित् तृप्ति-मर्दनाभ्यञ्जनादिकम् ।
विश्लिष्ट-देहं मथितं क्षीणं मर्माहतं हतम् ॥ ५७ ॥

२६.५७av कुर्याद् वातासृग्-उक्तं हि २६.५७bv -मर्दनाभ्यङ्ग-शोधनम् २६.५७bv मर्दनाभ्यङ्ग-शोधनम् २६.५७dv क्षीणं मर्माहताहतम् २६.५७dv क्षीणं मर्माहतं च तम् वासयेत् तैल-पूर्णायां द्रोण्यां मांस-रसाशिनम् ॥ ५७ अब् ॥

# अध्याय 27

पात-घातादिभिर् द्वे-धा भङ्गो ऽस्थ्नां संध्य्-अ-संधितः ।
प्रसारणाकुञ्चनयोर् अ-शक्तिः संधि-मुक्त-ता ॥ १ ॥

२७.१bv भङ्गो ऽस्थ्नः संध्य्-अ-संधि-गः २७.१bv भङ्गो ऽस्थ्नः संध्य्-अ-संधितः इतरस्मिन् भृशं शोफः सर्वावस्थास्व् अति-व्यथा ।
अ-शक्तिश् चेष्टिते ऽल्पे ऽपि पीड्यमाने स-शब्द-ता ॥ २ ॥

२७.२bv सर्वावस्थास्व् अति-व्यथः समासाद् इति भङ्गस्य लक्षणं बहु-धा तु तत् ।
भिद्यते भङ्ग-भेदेन तस्य सर्वस्य साधनम् ॥ ३ ॥

यथा स्याद् उपयोगाय तथा तद् उपदेक्ष्यते ।
प्राज्याणु-दारि यत् त्व् अस्थि स्पर्शे शब्दं करोति यत् ॥ ४ ॥

२७.४cv प्राज्याणु-दारि यच् चास्थि यत्रास्थि-लेशः प्रविशेन् मध्यम् अस्थ्नो विदारितः ।
भग्नं यच् चाभिघातेन किञ्-चिद् एवावशेषितम् ॥ ५ ॥

२७.५cv भग्नं यद् अभिघातेन २७.५cv भग्नं यद् वाभिघातेन उन्नम्यमानं क्षत-वद् यच् च मज्जनि मज्जति ।
तद् दुः-साध्यं कृशा-शक्त-वातलाल्पाशिनाम् अपि ॥ ६ ॥

भिन्नं कपालं यत् कट्यां संधि-मुक्तं च्युतं च यत् ।
जघनं प्रति पिष्टं च भग्नं यत् तद् विवर्जयेत् ॥ ७ ॥

२७.७av भिन्नं कपालं यत् कट्याः अ-संश्लिष्ट-कपालं च ललाटं चूर्णितं तथा ।
यच् च भग्नं भवेच् छङ्ख-शिरः-पृष्ठ-स्तनान्तरे ॥ ८ ॥

सम्यग्-यमितम् अप्य् अस्थि दुर्-न्यासाद् दुर्-निबन्धनात् ।
संक्षोभाद् अपि यद् गच्छेद् वि-क्रियां तद् विवर्जयेत् ॥ ९ ॥

२७.९dv वि-क्रियां तच् च वर्जयेत् आदितो यच् च दुर्-जातम् अस्थि संधिर् अथापि वा ।
तरुणास्थीनि भुज्यन्ते भज्यन्ते नलकानि तु ॥ १० ॥

२७.१०cv तरुणास्थीनि नम्यन्ते २७.१०dv भज्यन्ते नलकानि च कपालानि विभिद्यन्ते स्फुटन्त्य् अन्यानि भूयसा ।
अथावनतम् उन्नम्यम् उन्नतं चावपीडयेत् ॥ ११ ॥

२७.११av कपालास्थीनि भिद्यन्ते आञ्छेद् अतिक्षिप्तम् अधो-गतं चोपरि वर्तयेत् ।
आञ्छनोत्पीडनोन्नाम-चर्म-संक्षेप-बन्धनैः ॥ १२ ॥

२७.१२av आञ्छेद् अ-विक्षिप्तम् अधो- संधीञ् छरीर-गान् सर्वांश् चलान् अप्य् अ-चलान् अपि ।
इत्य् एतैः स्थापनोपायैः सम्यक् संस्थाप्य निश्-चलम् ॥ १३ ॥

२७.१३dv सम्यक् संस्थाप्य निश्-चलान् पट्टैः प्रभूत-सर्पिर्भिः वेष्टयित्वा सुखैस् ततः ।
कदम्बोदुम्बराश्वत्थ-सर्जार्जुन-पलाश-जैः ॥ १४ ॥

वंशोद्भवैर् वा पृथुभिस् तनुभिः सु-निवेशितैः ।
सु-श्लक्ष्णैः स-प्रतिस्तम्भैर् वल्कलैः शकलैर् अपि ॥ १५ ॥

२७.१५cv सु-श्लक्ष्णैः स-प्रतिस्तम्भैर् कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत् ।
शिथिलेन हि बन्धेन संधि-स्थैर्यं न जायते ॥ १६ ॥

२७.१६dv संधेः स्थैर्यं न जायते गाढेनाति रुजा-दाह-पाक-श्वयथु-संभवः ।
त्र्य्-अहात् त्र्य्-अहाद् ऋतौ घर्मे सप्ताहान् मोक्षयेद् धिमे ॥ १७ ॥

२७.१७av गाढेनापि रुजा-दाह- साधारणे तु पञ्चाहाद् भङ्ग-दोष-वशेन वा ।
न्यग्रोधादि-कषायेण ततः शीतेन सेचयेत् ॥ १८ ॥

२७.१८bv भग्न-दोष-वशेन वा २७.१८bv भङ्गे दोष-वशेन वा तं पञ्च-मूल-पक्वेन पयसा तु स-वेदनम् ।
सुखोष्णं वावचार्यं स्याच् चक्र-तैलं विजानता ॥ १९ ॥

२७.१९av पञ्च-मूल-विपक्वेन २७.१९च्च् सुखोष्णम् अवचार्यं स्याच् विभज्य देशं कालं च वात-घ्नौषध-संयुतम् ।
प्रततं सेक-लेपांश् च विदध्याद् भृश-शीतलान् ॥ २० ॥

२७.२०av विभज्य देश-कालौ च २७.२०bv वात-घ्नौषध-साधितम् गृष्टि-क्षीरं स-सर्पिष्कं मधुरौषध-साधितम् ।
प्रातः प्रातः पिबेद् भग्नः शीतलं लाक्षया युतम् ॥ २१ ॥

स-व्रणस्य तु भग्नस्य व्रणो मधु-घृतोत्तरैः ।
कषायैः प्रतिसार्यो ऽथ शेषो भङ्गोदितः क्रमः ॥ २२ ॥

२७.२२cv कषायैः प्रतिसार्यो वा लम्बानि व्रण-मांसानि प्रलिप्य मधु-सर्पिषा ।
संदधीत व्रणान् वैद्यो बन्धनैश् चोपपादयेत् ॥ २३ ॥

तान् समान् सु-स्थिताञ् ज्ञात्वा फलिनी-लोध्र-कट्फलैः ।
समङ्गा-धातकी-युक्तैश् चूर्णितैर् अवचूर्णयेत् ॥ २४ ॥

धातकी-लोध्र-चूर्णैर् वा रोहन्त्य् आशु तथा व्रणाः ।
इति भङ्ग उपक्रान्तः स्थिर-धातोर् ऋतौ हिमे ॥ २५ ॥

मांसलस्याल्प-दोषस्य सु-साध्यो दारुणो ऽन्य-था ।
पूर्व-मध्यान्त-वयसाम् एक-द्वि-त्रि-गुणैः क्रमात् ॥ २६ ॥

२७.२६bv सु-साधो दारुणो ऽन्य-था मासैः स्थैर्यं भवेत् संधेर् यथोक्तं भजतां विधिम् ।
कटी-जङ्घोरु-भग्नानां कपाट-शयनं हितम् ॥ २७ ॥

२७.२७bv यथोक्तं भजतो विधिम् यन्त्रणार्थं तथा कीलाः पञ्च कार्या निबन्धनाः ।
जङ्घोर्वोः पार्श्वयोर् द्वौ द्वौ तल एकश् च कीलकः ॥ २८ ॥

श्रोण्यां वा पृष्ठ-वंशे वा वक्षस्य् अक्षकयोस् तथा ।
विमोक्षे भग्न-संधीनां विधिम् एवं समाचरेत् ॥ २९ ॥

२७.२९bv वक्षस्य् अंशकयोस् तथा २७.२९bv वक्त्रस्याक्षकयोस् तथा २७.२९dv विधिम् एनं समाचरेत् संधींश् चिर-विमुक्तांस् तु स्निग्ध-स्विन्नान् मृदू-कृतान् ।
उक्तैर् विधानैर् बुद्ध्या च यथा-स्वं स्थानम् आनयेत् ॥ ३० ॥

२७.३०av संधींश् चिर-विमुक्तांश् च २७.३०cv उक्तैर् विधानैर् युक्त्या च २७.३०cv उक्तैर् विधानैर् युक्त्या वा अ-संधि-भग्ने रूढे तु विषमोल्बण-साधिते ।
आपोथ्य भङ्गं यमयेत् ततो भग्न-वद् आचरेत् ॥ ३१ ॥

२७.३१av अ-संधि-भग्ने रूढे च २७.३१bv विषमोल्बण-साधनैः भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ।
पक्व-मांस-सिरा-स्नायुः संधिः श्लेषं न गच्छति ॥ ३२ ॥

२७.३२av भङ्गो नैति यथा पाकं वात-व्याधि-विनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत् ।
चतुष्-प्रयोगान् बल्यांश् च वस्ति-कर्म च शीलयेत् ॥ ३३ ॥

शाल्य्-आज्य-रस-दुग्धाद्यैः पौष्टिकैर् अ-विदाहिभिः ।
मात्रयोपचरेद् भग्नं संधि-संश्लेष-कारिभिः ॥ ३४ ॥

ग्लानिर् न शस्यते तस्य संधि-विश्लेष-कृद् धि सा ॥ ३५अब् ॥
लवणं कटुकं क्षारम् अम्लं मैथुनम् आतपम् ॥ ३५च्द् ॥
व्यायामं च न सेवेत भग्नो रूक्षं च भोजनम् ॥ ३५ef ॥
कृष्णांस् तिलान् वि-रजसो दृढ-वस्त्र-बद्धान् सप्त क्षपा वहति वारिणि वासयेत् ।
संशोषयेद् अनु-दिनं प्रविसार्य चैतान् क्षीरे तथैव मधुक-क्वथिते च तोये ॥ ३६ ॥

२७.३६cv संशोषयेद् अनु-दिनं प्रतिसार्य चैतान् २७.३६cv संशोषयेद् अनु-दिनं प्रविभाव्य चैतान् पुनर् अपि पीत-पयस्कांस् तान् पूर्व-वद् एव शोषितान् बाढम् ।
विगत-तुषान् अ-रजस्कान् संचूर्ण्य सु-चूर्णितैर् युञ्ज्यात् ॥ ३७ ॥

२७.३७dv संचूर्ण्य विचूर्णितैर् युञ्ज्यात् नलद-वालक-लोहितयष्टिका-नख-मिशि-प्लव-कुष्ठ-बला-त्रयैः ।
अगुरु-कुङ्कुम-चन्दन-शारिवा-सरल-सर्ज-रसामरदारुभिः ॥ ३८ ॥

पद्मकादि-गणोपेतैस् तिल-पिष्टं ततश् च तत् ।
समस्त-गन्ध-भैषज्य-सिद्ध-दुग्धेन पीडयेत् ॥ ३९ ॥

२७.३९bv तिल-पिष्टं ततश् च तम् शैलेय-रास्नांशुमती-कसेरु-कालानुसारी-नत-पत्त्र-लोध्रैः ।
स-क्षीरशुक्लैः स-पयः स-दूर्वैस् तैलं पचेत् तन् नलदादिभिश् च ॥ ४० ॥

२७.४०cv त्वक्-क्षीर-युक्तैः पयसा स-दूर्वैस् २७.४०cv स-क्षीर-युक्तैस् पयसा स-दूर्वैस् २७.४०cv स-क्षीर-युक्तैस् स-पयः स-दूर्वैस् गन्ध-तैलम् इदम् उत्तमम् अस्थि-स्थैर्य-कृज् जयति चाशु विकारान् ।
वात-पित्त-जनितान् अति-वीर्यान् व्यापिनो ऽपि विविधैर् उपयोगैः ॥ ४१ ॥

२७.४१cv वात-पित्त-जनितान् अति-वीर्यं २७.४१cv वात-पित्त-जनितान् अति-वीर्य- २७.४१dv -व्यापिनो ऽपि विविधैर् उपयोगैः

# अध्याय 28

हस्त्य्-अश्व-पृष्ठ-गमन-कठिनोत्कटकासनैः ।
अर्शो-निदानाभिहितैर् अपरैश् च निषेवितैः ॥ १ ॥

२८.१bv -कठिनोत्कटुकासनैः अन्-इष्टा-दृष्ट-पाकेन सद्यो वा साधु-गर्हणैः ।
प्रायेण पिटिका-पूर्वो यो ऽङ्गुले द्व्य्-अङ्गुले ऽपि वा ॥ २ ॥

२८.२av अन्-इष्ट-दिष्ट-पाकेन पायोर् व्रणो ऽन्तर् बाह्यो वा दुष्टासृङ्-मांस-गो भवेत् ।
वस्ति-मूत्राशयाभ्यास-गत-त्वात् स्यन्दनात्मकः ॥ ३ ॥

२८.३av पायौ व्रणो ऽन्तर् बाह्यो वा भगन्दरः स सर्वांश् च दारयत्य् अ-क्रिया-वतः ।
भग-वस्ति-गुदांस् तेषु दीर्यमाणेषु भूरिभिः ॥ ४ ॥

२८.४av भगन्दरः स सर्वश् च २८.४av भगन्दरः स सर्वस्य वात-मूत्र-शकृच्-छुक्रं खैः सूक्ष्मैर् वमति क्रमात् ।
दोषैः पृथग् युतैः सर्वैर् आगन्तुः सो ऽष्टमः स्मृतः ॥ ५ ॥

२८.५dv आगन्तुश् चाष्टमः स्मृतः अ-पक्वं पिटिकां आहुः पाक-प्राप्तं भगन्दरम् ।
गूढ-मूलां स-संरम्भां रुग्-आढ्यां रूढ-कोपिनीम् ॥ ६ ॥

भगन्दर-करीं विद्यात् पिटिकां न त्व् अतो ऽन्य-था ।
तत्र श्यावारुणा तोद-भेद-स्फुरण-रुक्-करी ॥ ७ ॥

पिटिका मारुतात् पित्ताद् उष्ट्र-ग्रीवा-वद् उच्छ्रिता ।
रागिणी तनुर् ऊष्माढ्या ज्वर-धूमायनान्विता ॥ ८ ॥

२८.८cv रागिणी तनु-सूक्ष्मा च स्थिरा स्निग्धा महा-मूला पाण्डुः कण्डू-मती कफात् ।
श्यावा ताम्रा स-दाहोषा घोर-रुग् वात-पित्त-जा ॥ ९ ॥

२८.९cv श्याव-ताम्रा स-दाहोषा पाण्डुरा किञ्-चिद्-आ-श्यावा कृच्छ्र-पाका कफानिलात् ।
पादाङ्गुष्ठ-समा सर्वैर् दोषैर् नाना-विध-व्यथा ॥ १० ॥

शूला-रोचक-तृड्-दाह-ज्वर-च्छर्दिर्-उपद्रुता ।
व्रण-तां यान्ति ताः पक्वाः प्रमादात् तत्र वात-जा ॥ ११ ॥

चीयते ऽणु-मुखैश् छिद्रैः शत-पोनक-वत् क्रमात् ।
अच्छं स्रवद्भिर् आस्रावम् अजस्रं फेन-संयुतम् ॥ १२ ॥

२८.१२av दीर्यते ऽणु-मुखैश् छिद्रैः २८.१२bv शत-पोनक-वक्त्र-वत् शत-पोनक-संज्ञो ऽयम् उष्ट्र-ग्रीवस् तु पित्त-जः ।
बहु-पिच्छा-परिस्रावी परिस्रावी कफोद्भवः ॥ १३ ॥

वात-पित्ताज् परिक्षेपी परिक्षिप्य गुदं गतिः ।
जायते परितस् तत्र प्राकारं परिखेव च ॥ १४ ॥

२८.१४dv प्राकार-परिखेव च ऋजुर् वात-कफाद् ऋज्व्या गुदो गत्यात्र दीर्यते ।
कफ-पित्ते तु पूर्वोत्थं दुर्-नामाश्रित्य कुप्यतः ॥ १५ ॥

२८.१५bv गुदो गत्या तु दीर्यते २८.१५bv गुदो गत्या नु दीर्यते २८.१५cv कफ-पित्ते तु पूर्वोक्तं अर्शो-मूले ततः शोफः कण्डू-दाहादि-मान् भवेत् ।
स शीघ्रं पक्व-भिन्नो ऽस्य क्लेदयन् मूलम् अर्शसः ॥ १६ ॥

स्रवत्य् अजस्रं गतिभिर् अयम् अर्शो-भगन्दरः ।
सर्व-जः शम्बुकावर्तः शम्बूकावर्त-संनिभः ॥ १७ ॥

गतयो दारयन्त्य् अस्मिन् रुग्-वेगैर् दारुणैर् गुदम् ।
अस्थि-लेशो ऽभ्यवहृतो मांस-गृद्ध्या यदा गुदम् ॥ १८ ॥

क्षिणोति तिर्यङ् निर्गच्छन्न् उन्-मार्गं क्षततो गतिः ।
स्यात् ततः पूय-दीर्णायां मांस-कोथेन तत्र च ॥ १९ ॥

२८.१९av क्षणोति तिर्यङ् निर्गच्छन् २८.१९cv स्यात् तदा पूय-दीर्णायां जायन्ते कृमयस् तस्य खादन्तः परितो गुदम् ।
विदारयन्ति न चिराद् उन्-मार्गी क्षत-जश् च सः ॥ २० ॥

२८.२०av जायन्ते कृमयस् तेभ्यः २८.२०dv उन्-मार्गी क्षत-जस् तु सः तेषु रुग्-दाह-कण्ड्व्-आदीन् विद्याद् व्रण-निषेधतः ।
षट् कृच्छ्र-साधनास् तेषां निचय-क्षत-जौ त्यजेत् ॥ २१ ॥

२८.२१bv विद्याद् व्रण-विभक्तितः प्रवाहिणीं वलीं प्राप्तं सेवनीं वा समाश्रितम् ।
अथास्य पिटिकाम् एव तथा यत्नाद् उपाचरेत् ॥ २२ ॥

शुद्ध्य-असृक्-स्रुति-सेकाद्यैर् यथा पाकं न गच्छति ।
पाके पुनर् उपस्निग्धं स्वेदितं चावगाहतः ॥ २३ ॥

यन्त्रयित्वार्शसम् इव पश्येत् सम्यग् भगन्दरम् ।
अर्वाचीनं पराचीनम् अन्तर्-मुख-बहिर्-मुखम् ॥ २४ ॥

२८.२४cv अवाचीनं पराचीनम् अथान्तर्-मुखम् एषित्वा सम्यक् शस्त्रेण पाटयेत् ।
बहिर्-मुखं च निःशेषं ततः क्षारेण साधयेत् ॥ २५ ॥

अग्निना वा भिषक् साधु क्षारेणैवोष्ट्र-कन्धरम् ।
नाडीर् एकान्तराः कृत्वा पाटयेच् छत-पोनकम् ॥ २६ ॥

२८.२६cv नाडीम् एकान्तरं कृत्वा २८.२६dv पाटयेच् छत-पोनके तासु रूढासु शेषाश् च मृत्युर् दीर्णे गुदे ऽन्य-था ।
परिक्षेपिणि चाप्य् एवं नाड्य्-उक्तैः क्षार-सूत्रकैः ॥ २७ ॥

अर्शो-भगन्दरे पूर्वम् अर्शांसि प्रतिसाधयेत् ।
त्यक्त्वोपचर्यः क्षत-जः शल्यं शल्य-वतस् ततः ॥ २८ ॥

२८.२८bv अर्शांसि प्रतिसारयेत् आहरेच् च तथा दद्यात् कृमि-घ्नं लेप-भोजनम् ।
पिण्ड-नाड्य्-आदयः स्वेदाः सु-स्निग्धा रुजि पूजिताः ॥ २९ ॥

२८.२९av आहरेत तथा दद्यात् २८.२९av आहरेत् तत् तथा दद्यात् २८.२९av आहरेत् तु तथा दद्यात् सर्व-त्र च बहु-च्छिद्रे छेदान् आलोच्य योजयेत् ।
गो-तीर्थ-सर्वतो-भद्र-दल-लाङ्गल-लाङ्गलान् ॥ ३० ॥

२८.३०av सर्व-त्रापि बहु-च्छिद्रे पार्श्वं गतेन शस्त्रेण च्छेदो गो-तीर्थको मतः ।
सर्वतः सर्वतो-भद्रः पार्श्व-च्छेदो ऽर्ध-लाङ्गलः ॥ ३१ ॥

२८.३१av पार्श्व-गतेन शस्त्रेण २८.३१av पार्श्वागतेन शस्त्रेण पार्श्व-द्वये लाङ्गलकः समस्तांश् चाग्निना दहेत् ।
आस्राव-मार्गान् निःशेषं नैवं विकुरुते पुनः ॥ ३२ ॥

२८.३२cv आस्राव-मार्गान् निःशेषान् यतेत कोष्ठ-शुद्धौ च भिषक् तस्यान्तरान्तरा ।
लेपो व्रणे बिडालास्थि त्रि-फला-रस-कल्कितम् ॥ ३३ ॥

२८.३३av यतेत कोष्ठ-शुद्ध्यै च २८.३३av यतेत कोष्ठ-संशुद्धौ २८.३३dv त्रि-फला-रस-कल्कितः ज्योतिष्मती-मलयु-लाङ्गलि-शेलु-पाठा-कुम्भाग्नि-सर्ज-करवीर-वचा-सुधार्कैः ।
अभ्यञ्जनाय विपचेत भगन्दराणां तैलं वदन्ति परमं हितम् एतद् एषाम् ॥ ३४ ॥

२८.३४bv -कुम्भाग्नि-सर्जि-करवीर-वचा-सुधार्कैः २८.३४dv तैलं वदन्ति परमं हितम् एतद् एव मधुक-लोध्र-कणा-त्रुटि-रेणुका-द्वि-रजनी-फलिनी-पटु-शारिवाः ।
कमल-केसर-पद्मक-धातकी-मदन-सर्ज-रसामय-रोदिकाः ॥ ३५ ॥

२८.३५dv -मदन-सर्ज-रसामय-लोध्रकाः स-बीजपूर-च्छदनैर् एभिस् तैलं विपाचितम् ।
भगन्दरापची-कुष्ठ-मधु-मेह-व्रणापहम् ॥ ३६ ॥

मधु-तैल-युता विडङ्ग-सार-त्रि-फला-मागधिका-कणाश् च लीढाः ।
कृमि-कुष्ठ-भगन्दर-प्रमेह-क्षत-नाडी-व्रण-रोपणा भवन्ति ॥ ३७ ॥

२८.३७bv -त्रि-फला-मागधिकोषणाश् च लीढाः २८.३७dv -क्षत-नाडी-व्रण-रोहणा भवन्ति अमृता-त्रुटि-वेल्ल-वत्सकं कलि-पथ्यामलकानि गुग्गुलुः ।
क्रम-वृद्धम् इदं मधु-द्रुतं पिटिका-स्थौल्य-भगन्दराञ् जयेत् ॥ ३८ ॥

२८.३८cv क्रम-वृद्धम् इदं मधु-प्लुतं मागधिकाग्नि-कलिङ्ग-विडङ्गैर् बिल्व-घृतैः स-वरा-पल-षट्कैः ।
गुग्गुलुना सदृशेन समेतैः क्षौद्र-युतैः सकलामय-नाशः ॥ ३९ ॥

२८.३९av मागधिकाग्नि-कलिङ्ग-विडङ्गैस् २८.३९bv तुल्य-घृतैः स-वरा-पल-षट्कैः गुग्गुलु-पञ्च-पलं पलिकांशा मागधिका त्रि-फला च पृथक् स्यात् ।
त्वक्-त्रुटि-कर्ष-युतं मधु-लीढं कुष्ठ-भगन्दर-गुल्म-गति-घ्नम् ॥ ४० ॥

शृङ्गवेर-रजो-युक्तं तद् एव च सु-भावितम् ।
क्वाथेन दश-मूलस्य विशेषाद् वात-रोग-जित् ॥ ४१ ॥

उत्तमा-खदिर-सार-जं रजः शीलयन्न् असन-वारि-भावितम् ।
हन्ति तुल्य-महिषाक्ष-माक्षिकं कुष्ठ-मेह-पिटिका-भगन्दरान् ॥ ४२ ॥

२८.४२bv शीलयेद् अनल-वारि-भावितम् २८.४२bv शीलयेद् असन-वारि-भावितम् २८.४२cv हन्ति तुल्य-महिषाख्य-माक्षिकं भगन्दरेष्व् एष विशेष उक्तः शेषाणि तु व्यञ्जन-साधनानि ।
व्रणाधिकारात् परिशीलनाच् च सम्यग् विदित्वौपयिकं विदध्यात् ॥ ४३ ॥

२८.४३dv सम्यग् विदित्वौषधिकं विदध्यात् अश्व-पृष्ठ-गमनं चल-रोधं मद्य-मैथुनम् अ-जीर्णम् अ-सात्म्यम् ।
साहसानि विविधानि च रूढे वत्सरं परिहरेद् अधिकं वा ॥ ४४ ॥

२८.४४dv वत्सरं परिहरेद् अधिकं च

# अध्याय 29

कफ-प्रधानाः कुर्वन्ति मेदो-मांसास्र-गा मलाः ।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर् ग्रथनात् स्मृतः ॥ १ ॥

२९.१dv स ग्रन्थिर् ग्रन्थनात् स्मृतः दोषास्र-मांस-मेदो-ऽस्थि-सिरा-व्रण-भवा नव ।
ते तत्र वाताद् आयाम-तोद-भेदान्वितो ऽसितः ॥ २ ॥

स्थानात् स्थानान्तर-गतिर् अ-कस्माद् धानि-वृद्धि-मान् ।
मृदुर् वस्तिर् इवानद्धो विभिन्नो ऽच्छं स्रवत्य् असृक् ॥ ३ ॥

पित्तात् स-दाहः पीताभो रक्तो वा पच्यते द्रुतम् ।
भिन्नो ऽस्रम् उष्णं स्रवति श्लेष्मणा नी-रुजो घनः ॥ ४ ॥

शीतः स-वर्णः कण्डू-मान् पक्वः पूयं स्रवेद् घनम् ।
दोषैर् दुष्टे ऽसृजि ग्रन्थिर् भवेन् मूर्छत्सु जन्तुषु ॥ ५ ॥

सिरा-मांसं च संश्रित्य स-स्वापः पित्त-लक्षणः ।
मांसलैर् दूषितं मांसम् आहारैर् ग्रन्थिम् आवहेत् ॥ ६ ॥

स्निग्धं महान्तं कठिनं सिरा-नद्धं कफाकृतिम् ।
प्रवृद्धं मेदुरैर् मेदो नीतं मांसे ऽथ-वा त्वचि ॥ ७ ॥

वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ।
श्लेष्म-तुल्याकृतिं देह-क्षय-वृद्धि-क्षयोदयम् ॥ ८ ॥

स विभिन्नो घनं मेदस् ताम्रासित-सितं स्रवेत् ।
अस्थि-भङ्गाभिघाताभ्याम् उन्नतावनतं तु यत् ॥ ९ ॥

२९.९av स विभिन्नो घनं मेदः २९.९bv पूयं ताम्रासितं स्रवेत् २९.९cv अस्थि-भग्नाभिघाताभ्याम् सो ऽस्थि-ग्रन्थिः पदातेस् तु सहसाम्भो-ऽवगाहनात् ।
व्यायामाद् वा प्रतान्तस्य सिरा-जालं स-शोणितम् ॥ १० ॥

वायुः संपीड्य संकोच्य वक्री-कृत्य विशोष्य च ।
निः-स्फुरं नी-रुजं ग्रन्थिं कुरुते स सिराह्वयः ॥ ११ ॥

२९.११av वायुः प्रपीड्य संकोच्य अ-रूढे रूढ-मात्रे वा व्रणे सर्व-रसाशिनः ।
सार्द्रे वा बन्ध-रहिते गात्रे ऽश्माभिहते ऽथ-वा ॥ १२ ॥

वातो ऽस्रम् अ-स्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।
कुर्यात् स-दाहः कण्डू-मान् व्रण-ग्रन्थिर् अयं स्मृतः ॥ १३ ॥

२९.१३av वायुः प्रकुपितः क्षिप्रं २९.१३bv प्राप्य मर्माश्रितं व्रणम् साध्या दोषास्र-मेदो-जा न तु स्थूल-खराश् चलाः ।
मर्म-कण्ठोदर-स्थाश् च महत् तु ग्रन्थितो ऽर्बुदम् ॥ १४ ॥

२९.१४bv न तु स्थूलाः खराश् चलाः २९.१४dv महांस् तु ग्रन्थितो ऽर्बुदम् तल्-लक्षणं च मेदो-ऽन्तैः षो-ढा दोषादिभिस् तु तत् ।
प्रायो मेदः-कफाढ्य-त्वात् स्थिर-त्वाच् च न पच्यते ॥ १५ ॥

सिरा-स्थं शोणितं दोषः संकोच्यान्तः प्रपीड्य च ।
पाचयेत तद् आनद्धं सास्रावं मांस-पिण्डितम् ॥ १६ ॥

२९.१६bv संकोच्यानु प्रपीड्य च २९.१६bv संकोच्यानु प्रपीड्य वा २९.१६bv संकोच्यान्तः प्रपीड्य वा २९.१६dv स-स्रावं मांस-पिण्ड-ताम् मांसाङ्कुरैश् चितं याति वृद्धिं चाशु स्रवेत् ततः ।
अजस्रं दुष्ट-रुधिरं भूरि तच् छोणितार्बुदम् ॥ १७ ॥

२९.१७bv वृद्धं चाशु स्रवेत् ततः तेष्व् असृङ्-मांस-जे वर्ज्ये चत्वार्य् अन्यानि साधयेत् ।
प्रस्थिता वङ्क्षणोर्व्-आदिम् अधः-कायं कफोल्बणाः ॥ १८ ॥

दोषा मांसास्र-गाः पादौ कालेनाश्रित्य कुर्वते ।
शनैः शनैर् घनं शोफं श्लीपदं तत् प्रचक्षते ॥ १९ ॥

२९.१९dv श्लीपदं तत् प्रचक्ष्यते परिपोट-युतं कृष्णम् अ-निमित्त-रुजं खरम् ।
रूक्षं च वातात् पित्तात् तु पीतं दाह-ज्वरान्वितम् ॥ २० ॥

२९.२०cv रूक्षं च वातात् पित्ताच् च २९.२०cv रूक्षं च श्लीपदं वातात् २९.२०dv पित्ताद् दाह-ज्वरान्वितम् कफाद् गुरु स्निग्धम् अ-रुक् चितं मांसाङ्कुरैर् बृहत् ।
तत् त्यजेद् वत्सरातीतं सु-महत् सु-परिस्रुति ॥ २१ ॥

२९.२१bv चितं मांसाङ्कुरैर् महत् पाणि-नासौष्ठ-कर्णेषु वदन्त्य् एके तु पाद-वत् ।
श्लीपदं जायते तच् च देशे ऽनूपे भृशं भृशम् ॥ २२ ॥

२९.२२bv वदन्त्य् अन्ये तु पाद-वत् मेद-स्थाः कण्ठ-मन्याक्ष-कक्षा-वङ्क्षण-गा मलाः ।
स-वर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् ॥ २३ ॥

२९.२३av मेद-स्थाः कण्ठ-मन्याक्षि- अवगाढान् बहून् गण्डांश् चिर-पाकांश् च कुर्वते ।
पच्यन्ते ऽल्प-रुजस् ते ऽन्ये स्रवन्त्य् अन्ये ऽति-कण्डुराः ॥ २४ ॥

२९.२४cv पच्यन्ते ऽल्प-रुजस् त्व् अन्ये २९.२४dv स्रवन्त्य् अन्ये ऽति-कण्डुलाः नश्यन्त्य् अन्ये भवन्त्य् अन्ये दीर्घ-कालानुबन्धिनः ।
गण्ड-मालापची चेयं दूर्वेव क्षय-वृद्धि-भाक् ॥ २५ ॥

तां त्यजेत् स-ज्वर-च्छर्दि-पार्श्व-रुक्-कास-पीनसाम् ।
अ-भेदात् पक्व-शोफस्य व्रणे चा-पथ्य-सेविनः ॥ २६ ॥

२९.२६bv -पार्श्व-रुक्-श्वास-पीनसाम् २९.२६dv व्रणे वा-पथ्य-सेविनः अनुप्रविश्य मांसादीन् दूरं पूयो ऽभिधावति ।
गतिः सा दूर-गमनान् नाडी नाडीव संस्रुतेः ॥ २७ ॥

नाड्य् एकान्-ऋजुर् अन्येषां सैवानेक-गतिर् गतिः ।
सा दोषैः पृथग् एक-स्थैः शल्य-हेतुश् च पञ्चमी ॥ २८ ॥

२९.२८cv दोषैः पृथक् समस्तैश् च वातात् स-रुक् सूक्ष्म-मुखी वि-वर्णा फेनिलोद्वमा ।
स्रवत्य् अभ्यधिकं रात्रौ पित्तात् तृड्-ज्वर-दाह-कृत् ॥ २९ ॥

पीतोष्ण-पूति-पूय-स्रुद् दिवा चाति निषिञ्चति ।
घन-पिच्छिल-संस्रावा कण्डूला कठिना कफात् ॥ ३० ॥

२९.३०av पीतोष्ण-पूति-पूयं तु २९.३०av पीतोष्ण-पूति-पूयाश्रु २९.३०av पीतोष्ण-पूति-पूयास्रुर् निशि चाभ्यधिक-क्लेदा सर्वैः सर्वाकृतिं त्यजेत् ॥ ३१अब् ॥
२९.३१bv सर्वैः सर्वाकृतिस् त्यजेत् अन्तः-स्थितं शल्यम् अन्-आहृतं तु करोति नाडीं वहते च सास्य ॥ ३१च्द् ॥
२९.३१dv करोति नाडीं वहते च सास्यात् फेनानुविद्धं तनुम् अल्पम् उष्णं सास्रं च पूयं स-रुजं च नित्यम् ॥ ३१एf ॥
२९.३१एव् फेनानुविद्धं तनुम् अच्छम् उष्णं

# अध्याय 30

ग्रन्थिष्व् आमेषु कर्तव्या यथा-स्वं शोफ-वत् क्रिया ।
बृहती-चित्रक-व्याघ्री-कणा-सिद्धेन सर्पिषा ॥ १ ॥

स्नेहयेच् छुद्धि-कामं च तीक्ष्णैः शुद्धस्य लेपनम् ।
संस्वेद्य बहु-शो ग्रन्थिं विमृद्नीयात् पुनः पुनः ॥ २ ॥

एष वाते विशेषेण क्रमः पित्तास्र-जे पुनः ।
जलौकसो हिमं सर्वं कफ-जे वातिको विधिः ॥ ३ ॥

तथाप्य् अ-पक्वं छित्त्वैनं स्थिते रक्ते ऽग्निना दहेत् ।
साध्व् अ-शेषं स-शेषो हि पुनर् आप्यायते ध्रुवम् ॥ ४ ॥

३०.४dv पुनर् आनह्यते द्रुतम् मांस-व्रणोद्भवौ ग्रन्थी यापयेद् एवम् एव च ।
कार्यं मेदो-भवे ऽप्य् एतत् तप्तैः फलादिभिश् च तम् ॥ ५ ॥

३०.५bv पाटयेद् एवम् एव च प्रमृद्यात् तिल-दिग्धेन च्छन्नं द्वि-गुण-वाससा ।
शस्त्रेण पाटयित्वा वा दहेन् मेदसि सूद्धृते ॥ ६ ॥

३०.६av प्रमृज्यात् तिल-दिग्धेन ३०.६dv दहेन् मेदसि तूद्धृते सिरा-ग्रन्थौ नवे पेयं तैलं साहचरं तथा ।
उपनाहो ऽनिल-हरैर् वस्ति-कर्म सिरा-व्यधः ॥ ७ ॥

अर्बुदे ग्रन्थि-वत् कुर्यात् यथा-स्वं सु-तरां हितम् ।
श्लीपदे ऽनिल-जे विध्येत् स्निग्ध-स्विन्नोपनाहिते ॥ ८ ॥

अजा-शकृच्-छिग्रु-मूल-लाक्षा-सुरस-काञ्जिकैः ॥ ८.१+(१)अब् ॥
३०.८.१+(१)ब्व् -लाक्षा-रस-स-काञ्जिकैः ३०.८.१+(१)ब्व् -लवण-क्षार-काञ्जिकैः उपोदका-पत्त्र-पिण्ड्या छदैर् आच्छादितं घनम् ।
निवेश्य पट्टं बध्नीयाच् छाम्यत्य् एवं नवार्बुदम् ॥ ८.१+(२) ॥
३०.८.१+(२)अव् उपोदकार्क-पिण्याक- ३०.८.१+(२)ब्व् -च्छदैर् आच्छादितं घनम् जीर्णे चार्क-च्छद-सुधा-सामुद्र-गुड-काञ्जिकैः ।
प्रच्छाने पिण्डिका बद्धा ग्रन्थ्य्-अर्बुद-विलायनी ॥ ८.१+(३) ॥
३०.८.१+(३)अव् जीर्णार्द्रार्क-च्छद-सुधा- ३०.८.१+(३)ब्व् -सामुद्रं तुल्यकाम्बुभिः ३०.८.१+(३)च्व् प्रच्छन्ने पिटिकां बद्ध्वा ३०.८.१+(३)च्व् प्रच्छानैर् पिण्डिकां बद्ध्वा ३०.८.१+(३)द्व् ग्रन्थ्य्-अर्बुद-विलायनम् सिराम् उपरि गुल्फस्य द्व्य्-अङ्गुले पाययेच् च तम् ।
मासम् एरण्ड-जं तैलं गो-मूत्रेण समन्वितम् ॥ ९ ॥

जीर्णे जीर्णान्नम् अश्नीयाच् छुण्ठी-शृत-पयो-ऽन्वितम् ।
त्रैवृतं वा पिबेद् एवम् अ-शान्ताव् अग्निना दहेत् ॥ १० ॥

गुल्फस्याधः सिरा-मोक्षः पैत्ते सर्वं च पित्त-जित् ।
सिराम् अङ्गुष्ठके विद्ध्वा कफ-जे शीलयेद् यवान् ॥ ११ ॥

स-क्षौद्राणि कषायाणि वर्धमानास् तथाभयाः ।
लिम्पेत् सर्षप-वार्ताकी-मूलाभ्यां धन्वयाथ-वा ॥ १२ ॥

३०.१२dv -मूलाभ्यां धान्ययाथ-वा ऊर्ध्वाधः-शोधनं पेयम् अपच्यां साधितं घृतम् ।
दन्ती-द्रवन्ती-त्रिवृता-जालिनी-देवदालिभिः ॥ १३ ॥

शीलयेत् कफ-मेदो-घ्नं धूम-गण्डूष-नावनम् ।
सिरयापहरेद् रक्तं पिबेन् मूत्रेण ताक्ष्र्य-जम् ॥ १४ ॥

पलम् अर्ध-पलं वापि कर्षं वाप्य् उष्ण-वारिणा ।
काञ्चनार-त्वचं पीत्वा गण्ड-मालां व्यपोहति ॥ १४+(१) ॥
३०.१४+(१)ब्व् कर्षं वोष्णेन वारिणा ग्रन्थीन् अ-पक्वान् आलिम्पेन् नाकुली-पटु-नागरैः ।
स्विन्नान् लवण-पोटल्या कठिनान् अनु मर्दयेत् ॥ १५ ॥

शमी-मूलक-शिग्रूणां बीजैः स-यव-सर्षपैः ।
लेपः पिष्टो ऽम्ल-तक्रेण ग्रन्थि-गण्ड-विलायनः ॥ १६ ॥

३०.१६av शमी-मूलक-शिग्रूत्थ- ३०.१६av शमी-मूलक-शिग्रूमा- ३०.१६bv -बीजः स-यव-सर्षपैः ३०.१६bv -बीजैः स-यव-सर्षपैः क्षुण्णानि निम्ब-पत्त्राणि क्लृप्तैर् भल्लातकैः सह ।
शराव-संपुटे दग्ध्वा सार्धं सिद्धार्थकैः समैः ॥ १६+(१) ॥
३०.१६+(१)अव् जीर्णानि निम्ब-पत्त्राणि ३०.१६+(१)ब्व् क्लिन्नैर् भल्लातकैः सह ३०.१६+(१)ब्व् क्षिप्रैर् भल्लातकैः सह एतच् छागाम्बुना पिष्टं गण्ड-माला-प्रलेपनम् ॥ १६+(२)अब् ॥
३०.१६+(२)ब्व् गण्ड-माला-विलेपनम् पाकोन्-मुखान् सुतास्रस्य पित्त-श्लेष्म-हरैर् जयेत् ।
अ-पक्वान् एवो वोद्धृत्य क्षाराग्निभ्याम् उपाचरेत् ॥ १७ ॥

काकादनी-लाङ्गलिका-नहिकोत्तुण्डिकी-फलैः ।
जीमूत-बीज-कर्कोटी-विशाला-कृतवेधनैः ॥ १८ ॥

३०.१८bv -नलिकोत्तुण्डिकी-फलैः ३०.१८bv -नलिकोत्तुण्डकी-फलैः ३०.१८bv -नहिकोत्तैण्डुकी-फलैः पाठान्वितैः पलार्धांशैर् विष-कर्ष-युतैः पचेत् ।
प्रस्थं करञ्ज-तैलस्य निर्गुण्डी-स्व-रसाढके ॥ १९ ॥

३०.१९av पथ्यान्वितैः पलार्धांशैर् अनेन माला गण्डानां चिर-जा पूय-वाहिनी ।
सिध्यत्य् अ-साध्य-कल्पापि पानाभ्यञ्जन-नावनैः ॥ २० ॥

तैलं लाङ्गलिकी-कन्द-कल्क-पादं चतुर्-गुणे ।
निर्गुण्डी-स्व-रसे पक्वं नस्याद्यैर् अपची-प्रणुत् ॥ २१ ॥

३०.२१bv -कल्क-पादे चतुर्-गुणे भद्रश्री-दारु-मरिच-द्वि-हरिद्रा-त्रिवृद्-घनैः ।
मनःशिलाल-नलद-विशाला-करवीरकैः ॥ २२ ॥

३०.२२अच् भद्र-श्रीदारु-मरिच- ३०.२२cv मनःशिलाल-मदन- गो-मूत्र-पिष्टैः पलिकैर् विषस्यार्ध-पलेन च ।
ब्राह्मी-रसार्क-ज-क्षीर-गो-शकृद्-रस-संयुतम् ॥ २३ ॥

प्रस्थं सर्षप-तैलस्य सिद्धम् आशु व्यपोहति ।
पानाद्यैः शीलितं कुष्ठ-दुष्ट-नाडी-व्रणापचीः ॥ २४ ॥

३०.२४cv पानाद्यैः शीलितं कुष्ठं ३०.२४dv दुष्ट-नाडी-व्रणापचीः वचा-हरीतकी-लाक्षा-कटु-रोहिणि-चन्दनैः ।
तैलं प्रसाधितं पीतं स-मूलाम् अपचीं जयेत् ॥ २५ ॥

शरपुङ्खोद्भवं मूलं पिष्टं तण्डुल-वारिणा ।
नस्याल् लेपाच् च दुष्टारुर्-अपची-विष-जन्तु-जित् ॥ २६ ॥

मूलैर् उत्तमकारण्याः पीलुपर्ण्याः सहाचरात् ।
स-लोध्राभय-यष्ट्य्-आह्व-शताह्वा-द्वीपि-दारुभिः ॥ २७ ॥

३०.२७av मूलैर् उत्तमवारुण्याः ३०.२७av मूलैर् उत्तरवारुण्याः ३०.२७av मूलैर् उत्तरवारिण्याः तैलं क्षीर-समं सिद्धं नस्ये ऽभ्यङ्गे च पूजितम् ।
गो-ऽव्य्-अजाश्व-खुरा दग्धाः कटु-तैलेन लेपनम् ॥ २८ ॥

३०.२८cv गो-गजाश्व-खुरा दग्धाः ऐङ्गुदेन तु कृष्णाहिर् वायसो वा स्वयं मृतः ।
इत्य् अ-शान्तौ गदस्यान्य-पार्श्व-जङ्घा-समाश्रितम् ॥ २९ ॥

३०.२९cv इत्य् अ-शान्तौ गदे चान्य- ३०.२९dv -पार्श्वे जङ्घा-समाश्रितम् वस्तेर् ऊर्ध्वम् अधस्-ताद् वा मेदो हृत्वाग्निना दहेत् ।
स्थितस्योर्ध्वं पदं मित्वा तन्-मानेन च पार्ष्णितः ॥ ३० ॥

तत ऊर्ध्वं हरेद् ग्रन्थीन् इत्य् आह भग-वान् निमिः ॥ ३१अब् ॥
पार्ष्णिं प्रति द्वा-दश चाङ्गुलानि मुक्त्वेन्द्र-वस्तिं च गदान्य-पार्श्वे ॥ ३१च्द् ॥
विदार्य मत्स्याण्ड-निभानि मध्याज् जालानि कर्षेद् इति सुश्रुतोक्तिः ॥ ३१एf ॥
आ-गुल्फ-कर्णात् सु-मितस्य जन्तोस् तस्याष्ट-भागं खुडकाद् विभज्य ।
घ्राणार्जवे ऽधः सुर-राज-वस्तेर् भित्त्वाक्ष-मात्रं त्व् अपरे वदन्ति ॥ ३२ ॥

३०.३२cv घोणार्जवे ऽधः सुर-राज-वस्तेर् ३०.३२dv भित्त्वाक्ष-मात्राम् अपरे वदन्ति उपनाह्यानिलान् नाडीं पाटितां साधु लेपयेत् ।
प्रत्यक्पुष्पी-फल-युतैस् तैलैः पिष्टैः स-सैन्धवैः ॥ ३३ ॥

पैत्तीं तु तिल-मञ्जिष्ठा-नागदन्ती-निशा-द्वयैः ।
श्लैष्मिकीं तिल-सौराष्ट्री-निकुम्भारिष्ट-सैन्धवैः ॥ ३४ ॥

शल्य-जां तिल-मध्व्-आज्यैर् लेपयेच् छिन्न-शोधिताम् ।
अ-शस्त्र-कृत्याम् एषिण्या भित्त्वान्ते सम्यग्-एषिताम् ॥ ३५ ॥

क्षार-पीतेन सूत्रेण बहु-शो दारयेद् गतिम् ।
व्रणेषु दुष्ट-सूक्ष्मास्य-गम्भीरादिषु साधनम् ॥ ३६ ॥

३०.३६bv बहु-शो पूरयेद् गतिम् या वर्त्यो यानि तैलानि तन् नाडीष्व् अपि शस्यते ।
पिष्टं चञ्चु-फलं लेपान् नाडी-व्रण-हरं परम् ॥ ३७ ॥

घोण्टा-फल-त्वक् लवणं स-लाक्षं बूकस्य पत्त्रं वनिता-पयश् च ।
स्नुग्-अर्क-दुग्धान्वित एष कल्को वर्ती-कृतो हन्त्य् अ-चिरेण नाडीम् ॥ ३८ ॥

३०.३८bv चुक्रस्य पत्त्रं वनिता-पयश् च ३०.३८bv वृषस्य पत्त्रं वनिता-पयश् च सामुद्र-सौवर्चल-सिन्धु-जन्म-सु-पक्व-घोण्टा-फल-वेश्म-धूमाः ।
आम्रात-गायत्रि-ज-पल्लवाश् च कटङ्कटेर्याव् अथ चेतकी च ॥ ३९ ॥

३०.३९dv कटङ्कटेर्याव् अथ केतकी च ३०.३९dv कटङ्कटेर्याव् अथ दीनिका च कल्के ऽभ्यङ्गे चूर्णे वर्त्यां चैतेषु शील्यमानेषु ।
अ-गतिर् इव नश्यति गतिश् चपला चपलेषु भूतिर् इव ॥ ४० ॥

३०.४०bv वर्त्यां चैतेषु सेव्यमानेषु

# अध्याय 31

स्निग्धा स-वर्णा ग्रथिता नी-रुजा मुद्ग-संनिभा ।
पिटिका कफ-वाताभ्यां बालानाम् अजगल्लिका ॥ १ ॥

३१.१av स्निग्धाः स-वर्णा ग्रथिता ३१.१cv पिटिकाः कफ-वाताभ्यां ३१.१dv नी-रुजा मुद्ग-संमिता ३१.१dv नी-रुजा मुद्ग-संनिभाः यव-प्रख्या यव-प्रख्या ताभ्यां मांसाश्रिता घना ।
अ-वक्त्रा चालजी वृत्ता स्तोक-पूया घनोन्नता ॥ २ ॥

३१.२av यव-प्रख्या यवाकारा ३१.२cv अ-वक्त्राश् चालजी-वृत्ताः ३१.२dv स्तोक-पूया घनोन्नताः ग्रन्थयः पञ्च वा षड् वा कच्छपी कच्छपोन्नताः ।
कर्णस्योर्ध्वं समन्ताद् वा पिटिका कठिनोग्र-रुक् ॥ ३ ॥

३१.३bv कच्छपी कच्छपोन्नता शालूकाभा पनसिका शोफस् त्व् अल्प-रुजः स्थिरः ।
हनु-संधि-समुद्भूतस् ताभ्यां पाषाण-गर्दभः ॥ ४ ॥

शाल्मली-कण्टकाकाराः पिटिकाः स-रुजो घनाः ।
मेदो-गर्भा मुखे यूनां ताभ्यां च मुख-दूषिकाः ॥ ५ ॥

३१.५dv ताभ्यां च मुख-दूषकाः ते पद्म-कण्टका ज्ञेया यैः पद्मम् इव कण्टकैः ।
चीयते नी-रुजैः श्वेतैः शरीरं कफ-वात-जैः ॥ ६ ॥

पित्तेन पिटिका वृत्ता पक्वोदुम्बर-संनिभा ।
महा-दाह-ज्वर-करी विवृता विवृतानना ॥ ७ ॥

गात्रेष्व् अन्तश् च वक्त्रस्य दाह-ज्वर-रुजान्विताः ।
मसूर-मात्रास् तद्-वर्णास् तत्-संज्ञाः पिटिका घनाः ॥ ८ ॥

ततः कष्ट-तराः स्फोटा विस्फोटाख्या महा-रुजाः ।
या पद्म-कर्णिकाकारा पिटिका पिटिकाचिता ॥ ९ ॥

सा विद्धा वात-पित्ताभ्यां ताभ्याम् एव च गर्दभी ।
मण्डला विपुलोत्सन्ना स-राग-पिटिकाचिता ॥ १० ॥

कक्षेति कक्षासन्नेषु प्रायो देशेषु सानिलात् ।
पित्ताद् भवन्ति पिटिकाः सूक्ष्मा लाजोपमा घनाः ॥ ११ ॥

३१.११dv सूक्ष्मा जालोपमा घनाः तादृशी महती त्व् एका गन्ध-नामेति कीर्तिता ।
घर्म-स्वेद-परीते ऽङ्गे पिटिकाः स-रुजो घनाः ॥ १२ ॥

राजीका-वर्ण-संस्थान-प्रमाणा राजिकाह्वयाः ।
दोषैः पित्तोल्बणैर् मन्दैर् विसर्पति विसर्प-वत् ॥ १३ ॥

शोफो ऽ-पाकस् तनुस् ताम्रो ज्वर-कृज् जाल-गर्दभः ।
मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांस-दारणाः ॥ १४ ॥

३१.१४dv ज्वरिणो मांस-दारुणाः ३१.१४dv ज्वरिणो मांस-दारिणः कक्षा-भागेषु जायन्ते ये ऽग्न्य्-आभाः साग्नि-रोहिणी ।
पञ्चाहात् सप्त-रात्राद् वा पक्षाद् वा हन्ति जीवितम् ॥ १५ ॥

त्रि-लिङ्गा पिटिका वृत्ता जत्रूर्ध्वम् इरिवेल्लिका ।
विदारी-कन्द-कठिना विदारी कक्ष-वङ्क्षणे ॥ १६ ॥

मेदो-ऽनिल-कफैर् ग्रन्थिः स्नायु-मांस-सिराश्रयैः ।
भिन्नो वसाज्य-मध्व्-आभं स्रवेत् तत्रोल्बणो ऽनिलः ॥ १७ ॥

मांसं विशोष्य ग्रथितां शर्करां उपपादयेत् ।
दुर्-गन्धं रुधिरं क्लिन्नं नाना-वर्णं ततो मलाः ॥ १८ ॥

३१.१८cv दुर्-गन्धि रुधिरं क्लिन्नं तां स्रावयन्ति निचितां विद्यात् तच् छर्करार्बुदम् ।
पाणि-पाद-तले संधौ जत्रूर्ध्वे वोपचीयते ॥ १९ ॥

३१.१९av तां स्रावयन्ति निचिता ३१.१९dv जत्रूर्ध्वे चोपचीयते वल्मीक-वच् छनैर् ग्रन्थिस् तद्-वद् बहव्-अणुभिर् मुखैः ।
रुग्-दाह-कण्डू-क्लेदाढ्यैर् वल्मीको ऽसौ समस्त-जः ॥ २० ॥

३१.२०cv रुग्-दाह-कण्डू-क्लेदाढ्यो शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।
ग्रन्थिः कील-वद् उत्सन्नो जायते कदरं तु तत् ॥ २१ ॥

वेग-संधारणाद् वायुर् अपानो ऽपान-संश्रयम् ।
अणू-करोति बाह्यान्तर्-मार्गम् अस्य ततः शकृत् ॥ २२ ॥

३१.२२bv अपानो ऽपान-संश्रयः कृच्छ्रान् निर्गच्छति व्याधिर् अयं रुद्ध-गुदो मतः ।
कुर्यात् पित्तानिलं पाकं नख-मांसे स-रुग्-ज्वरम् ॥ २३ ॥

चिप्यम् अ-क्षत-रोगं च विद्याद् उप-नखं च तम् ।
कृष्णो ऽभिघाताद् रूक्षश् च खरश् च कु-नखो नखः ॥ २४ ॥

३१.२४bv विद्याद् उप-नखं च तत् दुष्ट-कर्दम-संस्पर्शात् कण्डू-क्लेदान्वितान्तराः ।
अङ्गुल्यो ऽलसम् इत्य् आहुस् तिलाभांस् तिल-कालकान् ॥ २५ ॥

कृष्णान् अ-वेदनांस् त्वक्-स्थान् माषांस् तान् एव चोन्नतान् ।
मषेभ्यस् तून्नत-तरांश् चर्म-कीलान् सितासितान् ॥ २६ ॥

तथा-विधो जतु-मणिः सह-जो लोहितस् तु सः ।
कृष्णं सितं वा सह-जं मण्डलं लाञ्छनं समम् ॥ २७ ॥

३१.२७bv स-रुजो लोहितस् तु सः शोक-क्रोधादि-कुपिताद् वात-पित्तान् मुखे तनु ।
श्यामलं मण्डलं व्यङ्गं वक्त्राद् अन्य-त्र नीलिका ॥ २८ ॥

परुषं परुष-स्पर्शं व्यङ्गं श्यावं च मारुतात् ।
पित्तात् ताम्रान्तम् आ-नीलं श्वेतान्तं कण्डु-मत् कफात् ॥ २९ ॥

३१.२९cv पित्तात् ताम्रं तथा नीलं ३१.२९dv श्वेताभं कण्डु-मत् कफात् रक्ताद् रक्तान्तम् आ-ताम्रं सौषं चिमिचिमायते ।
वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति ॥ ३० ॥

३१.३०bv मुखं चिमिचिमायते ततस् त्वग् जायते पाण्दुः क्रमेण च वि-चेतना ।
अल्प-कण्डूर् अ-विक्लेदा सा प्रसुप्तिः प्रसुप्तितः ॥ ३१ ॥

३१.३१cv अल्प-कण्डूर् अप-क्लेदा अ-सम्यग्-वमनोदीर्ण-पित्त-श्लेष्मान्न-निग्रहैः ।
मण्डलान्य् अति-कण्डूनि राग-वन्ति बहूनि च ॥ ३२ ॥

उत्कोठः सो ऽनुबद्धस् तु कोठ इत्य् अभिधीयते ।
प्रोक्ताः षट्-त्रिंशद् इत्य् एते क्षुद्र-रोगा विभाग-शः ॥ ३३ ॥

३१.३३av उत्कोठः सो ऽनुबन्धस् तु यान् अ-विज्ञाय मुह्येत चिकित्सायां चिकित्सकः ॥ ३३+(१)अब् ॥

# अध्याय 32

विस्रावयेज् जलौकोभिर् अ-पक्वाम् अजगल्लिकाम् ।
स्वेदयित्वा यव-प्रख्यां विलयाय प्रलेपयेत् ॥ १ ॥

दारु-कुष्ठ-मनोह्वालैर् इत्य् आ-पाषाण-गर्दभात् ।
विधिस् तांश् चाचरेत् पक्वान् व्रण-वत् साजगल्लिकान् ॥ २ ॥

लोध्र-कुस्तुम्बुरु-वचाः प्रलेपो मुख-दूषिके ।
वट-पल्लव-युक्ता वा नारिकेलोत्थ-शुक्तयः ॥ ३ ॥

३२.३av लोध्र-कुस्तुम्बुरु-वचा- ३२.३bv -प्रलेपो मुख-दूषिके अ-शान्तौ वमनं नस्यं ललाटे च सिरा-व्यधः ।
निम्बाम्बु-वान्तो निम्बाम्बु-साधितं पद्म-कण्टके ॥ ४ ॥

पिबेत् क्षौद्रान्वितं सर्पिर् निम्बारग्वध-लेपनम् ॥ ५अब् ॥
३२.५bv निम्बारग्वध-लेपनः विवृतादींस् तु जालान्तांश् चिकित्सेत् सेरिवेल्लिकान् ॥ ५च्द् ॥
३२.५dv चिकित्सेद् इरिवेल्लिकाम् पित्त-विसर्प-वत् तद्-वत् प्रत्याख्यायाग्नि-रोहिणीम् ॥ ५एf ॥
विलङ्घनं रक्त-विमोक्षणं च विरूक्षणं काय-विशोधनं च ।
धात्री-प्रयोगाञ् छिशिर-प्रदेहान् कुर्यात् सदा जालक-गर्दभस्य ॥ ६ ॥

३२.६bv विरूक्षणं काय-विरेचनं च ३२.६cv धात्री-प्रदेहाञ् छिशिर-प्रयोगान् विदारिकां हृते रक्ते श्लेष्म-ग्रन्थि-वद् आचरेत् ।
मेदो-ऽर्बुद-क्रियां कुर्यात् सु-तरां शर्करार्बुदे ॥ ७ ॥

प्रवृद्धं सु-बहु-च्छिद्रं स-शोफं मर्मणि स्थितम् ।
वल्मीकं हस्त-पादे च वर्जयेद् इतरत् पुनः ॥ ८ ॥

३२.८dv वर्जयेद् इतरं पुनः शुद्धस्यास्रे हृते लिम्पेत् स-पट्व्-आरेवतामृतैः ।
श्यामा-कुलत्थिका-मूल-दन्ती-पलल-सक्तुभिः ॥ ९ ॥

३२.९bv स-पट्व्-आरग्वधामृतैः पक्वे तु दुष्ट-मांसानि गतीः सर्वाश् च शोधयेत् ।
शस्त्रेण सम्यग् अनु च क्षारेण ज्वलनेन वा ॥ १० ॥

शस्त्रेणोत्कृत्य निः-शेषं स्नेहेन कदरं दहेत् ।
निरुद्ध-मणि-वत् कार्यं रुद्ध-पायोश् चिकित्सितम् ॥ ११ ॥

३२.११av शस्त्रेणोद्धृत्य निः-शेषं चिप्यं शुद्ध्या जितोष्माणं साधयेच् छस्त्र-कर्मणा ।
दुष्टं कु-नखम् अप्य् एवं चरणाव् अलसे पुनः ॥ १२ ॥

धान्याम्ल-सिक्तौ कासीस-पटोली-रोचना-तिलैः ।
स-निम्ब-पत्त्रैर् आलिम्पेद् दहेत् तु तिल-कालकान् ॥ १३ ॥

मषांश् च सूर्य-कान्तेन क्षारेण यदि वाग्निना ।
तद्-वद् उत्कृत्य शस्त्रेण चर्म-कील-जतू-मणी ॥ १४ ॥

लाञ्छनादि-त्रये कुर्याद् यथासन्नं सिरा-व्यधम् ।
लेपयेत् क्षीर-पिष्टैश् च क्षीरि-वृक्ष-त्वग्-अङ्कुरैः ॥ १५ ॥

३२.१५av न्यच्छादि-त्रितये कुर्याद् व्यङ्गेषु चार्जुन-त्वग् वा मञ्जिष्ठा वा स-माक्षिका ।
लेपः स-नव-नीता वा श्वेताश्व-खुर-जा मषी ॥ १६ ॥

३२.१६av व्यङ्गेषु वार्जुन-त्वग् वा रक्त-चन्दन-मञ्जिष्ठा-कुष्ठ-लोध्र-प्रियङ्गवः ।
वटाङ्कुरा मसूराश् च व्यङ्ग-घ्ना मुख-कान्ति-दाः ॥ १७ ॥

द्वे जीरके कृष्ण-तिलाः सर्षपाः पयसा सह ।
पिष्टाः कुर्वन्ति वक्त्रेन्दुम् अपास्त-व्यङ्ग-लाञ्छनम् ॥ १८ ॥

क्षीर-पिष्टा घृत-क्षौद्र-युक्ता वा भृष्ट-निस्-तुषाः ।
मसूराः क्षीर-पिष्टा वा तीक्ष्णाः शाल्मलि-कण्टकाः ॥ १९ ॥

स-गुडः कोल-मज्जा वा शशासृक्-क्षौद्र-कल्कितः ।
सप्ताहं मातुलुङ्ग-स्थं कुष्ठं वा मधुनान्वितम् ॥ २० ॥

३२.२०dv कुष्ठं वा मधुकान्वितम् पिष्टा वा छाग-पयसा स-क्षौद्रा मौसली जटा ।
गोर् अस्थि मुसली-मूल-युक्तं वा साज्य-माक्षिकम् ॥ २१ ॥

जम्ब्व्-आम्र-पल्लवा मस्तु हरिद्रे द्वे नवो गुडः ।
लेपः स-वर्ण-कृत् पिष्टं स्व-रसेन च तिन्दुकम् ॥ २२ ॥

उत्पलम् उत्पल-कुष्ठं प्रियङ्गु-कालीयकं बदर-मज्जा ।
इदम् उद्वर्तनम् आस्यं करोति शतपत्त्र-संकाशम् ॥ २३ ॥

३२.२३av उत्पल-पत्त्रं तगरं ३२.२३dv करोति शतपत्त्रकाकारम् एभिर् एवौषधैः पिष्टैर् मुखाभ्यङ्गाय साधयेत् ।
यथा-दोषर्तुकान् स्नेहान् मधुक-क्वाथ-संयुतैः ॥ २४ ॥

यवान् सर्ज-रसं लोध्रम् उशीरं मदनं मधु ।
घृतं गुडं च गो-मूत्रे पचेद् आ-दर्वि-लेपनात् ॥ २५ ॥

३२.२५bv उशीरं चन्दनं मधु तद् अभ्यङ्गान् निहन्त्य् आशु नीलिका-व्यङ्ग-दूषिकान् ।
मुखं करोति पद्माभं पादौ पद्म-दलोपमौ ॥ २६ ॥

३२.२६bv नीलिका-व्यङ्ग-दूषकान् कुङ्कुमोशीर-कालीय-लाक्षा-यष्ट्य्-आह्व-चन्दनम् ।
न्यग्रोध-पादांस् तरुणान् पद्मकं पद्म-केसरम् ॥ २७ ॥

स-नीलोत्पल-मञ्जिष्ठं पालिकं सलिलाढके ।
पक्त्वा पादावशेषेण तेन पिष्टैश् च कार्षिकैः ॥ २८ ॥

लाक्षा-पत्तङ्ग-मञ्जिष्ठा-यष्टीमधुक-कुङ्कुमैः ।
अजा-क्षीरं द्वि-गुणितं तैलस्य कुडवं पचेत् ॥ २९ ॥

३२.२९cv अजा-क्षीर-द्वि-गुणितं नीलिका-पलित-व्यङ्ग-वली-तिलक-दूषिकान् ।
हन्ति तन् नस्यम् अभ्यस्तं मुखोपचय-वर्ण-कृत् ॥ ३० ॥

मञ्जिष्ठा शबरोद्भवस् तुबरिका लाक्षा हरिद्रा-द्वयं ॥ ३१अ ॥
नेपाली हरिताल-कुङ्कुम-गदा गो-रोचना गैरिकम् ॥ ३१ब् ॥
३२.३१bv नेपाली हरिताल-कुङ्कुम-गदं गो-रोचना गैरिकम् पत्त्रं पाण्डु वटस्य चन्दन-युगं कालीयकं पारदं ॥ ३१च् ॥
पत्तङ्गं कनक-त्वचं कमल-जं बीजं तथा केसरम् ॥ ३१द् ॥
सिक्थं तुत्थं पद्मकाद्यो वसाज्यं मज्जा क्षीरं क्षीरि-वृक्षाम्बु चाग्नौ ।
सिद्धं सिद्धं व्यङ्ग-नील्य्-आदि-नाशे वक्त्रे छायाम् ऐन्दवीं चाशु धत्ते ॥ ३२ ॥

मार्कव-स्व-रस-क्षीर-तोयानीष्टानि नावने ।
प्रसुप्तौ वात-कुष्ठोक्तं कुर्याद् दाहं च वह्निना ॥ ३३ ॥

३२.३३bv -तोय-पिष्टानि नावने उत्कोठे कफ-पित्तोक्तं कोठे सर्वं च कौष्ठिकम् ॥ ३३अब् ॥

# अध्याय 33

स्त्री-व्यवाय-निवृत्तस्य सहसा भजतो ऽथ-वा ।
दोषाध्युषित-संकीर्ण-मलिनाणु-रजः-पथाम् ॥ १ ॥

३३.१av स्त्रीं व्यवाय-निवृत्तस्य अन्य-योनिम् अन्-इच्छन्तीम् अ-गम्यां नव-सूतिकाम् ।
दूषितं स्पृशतस् तोयं रतान्तेष्व् अपि नैव वा ॥ २ ॥

विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।
मुष्टि-दन्त-नखोत्पीडा-विष-वच्-छूक-पातनैः ॥ ३ ॥

३३.३dv -विष-वल्-लूक-पातनैः वेग-निग्रह-दीर्घाति-खर-स्पर्श-विघट्टनैः ।
दोषा दुष्टा गता गुह्यं त्रयो-विंशतिम् आमयान् ॥ ४ ॥

३३.४bv -खर-स्पर्शादि-घट्टनैः ३३.४bv -खर-शष्पादि-घट्टनैः जनयन्त्य् उपदंशादीन् उपदंशो ऽत्र पञ्च-धा ।
पृथग् दोषैः स-रुधिरैः समस्तैश् चात्र मारुतात् ॥ ५ ॥

३३.५av जनयन्त्य् अवदंशादीन् ३३.५bv अवदंशो ऽत्र पञ्च-धा मेढ्रे शोफो रुजश् चित्राः स्तम्भस् त्वक्-परिपोटनम् ।
पक्वोदुम्बर-संकाशः पित्तेन श्वयथुर् ज्वरः ॥ ६ ॥

३३.६av मेढ्र-शोफो रुजश् चित्राः श्लेष्मणा कठिनः स्निग्धः कण्डू-माञ् छीतलो गुरुः ।
शोणितेनासित-स्फोट-संभवो ऽस्र-स्रुतिर् ज्वरः ॥ ७ ॥

सर्व-जे सर्व-लिङ्ग-त्वं श्वयथुर् मुष्कयोर् अपि ।
तीव्रा रुग् आशु-पचनं दरणं कृमि-संभवः ॥ ८ ॥

३३.८dv दारणं कृमि-संभवः याप्यो रक्तोद्भवस् तेषां मृत्यवे संनिपात-जः ।
जायन्ते कुपितैर् दोषैर् गुह्यासृक्-पिशिताश्रयैः ॥ ९ ॥

अन्तर् बहिर् वा मेढ्रस्य कण्डूला मांस-कीलकाः ।
पिच्छिलास्र-स्रवा योनौ तद्-वच् च च्छत्त्र-संनिभाः ॥ १० ॥

ते ऽर्शांस्य् उपेक्षया घ्नन्ति मेढ्र-पुंस्-त्वं भगार्तवं ।
गुह्यस्य बहिर् अन्तर् वा पिटिकाः कफ-रक्त-जाः ॥ ११ ॥

३३.११bv मेढ्र-पुंस्-त्व-भगार्तवं ३३.११bv मेढ्रं पुंसो भगार्तवं सर्षपा-मान-संस्थाना घनाः सर्षपिकाः स्मृताः ।
पिटिका बहवो दीर्घा दीर्यन्ते मध्यतश् च याः ॥ १२ ॥

सो ऽवमन्थः कफासृग्भ्यां वेदना-रोम-हर्ष-वान् ।
कुम्भीका रक्त-पित्तोत्था जाम्बवास्थि-निभाशु-जा ॥ १३ ॥

३३.१३dv जाम्बवास्थि-निभा-शुभा अलजीं मेह-वद् विद्याद् उत्तमां पित्त-रक्त-जाम् ।
पिटिकां माष-मुद्गाभां पिटिका पिटिकाचिता ॥ १४ ॥

३३.१४bv उत्तमां रक्त-पित्त-जाम् कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा ।
पाणिभ्यां भृश-संव्यूढे संव्यूढ-पिटिका भवेत् ॥ १५ ॥

मृदितं मृदितं वस्त्र-संरब्धं वात-कोपतः ।
विषमा कठिना भुग्ना वायुनाष्ठीलिका स्मृता ॥ १६ ॥

३३.१६av मृदितं मृदितं यत् तु ३३.१६av मृदितं मृदितं वस्तु ३३.१६bv संरब्धं वात-कोपतः विमर्दनादि-दुष्टेन वायुना चर्म मेढ्र-जम् ।
निवर्तते स-रुग्-दाहं क्व-चित् पाकं च गच्छति ॥ १७ ॥

३३.१७dv क्व-चित् पाकं न गच्छति पिण्डितं ग्रन्थितं चर्म तत् प्रलम्बम् अधो मणेः ।
निवृत्त-संज्ञं स-कफं कण्डू-काठिन्य-वत् तु तत् ॥ १८ ॥

३३.१८av पिण्डितं ग्रन्थितं तच् च ३३.१८bv विप्रलम्बम् अधो मणेः ३३.१८bv प्रविलम्बम् अधो मणेः दुर्-ऊढं स्फुटितं चर्म निर्दिष्टम् अवपाटिका ।
वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत् ॥ १९ ॥

३३.१९av दुः-सहं स्फुटितं चर्म ३३.१९bv मणौ सक्तं रुणद्धि तत् स्रोतो मूत्रं ततो ऽभ्येति मन्द-धारम् अ-वेदनम् ।
मणेर् विकाश-रोधश् च स निरुद्ध-मणिर् गदः ॥ २० ॥

लिङ्गं शूकैर् इवापूर्णं ग्रथिताख्यं कफोद्भवम् ।
शूक-दूषित-रक्तोत्था स्पर्श-हानिस् तद्-आह्वया ॥ २१ ॥

छिद्रैर् अणु-मुखैर् यत् तु मेहनं सर्वतश् चितम् ।
वात-शोणित-कोपेन तं विद्याच् छत-पोनकम् ॥ २२ ॥

पित्तासृग्भ्यां त्वचः पाकस् त्वक्-पाको ज्वर-दाह-वान् ।
मांस्-पाकः सर्व-जः सर्व-वेदनो मांस-शातनः ॥ २३ ॥

स-रागैर् असितैः स्फोटैः पिटिकाभिश् च पीडितम् ।
मेहनं वेदना चोग्रा तं विद्याद् असृग्-अर्बुदम् ॥ २४ ॥

मांसार्बुदं प्राग् उदितं विद्रधिश् च त्रि-दोष-जः ।
कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः ॥ २५ ॥

पक्वानि संनिपातेन तान् विद्यात् तिल-कालकान् ।
मांसोत्थम् अर्बुदं पाकं विद्रधिं तिल-कालकान् ॥ २६ ॥

चतुरो वर्जयेद् एषां शेषाञ् छीघ्रम् उपाचरेत् ।
विंशतिर् व्यापदो योनेर् जायन्ते दुष्ट-भोजनात् ॥ २७ ॥

विषम-स्थाङ्ग-शयन-भृश-मैथुन-सेवनैः ।
दुष्टार्तवाद् अपद्रवैर् बीज-दोषेण दैवतः ॥ २८ ॥

३३.२८cv दुष्टार्तवाद् उपद्रवैर् योनौ क्रुद्धो ऽनिलः कुर्याद् रुक्-तोदायाम-सुप्त-ताः ।
पिपीलिका-सृप्तिम् इव स्तम्भं कर्कश-तां स्वनम् ॥ २९ ॥

३३.२९cv पिपीलिका-गतिम् इव फेनिलारुण-कृष्णाल्प-तनु-रूक्षार्तव-स्रुतिम् ।
स्रंसं वङ्क्षण-पार्श्वादौ व्यथां गुल्मं क्रमेण च ॥ ३० ॥

३३.३०cv ऊरु-वङ्क्षण-पार्श्वादौ ३३.३०cv भृशं वङ्क्षण-पार्श्वादौ तांस् तांश् च स्वान् गदान् व्यापद् वातिकी नाम सा स्मृता ।
सैवाति-चरणा शोफ-संयुक्ताति-व्यवायतः ॥ ३१ ॥

३३.३१av तांस् तांश् च स्व-गदान् व्यापद् ३३.३१av तांस् तान् स्वांस् स्वान् गदान् व्यापद् मैथुनाद् अति-बालायाः पृष्ठ-जङ्घोरु-वङ्क्षणम् ।
रुजन् संदूषयेद् योनिं वायुः प्राक्-चरणेति सा ॥ ३२ ॥

वेगोदावर्तनाद् योनिं प्रपीडयति मारुतः ।
सा फेनिलं रजः कृच्छ्राद् उदावृत्तं विमुञ्चति ॥ ३३ ॥

३३.३३av वेगेनावर्तनाद् योनिं ३३.३३dv उदावर्तं विमुञ्चति ३३.३३dv उदावर्त्यं विमुञ्चति इयं व्यापद् उदावृत्ता जात-घ्नी तु यदानिलः ।
जातं जातं सुतं हन्ति रौक्ष्याद् दुष्टार्तवोद्भवम् ॥ ३४ ॥

३३.३४av इयं व्यापद् उदावर्ता अत्य्-आशिताया विषमं स्थितायाः सु-रते मरुत् ।
अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ॥ ३५ ॥

सास्थि-मांसं मुखं तीव्र-रुजम् अन्तर्-मुखीति सा ।
वातलाहार-सेविन्यां जनन्यां कुपितो ऽनिलः ॥ ३६ ॥

३३.३६bv -रुजं वक्र-मुखीति सा स्त्रियो योनिम् अणु-द्वारां कुर्यात् सूची-मुखीति सा ।
वेग-रोधाद् ऋतौ वायुर् दुष्टो विण्-मूत्र-संग्रहम् ॥ ३७ ॥

करोति योनेः शोषं च शुष्काख्या साति-वेदना ।
षड्-अहात् सप्त-रात्राद् वा शुक्रं गर्भाशयान् मरुत् ॥ ३८ ॥

वमेत् स-रुङ् नी-रुजो वा यस्याः सा वामिनी मता ।
योनौ वातोपतप्तायां स्त्री-गर्भे बीज-दोषतः ॥ ३९ ॥

३३.३९av वमेत् स-रुङ् नी-रुजो वा ह्य् ३३.३९bv यस्यां सा वामिनी मता ३३.३९bv अस्यां सा वामिनी मता नृ-द्वेषिण्य् अ-स्तनी च स्यात् षण्ढ-संज्ञान्-उपक्रमा ।
दुष्टो विष्टभ्य योन्य्-आस्यं गर्भ-कोष्ठं च मारुतः ॥ ४० ॥

कुरुते विवृतां स्रस्तां वातिकीम् इव दुःखिताम् ।
उत्सन्न-मांसां ताम् आहुर् महा-योनिं महा-रुजाम् ॥ ४१ ॥

यथा-स्वैर् दूषणैर् दुष्टं पित्तं योनिम् उपाश्रितम् ।
करोति दाह-पाकोषा-पूति-गन्धि-ज्वरान्विताम् ॥ ४२ ॥

३३.४२dv -पूति-गन्ध-ज्वरान्विताम् ३३.४२dv -पूति-गन्धां ज्वरान्विताम् भृशोष्ण-भूरि-कुणप-नील-पीतासितार्तवाम् ।
सा व्यापत् पैत्तिकी रक्त-योन्य्-आख्यासृग्-अति-स्रुतेः ॥ ४३ ॥

कफो ऽभिष्यन्दिभिः क्रुद्धः कुर्याद् योनिम् अ-वेदनाम् ।
शीतलां कण्डुलां पाण्डु-पिच्छिलां तद्-विध-स्रुतिम् ॥ ४४ ॥

सा व्यापच् छ्लैष्मिकी वात-पित्ताभ्यां क्षीयते रजः ।
स-दाह-कार्श्य-वैवर्ण्यं यस्याः सा लोहित-क्षया ॥ ४५ ॥

३३.४५dv यस्यां सा लोहित-क्षया पित्तलाया नृ-संवासे क्षवथूद्गार-धारणात् ।
पित्त-युक्तेन मरुता योनिर् भवति दूषिता ॥ ४६ ॥

शूना स्पर्शा-सहा सार्तिर् नील-पीतास्र-वाहिनी ।
वस्ति-कुक्षि-गुरु-त्वातीसारा-रोचक-कारिणी ॥ ४७ ॥

श्रोणि-वङ्क्षण-रुक्-तोद-ज्वर-कृत् सा परिप्लुता ।
वात-श्लेष्मामय-व्याप्ता श्वेत-पिच्छिल-वाहिनी ॥ ४८ ॥

उपप्लुता स्मृता योनिर् विप्लुताख्या त्व् अ-धावनात् ।
संजात-जन्तुः कण्डूला कण्ड्वा चाति-रति-प्रिया ॥ ४९ ॥

अ-काल-वाहनाद् वायुः श्लेष्म-रक्त-विमूर्छितः ।
कर्णिकां जनयेद् योनौ रजो-मार्ग-निरोधिनीम् ॥ ५० ॥

सा कर्णिनी त्रिभिर् दोषैर् योनि-गर्भाशयाश्रितैः ।
यथा-स्वोपद्रव-करैर् व्यापत् सा सांनिपातिकी ॥ ५१ ॥

इति योनि-गदा नारी यैः शुक्रं न प्रतीच्छति ।
ततो गर्भं न गृह्णाति रोगांश् चाप्नोति दारुणान् ॥ ५२ ॥

असृग्-दरार्शो-गुल्मादीन् आबाधांश् चानिलादिभिः ॥ ५२॒अब् ॥
३३.५२॒ब्व् आबाधाश् चानिलादिभिः

## अध्याय 34

मेढ्र-मध्ये सिरां विध्येद् उपदंशे नवोत्थिते ।
शीतां कुर्यात् क्रियां शुद्धिं विरेकेण विशेषतः ॥ १ ॥

३४.१bv अवदंशे नवोत्थिते तिल-कल्क-घृत-क्षौद्रैर् लेपः पक्वे तु पाटिते ।
जम्ब्व्-आम्र-सुमनो-नीप-श्वेत-काम्बोजिकाङ्कुरान् ॥ २ ॥

शल्लकी-बदरी-बिल्व-पलाश-तिनिशोद्भवाः ।
त्वचः क्षीरि-द्रुमाणां च त्रि-फलां च पचेज् जले ॥ ३ ॥

स क्वाथः क्षालनं तेन पक्वं तैलं च रोपणम् ।
तुत्थ-गैरिक-लोध्रैला-मनोह्वाल-रसाञ्जनैः ॥ ४ ॥

३४.४av स क्वाथः क्षालने तेन हरेणु-पुष्प-कासीस-सौराष्ट्री-लवणोत्तमैः ।
लेपः क्षौद्र-द्रुतैः सूक्ष्मैर् उपदंश-व्रणापहः ॥ ५ ॥

३४.५dv अवदंश-व्रणापहः कपाले त्रि-फला दग्धा स-घृता रोपणं परम् ।
सामान्यं साधनम् इदं प्रति-दोषं तु शोफ-वत् ॥ ६ ॥

न च याति यथा पाकं प्रयतेत तथा भृशम् ।
पक्वैः स्नायु-सिरा-मांसैः प्रायो नश्यति हि ध्वजः ॥ ७ ॥

अर्शसां छिन्न-दग्धानां क्रिया कार्योपदंश-वत् ।
सर्षपा लिखिताः सूक्ष्मैः कषायैर् अवचूर्णयेत् ॥ ८ ॥

३४.८bv क्रिया कार्यावदंश-वत् ३४.८cv सर्षपां लिखितां सूक्ष्मैः तैर् एवाभ्यञ्जनं तैलं साधयेद् व्रण-रोपणम् ।
क्रियेयम् अवमन्थे ऽपि रक्तं स्राव्यं तथोभयोः ॥ ९ ॥

कुम्भीकायां हरेद् रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुक-त्रि-फला-लोध्रैर् लेपस् तैलं च रोपणम् ॥ १० ॥

अलज्यां स्रुत-रक्तायाम् अयम् एव क्रिया-क्रमः ।
उत्तमाख्यां तु पिटिकां संछिद्य बडिशोद्धृताम् ॥ ११ ॥

कल्कैश् चूर्णैः कषायाणां क्षौद्र-युक्तैर् उपाचरेत् ।
क्रमः पित्त-विसर्पोक्तः पुष्कर-व्यूढयोर् हितः ॥ १२ ॥

त्वक्-पाके स्पर्श-हान्यां च सेचयेद् मृदितं पुनः ।
बला-तैलेन कोष्णेन मधुरैश् चोपनाहयेत् ॥ १३ ॥

३४.१३av त्वक्-पाके स्पर्श-हान्यौ वा अष्ठीलिकां हृते रक्ते श्लेष्म-ग्रन्थि-वद् आचरेत् ।
निवृत्तं सर्पिषाभ्यज्य स्वेदयित्वोपनाहयेत् ॥ १४ ॥

त्रि-रात्रं पञ्च-रात्रं वा सु-स्निग्धैः शाल्वणादिभिः ।
स्वेदयित्वा ततो भूयः स्निग्धं चर्म समानयेत् ॥ १५ ॥

३४.१५dv स्निग्धं चर्म समाहरेत् मणिं प्रपीड्य शनकैः प्रविष्टे चोपनाहनम् ।
मणौ पुनः पुनः स्निग्धं भोजनं चात्र शस्यते ॥ १६ ॥

अयम् एव प्रयोज्यः स्याद् अवपाट्याम् अपि क्रमः ।
नाडीम् उभयतो-द्वारां निरुद्धे जतुना सृताम् ॥ १७ ॥

३४.१७dv निरुद्धे जतुना शृताम् ३४.१७dv निरुद्धे जतुना कृताम् स्नेहाक्तां स्रोतसि न्यस्य सिञ्चेत् स्नेहैश् चलापहैः ।
त्र्य्-अहात् त्र्य्-अहात् स्थूल-तरां न्यस्य नाडीं विवर्धयेत् ॥ १८ ॥

स्रोतो-द्वारम् अ-सिद्धौ तु विद्वान् शस्त्रेण पाटयेत् ।
सेवनीं वर्जयन् युञ्ज्यात् सद्यः-क्षत-विधिं ततः ॥ १९ ॥

३४.१९av स्रोतो-द्वारम् अ-सिद्धौ वा ग्रन्थितं स्वेदितं नाड्या स्निग्धोष्णैर् उपनाहयेत् ।
लिम्पेत् कषायैः स-क्षौद्रैर् लिखित्वा शत-पोनकम् ॥ २० ॥

रक्त-विद्रधि-वत् कार्या चिकित्सा शोणितार्बुदे ।
व्रणोपचारं सर्वेषु यथावस्थं प्रयोजयेत् ॥ २१ ॥

योनि-व्यापत्सु भूयिष्ठं शस्यते कर्म वात-जित् ।
स्नेहन-स्वेद-वस्त्य्-आदि वात-जासु विशेषतः ॥ २२ ॥

न हि वाताद् ऋते योनिर् वनितानां प्रदुष्यति ।
अतो जित्वा तम् अन्यस्य कुर्याद् दोषस्य भेषजम् ॥ २३ ॥

३४.२३cv अतो ऽ-जित्वा तम् अन्यच् च ३४.२३cv अतो ऽ-जित्वा तम् अन्यस्य ३४.२३dv न कुर्याद् दोष-भेषजम् पाययेत बला-तैलं मिश्रकं सु-कुमारकम् ।
स्निग्ध-स्विन्नां तथा योनिं दुः-स्थितां स्थापयेत् समाम् ॥ २४ ॥

३४.२४av पाययेच् च बला-तैलं ३४.२४av पाययेत् तां बला-तैलं ३४.२४av पाययेद् वा बला-तैलं पाणिना नमयेज् जिह्मां संवृतां व्यधयेत् पुनः ।
प्रवेशयेन् निःसृतां च विवृतां परिवर्तयेत् ॥ २५ ॥

३४.२५av पाणिना नामयेज् जिह्मां ३४.२५av पाणिनोन्नमयेज् जिह्मां ३४.२५bv संवृतां व्यासयेत् पुनः स्थानापवृत्ता योनिर् हि शल्य-भूता स्त्रियो मता ।
कर्मभिर् वमनाद्यैश् च मृदुभिर् योजयेत् स्त्रियम् ॥ २६ ॥

३४.२६av स्थानापवर्ता योनिर् हि सर्वतः सु-विशुद्धायाः शेषं कर्म विधीयते ।
वस्त्य्-अभ्यङ्ग-परीषेक-प्रलेप-पिचु-धारणम् ॥ २७ ॥

३४.२७av सर्वतस् तु विशुद्धायाः काश्मर्य-त्रि-फला-द्राक्षा-कासमर्द-निशा-द्वयैः ।
गुडूची-सैर्यकाभीरु-शुकनासा-पुनर्नवैः ॥ २८ ॥

३४.२८cv गुडूची-गैरिकाभीरु- परूषकैश् च विपचेत् प्रस्थम् अक्ष-समैर् घृतात् ।
योनि-वात-विकार-घ्नं तत् पीतं गर्भ-दं परम् ॥ २९ ॥

३४.२९av परूषकैश् च विपचेद् ३४.२९bv प्रस्थम् अक्ष-समैर् घृतम् ३४.२९bv अक्षैः प्रस्थ-समं घृतम् वचोपकुञ्चिकाजाजी-कृष्णा-वृषक-सैन्धवम् ।
अजमोदा-यव-क्षार-शर्करा-चित्रकान्वितम् ॥ ३० ॥

पिष्ट्वा प्रसन्नयालोड्य खादेत् तद् घृत-भर्जितम् ।
योनि-पार्श्वार्ति-हृद्-रोग-गुल्मार्शो-विनिवृत्तये ॥ ३१ ॥

३४.३१dv -गुल्मार्शो-ऽर्ति-निवृत्तये वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।
पिबेन् मद्यैः स-लवणैस् तथा कृष्णोपकुञ्चिके ॥ ३२ ॥

३४.३२av वृषस्य मातुलुङ्गस्य ३४.३२dv तथा कृष्णोपकुञ्चिका रास्ना-श्वदंष्ट्रा-वृषकैः शृतं शूल-हरं पयः ।
गुडूची-त्रि-फला-दन्ती-क्वाथैश् च परिषेचनम् ॥ ३३ ॥

नत-वार्ताकिनी-कुष्ठ-सैन्धवामरदारुभिः ।
तैलात् प्रसाधिताद् धार्यः पिचुर् योनौ रुजापहः ॥ ३४ ॥

पित्तलानां तु योनीनां सेकाभ्यङ्ग-पिचु-क्रियाः ।
शीताः पित्त-जितः कार्याः स्नेहनार्थं घृतानि च ॥ ३५ ॥

३४.३५av पित्तलानां च योनीनां शतावरी-मूल-तुला-चतुष्कात् क्षुण्ण-पीडितात् ।
रसेन क्षीर-तुल्येन पाचयेत घृताढकम् ॥ ३६ ॥

जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।
पिष्टैः प्रियालैश् चाक्षांशैर् द्वि-बला-मधुकान्वितैः ॥ ३७ ॥

३४.३७dv मधुकर्द्धि-बलान्वितैः सिद्ध-शीते तु मधुनः पिप्पल्याश् च पलाष्टकम् ।
शर्कराया दश-पलं क्षिपेल् लिह्यात् पिचुं ततः ॥ ३८ ॥

योन्य्-असृक्-शुक्र-दोष-घ्नं वृष्यं पुं-सवनं परम् ।
क्षतं क्षयम् असृक्-पित्तं कासं श्वासं हलीमकम् ॥ ३९ ॥

३४.३९cv क्षत-क्षयम् असृक्-पित्तं कामलां वात-रुधिरं विसर्पं हृच्-छिरो-ग्रहम् ।
अपस्मारार्दितायाम-मदोन्मादांश् च नाशयेत् ॥ ४० ॥

३४.४०cv अपस्मारार्दितायामान् ३४.४०dv मदोन्मादांश् च नाशयेत् एवम् एव पयः-सर्पिर् जीवनीयोपसाधितम् ।
गर्भ-दं पित्त-जानां च रोगाणां परमं हितम् ॥ ४१ ॥

बला-द्रोण-द्वय-क्वाथे घृत-तैलाढकं पचेत् ।
क्षीरे चतुर्-गुणे कृष्णा-काकनासा-सितान्वितैः ॥ ४२ ॥

जीवन्ती-क्षीर-काकोली-स्थिरा-वीरर्द्धि-जीवकैः ।
पयस्या-श्रावणी-मुद्ग-पीलु-माषाख्य-पर्णिभिः ॥ ४३ ॥

३४.४३bv -स्थिरा-वीरर्द्धि-जीरकैः ३४.४३bv -स्थिरा-वीरा-द्वि-जीवकैः ३४.४३dv -पीलु-माषाखुकर्णिभिः वात-पित्तामयान् हत्वा पानाद् गर्भं दधाति तत् ।
रक्त-योन्याम् असृग्-वर्णैर् अनुबन्धम् अवेक्ष्य च ॥ ४४ ॥

३४.४४bv पानाद् गर्भं ददाति तत् यथा-दोषोदयं युञ्ज्याद् रक्त-स्थापनम् औषधम् ।
पाठां जम्ब्व्-आम्रयोर् अस्थि शिलोद्भेदं रसाञ्जनम् ॥ ४५ ॥

मञ्जिष्ठागुरु-कट्फल-मुस्त-प्रियङ्गु-मिशि-कुष्ठैः ।
कट्वङ्ग-कुटज-शाबर-ककुभ-त्वङ्-मधुक-पद्मक-मधूकैः ॥ ४५.१+१ ॥

३४.४५.१+१av मञ्जिष्ठा-मधु-कट्फल- कुङ्कुम-बिल्वातिविषा-माक्षीक-रसाञ्जनैः स-किञ्जल्कैः ।
पिष्टैर् घृतं विपक्वं द्वि-गुणाज-क्षीर-संयुक्तम् ॥ ४५.१+२ ॥

स्त्रीणाम् अपत्य-जननं योनि-रुजा-दोष-जित् सदा युञ्ज्यात् ।
उत्तर-वस्तिषु सर्पिर् योज्यं कल्याणकं नाम ॥ ४५.१+३ ॥

अम्बष्ठां शाल्मली-पिच्छां समङ्गां वत्सक-त्वचम् ।
बाह्लीक-बिल्वातिविषा-लोध्र-तोयद-गैरिकम् ॥ ४६ ॥

३४.४६bv समङ्गां वत्सक-त्वचाम् शुण्ठी-मधूक-माचीक-रक्त-चन्दन-कट्फलम् ।
कट्वङ्ग-वत्सकानन्ता-धातकी-मधुकार्जुनम् ॥ ४७ ॥

३४.४७av शुण्ठी-मधुक-माचीक- ३४.४७av शुण्ठी-मधुक-माध्वीक- ३४.४७av शुण्ठी-मधुक-मार्द्वीक- ३४.४७av शुण्ठी-मधुक-मार्द्वीका- ३४.४७av शुण्ठी-मधूक-मृद्वीका- ३४.४७dv -धातकी-मधुकाञ्जनम् पुष्ये गृहीत्वा संचूर्ण्य स-क्षौद्रं तण्डुलाम्भसा ।
पिबेद् अर्शःस्व् अतीसारे रक्तं यश् चोपवेश्यते ॥ ४८ ॥

३४.४८bv स-क्षौद्रं तण्डुलाम्बुना दोषा जन्तु-कृता ये च बालानां तांश् च नाशयेत् ।
योनि-दोषं रजो-दोषं श्याव-श्वेतारुणासितम् ॥ ४९ ॥

३४.४९av दोषा दन्त-कृता ये च चूर्णं पुष्यानुगं नाम हितम् आत्रेय-पूजितम् ।
योन्यां बलास-दुष्टायां सर्वं रूक्षोष्णम् औषधम् ॥ ५० ॥

धातक्य्-आमलकी-पत्र-स्रोतो-ज-मधुकोत्पलैः ।
जम्ब्व्-आम्र-सार-कासीस-लोध्र-कट्फल-तिन्दुकैः ॥ ५१ ॥

सौराष्ट्रिका-दाडिम-त्वग्-उदुम्बर-शलाटुभिः ।
अक्ष-मात्रैर् अजा-मूत्रे क्षीरे च द्वि-गुणे पचेत् ॥ ५२ ॥

तैल-प्रस्थं तद् अभ्यङ्ग-पिचु-वस्तिषु योजयेत् ।
तेन शूनोन्नता स्तब्धा पिच्छिला स्राविणी तथा ॥ ५३ ॥

३४.५३cv शूनोत्तानोन्नता स्तब्धा विप्लुतोपप्लुता योनिः सिध्येत् स-स्फोट-शूलिनी ।
यवान्नम् अभयारिष्टं सीधु तैलं च शीलयेत् ॥ ५४ ॥

३४.५४bv सिध्येत स्फोट-शूलिनी पिप्पल्य्-अयो-रजः-पथ्या-प्रयोगांश् च स-माक्षिकान् ।
कासीसं त्रि-फला काङ्क्षी साम्र-जम्ब्व्-अस्थि धातकी ॥ ५५ ॥

३४.५५cv कासीसं त्रि-फला काच्छी पैच्छिल्ये क्षौद्र-संयुक्तश् चूर्णो वैशद्य-कारकः ।
पलाश-धातकी-जम्बू-समङ्गा-मोच-सर्ज-जः ॥ ५६ ॥

दुर्-गन्धे पिच्छिले क्लेदे स्तम्भनश् चूर्ण इष्यते ।
आरग्वधादि-वर्गस्य कषायः परिषेचनम् ॥ ५७ ॥

३४.५७dv कषायः परिषेचने स्तब्धानां कर्कशानां च कार्यं मार्दव-कारकम् ।
धारणं वेसवारस्य कृशरा-पायसस्य च ॥ ५८ ॥

दुर्-गन्धानां कषायः स्यात् तैलं वा कल्क एव वा ।
चूर्णो वा सर्व-गन्धानां पूति-गन्धापकर्षणः ॥ ५९ ॥

३४.५९dv पूति-गन्ध्य्-अपकर्षणः श्लेष्मलानां कटु-प्रायाः स-मूत्रा वस्तयो हिताः ।
पित्ते स-मधुक-क्षीरा वाते तैलाम्ल-संयुताः ॥ ६० ॥

संनिपात-समुत्थायाः कर्म साधारणं हितम् ।
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ॥ ६१ ॥

३४.६१av संनिपात-समुत्थायां ३४.६१dv गर्भो भवति योषिताम् चन्दनो नतयोशीर-तिक्ता-पद्मेभ-केसरैः ।
कुटज-त्वक्-फलं मुस्तं जम्ब्व्-आम्रास्थि रसाञ्जनम् ॥ ६१.१+१ ॥

३४.६१.१+१bv -तिक्ता-पद्मेभ-केसरम् पद्मकोत्पल-बिल्वाब्द-कट्फलैः साधिता निशा ।
धातक्य्-अतिविषा-मांसी-पाठा-मोच-रसोदकम् ॥ ६१.१+२ ॥

मधूकं मधुकानन्ता-शारिवा-दाडिम-[त्व]चम् ।
मृल्-लोध्रार्जुन-शैलेय-समङ्गा नागराः समाः ॥ ६१.१+३ ॥

चूर्णं श्रेष्ठाम्बुना पीतं हन्ति लोहित-मेहिनम् ।
मूर्छा-तृष्णा-ज्वरार्ताय रक्तातीसार-मेहिनाम् ॥ ६१.१+४ ॥

स्त्रीणाम् असृग्-दरं याति गर्भ-संस्थापनं परम् ॥ ६१.१+५अब् ॥
अ-दुष्टे प्राकृते बीजे जीवोपक्रमणे सति ।
पञ्च-कर्म-विशुद्धस्य पुरुषस्यापि चेन्द्रियम् ॥ ६२ ॥

परीक्ष्य वर्णैर् दोषाणां दुष्टं तद्-घ्नैर् उपाचरेत् ।
मञ्जिष्ठा-कुष्ठ-तगर-त्रि-फला-शर्करा-वचाः ॥ ६३ ॥

रसं शिरीष-पत्त्राणां कल्कं च षड्-अहः पिबेत् ।
क्षीरोपनाशिना योषिद् ऋतु-स्नाता सुतार्थिनी ॥ ६३.१+१ ॥

द्वे निशे मधुकं मेदां दीप्यकं कटु-रोहिणीम् ।
पयस्या-हिङ्गु-काकोली-वाजिगन्धा-शतावरीः ॥ ६४ ॥

३४.६४av द्वे निशे मधुकं मेदा ३४.६४bv दीप्यकः कटु-रोहिणी ३४.६४cv पयस्या हिङ्गु काकोली ३४.६४dv वाजिगन्धा शतावरी पिष्ट्वाक्षांशा
घृत-प्रस्थं पचेत् क्षीर-चतुर्-गुणम् ।
योनि-शुक्र-प्रदोषेषु तत् सर्वेषु प्रशस्यते ॥ ६५ ॥

३४.६५av पिष्ट्वाक्षांशैर् घृत-प्रस्थं ३४.६५bv पचेत् क्षीरं चतुर्-गुणम् ३४.६५bv पचेत् क्षीरे चतुर्-गुणे ३४.६५dv तत् सर्वेषु च शस्यते आयुष्यं
पौष्टिकं मेध्यं धन्यं पुं-सवनं परम् ।
फल-सर्पिर् इति ख्यातं पुष्पे पीतं फलाय यत् ॥ ६६ ॥

म्रियमाण-प्रजानां च गर्भिणीनां च पूजितम् ।
एतत् परं च बालानां ग्रह-घ्नं देह-वर्धनम् ॥ ६७ ॥

# अध्याय 35

मथ्यमाने जल-निधाव् अमृतार्थं सुरासुरैः ।
जातः प्राग् अमृतोत्पत्तेः पुरुषो घोर-दर्शनः ॥ १ ॥

दीप्त-तेजाश् चतुर्-दंष्ट्रो हरि-केशो ऽनलेक्षणः ।
जगद् विषण्णं तं दृष्ट्वा तेनासौ विष-संज्ञितः ॥ २ ॥

३५.२bv हरित्-केशो ऽनलेक्षणः ३५.२dv तेनासौ विष-संज्ञकः हुङ्-कृतो ब्रह्मणा मूर्तो ततः स्थावर-जङ्गमे ।
सो ऽध्यतिष्ठन् निजं रूपम् उज्झित्वा वञ्चनात्मकम् ॥ ३ ॥

३५.३av हुङ्-कृतो ब्रह्मणा मूर्तस् ३५.३av हुङ्-कृतो ब्रह्मणा मूर्तीस् ३५.३bv ततः स्थावर-जङ्गमम् ३५.३bv ततः स्थावर-जङ्गमम् ३५.३bv ततः स्थावर-जङ्गमात् ३५.३bv ततः स्थावर-जङ्गमाः ३५.३dv उज्झित्वा वञ्चनात्मकः स्थिरम् इत्य् उल्बणं वीर्यं यत् कन्देषु प्रतिष्ठितम् ।
कालकूटेन्द्रवत्साख्य-शृङ्गी-हालाहलादिकम् ॥ ४ ॥

सर्प-लूतादि-दंष्ट्रासु दारुणं जङ्गमं विषम् ।
स्थावरं जङ्गमं चेति विषं प्रोक्तम् अ-कृत्रिमम् ॥ ५ ॥

कृत्रिमं गर-संज्ञं तु क्रियते विविधौषधैः ।
हन्ति योग-वशेनाशु चिराच् चिर-तराच् च तत् ॥ ६ ॥

शोफ-पाण्डूदरोन्माद-दुर्-नामादीन् करोति वा ।
तीक्ष्णोष्ण-रूक्ष-विशदं व्यवाय्य् आशु-करं लघु ॥ ७ ॥

३५.७bv -दुर्-नामादीन् करोति च विकाषि सूक्ष्मम् अ-व्यक्त-रसं विषम-पाकि च ।
ओजसो विपरीतं तत् तीक्ष्णाद्यैर् अन्वितं गुणैः ॥ ८ ॥

३५.८av विकाशि सूक्ष्मम् अ-व्यक्त- ३५.८av विकासि सूक्ष्मम् अ-व्यक्त- ३५.८bv -रसैर् युक्तम् अ-पाकि च ३५.८cv ओजसो विपरीतं तु वात-पित्तोत्तरं नृणां सद्यो हरति जीवितम् ।
विषं हि देहं संप्राप्य प्राग् दूषयति शोणितम् ॥ ९ ॥

कफ-पित्तानिलांश् चानु समं दोषान् सहाशयान् ।
ततो हृदयम् आस्थाय देहोच्छेदाय कल्पते ॥ १० ॥

३५.१०bv सम-दोषं सहाशयान् ३५.१०bv समं दोषान् सहाय-वत् ३५.१०bv सम-दोषं सहाय-वत् ३५.१०bv सम-दोषं सहाश्रयम् ३५.१०dv देह-च्छेदाय कल्पते स्थावरस्योपयुक्तस्य वेगे पूर्वे प्रजायते ।
जिह्वायाः श्याव-ता स्तम्भो मूर्छा त्रासः क्लमो वमिः ॥ ११ ॥

३५.११bv वेगः पूर्वं प्रजायते ३५.११bv वेगे पूर्वे च जायते द्वितीये वेपथुः स्वेदो दाहः कण्ठे च वेदना ।
विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥ १२ ॥

तालु-शोषस् तृतीये तु शूलं चामाशये भृशम् ।
दुर्-बले हरिते शूने जायेते चास्य लोचने ॥ १३ ॥

३५.१३cv दुर्-वर्णे हरिते शूने ३५.१३cv दुर्-वर्णे हरिते शून्ये पक्वाशय-गते तोद-हिध्मा-कासान्त्र-कूजनम् ।
चतुर्थे जायते वेगे शिरसश् चाति-गौरवम् ॥ १४ ॥

३५.१४av पक्वाशय-गते तोदो ३५.१४bv हिध्मा कासान्त्र-कूजनम् कफ-प्रसेको वैवर्ण्यं पर्व-भेदश् च पञ्चमे ।
सर्व-दोष-प्रकोपश् च पक्वाधाने च वेदना ॥ १५ ॥

षष्ठे संज्ञा-प्रणाशश् च सु-भृशं चातिसार्यते ।
स्कन्ध-पृष्ठ-कटी-भङ्गो भवेन् मृत्युश् च सप्तमे ॥ १६ ॥

प्रथमे विष-वेगे तु वान्तं शीताम्बु-सेचिनम् ।
सर्पिर्-मधुभ्यां संयुक्तम् अ-गदं पाययेद् द्रुतम् ॥ १७ ॥

३५.१७av प्रथमे विष-वेगे ऽथ द्वितीये पूर्व-वद् वान्तं विरिक्तं चानुपाययेत् ।
तृतीये ऽ-गद-पानं तु हितं नस्यं तथाञ्जनम् ॥ १८ ॥

चतुर्थे स्नेह-संयुक्तम् अ-गदं प्रतियोजयेत् ।
पञ्चमे मधुक-क्वाथ-माक्षिकाभ्यां युतं हितम् ॥ १९ ॥

षष्ठे ऽतीसार-वद् सिद्धिर् अवपीडश् तु सप्तमे ।
मूर्ध्नि काक-पदं कृत्वा सासृग् वा पिशितं क्षिपेत् ॥ २० ॥

३५.२०bv अवपीडश् च सप्तमे कोशातक्य् अग्निकः पाठा सूर्यवल्ल्य्-अमृताभयाः ।
शेलुः शिरीषः किणिही हरिद्रे क्षौद्र-साह्वया ॥ २१ ॥

३५.२१bv सूर्यवल्ल्य् अमृताभया ३५.२१dv हरिद्रे क्षौद्र-साह्वयम् पुनर्नवे त्रि-कटुकं बृहत्यौ शारिवे बला ।
एषां यवागूं निर्यूहे शीतां स-घृत-माक्षिकाम् ॥ २२ ॥

३५.२२av पुनर्नवा त्रि-कटुकं ३५.२२bv बृहत्यौ शारिवे बले युञ्ज्याद् वेगान्तरे सर्व-विष-घ्नीं कृत-कर्मणः ।
तद्-वन् मधूक-मधुक-पद्म-केसर-चन्दनैः ॥ २३ ॥

अञ्जनं तगरं कुष्ठं हरितालं मनःशिला ।
फलिनी त्रि-कटु स्पृक्का नागपुष्पं स-केसरम् ॥ २४ ॥

हरेणुर् मधुकं मांसी रोचना काकमालिका ।
श्रीवेष्टकं सर्ज-रसः शताह्वा कुङ्कुमं बला ॥ २५ ॥

३५.२५bv रोचना कालमालिका ३५.२५bv रोचना कालमञ्जिका तमाल-पत्र-तालीश-भूर्जोशीर-निशा-द्वयम् ।
कन्योपवासिनी स्नाता शुक्ल-वासा मधु-द्रुतैः ॥ २६ ॥

३५.२६av तमाल-पत्रं तालीशं ३५.२६bv भूर्जोशीरं निशा-द्वयम् ३५.२६dv शुक्ल-वासा मधु-प्लुतैः द्वि-जान् अभ्यर्च्य तैः पुष्ये कल्पयेद् अ-गदोत्तमम् ।
वैद्यश् चात्र तदा मन्त्रं प्रयतात्मा पठेद् इमम् ॥ २७ ॥

३५.२७av द्वि-जान् अभ्यर्च्य पुष्यर्क्षे ३५.२७cv वैद्यश् चाशु तदा मन्त्रं नमः पुरुष-सिंहाय नमो नारायणाय च ।
यथासौ नाभिजानाति रणे कृष्ण-पराजयम् ॥ २८ ॥

३५.२८dv रणे कृष्णः पराजयम् एतेन सत्य-वाक्येन अ-गदो मे प्रसिध्यतु ।
नमो वैडूर्यमाते हुलु हुलु रक्ष मां सर्व-विषेभ्यः ॥ २९ ॥

३५.२९dv हुलु कुलु रक्ष मां सर्व-विषेभ्यः गौरि गान्धारि चाण्डालि मातङ्गि स्वाहा पिष्टे च द्वितीयो मन्त्रः ॥ ३०अब् ॥
३५.३०av गौरि गान्धारि चण्डालि मातङ्गि स्वाहा हरिमायि स्वाहा ॥ ३०च् ॥
३५.३०cv हारितमायि स्वाहा अ-शेष-विष-वेताल-ग्रह-कार्मण-पाप्मसु ।
मरक-व्याधि-दुर्-भिक्ष-युद्धाशनि-भयेषु च ॥ ३१ ॥

पान-नस्याञ्जनालेप-मणि-बन्धादि-योजितः ।
एष चन्द्रोदयो नाम शान्ति-स्वस्त्य्-अयनं परम् ॥ ३२ ॥

३५.३२dv शान्तिः स्वस्त्य्-अयनं परम् वासवो वृत्रम् अवधीत् समालिप्तः किलामुना ॥ ३२+(१)अब् ॥
३५.३२+(१)ब्व् समालिप्तो ऽमुना किल जीर्णं विष-घ्नौषधिभिर् हतं वा दावाग्नि-वातातप-शोषितं वा ।
स्व-भावतो वा न गुणैः सु-युक्तं दूषी-विषाख्यां विषम् अभ्युपैति ॥ ३३ ॥

३५.३३cv स्व-भावतो वा सु-गुणैर् न युक्तं ३५.३३cv स्व-भावतो वा स्व-गुणैर् न युक्तं ३५.३३dv दूषी-विषाख्यं विषम् अभ्युपैति वीर्याल्प-भावाद् अ-विभाव्यम् एतत् कफावृतं वर्ष-गणानुबन्धि ।
तेनार्दितो भिन्न-पुरीष-वर्णो दुष्टास्र-रोगी तृड्-अ-रोचकार्तः ॥ ३४ ॥

मूर्छन् वमन् गद्गद-वाग् विमुह्यन् भवेच् च दूष्योदर-लिङ्ग-जुष्टः ।
आमाशय-स्थे कफ-वात-रोगी पक्वाशय-स्थे ऽनिल-पित्त-रोगी ॥ ३५ ॥

भवेन् नरो ध्वस्त-शिरो-रुहाङ्गो विलून-पक्षः स यथा विहङ्गः ।
स्थितं रसादिष्व् अथ-वा विचित्रान् करोति धातु-प्रभवान् विकारान् ॥ ३६ ॥

प्राग्-वाता-जीर्ण-शीताभ्र-दिवा-स्वप्ना-हिताशनैः ।
दुष्टं दूषयते धातून् अतो दूषी-विषं स्मृतम् ॥ ३७ ॥

३५.३७cv दुष्टं दूषयते धातुं ३५.३७dv ततो दूषी-विषं स्मृतम् दूषी-विषार्तं सु-स्विन्नम् ऊर्ध्वं चाधश् च शोधितम् ।
दूषी-विषारिम् अ-गदं लेहयेन् मधुनाप्लुतम् ॥ ३८ ॥

पिप्पल्यो ध्यामकं मांसी लोध्रम् एला सुवर्चिका ।
कुटन्नटं नतं कुष्ठं यष्टी चन्दन-गैरिकम् ॥ ३९ ॥

दूषी-विषारिर् नाम्नायं न चान्य-त्रापि वार्यते ।
विष-दिग्धेन विद्धस् तु प्रताम्यति मुहुर् मुहुः ॥ ४० ॥

वि-वर्ण-भावं भजते विषादं चाशु गच्छति ।
कीटैर् इवावृतं चास्य गात्रं चिमिचिमायते ॥ ४१ ॥

श्रोणि-पृष्ठ-शिरः-स्कन्ध-संधयः स्युः स-वेदनाः ।
कृष्ण-दुष्टास्र-विस्रावी तृण्-मूर्छा-ज्वर-दाह-वान् ॥ ४२ ॥

दृष्टि-कालुष्य-वमथु-श्वास-कास-करः क्षणात् ।
आ-रक्त-पीत-पर्य्-अन्तः श्याव-मध्यो ऽति-रुग् व्रणः ॥ ४३ ॥

शूयते पच्यते सद्यो गत्वा मांसं च कृष्ण-ताम् ।
प्रक्लिन्नं शीर्यते ऽभीक्ष्णं स-पिच्छिल-परिस्रवम् ॥ ४४ ॥

कुर्याद् अ-मर्म-विद्धस्य हृदयावरणं द्रुतम् ।
शल्यम् आकृष्य तप्तेन लोहेनानु दहेद् व्रणम् ॥ ४५ ॥

अथ-वा मुष्कक-श्वेता-सोम-त्वक्-ताम्रवल्लितः ।
शिरीषाद् गृध्रनख्याश् च क्षारेण प्रतिसारयेत् ॥ ४६ ॥

शुकनासा-प्रतिविषा-व्याघ्री-मूलैश् च लेपयेत् ।
कीट-दष्ट-चिकित्सां च कुर्यात् तस्य यथार्हतः ॥ ४७ ॥

व्रणे तु पूति-पिशिते क्रिया पित्त-विसर्प-वत् ।
सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वा-रति-चोदिताः ॥ ४८ ॥

३५.४८dv राज्ञे चा-रति-चोदिताः गरम् आहार-संपृक्तं यच्छन्त्य् आसन्न-वर्तिनः ।
नाना-प्राण्य्-अङ्ग-शमल-विरुद्धौषधि-भस्मनाम् ॥ ४९ ॥

३५.४९cv नाना-प्राण्य्-अङ्ग-स-मल- विषाणां चाल्प-वीर्याणां योगो गर इति स्मृतः ।
तेन पाण्डुः कृशो ऽल्पाग्निः कास-श्वास-ज्वरार्दितः ॥ ५० ॥

३५.५०av विषाणां मन्द-वीर्याणां वायुना प्रतिलोमेन स्वप्न-चिन्ता-परायणः ।
महोदर-यकृत्-प्लीही दीन-वाग् दुर्-बलो ऽलसः ॥ ५१ ॥

३५.५१cv मेहोदर-यकृत्-प्लीही ३५.५१dv हीन-वाग् दुर्-बलो ऽलसः शोफ-वान् सतताध्मातः शुष्क-पाद-करः क्षयी ।
स्वप्ने गोमायु-मार्जार-नकुल-व्याल-वानरान् ॥ ५२ ॥

प्रायः पश्यति शुष्कांश् च वनस्पति-जलाशयान् ।
मन्यते कृष्णम् आत्मानं गौरो गौरं च कालकः ॥ ५३ ॥

वि-कर्ण-नासा-नयनं पश्येत् तद्-विहतेन्द्रियः ।
एतैर् अन्यैश् च बहुभिः क्लिष्टो घोरैर् उपद्रवैः ॥ ५४ ॥

३५.५४bv पश्येत् तु विहतेन्द्रियः गरार्तो नाशम् आप्नोति कश्-चित् सद्यो ऽ-चिकित्सितः ।
गरार्तो वान्त-वान् भुक्त्वा तत् पथ्यं पान-भोजनम् ॥ ५५ ॥

शुद्ध-हृच् छीलयेद् धेम सूत्र-स्थान-विधेः स्मरन् ।
शर्करा-क्षौद्र-संयुक्तं चूर्णं ताप्य-सुवर्णयोः ॥ ५६ ॥

३५.५६bv सूत्र-स्थान-विधिं स्मरन् लेहः प्रशमयन्त्य् उग्रं सर्व-योग-कृतं विषम् ।
मूर्वामृता-नत-कणा-पटोली-चव्य-चित्रकान् ॥ ५७ ॥

वचा-मुस्त-विडङ्गानि तक्र-कोष्णाम्बु-मस्तुभिः ।
पिबेद् रसेन वाम्लेन गरोपहत-पावकः ॥ ५८ ॥

३५.५८cv पिबेद् रसेन चाम्लेन पारावतामिष-शठी-पुष्कराह्व-शृतं हिमम् ।
गर-तृष्णा-रुजा-कास-श्वास-हिध्मा-ज्वरापहम् ॥ ५९ ॥

३५.५९bv -पुष्कराह्वं शृतं हिमम् त्र्य्-ऊषणं पञ्च-लवणं मञ्जिष्ठां रजनी-द्वयम् ।
सूक्ष्मैलां त्रिवृतां पत्रं विडङ्गानीन्द्रवारुणीम् ॥ ५९+१ ॥

मधुकं चेति स-क्षौद्रं गो-विषाणे निधापयेत् ।
तस्माद् उष्णाम्बुना मात्रां प्राग्-भक्तं योजयेत् तथा ॥ ५९+२ ॥

विषं भुक्तं जरां याति निर्-विषे ऽपि न दोष-कृत् ।
लाक्षा-प्रियङ्गु-मञ्जिष्ठाः स-मृणाल-हरेणुकाः ॥ ५९+३ ॥

स-यष्ट्य्-आह्वा मधु-युता बस्त-पित्तेन कल्पिताः ।
निखनेद् गो-विषाण-स्थाः सप्त-रात्रं मही-तले ॥ ५९+४ ॥

तत्र कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ।
संस्पृष्टं स-विषं तेन सद्यो भवति निर्-विषम् ॥ ५९+५ ॥

विष-प्रकृति-कालान्न-दोष-दूष्यादि-संगमे ।
विष-संकटम् उद्दिष्टं शतस्यैको ऽत्र जीवति ॥ ६० ॥

क्षुत्-तृष्णा-घर्म-दौर्बल्य-क्रोध-शोक-भय-श्रमैः ।
अ-जीर्ण-वर्चो-द्रव-ता-पित्त-मारुत-वृद्धिभिः ॥ ६१ ॥

तिल-पुष्प-फलाघ्राण-भू-बाष्प-घन-गर्जितैः ।
हस्ति-मूषिक-वादित्र-निःस्वनैर् विष-संकटैः ॥ ६२ ॥

३५.६२bv -भू-बाष्प-घन-गर्जनैः पुरो-वातोत्पलामोद-मदनैर् वर्धते विषम् ।
वर्षासु चाम्बु-योनि-त्वात् संक्लेदं गुड-वद् गतम् ॥ ६३ ॥

३५.६३cv वर्षासु वाम्बु-योनि-त्वात् विसर्पति घनापाये तद् अगस्त्यो हिनस्ति च ।
प्रयाति मन्द-वीर्य-त्वं विषं तस्माद् घनात्यये ॥ ६४ ॥

इति प्रकृति-सात्म्यर्तु-स्थान-वेग-बला-बलम् ।
आलोच्य निपुणं बुद्ध्या कर्मान्-अन्तरम् आचरेत् ॥ ६५ ॥

श्लैष्मिकं वमनैर् उष्ण-रूक्ष-तीक्ष्णैः प्रलेपनैः ।
कषाय-कटु-तिक्तैश् च भोजनैः शमयेद् विषम् ॥ ६६ ॥

पैत्तिकं स्रंसनैः सेक-प्रदेहैर् भृश-शीतलैः ।
कषाय-तिक्त-मधुरैर् घृत-युक्तैश् च भोजनैः ॥ ६७ ॥

वातात्मकं जयेत् स्वादु-स्निग्धाम्ल-लवणान्वितैः ।
स-घृतैर् भोजनैर् लेपैस् तथैव पिशिताशनैः ॥ ६८ ॥

३५.६८bv -स्निग्धाम्ल-लवणायुतैः ना-घृतं स्रंसनं शस्तं प्रलेपो भोज्यम् औषधम् ।
सर्वेषु सर्वावस्थासु विषेषु न घृतोपमम् ॥ ६९ ॥

विद्यते भेषजं किञ्-चिद् विशेषात् प्रबले ऽनिले ।
अ-यत्नाच् छलेष्म-गं साध्यं यत्नात् पित्ताशयाश्रयम् ॥ ७० ॥

३५.७०av अ-यत्नाच् छलैष्मिकं साध्यं ३५.७०cv अ-यत्नाच् छलेष्मकं साध्यं ३५.७०dv यत्नात् पित्ताशयाश्रितम् सु-दुः-साध्यम् अ-साध्यं वा वाताशय-गतं विषम् ॥ ७०अब् ॥
जतु-सर्ज-रसोशीर-सर्षपा-पत्त्र-वालकैः ।
स-वैल्लारुष्कर-पुरैः कुसुमैर् अर्जुनस्य च ॥ ७०+१ ॥

३५.७०+१cv स-वैल्ल-पुष्कर-पुरैः धूपो वास-गृहे हन्ति विषं स्थावर-जङ्गमम् ।
न तत्र कीटाः स-विषा नोन्दुरा न सरीसृपाः ॥ ७०+२ ॥

न कृत्याः कार्मणाद्याश् च धूपो ऽयं यत्र दह्यते ॥ ७०+३अब् ॥

# अध्याय 36

दर्वी-करा मण्डलिनो राजी-मन्तश् च पन्नगाः ।
त्रि-धा समासतो भौमा भिद्यन्ते ते त्व् अनेक-धा ॥ १ ॥

व्यासतो योनि-भेदेन नोच्यन्ते ऽन्-उपयोगिनः ।
विशेषाद् रूक्ष-कटुकम् अम्लोष्णं स्वादु-शीतलम् ॥ २ ॥

३६.२bv नोच्यन्ते ऽन्-उपयोगतः विषं दर्वी-करादीनां क्रमाद् वातादि-कोपनम् ।
तारुण्य-मध्य-वृद्ध-त्वे वृष्टि-शीतातपेषु च ॥ ३ ॥

विषोल्बणा भवन्त्य् एते व्यन्तरा ऋतु-संधिषु ।
रथाङ्ग-लाङ्गल-च्छत्त्र-स्वस्तिकाङ्कुश-धारिणः ॥ ४ ॥

फणिनः शीघ्र-गतयः सर्पा दर्वी-कराः स्मृताः ।
ज्ञेया मण्डलिनो ऽ-भोगा मण्डलैर् विविधैश् चिताः ॥ ५ ॥

३६.५bv सर्पा दर्वी-करा मताः प्रांशवो मन्द-गमना राजी-मन्तस् तु राजिभिः ।
स्निग्धा विचित्र-वर्णाभिस् तिर्यग् ऊर्ध्वं च चित्रिताः ॥ ६ ॥

३६.६bv राजी-मन्तश् च राजिभिः ३६.६cv स्निग्धाभिर् बहु-वर्णाभिस् गोधा-सुतस् तु गौधेरो विषे दर्वी-करैः समः ।
चतुष्-पाद् व्यन्तरान् विद्याद् एतेषाम् एव संकरात् ॥ ७ ॥

३६.७av गोधा-सुतस् तु गौधेयो व्यामिश्र-लक्षणास् ते हि संनिपात-प्रकोपणाः ।
आहारार्थं भयात् पाद-स्पर्शाद् अति-विषात् क्रुधः ॥ ८ ॥

पाप-वृत्ति-तया वैराद् देवर्षि-यम-चोदनात् ।
दशन्ति सर्पास् तेषूक्तं विषाधिक्यं यथोत्तरम् ॥ ९ ॥

३६.९av पाप-वृत्त-तया वैराद् ३६.९bv देवर्षि-यम-नोदनात् आदिष्टात् कारणं ज्ञात्वा प्रतिकुर्याद् यथा-यथम् ।
व्यन्तरः पाप-शील-त्वान् मार्गम् आश्रित्य तिष्ठति ॥ १० ॥

३६.१०av आविष्टात् कारणं ज्ञात्वा ३६.१०dv मार्गम् आवृत्य तिष्ठति यत्र लाला-परिक्लेद-मात्रं गात्रे प्रदृश्यते ।
न तु दंष्ट्रा-कृतं दंशं तत् तुण्डाहतम् आदिशेत् ॥ ११ ॥

३६.११bv -मात्रं गात्रेषु दृश्यते ३६.११cv न तु दंष्ट्रा-क्षतं दंशं ३६.११cv न तु दंष्ट्रा-क्षतं दंशे ३६.११dv तं तुण्डाहतं आदिशेत् एकं दंष्ट्रा-पदं द्वे वा व्यालीढाख्यम् अ-शोणितम् ।
दंष्ट्रा-पदे स-रक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥ १२ ॥

३६.१२dv व्यालुप्तं त्रीणि तानि च मांस-च्छेदाद् अ-विच्छिन्न-रक्त-वाहीनि दष्टकम् ।
दंष्ट्रा-पदानि चत्वारि तद्-वद् दष्ट-निपीडितम् ॥ १३ ॥

निर्-विषं द्वयम् अत्राद्यम् अ-साध्यं पश्चिमं वदेत् ।
विषं नाहेयम् अ-प्राप्य रक्तं दूषयते वपुः ॥ १४ ॥

रक्तम् अण्व् अपि तु प्राप्तं वर्धते तैलम् अम्बु-वत् ।
भीरोस् तु सर्प-संस्पर्शाद् भयेन कुपितो ऽनिलः ॥ १५ ॥

३६.१५av रक्तम् अण्व् अपि तत् प्राप्तं ३६.१५bv वर्धते तैल-बिन्दु-वत् कदा-चित् कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ।
दुर्-गान्ध-कारे विद्धस्य केन-चिद् दष्ट-शङ्कया ॥ १६ ॥

३६.१६cv दुर्-गे ऽन्धकारे विद्धस्य विषोद्वेगो ज्वरश् छर्दिर् मूर्छा दाहो ऽपि वा भवेत् ।
ग्लानिर् मोहो ऽतिसारो वा तच् छङ्का-विषम् उच्यते ॥ १७ ॥

३६.१७av विष-वेगाज् ज्वरश् छर्दिर् ३६.१७av विषोद्रेको ज्वरश् छर्दिर् ३६.१७av विषोद्वेगाज् ज्वरश् छर्दिर् तुद्यते स-विषो दंशः कण्डू-शोफ-रुजान्वितः ।
दह्यते ग्रथितः किञ्-चिद् विपरीतस् तु निर्-विषः ॥ १८ ॥

३६.१८av तुद्यते विष-जो दंशः पूर्वे दर्वी-कृतां वेगे दुष्टं श्यावी-भवत्य् असृक् ।
श्याव-ता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥ १९ ॥

३६.१९bv दुष्टं श्यावं भवत्य् असृक् ३६.१९cv श्याव-ता नेत्र-वक्त्रादौ द्वितीये ग्रन्थयो वेगे तृतीये मूर्ध्नि गौरवम् ।
दृग्-रोधो दंश-विक्लेदश् चतुर्थे ष्ठीवनं वमिः ॥ २० ॥

३६.२०bv तृतीये मूर्ध-गौरवम् ३६.२०cv दृग्-बाधा दंश-विक्लेदश् ३६.२०dv चतुर्थे ष्ठेवनं वमिः संधि-विश्लेषणं तन्द्रा पञ्चमे पर्व-भेदनम् ।
दाहो हिध्मा च षष्ठे तु हृत्-पीडा गात्र-गौरवम् ॥ २१ ॥

३६.२१cv दाहो हिध्मा च षष्ठे च मूर्छा-विपाको ऽतीसारः प्राप्य शुक्रं तु सप्तमे ।
स्कन्ध-पृष्ठ-कटी-भङ्गः सर्व-चेष्टा-निवर्तनम् ॥ २२ ॥

३६.२२bv प्राप्य शुक्रं च सप्तमे अथ मण्डलि-दष्टस्य दुष्टं पीती-भवत्य् असृक् ।
तेन पीताङ्ग-ता दाहो द्वितीये श्वयथूद्भवः ॥ २३ ॥

३६.२३bv दुष्टं पीतं भवत्य् असृक् तृतीये दंश-विक्लेदः स्वेदस् तृष्णा च जायते ।
चतुर्थे ज्वर्यते दाहः पञ्चमे सर्व-गात्र-गः ॥ २४ ॥

३६.२४bv स्वेदस् तृष्णा प्रजायते दष्टस्य राजिलैर् दुष्टं पाण्डु-तां याति शोणितम् ।
पाण्डु-ता तेन गात्राणां द्वितीये गुरु-ताति च ॥ २५ ॥

तृतीये दंश-विक्लेदो नासिकाक्षि-मुख-स्रवाः ।
चतुर्थे गरिमा मूर्ध्नो मन्या-स्तम्भश् च पञ्चमे ॥ २६ ॥

गात्र-भङ्गो ज्वरः शीतः शेषयोः पूर्व-वद् वदेत् ।
कुर्यात् पञ्चसु वेगेषु चिकित्सां न ततः परम् ॥ २७ ॥

३६.२७bv शेषयोः पूर्व-वद् भवेत् जलाप्लुता रति-क्षीणा भीता नकुल-निर्जिताः ।
शीत-वातातप-व्याधि-क्षुत्-तृष्णा-श्रम-पीडिताः ॥ २८ ॥

तूर्णं देशान्तरायाता विमुक्त-विष-कञ्चुकाः ।
कुशौषधि-कण्टक-वद् ये चरन्ति च काननम् ॥ २९ ॥

देशं च दिव्याध्युषितं सर्पास् ते ऽल्प-विषा मताः ।
श्मशान-चिति-चैत्यादौ पञ्चमी-पक्ष-संधिषु ॥ ३० ॥

३६.३०av देशं च विद्याध्युषितं अष्टमी-नवमी-संध्या-मध्य-रात्रि-दिनेषु च ।
याम्याग्नेय-मघाश्लेषा-विशाखा-पूर्व-नैरृते ॥ ३१ ॥

नैरृताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ।
दष्ट-मात्रः सितास्याक्षः शीर्यमाण-शिरो-रुहः ॥ ३२ ॥

३६.३२cv दष्ट-मात्रस् तु ताम्राक्षः स्तब्ध-जिह्वो मुहुर् मूर्छन् शीतोच्छवासो न जीवति ।
हिध्मा श्वासो वमिः कासो दष्ट-मात्रस्य देहिनः ॥ ३३ ॥

३६.३३bv शीतोच्छवासी न जीवति जायन्ते युग-पद् यस्य स हृच्-छूली न जीवति ।
फेनं वमति निः-संज्ञः श्याव-पाद-कराननः ॥ ३४ ॥

नासावसादो भङ्गो ऽङ्गे विड्-भेदः श्लथ-संधि-ता ।
विष-पीतस्य दष्टस्य दिग्धेनाभिहतस्य च ॥ ३५ ॥

३६.३५av नासावसादो रुक् वाङ्गे भवन्त्य् एतानि रूपाणि संप्राप्ते जीवित-क्षये ।
न नस्यैश् चेतना तीक्ष्णैर् न क्षतात् क्षत-जागमः ॥ ३६ ॥

३६.३६bv प्राप्ते जीवित-संक्षये दण्डाहतस्य नो राजी प्रयातस्य यमान्तिकम् ।
अतो ऽन्य-था तु त्वरया प्रदीप्तागार-वद् भिषक् ॥ ३७ ॥

३६.३७bv प्रयाति स यमान्तिकम् रक्षन् कण्ठ-गतान् प्राणान् विषम् आशु शमं नयेत् ।
मात्रा-शतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ ३८ ॥

देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयन् ।
एतस्मिन्न् अन्तरे कर्म दंशस्योत्कर्तनादिकम् ॥ ३९ ॥

३६.३९bv रुधिरादीन् प्रदूषयेत् कुर्यच् छीघ्रं यथा देहे विष-वल्ली न रोहति ।
दष्ट-मात्रो दशेद् आशु तम् एव पवनाशिनम् ॥ ४० ॥

३६.४०dv तम् एव पवनाशनम् लोष्टं महीं वा दशनैश् छित्त्वा चानु स-संभ्रमम् ।
निष्ठीवेन समालिम्पेद् दंशं कर्ण-मलेन वा ॥ ४१ ॥

३६.४१bv छित्त्वा चाशु स-संभ्रमम् दंशस्योपरि बध्नीयाद् अरिष्टां चतुर्-अङ्गुले ।
क्षौमादिभिर् वेणिकया सिद्धैर् मन्त्रैश् च मन्त्र-वित् ॥ ४२ ॥

अम्बु-वत् सेतु-बन्धेन बन्धेन स्तभ्यते विषम् ।
न वहन्ति सिराश् चास्य विषं बन्धाभिपीडिताः ॥ ४३ ॥

३६.४३cv न वहन्ति सिरास् तस्य ३६.४३dv विषं बन्धन-पीडिताः निष्पीड्यानूद्धरेद् दंशं मर्म-संध्य्-अ-गतं तथा ।
न जायते विषाद् वेगो बीज-नाशाद् इवाङ्कुरः ॥ ४४ ॥

३६.४४av निष्पीड्य चोद्धरेद् दंशं ३६.४४cv न जायते विषावेगो दंशं मण्डलिनां मुक्त्वा पित्तल-त्वाद् अथापरम् ।
प्रतप्तैर् हेम-लोहाद्यैर् दहेद् आशूल्मुकेन वा ॥ ४५ ॥

करोति भस्म-सात् सद्यो वह्निः किं नाम तु क्षतम् ।
आचूषेत् पूर्ण-वक्त्रो वा मृद्-भस्मा-गद-गो-मयैः ॥ ४६ ॥

३६.४६bv वह्निः किं नाम न क्षणात् ३६.४६bv वह्निः किं नाम न क्षणम् प्रच्छायान्तर् अरिष्टायां मांसलं तु विशेषतः ।
अङ्गं सहैव दंशेन लेपयेद् अ-गदैर् मुहुः ॥ ४७ ॥

चन्दनोशीर-युक्तेन सलिलेन च सेचयेत् ।
विषे प्रविसृते विध्येत् सिरां सा परमा क्रिया ॥ ४८ ॥

रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ।
दुर्-गन्धं स-विषं रक्तम् अग्नौ चटचटायते ॥ ४९ ॥

३६.४९cv दुर्-गन्धि स-विषं रक्तम् यथा-दोषं विशुद्धं च पूर्व-वल् लक्षयेद् असृक् ।
सिरास्व् अ-दृश्यमानासु योज्याः शृङ्ग-जलौकसः ॥ ५० ॥

शोणितं स्रुत-शेषं च प्रविलीनं विषोष्मणा ।
लेप-सेकैः सु-बहु-शः स्तम्भयेद् भृश-शीतलैः ॥ ५१ ॥

अ-स्कन्ने विष-वेगाद् धि मूर्छाय-मद-हृद्-द्रवाः ।
भवन्ति तान् जयेच् छीतैर् वीजेच् चा-रोम-हर्षतः ॥ ५२ ॥

३६.५२dv वीजयेद् रोम-हर्षतः स्कन्ने तु रुधिरे सद्यो विष-वेगः प्रशाम्यति ।
विषं कर्षति तीक्ष्ण-त्वाद् धृदयं तस्य गुप्तये ॥ ५३ ॥

पिबेद् घृतं घृत-क्षौद्रम् अ-गदं वा घृताप्लुतम् ।
हृदयावरणे चास्य श्लेष्मा हृद् उपचीयते ॥ ५४ ॥

३६.५४cv हृदयावरणेनास्य प्रवृत्त-गौरवोत्क्लेश-हृल्-लासं वामयेत् ततः ।
द्रवैः काञ्जिक-कौलत्थ-तैल-मद्यादि-वर्जितैः ॥ ५५ ॥

वमनैर् विष-हृद्भिश् च नैवं व्याप्नोति तद् वपुः ।
भुजङ्ग-दोष-प्रकृति-स्थान-वेग-विशेषतः ॥ ५६ ॥

सु-सूक्ष्मं सम्यग् आलोच्य विशिष्टां चाचरेत् क्रियाम् ।
सिन्धुवारित-मूलानि श्वेता च गिरिकर्णिका ॥ ५७ ॥

३६.५७bv विशिष्टां वाचरेत् क्रियाम् पानं दर्वी-करैर् दष्टे नस्यं मधु स-पाकलम् ।
कृष्ण-सर्पेण दष्टस्य लिम्पेद् दंशं हृते ऽसृजि ॥ ५८ ॥

३६.५८bv नस्यं स-मधु पाकलम् ३६.५८bv नस्यं स-मधु वालकम् ३६.५८bv नस्यं मधु स-वालकम् चारटी-नाकुलीभ्यां वा तीक्ष्ण-मूल-विषेण वा ।
पानं च क्षौद्र-मञ्जिष्ठा-गृह-धूम-युतं घृतम् ॥ ५९ ॥

३६.५९cv पाने च क्षौद्र-मञ्जिष्ठा- तण्डुलीयक-काश्मर्य-किणिही-गिरिकर्णिकाः ।
मातुलुङ्गी सिता शेलुः पान-नस्याञ्जनैर् हितः ॥ ६० ॥

३६.६०cv मातुलुङ्गैः शिफा शेलुः अ-गदः फणिनां घोरे विषे राजी-मताम् अपि ।
समाः सुगन्धा-मृद्वीका-श्वेताख्या-गजदन्तिकाः ॥ ६१ ॥

३६.६१cv समाः सुगन्धा मृद्वीका ३६.६१dv श्वेताख्या गजमृत्तिका ३६.६१dv श्वेताख्या गजवृत्तिका अर्धांशं सौरसं पत्त्रं कपित्थं बिल्व-दाडिमम् ।
स-क्षौद्रो मण्डलि-विषे विशेषाद् अ-गदो हितः ॥ ६२ ॥

पञ्च-वल्क-वरा-यष्टी-नागपुष्पैलवालुकम् ।
जीवकर्षभकौ शीतं सिता पद्मकम् उत्पलम् ॥ ६३ ॥

३६.६३av पञ्च-वल्क-बला-यष्टी- ३६.६३av पञ्च-वल्क-वचा-यष्टी- ३६.६३cv जीवकर्षभकोशीरं स-क्षौद्रो हिमवान् नाम हन्ति मण्डलिनां विषम् ।
लेपाच् छ्वयथु-वीसर्प-विस्फोट-ज्वर-दाह-हा ॥ ६४ ॥

काश्मर्यं वट-शुङ्गानि जीवकर्षभकौ सिता ।
मञ्जिष्ठा मधुकं चेति दष्टो मण्डलिना पिबेत् ॥ ६५ ॥

३६.६५av काश्मर्यं वट-शृङ्गानि वंश-त्वग्-बीज-कटुका-पाटली-बीज-नागरम् ।
शिरीष-बीजातिविषे मूलं गावेधुकं वचा ॥ ६६ ॥

३६.६६bv -पाटला-बीज-नागरम् ३६.६६dv मूलं गावेधुकं वचाम् ३६.६६dv मूलं श्रीवेष्टकं वचाम् पिष्टो गो-वारिणाष्टाङ्गो हन्ति गोनस-जं विषम् ।
कटुकातिविषा-कुष्ठ-गृह-धूम-हरेणुकाः ॥ ६७ ॥

स-क्षौद्र-व्योष-तगरा घ्नन्ति राजी-मतां विषम् ।
निखनेत् काण्ड-चित्राया दंशं याम-द्वयं भुवि ॥ ६८ ॥

उद्धृत्य प्रच्छितं सर्पिर्-धान्य-मृद्भ्यां प्रलेपयेत् ।
पिबेत् पुराणं च घृतं वरा-चूर्णावचूर्णितम् ॥ ६९ ॥

३६.६९av उद्धृत्य प्रस्थितं सर्पिर्- ३६.६९dv वरा-चूर्ण-विचूर्णितम् जीर्णे विरिक्तो भुञ्जीत यवान्नं सूप-संस्कृतम् ।
करवीरार्क-कुसुम-मूल-लाङ्गलिका-कणाः ॥ ७० ॥

३६.७०av जीर्णे विरिक्ते भुञ्जीत ३६.७०dv -मूलं लाङ्गलिका कणा कल्कयेद् आरनालेन पाठा-मरिच-संयुताः ।
एष व्यन्तर-दष्टानाम् अ-गदः सार्वकार्मिकः ॥ ७१ ॥

शिरीष-पुष्प-स्व-रसे सप्ताहवं मरिचं सितम् ।
भावितं सर्प-दष्टानां पान-नस्याञ्जने हितम् ॥ ७२ ॥

३६.७२dv पान-नस्याञ्जनैर् हितम् ३६.७२dv पाने नस्ये ऽञ्जने हितम् द्वि-पलं नत-कुष्ठाभ्यां घृत-क्षौद्रं चतुः-पलम् ।
अपि तक्षक-दष्टानां पानम् एतत् सुख-प्रदम् ॥ ७३ ॥

३६.७३bv घृत-क्षौद्र-चतुः-पलम् ३६.७३cv अपि तार्क्षक-दष्टानां अथ दर्वी-कृतां वेगे पूर्वे विस्राव्य शोणितम् ।
अ-गदं मधु-सर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥ ७४ ॥

द्वितीये वमनं कृत्वा तद्-वद् एवा-गदं पिबेत् ।
विषापहे प्रयुञ्जीत तृतीये ऽञ्जन-नावने ॥ ७५ ॥

३६.७५cv विषापहैः प्रयुञ्जीत पिबेच् चतुर्थे पूर्वोक्तां यवागूं वमने कृते ।
षष्ठ-पञ्चमयोः शीतैर् दिग्धं सिक्तम् अभीक्ष्ण-शः ॥ ७६ ॥

पाययेद् वमनं तीक्ष्णं यवागूं च विषापहैः ।
अ-गदं सप्तमे तीक्ष्णं युञ्ज्याद् अञ्जन-नस्ययोः ॥ ७७ ॥

कृत्वावगाढं शस्त्रेण मूर्ध्नि काक-पदं ततः ।
मांसं स-रुधिरं तस्य चर्म वा तत्र निक्षिपेत् ॥ ७८ ॥

तृतीये वमितः पेयां वेगे मण्डलिनां पिबेत् ।
अ-तीक्ष्णम् अ-गदं षष्ठे गणं वा पद्मकादिकम् ॥ ७९ ॥

३६.७९av तृतीये वामितः पेयां आद्ये ऽवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ।
अलाबुना हरेद् रक्तं पूर्व-वच् चा-गदं पिबेत् ॥ ८० ॥

षष्ठे ऽञ्जनं तीक्ष्ण-तमम् अवपीडं च योजयेत् ।
अन्-उक्तेषु च वेगेषु क्रियां दर्वी-करोदिताम् ॥ ८१ ॥

गर्भिणी-बाल-वृद्धेषु मृदुं विध्येत् सिरां न च ।
त्वङ् मनोह्वा निशे वक्रं रसः शार्दूल-जो नखः ॥ ८२ ॥

३६.८२av गुर्विणी-बाल-वृद्धेषु ३६.८२bv मृदु विध्येत् सिरां न च ३६.८२cv त्वङ् मनोह्वा निशे वक्त्रं तमालः केसरं शीतं पीतं तण्डुल-वारिणा ।
हन्ति सर्व-विषाण्य् एतद् वज्रं वज्रम् इवासुरान् ॥ ८३ ॥

३६.८३cv हन्ति सर्व-विषाण्य् एतच् ३६.८३dv छक्र-वज्रम् इवासुरान् ३६.८३dv वज्रि-वज्रम् इवासुरान् बिल्वस्य मूलं सुरसस्य पुष्पं फलं करञ्जस्य नतं सुराह्वम् ।
फल-त्रिकं व्योष-निशा-द्वयं च बस्तस्य मूत्रेण सु-सूक्ष्म-पिष्टम् ॥ ८४ ॥

३६.८४cv फल-त्रयं व्योष-निशा-द्वयं च भुजङ्ग-लूतोन्दुर-वृश्चिकाद्यैर् विषूचिका-जीर्ण-गर-ज्वरैश् च ।
आर्तान् नरान् भूत-विधर्षितांश् च स्वस्थी-करोत्य् अञ्जन-पान-नस्यैः ॥ ८५ ॥

३६.८५cv आर्तान् नरान् भूत-विमर्दितांश् च प्रलेपाद्यैश् च निःशेषं दंशाद् अप्य् उद्धरेद् विषम् ।
भूयो वेगाय जायेत शेषं दूषी-विषाय वा ॥ ८६ ॥

३६.८६dv शेषं दूषी-विषं यथा ३६.८६dv शेषं दूषी-विषाय च विषापाये ऽनिलं क्रुद्धं स्नेहादिभिर् उपाचरेत् ।
तैल-मद्य-कुलत्थाम्ल-वर्ज्यैः पवन-नाशनैः ॥ ८७ ॥

पित्तं पित्त-ज्वर-हरैः कषाय-स्नेह-वस्तिभिः ।
स-माक्षिकेण वर्गेण कफम् आरग्वधादिना ॥ ८८ ॥

सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ।
पानं स-मन्त्र-पूताम्बु प्रोक्षणं सान्त्व-हर्षणम् ॥ ८९ ॥

३६.८९av सिता वैगन्धको द्राक्षा सर्पाङ्गाभिहते युञ्ज्यात् तथा शङ्का-विषार्दिते ।
कर्केतनं मरकतं वज्रं वारण-मौक्तिकम् ॥ ९० ॥

वैडूर्यं गर्दभ-मणिं पिचुकं विष-मूषिकाम् ।
हिमवद्-गिरि-संभूतां सोमराजीं पुनर्नवाम् ॥ ९१ ॥

३६.९१av वैडूर्य-गर्दभ-मणिं ३६.९१bv पिचुकं विष-दूषिकाम् तथा द्रोणां महा-द्रोणां मानसीं सर्प-जं मणिम् ।
विषाणि विष-शान्त्य्-अर्थं वीर्य-वन्ति च धारयेत् ॥ ९२ ॥

३६.९२av तथा द्रोणं महा-द्रोणं छत्री झर्झर-पाणिश् च चरेद् रात्रौ विशेषतः ।
तच्-छाया-शब्द-वित्रस्ताः प्रणश्यन्ति भुजङ्गमाः ॥ ९३ ॥

३६.९३av छत्री जर्जर-पाणिश् च ३६.९३av छत्री जर्झर-पाणिश् च ३६.९३av छत्री झर्जर-पाणिश् च ३६.९३bv चरेद् रात्रौ च सर्व-दा ३६.९३dv विद्रवन्ति भुजङ्गमाः वारि-गुञ्जा-फलोशीरं नेत्रयोर् विष-दुष्टयोः ।
अञ्जनं वारिणा पिष्टं गारुडं गरुडोपमम् ॥ ९३+१ ॥

# अध्याय 37

सर्पाणाम् एव विण्-मूत्र-शुक्राण्ड-शव-कोथ-जाः ।
दोषैर् व्यस्तैः समस्तैश् च युक्ताः कीटाश् चतुर्-विधाः ॥ १ ॥

दष्टस्य कीटैर् वायव्यैर् दंशस् तोद-रुजोल्बणः ।
आग्नेयैर् अल्प-संस्रावो दाह-राग-विसर्प-वान् ॥ २ ॥

पक्व-पीलु-फल-प्रख्यः खर्जूर-सदृशो ऽथ-वा ।
कफाधिकैर् मन्द-रुजः पक्वोदुम्बर-संनिभः ॥ ३ ॥

स्रावाढ्यः सर्व-लिङ्गस् तु विवर्ज्यः सांनिपातिकैः ।
वेगाश् च सर्प-वच् छोफो वर्धिष्णुर् विस्र-रक्त-ता ॥ ४ ॥

३७.४bv विवर्ज्यः सांनिपातिकः शिरो-ऽक्षि-गौरवं मूर्छा भ्रमः श्वासो ऽति-वेदना ।
सर्वेषां कर्णिका शोफो ज्वरः कण्डूर् अ-रोचकः ॥ ५ ॥

३७.५bv भ्रमः श्वासो ऽति-वेदनाः वृश्चिकस्य विषं तीक्ष्णम् आदौ दहति वह्नि-वत् ।
ऊर्ध्वम् आरोहति क्षिप्रं दंशे पश्चात् तु तिष्ठति ॥ ६ ॥

३७.६d्च् दंशे पश्चाच् च तिष्ठति दंशः सद्यो ऽति-रुक् श्यावस् तुद्यते स्फुटतीव च ।
ते गवादि-शकृत्-कोथाद् दिग्ध-दष्टादि-कोथतः ॥ ७ ॥

सर्प-कोथाच् च संभूता मन्द-मध्य-महा-विषाः ।
मन्दाः पीताः सिताः श्यावा रूक्षाः कर्बुर-मेचकाः ॥ ८ ॥

३७.८dv रूक्ष-कर्बुर-मेचकाः रोमशा बहु-पर्वाणो लोहिताः पाण्डुरोदराः ।
धूम्रोदरास् त्रि-पर्वाणो मध्यास् तु कपिलारुणाः ॥ ९ ॥

पिशङ्गाः शबराश् चित्राः शोणिताभा महा-विषाः ।
अग्न्य्-आभा द्व्य्-एक-पर्वाणो रक्तासित-सितोदराः ॥ १० ॥

तैर् दष्टः शून-रसनः स्तब्ध-गात्रो ज्वरार्दितः ।
खैर् वमञ् छोणितं कृष्णम् इन्द्रियार्थान् अ-संविदन् ॥ ११ ॥

स्विद्यन् मूर्छन् विशुष्कास्यो विह्वलो वेदनातुरः ।
विशीर्यमाण-मांसश् च प्राय-शो विजहात्य् असून् ॥ १२ ॥

उच्चिटिङ्गस् तु वक्त्रेण दशत्य् अभ्यधिक-व्यथः ।
साध्यतो वृश्चिकात् स्तम्भं शेफसो हृष्ट-रोम-ताम् ॥ १३ ॥

३७.१३av उच्चिटङ्गस् तु वक्त्रेण ३७.१३cv सो ऽधमो वृश्चिकात् स्तम्भं करोति सेकम् अङ्गानां दंशः शीताम्बुनेव च ।
उष्ट्र-धूमः स एवोक्तो रात्रि-चाराच् च रात्रिकः ॥ १४ ॥

३७.१४bv दंशे शीताम्बुनेव च वात-पित्तोत्तराः कीटाः श्लैष्मिकाः कणभोन्दुराः ।
प्रायो वातोल्बण-विषा वृश्चिकाः सोष्ट्र-धूमकाः ॥ १५ ॥

यस्य यस्यैव दोषस्य लिङ्गाधिक्यं प्रतर्कयेत् ।
तस्य तस्यौषधैः कुर्याद् विपरीत-गुणैः क्रियाम् ॥ १६ ॥

३७.१६bv लिङ्गाधिक्यं प्रवर्तयेत् हृत्-पीडोर्ध्वानिल-स्तम्भः सिरायामो ऽस्थि-पर्व-रुक् ।
घूर्णनोद्वेष्टनं गात्र-श्याव-ता वातिके विषे ॥ १७ ॥

संज्ञा-नाशोष्ण-निश्वासौ हृद्-दाहः कटुकास्य-ता ।
मांसावदरणं शोफो रक्त-पीतश् च पैत्तिके ॥ १८ ॥

३७.१८dv रक्तः पीतश् च पैत्तिके छर्द्य्-अ-रोचक-हृल्-लास-प्रसेकोत्क्लेश-पीनसैः ।
स-शैत्य-मुख-माधुर्यैर् विद्याच् छलेष्माधिकं विषम् ॥ १९ ॥

पिण्याकेन व्रणालेपस् तैलाभ्यङ्गश् च वातिके ।
स्वेदो नाडी-पुलाकाद्यैर् बृंहणश् च विधिर् हितः ॥ २० ॥

पैत्तिकं स्तम्भयेत् सेकैः प्रदेहैश् चाति-शीतलैः ।
लेखन-च्छेदन-स्वेद-वमनैः श्लैष्मिकं जयेत् ॥ २१ ॥

कीटानां त्रि-प्रकाराणां त्रैविध्येन क्रिया हिता ।
स्वेदालेपन-सेकांस् तु कोष्णान् प्रायो ऽवचारयेत् ॥ २२ ॥

३७.२२bv त्रैविध्येन क्रिया हिताः ३७.२२dv कवोष्णान् प्रविचारयेत् अन्य-त्र मूर्छिताद् दंश-पाकतः कोथतो ऽथ-वा ।
नृ-केशाः सर्षपाः पीता गुडो जीर्णश् च धूपनम् ॥ २३ ॥

विष-दंशस्य सर्वस्य काश्यपः परम् अब्रवीत् ।
विष-घ्नं च विधिं सर्वं कुर्यात् संशोधनानि च ॥ २४ ॥

३७.२४bv कश्यपः परम् अब्रवीत् साधयेत् सर्प-वद् दष्टान् विषोग्रैः कीट-वृश्चिकैः ।
तण्डुलीयक-तुल्यांशां त्रिवृतां सर्पिषा पिबेत् ॥ २५ ॥

याति कीट-विषैः कम्पं न कैलास इवानिलैः ।
क्षीरि-वृक्ष-त्वग्-आलेपः शुद्धे कीट-विषापहः ॥ २६ ॥

मुक्ता-लेपो वरः शोफ-तोद-दाह-ज्वर-प्रणुत् ।
वचा-हिङ्गु-विडङ्गानि सैन्धवं गज-पिप्पली ॥ २७ ॥

पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ।
दशाङ्गम् अ-गदं पीत्वा सर्व-कीट-विषं जयेत् ॥ २८ ॥

सद्यो वृश्चिक-जं दंशं चक्र-तैलेन सेचयेत् ।
विदारिगन्धा-सिद्धेन कवोष्णेनेतरेण वा ॥ २९ ॥

लवणोत्तम-युक्तेन सर्पिषा वा पुनः पुनः ।
सिञ्चेत् कोष्णारनालेन स-क्षीर-लवणेन वा ॥ ३० ॥

३७.३०dv स-क्षार-लवणेन वा उपनाहो घृते भृष्टः कल्को ऽजाज्याः स-सैन्धवः ।
आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ ३१ ॥

३७.३१av उपनाहे घृत-भृष्टः ३७.३१av उपनाहो घृत-भृष्टः रजनी-सैन्धव-व्योष-शिरीष-फल-पुष्प-जैः ।
मातुलुङ्गाम्ल-गो-मूत्र-पिष्टं च सुरसाग्र-जम् ॥ ३२ ॥

३७.३२cv मातुलुङ्गं तु गो-मूत्र- ३७.३२dv -पिष्टः स-सुरसार्जकः लेपः सुखोष्णश् च हितः पिण्याको गो-मयो ऽपि वा ।
पाने सर्पिर् मधु-युतं क्षीरं वा भूरि-शर्करम् ॥ ३३ ॥

३७.३३bv पिण्याको गो-मयेन वा पारावत-शकृत् पथ्या तगरं विश्व-भेषजम् ।
बीजपूर-रसोन्मिश्रः परमो वृश्चिका-गदः ॥ ३४ ॥

३७.३४dv परमो वृश्चिके ऽ-गदः ३७.३४dv परमो वृश्चिको ऽ-गदः स-शैवलोष्ट्र-दंष्ट्रा च हन्ति वृश्चिक-जं विषम् ।
हिङ्गुना हरितालेन मातुलुङ्ग-रसेन च ॥ ३५ ॥

३७.३५av स-सैन्धवोष्ट्र-दंष्ट्रा च ३७.३५dv मातुलुङ्ग-रसेन वा लेपाञ्जनाभ्यां गुटिका परमं वृश्चिकापहा ।
करञ्जार्जुन-शेलूनां कटभ्यां कुटजस्य च ॥ ३६ ॥

शिरीषस्य च पुष्पाणि मस्तुना दंश-लेपनम् ।
यो मुह्यति प्रश्वसिति प्रलपत्य् उग्र-वेदनः ॥ ३७ ॥

तस्य पथ्या-निशा-कृष्णा-मञ्जिष्ठातिविषोषणम् ।
सालाबु-वृन्तं वार्ताक-रस-पिष्टं प्रलेपनम् ॥ ३८ ॥

३७.३८cv शलाटु-वृन्तं वार्ताक- सर्व-त्र चोग्रालि-विषे पाययेद् दधि-सर्पिषी ॥ ३९अब् ॥
विध्येत् सिरां विदध्याच् च वमनाञ्जन-नावनम् ॥ ३९च्द् ॥
उष्ण-स्निग्धाम्ल-मधुरं भोजनं चानिलापहम् ॥ ३९ए्f ॥
नागरं गृह-कपोत-पुरीषं बीजपूरक-रसो हरितालम् ।
सैन्धवं च विनिहन्त्य् अ-गदो ऽयं लेपतो ऽलि-कुल-जं विषम् आशु ॥ ४० ॥

अन्ते वृश्चिक-दष्टानां समुदीर्णे भृशं विषे ।
विषेणालेपयेद् दंशम् उच्चिटिङ्गे ऽप्य् अयं विधिः ॥ ४१ ॥

नाग-पुरीष-च्छत्त्रं रोहिष-मूलं च शेलु-तोयेन ।
कुर्याद् गुटिकां लेपाद् इयम् अलि-विष-नाशनी श्रेष्ठा ॥ ४२ ॥

अर्कस्य दुग्धेन शिरीष-बीजं त्रिर् भावितं पिप्पलि-चूर्ण-मिश्रम् ।
एषो ऽ-गदो हन्ति विषाणि कीट-भुजङ्ग-लूतोन्दुर-वृश्चिकानाम् ॥ ४३ ॥

शिरीष-पुष्पं स-करञ्ज-बीजं काश्मीर-जं कुष्ठ-मनःशिले च ।
एषो ऽ-गदो रात्रिक-वृश्चिकानां संक्रान्ति-कारी कथितो जिनेन ॥ ४४ ॥

३७.४४av शिरीष-बीजं स-करञ्ज-बीजं कीटेभ्यो दारुण-तरा लूटाः षो-डश ता जगुः ।
अष्टा-विंशतिर् इत्य् एके ततो ऽप्य् अन्ये तु भूयसीः ॥ ४५ ॥

सहस्र-रश्म्य्-अनुचरा वदन्त्य् अन्ये सहस्र-शः ।
बहूपद्रव-रूपा तु लूतैकैव विषात्मिका ॥ ४६ ॥

रूपाणि नामतस् तस्या दुर्-ज्ञेयान्य् अति-संकरात् ।
नास्ति स्थान-व्यवस्था च दोषतो ऽतः प्रचक्षते ॥ ४७ ॥

कृच्छ्र-साध्या पृथग्-दोषैर् अ-साध्या निचयेन सा ।
तद्-दंशः पैत्तिको दाह-तृट्-स्फोट-ज्वर-मोह-वान् ॥ ४८ ॥

भृशोष्ं‌ा रक्त-पीताभः क्लेदी द्राक्षा-फलोपमः ।
श्लैष्मिकः कठिनः पाण्डुः परूषक-फलाकृतिः ॥ ४९ ॥

३७.४९av भृशोष्-रक्त-पीताभः निद्रां शीत-ज्वरं कासं कण्डूं च कुरुते भृशम् ।
वातिकः परुषः श्यावः पर्व-भेद-ज्वर-प्रदः ॥ ५० ॥

तद्-विभागं यथा-स्वं च दोष-लिङ्गैर् विभावयेत् ।
अ-साध्यायां तु हृन्-मोह-श्वास-हिध्मा-शिरो-ग्रहाः ॥ ५१ ॥

३७.५१dv -श्वास-हिध्मा-शिरो-रुजाः श्वेत-पीतासिता-रक्ताः पिटिकाः श्वयथूद्भवः ।
वेपथुर् वमथुर् दाहस् तृड् आन्ध्यं वक्र-नास-ता ॥ ५२ ॥

३७.५२av श्वेत-पीतासिता-रक्त- ३७.५२bv -पिटिका-श्वयथूद्भवः ३७.५२dv तृड् आन्ध्यं वक्र-नासिका श्यावौष्ठ-वक्त्र-दन्त-त्वं पृष्ठ-ग्रीवावभञ्जनम् ।
पक्व-जम्बू-स-वर्णं च दंशात् स्रवति शोणितम् ॥ ५३ ॥

सर्वापि सर्व-जा प्रायो व्यपदेशस् तु भूयसा ।
तीक्ष्ण-मध्यावर-त्वेन सा त्रि-धा हन्त्य् उपेक्षिता ॥ ५४ ॥

३७.५४dv सा त्रि-धा हन्त्य् उपेक्षया सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ।
लूता-दंशश् च सर्वो ऽपि दद्रू-मण्डल-संनिभः ॥ ५५ ॥

३७.५५cv लूता-दंशस् तु सर्वो ऽपि सितो ऽसितो ऽरुणः पीतः श्यावो वा मृदुर् उन्नतः ।
मध्ये कृष्णो ऽथ-वा श्यावः पर्य्-अन्ते जालकावृतः ॥ ५६ ॥

३७.५६av सितासितो ऽरुणः पीतः विसर्प-वांश् छोफ-युतस् तप्यते बहु-वेदनः ।
ज्वराशु-पाक-विक्लेद-कोथावदरणान्वितः ॥ ५७ ॥

क्लेदेन यत् स्पृशत्य् अङ्गं तत्रापि कुरुते व्रणम् ।
श्वास-दंष्ट्रा-शकृन्-मूत्र-शुक्र-लाला-नखार्तवैः ॥ ५८ ॥

अष्टाभिर् उद्वमत्य् एषा विषं वक्त्राद् विशेषतः ।
लूता नाभेर् दशत्य् ऊर्ध्वम् ऊर्ध्वं चाधश् च कीटकाः ॥ ५९ ॥

३७.५९av अष्टाभिर् उद्वमन्त्य् एता ३७.५९bv विषं वक्त्रैर् विशेषतः ३७.५९cv लूता नाभेर् दशन्त्य् ऊर्ध्वम् ३७.५९dv ऊर्ध्वं वाधश् च कीटकाः ३७.५९dv ऊर्ध्वं चाधश् च कीटकः ३७.५९dv अधश् च विष-कीटकाः तद्-दूषितं च वस्त्रादि देहे पृक्तं विकार-कृत् ।
दिनार्धं लक्ष्यते नैव दंशो लूता-विषोद्भवः ॥ ६० ॥

सूची-व्यध-वद् आभाति ततो ऽसौ प्रथमे ऽहनि ।
अ-व्यक्त-वर्णः प्रचलः किञ्-चित्-कण्डू-रुजान्वितः ॥ ६१ ॥

३७.६१av सूची-विद्ध-वद् आभाति द्वितीये ऽभ्युन्नतो ऽन्तेषु पिटिकैर् इव वाचितः ।
व्यक्त-वर्णो नतो मध्ये कण्डू-मान् ग्रन्थि-संनिभः ॥ ६२ ॥

३७.६२av द्वितीये ऽत्य्-उन्नतो ऽन्तेषु ३७.६२bv पिटिकैर् इव चाचितः तृतीये स-ज्वरो रोम-हर्ष-कृद् रक्त-मण्डलः ।
शराव-रूपस् तोदाढ्यो रोम-कूपेषु सास्रवः ॥ ६३ ॥

३७.६३dv रोम-कूपेषु स-स्रवः महांश् चतुर्थे श्वयथुस् ताप-श्वास-भ्रम-प्रदः ।
विकारान् कुरुते तांस् तान् पञ्चमे विष-कोप-जान् ॥ ६४ ॥

षष्ठे व्याप्नोति मर्माणि सप्तमे हन्ति जीवितम् ।
इति तीक्ष्णं विषं मध्यं हीनं च विभजेद् अतः ॥ ६५ ॥

३७.६५av षष्ठे प्राप्नोति मर्माणि एक-विंशति-रात्रेण विषं शाम्यति सर्व-था ।
अथाशु लूता-दष्टस्य शस्त्रेणादंशम् उद्धरेत् ॥ ६६ ॥

३७.६६dv दंशं शस्त्रेण चोद्धरेत् दहेच् च जाम्बवौष्ठाद्यैर् न तु पित्तोत्तरं दहेत् ।
कर्कशं भिन्न-रोमाणं मर्म-संध्य्-आदि-संश्रितम् ॥ ६७ ॥

प्रसृतं सर्वतो दंशं न च्छिन्दीत दहेन् न च ।
लेपयेद् दग्धम् अ-गदैर् मधु-सैन्धव-संयुतैः ॥ ६८ ॥

३७.६८bv न च्छिन्दीत दहेन् न वा सु-शीतैः सेचयेच् चानु कषायैः क्षीरि-वृक्ष-जैः ।
सर्वतो ऽपहरेद् रक्तं शृङ्गाद्यैः सिरयापि वा ॥ ६९ ॥

सेक-लेपास् ततः शीता बोधि-श्लेष्मातकाक्षकैः ।
फलिनी-द्वि-निशा-क्षौद्र-सर्पिर्भिः पद्मकाह्वयः ॥ ७० ॥

३७.७०av सेकालेपास् ततः शीता ३७.७०bv बोधि-श्लेष्मातकाक्षिकैः ३७.७०bv बोधि-श्लेष्मातकाक्ष-जैः ३७.७०cv फलिनी-द्वि-निशा-श्रेष्ठा- अ-शेष-लूता-कीटानाम् अ-गदः सार्वकार्मिकः ।
हरिद्रा-द्वय-पत्तङ्ग-मञ्जिष्ठा-नत-केसरैः ॥ ७१ ॥

स-क्षौद्र-सर्पिः पूर्वस्माद् अधिकश् चम्पकाह्वयः ।
तद्-वद् गो-मय-निष्पीड-शर्करा-घृत-माक्षिकैः ॥ ७२ ॥

३७.७२cv तद्-वद् गो-मय-निष्पीडा- अपामार्ग-मनोऽह्वाल-दार्वी-ध्यामक-गैरिकैः ।
नतैला-कुष्ठ-मरिच-यष्ट्य्-आह्व-घृत-माक्षिकैः ॥ ७३ ॥

अ-गदो मन्दरो नाम तथान्यो गन्ध-मादनः ।
नत-लोध्र-वचा-कट्वी-पाठैला-पत्र-कुङ्कुमैः ॥ ७४ ॥

मञ्जिष्ठा-श्लेष्मातक-रजनी-सुवहा-शिरीष-पालिन्द्यः ।
स-सिन्धुवारा विषं घ्नन्ति सैला-चन्दन-कनकाः ॥ ७४+१ ॥

विष-घ्नं बहु-दोषेषु प्रयुञ्जीत विशोधनम् ।
यष्ट्य्-आह्व-मदनाङ्कोल्ल-जालिनी-सिन्धुवारिकाः ॥ ७५ ॥

३७.७५av विष-घ्नैर् बहु-दोषेषु ३७.७५dv -जालिनी-सिन्धुवारितान् ३७.७५dv -जालिनी-सिन्धुवारितम् कफे ज्येष्ठाम्बुना पीत्वा विषम् आशु समुद्वमेत् ।
शिरीष-पत्त्र-त्वङ्-मूल-फलं वाङ्कोल्ल-मूल-वत् ॥ ७६ ॥

३७.७६dv -फलं चाङ्कोल्ल-मूल-वत् विरेचयेच् च त्रि-फला-नीलिनी-त्रिवृतादिभिः ।
निवृत्ते दाह-शोफादौ कर्णिकां पातयेद् व्रणात् ॥ ७७ ॥

३७.७७bv -फलिनी-त्रिवृतादिभिः कुसुम्भ-पुष्पं गो-दन्तः स्वर्णक्षीरी कपोत-विट् ।
त्रिवृता सैन्धवं दन्ती कर्णिका-पातनं तथा ॥ ७८ ॥

३७.७८av कुसुम्भ-पुष्प-गो-दन्त- ३७.७८bv -स्वर्णक्षीरी-कपोत-विट् ३७.७८dv कर्णिका-पातनं परम् मूलम् उत्तरवारुण्या वंश-निर्लेख-संयुतम् ।
तद्-वच् च सैन्धवं कुष्ठं दन्ती कटुक-दौग्धिकम् ॥ ७९ ॥

राज-कोशातकी-मूलं किण्वो वा मथितोद्भवः ।
कर्णिका-पात-समये बृंहयेच् च विषापहैः ॥ ८० ॥

३७.८०bv किट्टो वा मथितोद्भवः ३७.८०bv किणो वा मथितोद्भवः ३७.८०dv बृंहयेत विषापहैः स्नेह-कार्यम् अ-शेषं च सर्पिषैव समाचरेत् ।
विषस्य वृद्धये तैलम् अग्नेर् इव तृणोलुपम् ॥ ८१ ॥

३७.८१cv विषम् आवर्धयेत् तैलम् ३७.८१dv अग्नेर् इव तृणोलपम् ह्रीवेर-वैकङ्कत-गोपकन्या-मुस्ता-शमी-चन्दन-टुण्टुकानि ।
शैवाल-नीलोत्पल-वक्र-यष्टी-त्वङ्-नाकुली-पद्मक-राठ-मध्यम् ॥ ८२ ॥

३७.८२bv -मुस्ता-शमी-चन्दन-तिन्दुकानि रजनी-घन-सर्पलोचना-कण-शुण्ठी-कण-मूल-चित्रकाः ।
वरुणागुरु-बिल्व-पाटली-पिचुमन्दामय-शेलु-केसरम् ॥ ८३ ॥

३७.८३cv वरुणागुरु-बिल्व-पाटला- बिल्व-चन्दन-नतोत्पल-शुण्ठी-पिप्पली-निचुल-वेतस-कुष्ठम् ।
शुक्ति-शाक-वर-पाटलि-भार्गी-सिन्धुवार-करघाट-वराङ्गम् ॥ ८४ ॥

३७.८४cv शुक्ति-शाबरक-पाटलि-भार्गी- ३७.८४dv -सिन्धुवार-करहाट-वराङ्गम् पित्त-कफानिल-लूताः पानाञ्जन-नस्य-लेप-सेकेन ।
अ-गद-वरा वृत्त-स्थाः कु-गतीर् इव वारयन्त्य् एते ॥ ८५ ॥

३७.८५dv कु-गतीर् इव दारयन्त्य् एते ३७.८५dv कु-मतीर् इव दारयन्त्य् एते ३७.८५dv कु-मतीर् इव वारयन्त्य् एते लोध्रं सेव्यं पद्मकं पद्म-रेणुः कालीयाख्यं चन्दनं यच् च रक्तम् ।
कान्ता-पुष्पं दुग्धिनीका मृणालं लूताः सर्वा घ्नन्ति सर्व-क्रियाभिः ॥ ८६ ॥

# अध्याय 38

लालनश् चपलः पुत्रो हसिरश् चिक्किरो ऽजिरः ।
कषाय-दन्तः कुलकः कोकिलः कपिलो ऽसितः ॥ १ ॥

३८.१bv हसिरश् चिक्रिरो ऽजनः ३८.१bv हसिरश् चिक्किरो ऽजरः ३८.१bv हसिरश् चिकिलो ऽजिरः अरुणः शबरः श्वेतः कपोतः पलितोन्दुरः ।
छुच्छुन्दरो रसालाख्यो दशाष्टौ चेति मूषिकाः ॥ २ ॥

३८.२bv कपोतः पलितोन्दुरुः ३८.२cv छुच्छुन्दरो बलासाख्यो ३८.२cv छुच्छुन्दरो रसालाक्षो ३८.२dv दश चाष्टौ च मूषिकाः शुक्रं पतति यत्रैषां शुक्र-दिग्धैः स्पृशन्ति वा ।
यद् अङ्गम् अङ्गैस् तत्रास्रे दूषिते पाण्डु-तां गते ॥ ३ ॥

ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमो ऽ-रुचिः ।
शीत-ज्वरो ऽति-रुक् सादो वेपथुः पर्व-भेदनम् ॥ ४ ॥

३८.४av ग्रन्थयः श्वयथुः कोथो रोम-हर्षः स्रुतिर् मूर्छा दीर्घ-कालानुबन्धनम् ।
श्लेष्मानुबद्ध-बह्व्-आखु-पोतक-च्छर्दनं स-तृट् ॥ ५ ॥

३८.५cv श्लेष्मानुबन्ध-बह्व्-आखु- ३८.५cv श्लेष्मानुविद्ध-बह्व्-आखु- ३८.५dv -पोतक-च्छर्दनं सकृत् व्यवाय्य् आखु-विषं कृच्छ्रं भूयो भूयश् च कुप्यति ।
मूर्छाङ्ग-शोफ-वैवर्ण्य-क्लेद-शब्दा-श्रुति-ज्वराः ॥ ६ ॥

शिरो-गुरु-त्वं लालासृक्-छर्दिश् चा-साध्य-लक्षणम् ।
शून-वस्तिं वि-वर्णौष्ठम् आख्व्-आभैर् ग्रन्थिभिश् चितम् ॥ ७ ॥

छुच्छुन्दर-स-गन्धं च वर्जयेद् आखु-दूषितम् ।
शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञा-वहाश्रिताः ॥ ८ ॥

मुष्णन्तः कुर्वते क्षोभं धातूनाम् अति-दारुणम् ।
लाला-वान् अन्ध-बधिरः सर्वतः सो ऽभिधावति ॥ ९ ॥

स्रस्त-पुच्छ-हनु-स्कन्धः शिरो-दुःखी नताननः ।
दंशस् तेन विदष्टस्य सुप्तं कृष्णं क्षरत्य् असृक् ॥ १० ॥

हृच्-छिरो-रुग्-ज्वर-स्तम्भ-तृष्णा-मूर्छोद्भवो ऽनु च ।
अनेनान्ये ऽपि बोद्धव्या व्याला दंष्ट्रा-प्रहारिणः ॥ ११ ॥

३८.११av हृच्-छिरो-रुग्-ज्वर-स्तम्भस् ३८.११av हृच्-छिरो-रुग् ज्वरः स्तम्भस् ३८.११bv तृष्णा-मूर्छोद्भवो ऽनु च ३८.११bv तृष्णा मूर्छोद्भवो ऽनु च ३८.११cv व्याल-दंष्ट्रा-प्रहारिणः शृगालाश्वतराश्वर्क्ष-द्वीपि-व्याघ्र-वृकादयः ।
कण्डू-निस्तोद-वैवर्ण्य-सुप्ति-क्लेद-ज्वर-भ्रमाः ॥ १२ ॥

विदाह-राग-रुक्-पाक-शोफ-ग्रन्थि-विकुञ्चनम् ।
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ॥ १३ ॥

सर्व-त्र स-विषे लिङ्गं विपरीतं तु निर्-विषे ।
दष्टो येन तु तच्-चेष्टा-रुतं कुर्वन् विनश्यति ॥ १४ ॥

पश्यंस् तम् एव चा-कस्माद् आदर्श-सलिलादिषु ।
यो ऽद्भ्यस् त्रस्येद् अ-दष्टो ऽपि शब्द-संस्पर्श-दर्शनैः ॥ १५ ॥

३८.१५dv शब्द-स्पर्श-निदर्शनैः जल-संत्रास-नामानं दष्टं तम् अपि वर्जयेत् ।
आखुना दष्ट-मात्रस्य दंशं काण्डेन दाहयेत् ॥ १६ ॥

दर्पणेनाथ-वा तीव्र-रुजा स्यात् कर्णिकान्य-था ।
दग्धं विस्रावयेद् दंशं प्रच्छितं च प्रलेपयेत् ॥ १७ ॥

३८.१७cv दग्ध्वा विस्रावयेद् दंशं ३८.१७dv प्रच्छिन्नं च प्रलेपयेत् शिरीष-रजनी-वक्र-कुङ्कुमामृतवल्लिभिः ।
अगार-धूम-मञ्जिष्ठा-रजनी-लवणोत्तमैः ॥ १८ ॥

लेपो जयत्य् आखु-विषं कर्णिकायाश् च पातनः ।
ततो ऽम्लैः क्षालयित्वानु तोयैर् अनु च लेपयेत् ॥ १९ ॥

३८.१९dv पिष्टैर् अनु च लेपयेत् पालिन्दी-श्वेत-कटभी-बिल्व-मूल-गुडूचिभिः ।
अन्यैश् च विष-शोफ-घ्नैः सिरां वा मोक्षयेद् द्रुतम् ॥ २० ॥

३८.२०dv सिरां वा मोचयेद् द्रुतम् छर्दनं नीलिनी-क्वाथैः शुकाख्याङ्कोल्लयोर् अपि ।
कोशातक्याः शुकाख्यायाः फलं जीमूतकस्य च ॥ २१ ॥

३८.२१cv कोशवत्याः शुकाख्यायाः मदनस्य च संचूर्ण्य दध्ना पीत्वा विषं वमेत् ।
वचा-मदन-जीमूत-कुष्ठं वा मूत्र-पेषितम् ॥ २२ ॥

पूर्व-कल्पेन पातव्यं सर्वोन्दुर-विषापहम् ।
विरेचनं त्रिवृन्-नीली-त्रि-फला-कल्क इष्यते ॥ २३ ॥

३८.२३cv विरेचने त्रिवृन्-नीली- शिरो-विरेचने सारः शिरीषस्य फलानि च ।
अञ्जनं गो-मय-रसो व्योष-सूक्ष्म-रजो-ऽन्वितः ॥ २४ ॥

३८.२४cv अञ्जने गो-मय-रसो ३८.२४dv व्योष-सूक्ष्म-रजो-ऽन्वितः कपित्थ-गो-मय-रसो मधु-मान् अवलेहनम् ।
तण्डुलीयक-मूलेन सिद्धं पाने हितं घृतम् ॥ २५ ॥

३८.२५bv मधु-मान् अवलेहने द्वि-निशा-कटभी-रक्ता-यष्ट्य्-आह्वैर् वामृतान्वितैः ।
आस्फोत-मूल-सिद्धं वा पञ्च-कापित्थम् एव वा ॥ २६ ॥

सिन्धुवारं नतं शिग्रु-बिल्व-मूलं पुनर्नवा ।
वचा-श्वदंष्ट्रा-जीमूतम् एषां क्वाथं स-माक्षिकम् ॥ २७ ॥

३८.२७av सिन्धुवार-नतं शिग्रु- ३८.२७bv -बिल्व-मूलं पुनर्नवम् पिबेच् छाल्य्-ओदनं दध्ना भुञ्जानो मूषिकार्दितः ।
तक्रेण शरपुङ्खाया बीजं संचूर्ण्य वा पिबेत् ॥ २८ ॥

अङ्कोल्ल-मूल-कल्को वा बस्त-मूत्रेण कल्कितः ।
पानालेपनयोर् युक्तः सर्वाखु-विष-नाशनः ॥ २९ ॥

३८.२९cv पान-लेपनयोर् युक्तः कपित्थ-मध्य-तिलक-तिलाङ्कोल्ल-जटाः पिबेत् ।
गवां मूत्रेण पयसा मञ्जरीं तिलकस्य वा ॥ ३० ॥

३८.३०av कपित्थ-मध्य-तिलकं ३८.३०av कपित्थ-मध्यं तिलकं ३८.३०bv -तिलाङ्कोल्ल-जटां पिबेत् ३८.३०bv तिलाङ्कोल्ल-जटाः पिबेत् ३८.३०dv मञ्जरीस् तिलकस्य वा अथ-वा सैर्यकान् मूलं स-क्षौद्रं तण्डुलाम्बुना ।
कटुकालाबु-विन्यस्तं पीतं वाम्बु निशोषितम् ॥ ३१ ॥

३८.३१dv पिबेद् वाम्बु निशोषितम् ३८.३१dv पिबेच् चाम्बु निशोषितम् सिन्धुवारस्य मूलानि बिडालास्थि विषं नतम् ।
जल-पिष्टो ऽ-गदो हन्ति नस्याद्यैर् आखु-जं विषम् ॥ ३२ ॥

स-शेषं मूषिक-विषं प्रकुप्यत्य् अभ्र-दर्शने ।
यथा-यथं वा कालेषु दोषाणां वृद्धि-हेतुषु ॥ ३३ ॥

३८.३३अच् स-शेषं मूषक-विषं तत्र सर्वे यथावस्थं प्रयोज्याः स्युर् उपक्रमाः ।
यथा-स्वं ये च निर्दिष्टास् तथा दूषी-विषापहाः ॥ ३४ ॥

दंशं त्व् अलर्क-दष्टस्य दग्धम् उष्णेन सर्पिषा ।
प्रदिह्याद् अ-गदैस् तैस् तैः पुराणं च घृतं पिबेत् ॥ ३५ ॥

अर्क-क्षीर-युतं चास्य योज्यम् आशु विरेचनम् ।
अङ्कोल्लोत्तर-मूलाम्बु त्रि-पलं स-हविः-पलम् ॥ ३६ ॥

३८.३६अच् अर्क-क्षीर-युतं वास्य पिबेत् स-धत्तूर-फलां श्वेतां वापि पुनर्नवाम् ।
ऐकध्यं पललं तैलं रूपिकायाः पयो गुडः ॥ ३७ ॥

३८.३७bv श्वेतां चापि पुनर्नवाम् ३८.३७dv रूयिकायाः पयो गुडः ३८.३७dv रूषिकायाः पयो गुडः भिनत्ति विषम् आलर्कं घन-वृन्दम् इवानिलः ।
स-मन्त्रं सौषधी-रत्नं स्नपनं च प्रयोजयेत् ॥ ३८ ॥

चतुष्-पाद्भिर् द्वि-पाद्भिर् वा नख-दन्त-परिक्षतम् ।
शूयते पच्यते राग-ज्वर-स्राव-रुजान्वितम् ॥ ३९ ॥

३८.३९dv -ज्वरास्राव-रुजान्वितम् सोमवल्को ऽश्वकर्णश् च गोजिह्वा हंसपादिका ।
रजन्यौ गैरिकं लेपो नख-दन्त-विषापहः ॥ ४० ॥

# अध्याय 39

दीर्घम् आयुः स्मृतिं मेधाम् आरोग्यं तरुणं वयः ।
प्रभा-वर्ण-स्वरौदार्यं देहेन्द्रिय-बलोदयम् ॥ १ ॥

वाक्-सिद्धिं वृष-तां कान्तिम् अवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ॥

३९.२cv लाभोपायो हि सप्तानां पूर्वे वयसि मध्ये वा तत् प्रयोज्यं जितात्मनः ।
स्निग्धस्य स्रुत-रक्तस्य विशुद्धस्य च सर्व-था ॥ ३ ॥

अ-विशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजी-करो वा मलिने वस्त्रे रङ्ग इवा-फलः ॥ ४ ॥

३९.४dv वस्त्रे राग इवा-फलः रसायनानां द्वि-विधं प्रयोगम् ऋषयो विदुः ।
कुटी-प्रावेशिकं मुख्यं वातातपिकम् अन्य-था ॥ ५ ॥

पुरे प्राप्योपकरणे हर्म्ये-निर्-वात-निर्-भये ।
दिश्य् उदीच्यां शुभे देशे त्रि-गर्भां सूक्ष्म-लोचनाम् ॥ ६ ॥

३९.६av निर्-वाते निर्-भये धर्म्ये ३९.६av निर्-वाते निर्-भये हर्म्ये ३९.६bv प्राप्योपकरणे पुरे ३९.६cv दिश्य् ऐशान्यां शुभे देशे धूमातप-रजो-व्याल-स्त्री-मूर्खाद्य-विलङ्घिताम् ।
सज्ज-वैद्योपकरणां सु-मृष्टां कारयेत् कुटीम् ॥ ७ ॥

अथ पुण्ये ऽह्नि संपूज्य पूज्यांस् तां प्रविशेच् छुचिः ।
तत्र संशोधनैः शुद्धः सुखी जात-बलः पुनः ॥ ८ ॥

ब्रह्म-चारी धृति-युतः श्रद्-दधानो जितेन्द्रियः ।
दान-शील-दया-सत्य-व्रत-धर्म-परायणः ॥ ९ ॥

देवतानुस्मृतौ युक्तो युक्त-स्वप्न-प्रजागरः ।
प्रियौषधः पेशल-वाग् आरभेत रसायनम् ॥ १० ॥

३९.१०cv प्रियौषधः पेशल-वाक् ३९.१०dv प्रारभेत रसायनम् हरीतकीम् आमलकं सैन्धवं नागरं वचाम् ।
हरिद्रां पिप्पलीं वेल्लं गुडं चोष्णाम्बुना पिबेत् ॥ ११ ॥

स्निग्ध-स्विन्नो नरः पूर्वं तेन साधु विरिच्यते ।
ततः शुद्ध-शरीराय कृत-संसर्जनाय च ॥ १२ ॥

३९.१२av स्निग्धः स्विन्नो नरः पूर्वं ३९.१२bv तेन साधु विशुध्यति त्रि-रात्रं पञ्च-रात्रं वा सप्ताहं वा घृतान्वितम् ।
दद्याद् यावकम् आ-शुद्धेः पुराण-शकृतो ऽथ-वा ॥ १३ ॥

इत्थं संस्कृत-कोष्ठस्य रसायनम् उपाहरेत् ।
यस्य यद् यौगिकं पश्येत् सर्वम् आलोच्य सात्म्य-वित् ॥ १४ ॥

पथ्या-सहस्रं त्रि-गुण-धात्री-फल-समन्वितम् ।
पञ्चानां पञ्च-मूलानां सार्धं पल-शत-द्वयम् ॥ १५ ॥

जले दश-गुणे पक्त्वा दश-भाग-स्थिते रसे ।
आपोथ्य कृत्वा व्य्-अस्थीनि विजयामलकान्य् अथ ॥ १६ ॥

विनीय तस्मिन् निर्यूहे योजयेत् कुडवांशकम् ।
त्वग्-एला-मुस्त-रजनी-पिप्पल्य्-अगुरु-चन्दनम् ॥ १७ ॥

मण्डूकपर्णी-कनक-शङ्खपुष्पी-वचा-प्लवम् ।
यष्ट्य्-आह्वयं विडङ्गं च चूर्णितं तुलयाधिकम् ॥ १८ ॥

सितोपलार्ध-भारं च पात्राणि त्रीणि सर्पिषः ।
द्वे च तैलात् पचेत् सर्वं तद् अग्नौ लेह-तां गतम् ॥ १९ ॥

अवतीर्णं हिमं युञ्ज्याद् विंशैः क्षौद्र-शतैस् त्रिभिः ।
ततः खजेन मथितं निदध्याद् घृत-भाजने ॥ २० ॥

या नोपरुन्ध्याद् आहारम् एकं मात्रास्य सा स्मृता ।
षष्टिकः पयसा चात्र जीर्णे भोजनम् इष्यते ॥ २१ ॥

३९.२१bv एका मात्रास्य सा स्मृता वैखानसा बालखिल्यास् तथा चान्ये तपो-धनाः ।
ब्रह्मणा विहितं धन्यम् इदं प्राश्य रसायनम् ॥ २२ ॥

३९.२२av वैखानसा बालिखिल्यास् तन्द्रा-श्रम-क्लम-वली-पलितामय-वर्जिताः ।
मेधा-स्मृति-बलोपेता बभूवुर् अ-मितायुषः ॥ २३ ॥

अभयामलक-सहस्रं निर्-आमयं पिप्पली-सहस्र-युतम् ।
तरुण-पलाश-क्षार-द्रवी-कृतं स्थापयेद् भाण्डे ॥ २४ ॥

उपयुक्ते च क्षारे छाया-संशुष्क-चूर्णितं योज्यम् ।
पादांशेन सितायाश् चतुर्-गुणाभ्यां मधु-घृताभ्याम् ॥ २५ ॥

३९.२५av उपयुक्ते च क्वाथे तद् घृत-कुम्भे भूमौ निधाय षण्-मास-संस्थम् उद्धृत्य ।
प्राह्णे प्राश्य यथानलम् उचिताहारो भवेत् सततम् ॥ २६ ॥

३९.२६bv निखाय षण्-मास-संस्थम् उद्धृत्य ३९.२६cv प्राह्णे प्राश्य यथा-बलम् इत्य् उपयुञ्ज्या-शेषं वर्ष-शतम् अन्-आमयो जरा-रहितः ।
जीवति बल-पुष्टि-वपुः-स्मृति-मेधाद्य्-अन्वितो विशेषेण ॥ २७ ॥

३९.२७av इत्य् उपयोज्या-शेषं नी-रुजार्द्र-पलाशस्य च्छिन्ने शिरसि तत् क्षतम् ।
अन्तर् द्वि-हस्तं गम्भीरं पूर्यम् आमलकैर् नवैः ॥ २८ ॥

३९.२८bv च्छिन्ने शिरसि तक्षितम् आ-मूलं वेष्टितं दर्भैः पद्मिनी-पङ्क-लेपितम् ।
आदीप्य गो-मयैर् वन्यैर् निर्-वाते स्वेदयेत् ततः ॥ २९ ॥

स्विन्नानि तान्य् आमलकानि तृप्त्या खादेन् नरः क्षौद्र-घृतान्वितानि ।
क्षीरं शृतं चानु पिबेत् प्र-कामं तेनैव वर्तेत च मासम् एकम् ॥ ३० ॥

वर्ज्यानि वर्ज्यानि च तत्र यत्नात् स्पृश्यं च शीताम्बु न पाणिनापि ।
एका-दशाहे ऽस्य ततो व्यतीते पतन्ति केशा दशना नखाश् च ॥ ३१ ॥

३९.३१bv स्पृशेन् न शीताम्बु च पाणिनापि अथाल्पकैर् एव दिनैः सु-रूपः स्त्रीष्व् अ-क्षयः कुञ्जर-तुल्य-वीर्यः ।
विशिष्ट-मेधा-बल-बुद्धि-सत्-त्वो भवत्य् असौ वर्ष-सहस्र-जीवी ॥ ३२ ॥

दश-मूल-बला-मुस्त-जीवकर्षभकोत्पलम् ।
पर्णिन्यौ पिप्पली शृङ्गी मेदा तामलकी त्रुटी ॥ ३३ ॥

जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी ।
पुनर्नवर्द्धि-काकोली-काकनासामृता-द्वयम् ॥ ३४ ॥

३९.३४cv पुनर्नवा-द्वि-काकोली- ३९.३४dv -काकनासामृताह्वयाः विदारी वृष-मूलं च तद् ऐकध्यं पलोन्मितम् ।
जल-द्रोणे पचेत् पञ्च धात्री-फल-शतानि च ॥ ३५ ॥

पाद-शेषं रसं तस्माद् व्य्-अस्थीन्य् आमलकानि च ।
गृहीत्वा भर्जयेत् तैल-घृताद् द्वा-दशभिः पलैः ॥ ३६ ॥

३९.३६av पाद-शेषे रसे तस्मिन् मत्स्यण्डिका-तुलार्धेन युक्तं तल् लेह-वत् पचेत् ।
स्नेहार्धं मधु सिद्धे तु तवक्षीर्याश् चतुः-पलम् ॥ ३७ ॥

३९.३७cv स्नेहार्धं मधुनः शीते पिप्पल्या द्वि-पलं दद्याच् चतुर्-जातं कणार्धितम् ।
अतो ऽवलेहयेन् मात्रां कुटी-स्थः पथ्य-भोजनः ॥ ३८ ॥

३९.३८bv चतुर्-जातं कणार्धिकम् ३९.३८bv चतुर्-जातं कणार्धकम् ३९.३८dv कुटी-स्थं पथ्य-भोजिनम् इत्य् एष च्यवन-प्राशो यं प्राश्य च्यवनो मुनिः ।
जरा-जर्जरितो ऽप्य् आसीन् नारी-नयन-नन्दनः ॥ ३९ ॥

कासं श्वासं ज्वरं शोषं हृद्-रोगं वात-शोणितम् ।
मूत्र-शुक्राश्रयान् दोषान् वैस्वर्यं च व्यपोहति ॥ ४० ॥

बाल-वृद्ध-क्षत-क्षीण-कृशानाम् अङ्ग-वर्धनः ॥ ४१अब् ॥
मेधां स्मृतिं कान्तिम् अन्-आमय-त्वम् आयुः-प्रकर्षं पवनानुलोम्यम् ॥ ४१च्द् ॥
स्त्रीषु प्रहर्षं बलम् इन्द्रियाणाम् अग्नेश् च कुर्याद् विधिनोपयुक्तः ॥ ४१एf ॥
मधुकेन तवक्षीर्या पिप्पल्या सिन्धु-जन्मना ।
पृथग् लोहैः सुवर्णेन वचया मधु-सर्पिषा ॥ ४२ ॥

सितया वा समा युक्ता समायुक्ता रसायनम् ।
त्रि-फला सर्व-रोग-घ्नी मेधायुः-स्मृति-बुद्धि-दा ॥ ४३ ॥

३९.४३av सितयाथ समायुक्ता ३९.४३bv रौप्य-युक्ता रसायनी मण्डूकपर्ण्याः स्व-रसं यथाग्नि क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसं गुडूच्यास् सह-मूल-पुष्प्याः कल्कं प्रयुञ्जीत च शङ्खपुष्प्याः ॥ ४४ ॥

आयुः-प्रदान्य् आमय-नाशनानि बलाग्नि-वर्ण-स्वर-वर्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शङ्खपुष्पी ॥ ४५ ॥

३९.४५dv मेध्या विशेषेण च शङ्खपुष्पी नलदं कटु-रोहिणी पयस्या मधुकं चन्दन-शारिवोग्रगन्धाः ।
त्रि-फला कटुक-त्रयं हरिद्रे स-पटोलं लवणं च तैः सु-पिष्टैः ॥ ४६ ॥

त्रि-गुणेन रसेन शङ्खपुष्प्याः स-पयस्कं घृत-नल्वणं विपक्वम् ।
उपयुज्य भवेज् जडो ऽपि वाङ्मी श्रुत-धारी प्रतिभान-वान् अ-रोगः ॥ ४७ ॥

३९.४७dv श्रुति-धारी प्रतिभान-वान् अ-रोगः ३९.४७dv श्रुति-धारी प्रतिभान-वान् अ-रोगी पेष्यैर् मृणाल-बिस-केसर-पत्त्र-बीजैः सिद्धं स-हेम-शकलं पयसा च सर्पिः ।
पञ्चारविन्दम् इति तत् प्रथितं पृथिव्यां प्रभ्रष्ट-पौरुष-बल-प्रतिभैर् निषेव्यम् ॥
४८ ॥

३९.४८cv पञ्चारविन्दम् इति सर्पिर् उदार-वीर्यं यन् नाल-कन्द-दल-केसर-वद् विपक्वं नीलोत्पलस्य तद् अपि प्रथितं द्वितीयम् ।
सर्पिश् चतुष्-कुवलयं स-हिरण्य-पत्त्रं मेध्यं गवाम् अपि भवेत् किम् उ मानुषाणाम् ॥ ४९ ॥

ब्राह्मी-वचा-सैन्धव-शङ्खपुष्पी-मत्स्याक्षक-ब्रह्मसुवर्चलैन्द्र्यः ।
वैदेहिका च त्रि-यवाः पृथक् स्युर् यवौ सुवर्णस्य तिलो विषस्य ॥ ५० ॥

सर्पिषश् च पलम् एकत एतद् योजयेत् परिणते च घृताढ्यम् ।
भोजनं स-मधु वत्सरम् एवं शीलयन्न् अधिक-धी-स्मृति-मेधः ॥ ५१ ॥

३९.५१dv शीलयन्न् अधिक-धी-स्मृति-वेषः अतिक्रान्त-जरा-व्याधि-तन्द्रालस्य-श्रम-क्लमः ।
जीवत्य् अब्द-शतं पूर्णं श्री-तेजः-कान्ति-दीप्ति-मान् ॥ ५२ ॥

३९.५२dv श्री-तेजः-कान्ति-मूर्ति-मान् विशेषतः कुष्ठ-किलास-गुल्म-विष-ज्वरोन्माद-गरोदराणि ।
अथर्व-मन्त्रादि-कृताश् च कृत्याः शाम्यन्त्य् अनेनाति-बलाश् च वाताः ॥ ५३ ॥

शरन्-मुखे नागबलां पुष्य-योगे समुद्धरेत् ।
अक्ष-मात्रं ततो मूलाच् चूर्णितात् पयसा पिबेत् ॥ ५४ ॥

३९.५४cv अक्ष-मात्रं ततो मूलं ३९.५४dv चूर्णितं पयसा पिबेत् लिह्यान् मधु-घृताभ्यां वा क्षीर-वृत्तिर् अन्-अन्न-भुक् ।
एवं वर्ष-प्रयोगेन जीवेद् वर्ष-शतं बली ॥ ५५ ॥

फलोन्-मुखो गोक्षुरकः स-मूलश् छाया-विशुष्कः सु-विचूर्णिताङ्गः ।
सु-भावितः स्वेन रसेन तस्मान् मात्रां परां प्रासृतिकीं पिबेद् यः ॥ ५६ ॥

३९.५६dv मात्रां परं प्रासृतिकीं पिबेद् यः क्षीरेण तेनैव च शालिम् अश्नन् जीर्णे भवेत् स द्वि-तुलोपयोगात् ।
शक्तः सु-रूपः सु-भगः शतायुः कामी ककुद्-मान् इव गो-कुल-स्थः ॥ ५७ ॥

वाराही-कन्दम् आर्द्रार्द्रं क्षीरेण क्षीर-पः पिबेत् ।
मासं निर्-अन्नो मासं च क्षीरान्नादो जरां जयेत् ॥ ५८ ॥

तत्-कन्द-श्लक्ष्ण-चूर्णं वा स्व-रसेन सु-भावितम् ।
घृत-क्षौद्र-प्लुतं लिह्यात् तत्-पक्वं वा घृतं पिबेत् ॥ ५९ ॥

३९.५९cv घृत-क्षौद्र-युतं लिह्यात् तद्-वद् विदार्य्-अतिबला-बला-मधुक-वायसीः ।
श्रेयसी-श्रेयसी-युक्ता-पथ्या-धात्री-स्थिरामृताः ॥ ६० ॥

३९.६०cv जीवन्ती-श्रेयसी-युक्ता- मण्डूकी-शङ्खकुसुमा-वाजिगन्धा-शतावरीः ।
उपयुञ्जीत मेधा-धी-वयः-स्थैर्य-बल-प्रदाः ॥ ६१ ॥

३९.६१cv उपयुञ्जीत धी-मेधा- ३९.६१cv उपयुञ्जीत मेधावी ३९.६१dv वयः-स्थैर्य-बल-प्रदाः यथा-स्वं चित्रकः पुष्पैर् ज्ञेयः पीत-सितासितैः ।
यथोत्तरं स गुण-वान् विधिना च रसायनम् ॥ ६२ ॥

छाया-शुष्कं ततो मूलं मासं चूर्णी-कृतं लिहन् ।
सर्पिषा मधु-सर्पिर्भ्यां पिबन् वा पयसा यतिः ॥ ६३ ॥

अम्भसा वा हितान्नाशी शतं जीवति नी-रुजः ।
मेधावी बल-वान् कान्तो वपुष्-मान् दीप्त-पावकः ॥ ६४ ॥

तैलेन लीढो मासेन वातान् हन्ति सु-दुस्-तरान् ।
मूत्रेण श्वित्र-कुष्ठानि पीतस् तक्रेण पायु-जान् ॥ ६५ ॥

३९.६५bv वातान् हन्ति सु-दारुणान् भल्लातकानि पुष्टानि धान्य-राशौ निधापयेत् ।
ग्रीष्मे संगृह्य हेमन्ते स्वादु-स्निग्ध-हिमैर् वपुः ॥ ६६ ॥

३९.६६dv स्वादु-स्निग्ध-हिमैः पुनः संस्कृत्य तान्य् अष्ट-गुणे सलिले ऽष्टौ विपाचयेत् ।
अष्टांश-शिष्टं तत्-क्वाथं स-क्षीरं शीतलं पिबेत् ॥ ६७ ॥

३९.६७cv अष्टांश-शिष्टं तं क्वाथं वर्धयेत् प्रत्य्-अहं चानु तत्रैकैकम् अरुष्करम् ।
सप्त-रात्र-त्रयं यावत् त्रीणि त्रीणि ततः परम् ॥ ६८ ॥

आ-चत्वारिंशतस् तानि ह्रासयेद् वृद्धि-वत् ततः ।
सहस्रम् उपयुञ्जीत सप्ताहैर् इति सप्तभिः ॥ ६९ ॥

३९.६९dv सप्ताहैर् अपि सप्तभिः यन्त्रितात्मा घृत-क्षीर-शालि-षष्टिक-भोजनः ।
तद्-वत् त्रि-गुणितं कालं प्रयोगान्ते ऽपि चाचरेत् ॥ ७० ॥

३९.७०dv प्रयोगान्ते ऽप्य् उपाचरेत् आशिषो लभते ऽ-पूर्वा वह्नेर् दीप्तिं विशेषतः ।
प्रमेह-कृमि-कुष्ठार्शो-मेदो-दोष-विवर्जितः ॥ ७१ ॥

३९.७१av आशिषो लभते पूर्वा पिष्ट-स्वेदनम् अ-रुजैः पूर्णं भल्लातकैर् विजर्जरितैः ।
भूमि-निखाते कुम्भे प्रतिष्ठितं कृष्ण-मृल्-लिप्तम् ॥ ७२ ॥

३९.७२bv पूर्णं भल्लातकैः सु-जर्जरितैः परिवारितं समन्तात् पचेत् ततो गो-मयाग्निना मृदुना ।
तत्-स्व-रसो यश् च्यवते गृह्णीयात् तं दिने ऽन्यस्मिन् ॥ ७३ ॥

३९.७३bv पचेत् तद् गो-मयाग्निना मृदुना अमुम् उपयुज्य स्व-रसं मध्व्-अष्टम-भागिकं द्वि-गुण-सर्पिः ।
पूर्व-विधि-यन्त्रितात्मा प्राप्नोति गुणान् स तान् एव ॥ ७४ ॥

३९.७४av अमुम् उपयुञ्ज्यात् स्व-रसं पुष्टानि पाकेन परिच्युतानि भल्लातकान्य् आढक-संमितानि ।
घृष्ट्वेष्टिका-चूर्ण-कणैर् जलेन प्रक्षाल्य संशोष्य च मारुतेन ॥ ७५ ॥

जर्जराणि विपचेज् जल-कुम्भे पाद-शेष-घृत-गालित-शीतम् ।
तद्-रसं पुनर् अपि श्रपयेत क्षीर-कुम्भ-सहितं चरण-स्थे ॥ ७६ ॥

३९.७६bv पाद-शेष-घृत-गालित-शेषम् ३९.७६bv पाद-शेष-घृत-गालित-शीते ३९.७६bv पाद-शेषम् अवतारित-शीतम् ३९.७६cv तं रसं पुनर् अपि श्रपयेत ३९.७६dv क्षीर-कुम्भ-सहितं चरण-स्थम् सर्पिः पक्वं तत्र तुल्य-प्रमाणं युञ्ज्यात् स्वेच्छं शर्करया रजोभिः ।
एकी-भूतं तत् खज-क्षोभणेन स्थाप्यं धान्ये सप्त-रात्रं सु-गुप्तम् ॥ ७७ ॥

३९.७७av सर्पिः पक्वं तेन तुल्य-प्रमाणं ३९.७७bv युञ्ज्यात् प्रस्थं शर्करया रजोभिः ३९.७७bv युञ्ज्यात् स्वच्छं शर्करया रजोभिः ३९.७७cv एकी-भूतं तं खज-क्षोभणेन तम् अमृत-रस-पाकं यः प्रगे प्राशम् अश्नन्न् अनुपिबति यथेष्टं वारि दुग्धं रसं वा ।
स्मृति-मति-बल-मेधा-सत्-त्व-सारैर् उपेतः कनक-निचय-गौरः सो ऽश्नुते दीर्घम् आयुः ॥ ७८ ॥

द्रोणे ऽम्भसो व्रणकृतां त्रि-शताद् विपक्वात् क्वाथाढके पल-समैस् तिल-तैल-पात्रम् ।
तिक्ता-विषा-द्वय-वरा-गिरिजन्म-तार्क्ष्यैः सिद्धं परं निखिल-कुष्ठ-निबर्हणाय ॥
७९ ॥

३९.७९av द्रोणे ऽम्भसो व्रणकृतां त्रि-शतानि पक्त्वा ३९.७९cv तिक्ता-निशा-द्वय-वचा-गिरिजन्म-तार्क्ष्यैः ३९.७९cv तिक्ता-निशा-द्वय-वरा-गिरिजन्म-तार्क्ष्यैः ३९.७९cv तिक्ता-विषा-द्वय-वचा-गिरिजन्म-तार्क्ष्यैः ३९.७९cv तिक्ता-विषा-द्वय-वरा-गिरिजात-तार्क्ष्यैः सहामलक-शुक्तिभिर् दधि-सरेण तैलेन वा ॥ ८०अ ॥
गुडेन पयसा घृतेन यव-सक्तुभिर् वा सह ॥ ८०ब् ॥
तिलेन सह माक्षिकेण पललेन सूपेन वा ॥ ८०च् ॥
वपुष्-करम् अरुष्करं परम-मेध्यम् आयुष्-करम् ॥ ८०द् ॥
भल्लातकानि तीक्ष्णानि पाकीन्य् अग्नि-समानि च ।
भवन्त्य् अमृत-कल्पानि प्रयुक्तानि यथा-विधि ॥ ८१ ॥

३९.८१dv कल्पितानि यथा-विधि कफ-जो न स रोगो ऽस्ति न विबन्धो ऽस्ति कश्-च-न ।
यं न भल्लातकं हन्याच् छीघ्रम् अग्नि-बल-प्रदम् ॥ ८२ ॥

३९.८२dv छीघ्रं वह्नि-बल-प्रदम् वातातप-विधाने ऽपि विशेषेण विवर्जयेत् ।
कुलत्थ-दधि-शुक्तानि तैलाभ्यङ्गाग्नि-सेवनम् ॥ ८३ ॥

वृक्षास् तुबरका नाम पश्चिमार्णव-तीर-जाः ।
वीची-तरङ्ग-विक्षोभ-मारुतोद्धूत-पल्लवाः ॥ ८४ ॥

तेभ्यः फलान्य् आददीत सु-पक्वान्य् अम्बु-दागमे ।
मज्ज्ञः फलेभ्यश् चादाय शोषयित्वावचूर्ण्य च ॥ ८५ ॥

३९.८५cv मज्जां फलेभ्यश् चादाय ३९.८५cv मज्जाः फलेभ्यश् चादाय ३९.८५dv शोषयित्वा विचूर्ण्य च तिल-वत् पीडयेद् द्रोण्यां क्वाथयेद् वा कुसुम्भ-वत् ।
तत्-तैलं संभृतं भूयः पचेद् आ-सलिल-क्षयात् ॥ ८६ ॥

३९.८६cv तत्-तैलं स-घृतं भूयः ३९.८६cv तत्-तैलं संसृतं भूयः ३९.८६cv तत्-तैलं संहृतं भूयः अवतार्य करीषे च पक्ष-मात्रं निधापयेत् ।
स्निग्ध-स्विन्नो हृत-मलः पक्षाद् उद्धृत्य तत् ततः ॥ ८७ ॥

३९.८७dv पक्षाद् उद्धृत्य यत्न-वान् चतुर्थ-भक्तान्तरितः प्रातः पाणि-तलं पिबेत् ।
मन्त्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ ८८ ॥

मज्ज-सार महा-वीर्य सर्वान् धातून् विशोधय ।
शङ्ख-चक्र-गदा-पाणिस् त्वाम् आज्ञापयते ऽ-च्युतः ॥ ८९ ॥

३९.८९av मज्जा-सार महा-वीर्य ३९.८९dv त्वाम् आज्ञापयते ऽ-च्युत तेनास्योर्ध्वम् अधस्-ताच् च दोषा यान्त्य् अ-सकृत् ततः ।
सायम् अ-स्नेह-लवणां यवागूं शीतलां पिबेत् ॥ ९० ॥

३९.९०bv दोषा यान्त्य् अ-सकृत्-सकृत् पञ्चाहानि पिबेत् तैलम् इत्थं वर्ज्यान् विवर्जयन् ।
पक्षं मुद्ग-रसान्नाशी सर्व-कुष्ठैर् विमुच्यते ॥ ९१ ॥

३९.९१bv इत्थं वर्ज्यानि वर्जयेत् तद् एव खदिर-क्वाथे त्रि-गुणे साधु साधितम् ।
निहितं पूर्व-वत् पक्षं पिबेन् मासं सु-यन्त्रितः ॥ ९२ ॥

तेनाभ्यक्त-शरीरश् च कुर्वन्न् आहारम् ईरितम् ।
अनेनाशु प्रयोगेण साधयेत् कुष्ठिनं नरम् ॥ ९३ ॥

भिन्न-स्वरं रक्त-नेत्रं शीर्णाङ्गं कृमि-भक्षितम् ॥ ९३.१+(१)अब् ॥
३९.९३.१+(१)अव् भग्न-स्वरं रक्त-नेत्रं ३९.९३.१+(१)ब्व् शीर्णाङ्गं कृमिभिश् चितम् सर्पिर्-मधु-युतं पीतं तद् एव खदिराद् विना ।
पक्षं मांस-रसाहारं करोति द्वि-शतायुषम् ॥ ९४ ॥

३९.९४cv पक्व-मांस-रसाहारं ३९.९४cv पक्वं मांस-रसाहारं तद् एव नस्ये पञ्चाशद् दिवसान् उपयोजितम् ।
वपुष्-मतं श्रुत-धरं करोति त्रि-शतायुषम् ॥ ९५ ॥

३९.९५cv वपुष्-मतं श्रुति-धरं वली-पलित-निर्मुक्तं स्थिर-स्मृति-कच-द्वि-जम् ॥ ९५.१+(१)अब् ॥
पञ्चाष्टौ सप्त दश वा पिप्पलीर् मधु-सर्पिषा ।
रसायन-गुणान्वेषी समाम् एकां प्रयोजयेत् ॥ ९६ ॥

३९.९६dv मासम् एकं प्रयोजयेत् तिस्रस् तिस्रस् तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुक-क्षार-भाविता घृत-भर्जिताः ॥ ९७ ॥

३९.९७bv भुक्त्वाग्रे भोजनस्य तु प्रयोज्या मधु-संमिश्रा रसायन-गुणैषिणा ।
क्रम-वृद्ध्या दशाहानि दश-पैप्पलिकं दिनम् ॥ ९८ ॥

३९.९८cv दश-वृद्ध्या दशाहानि ३९.९८dv दश-पिप्पलिकं दिनम् वर्धयेत् पयसा सार्धं तथैवापनयेत् पुनः ।
जीर्णौषधश् च भुञ्जीत षष्टिकं क्षीर-सर्पिषा ॥ ९९ ॥

पिप्पलीनां सहस्रस्य प्रयोगो ऽयं रसायनम् ।
पिष्टास् ता बलिभिः पेयाः शृता मध्य-बलैर् नरैः ॥ १०० ॥

शीती-कृता हीन-बलैर् वीक्ष्य दोषामयान् प्रति ॥ १००+(१)अब् ॥
३९.१००+(१)अव् शीती-कृता क्षीण-बलैर् ३९.१००+(१)ब्व् वीक्ष्य दोषान् प्रयोजयेत् तद्-वच् च च्छाग-दुग्धेन द्वे सहस्रे प्रयोजयेत् ।
एभिः प्रयोगैः पिप्पल्यः कास-श्वास-गल-ग्रहान् ॥ १०१ ॥

यक्ष्म-मेह-ग्रहण्य्-अर्शः-पाण्डु-त्व-विषम-ज्वरान् ।
घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वात-शोणितम् ॥ १०२ ॥

बिल्वार्ध-मात्रेण च पिप्पलीनां पात्रं प्रलिम्पेद् अयसो निशायाम् ।
प्रातः पिबेत् तत् सलिलाञ्जलिभ्यां वर्षं यथेष्टाशन-पान-चेष्टः ॥ १०३ ॥

शुण्ठी-विडङ्ग-त्रि-फला-गुडूची- यष्टी-हरिद्रातिबला-बलाश् च ।
मुस्ता-सुराह्वागुरु-चित्रकाश् च सौगन्धिकं पङ्क-जम् उत्पलानि ॥ १०४ ॥

३९.१०४cv मुस्ता-शताह्वागुरु-चित्रकाश् च धवाश्वकर्णासन-बालपत्त्र-सारास् तथा पिप्पलि-वत् प्रयोज्याः ।
लोहोपलिप्ताः पृथग् एव जीवेत् समाः शतं व्याधि-जरा-विमुक्तः ॥ १०५ ॥

३९.१०५bv -सारास् तथा पिप्पलि-वत् प्रयुञ्ज्याः ३९.१०५cv लोह-प्रलेपात् पृथग् एव जीवेत् ३९.१०५cv लोहोपलेपात् पृथग् एव जीवेत् क्षीराञ्जलिभ्यां च रसायनानि युक्तान्य् अमून्य् आयस-लेपनानि ।
कुर्वन्ति पूर्वोक्त-गुण-प्रकर्षम् आयुः-प्रकर्षं द्वि-गुणं ततश् च ॥ १०६ ॥

असन-खदिर-यूषैर् भावितां सोमराजीं मधु-घृत-शिखि-पथ्या-लोह-चूर्णैर् उपेताम् ।
शरदम् अवलिहानः पारिणामान् विकारांस् त्यजति मित-हिताशी तद्-वद् आहार-जातान् ॥ १०७ ॥

३९.१०७bv मधु-घृत-गद-पथ्या-लोह-चूर्णैर् उपेताम् तीव्रेण कुष्ठेन परीत-मूर्तिर् यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्ण-तिल-द्वितीयां स सोमराजीं वपुषातिशेते ॥ १०८ ॥

ये सोमराज्या वि-तुषी-कृतायाश् चूर्णैर् उपेतात् पयसः सु-जातात् ।
उद्धृत्य सारं मधुना लिहन्ति तक्रं तद् एवानुपिबन्ति चान्ते ॥ १०९ ॥

कुष्ठिनः शीर्यमाणाङ्गास् ते जाताङ्गुलि-नासिकाः ।
भान्ति वृक्षा इव पुनः प्ररूढ-नव-पल्लवाः ॥ ११० ॥

३९.११०av कुष्ठिनः कुथ्यमानाङ्गास् शीत-वात-हिम-दग्ध-तनूनां स्तब्ध-भग्न-कुटिल-व्यथितास्थ्नाम् ।
भेषजस्य पवनोपहतानां वक्ष्यते विधिर् अतो लशुनस्य ॥ ११०+(१) ॥
३९.११०+(१)अव् शीत-वात-परिदग्ध-तनूनां ३९.११०+(१)ब्व् स्तब्ध-भुग्न-कुटिल-व्यथितास्थ्नाम् ३९.११०+(१)च्व् भेषजं च पवनोपहतानां राहोर् अमृत-चौर्येण लूनाद् ये पतिता गलात् ।
अमृतस्य कणा भूमौ ते लशुन-त्वम् आगताः ॥ १११ ॥

३९.१११av राहोर् अच्युत-चक्रेण द्वि-जा नाश्नन्ति तम् अतो दैत्य-देह-समुद्भवम् ।
साक्षाद् अमृत-संभूतेर् ग्रामणीः स रसायनम् ॥ ११२ ॥

शीलयेल् लशुनं शीते वसन्ते ऽपि कफोल्बणः ।
घनोदये ऽपि वातार्तः सदा वा ग्रीष्म-लीलया ॥ ११३ ॥

३९.११३bv वसन्ते च कफोल्बणः स्निग्ध-शुद्ध-तनुः शीत-मधुरोपस्कृताशयः ।
तद्-उत्तंसावतंसाभ्यां चर्चितानुचराजिरः ॥ ११४ ॥

तस्य कन्दान् वसन्तान्ते हिमवच्-छक-देश-जान् ।
अपनीत-त्वचो रात्रौ तिमयेन् मदिरादिभिः ॥ ११५ ॥

३९.११५cv अपनीय त्वचो रात्रौ ३९.११५dv तीमयेन् मदिरादिभिः ३९.११५dv पेषयेन् मदिरादिभिः तत्-कल्क-स्व-रसं प्रातः शुचि-तान्तव-पीडितम् ।
मदिरायाः सु-रूढायास् त्रि-भागेन समन्वितम् ॥ ११६ ॥

मद्यस्यान्यस्य तक्रस्य मस्तुनः काञ्जिकस्य वा ।
तत्-काल एव वा युक्तं युक्तम् आलोच्य मात्रया ॥ ११७ ॥

३९.११७av मद्यस्यान्यस्य तैलस्य तैल-सर्पिर्-वसा-मज्ज-क्षीर-मांस-रसैः पृथक् ।
क्वाथेन वा यथा-व्याधि रसं केवलम् एव वा ॥ ११८ ॥

३९.११८bv क्षीर-सर्पिर्-वसा-मज्ज- ३९.११८bv -धन्व-मांस-रसैः पृथक् ३९.११८bv -धन्व-मांसैः पृथक् पृथक् पिबेद् गण्डूष-मात्रं प्राक् कण्ठ-नाली-विशुद्धये ।
प्रततं स्वेदनं चानु वेदनायां प्रशस्यते ॥ ११९ ॥

३९.११९cv प्रततं स्वेदनं चात्र शीताम्बु-सेकः सहसा वमि-मूर्छाययोर् मुखे ।
शेषं पिबेत् क्लमापाये स्थिर-तां गत ओजसि ॥ १२० ॥

विदाह-परिहाराय परं शीतानुलेपनः ।
धारयेत् साम्बु-कणिका मुक्ता-कर्पूर-मालिकाः ॥ १२१ ॥

३९.१२१cv धारयेत् साम्बु-कणिकां ३९.१२१dv मुक्तां कर्पूर-मालिकाम् ३९.१२१dv मुक्ता-कर्पूर-मालिकाम् कुडवो ऽस्य परा मात्रा तद्-अर्धं केवलस्य तु ।
पलं पिष्टस्य तन्-मज्ज्ञः स-भक्तं प्राक् च शीलयेत् ॥ १२२ ॥

जीर्ण-शाल्य्-ओदनं जीर्णे शङ्ख-कुन्देन्दु-पाण्डुरम् ।
भुञ्जीत यूषैर् पयसा रसैर् वा धन्व-चारिणाम् ॥ १२३ ॥

मद्यम् एकं पिबेत् तत्र तृट्-प्रबन्धे जलान्वितम् ।
अ-मद्य-पस् त्व् आरनालं फलाम्बु परिसिक्थकाम् ॥ १२४ ॥

३९.१२४av मद्यम् एकं पिबेत् त्व् अत्र ३९.१२४bv तृट्-[प्र]वृद्धे जलान्वितम् ३९.१२४bv तृड्-विबन्धे जलान्वितम् ३९.१२४dv फलाम्बु परिसिक्थिकाम् ३९.१२४dv फलाम्बु परिसित्थिकाम् ३९.१२४dv फलाम्बु परिसिक्थिकम् ३९.१२४dv फलाम्बु-परिषेचितम् तत्-कल्कं वा सम-घृतं घृत-पात्रे खजाहतम् ।
स्थितं दशाहाद् अश्नीयात् तद्-वद् वा वसया समम् ॥ १२५ ॥

३९.१२५dv तद्-वद् वा पयसा समम् वि-कञ्चुक-प्राज्य-रसोन-गर्भान् स-शूल्य-मांसान् विविधोपदंशान् ।
निमर्दकान् वा घृत-शुक्त-युक्तान् प्र-कामम् अद्याल् लघु तुच्छम् अश्नन् ॥ १२६ ॥

३९.१२६cv विमर्दकान् वा घृत-शुक्त-युक्तान् ३९.१२६dv प्र-कामम् अद्याल् लघु तुत्थम् अश्नन् पित्त-रक्त-विनिर्मुक्त-समस्तावरणावृते ।
शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात् परम् ॥ १२७ ॥

३९.१२७av पित्त-रक्त-विनिर्मुक्ते ३९.१२७bv समस्तावरणावृते प्रियाम्बु-गुड-दुग्धस्य मांस-मद्याम्ल-विद्विषः ।
अ-तितिक्षोर् अ-जीर्णे च लशुनो व्यापदे ध्रुवम् ॥ १२८ ॥

३९.१२८bv मांस-मद्यादि-विद्विषः ३९.१२८cv अ-तित्यक्षोर् अ-जीर्णम् च ३९.१२८cv अति-रूक्षैर् अ-जीर्णे च पित्त-कोप-भयाद् अन्ते युञ्ज्यान् मृदु विरेचनम् ।
रसायन-गुणान् एवं परिपूर्णान् समश्नुते ॥ १२९ ॥

ग्रीष्मे ऽर्क-तप्ता गिरयो जतु-तुल्यं वमन्ति यत् ।
हेमादि-षड्-धातु-रसं प्रोच्यते तच् छिला-जतु ॥ १३० ॥

सर्वं च तिक्त-कटुकं नात्य्-उष्णं कटु पाकतः ।
छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥ १३१ ॥

गो-मूत्र-गन्धि कृष्णं गुग्गुल्व्-आभं वि-शर्करं मृत्स्नम् ।
स्निग्धम् अन्-अम्ल-कषायं मृदु गुरु च शिला-जतु श्रेष्ठम् ॥ १३२ ॥

व्याधि-व्याधित-सात्म्यं समनुस्मरन् भावयेद् अयः-पात्रे ।
प्राक् केवल-जल-धौतं शुष्कं क्वाथैस् ततो भाव्यम् ॥ १३३ ॥

सम-गिरिजम् अष्ट-गुणिते निःक्वाथ्यं भावनौषधं तोये ।
तन्-निर्यूहे ऽष्टांशे पूतोष्णे प्रक्षिपेद् गिरिजम् ॥ १३४ ॥

तत् सम-रस-तां यातं संशुष्कं प्रक्षिपेद् रसे भूयः ।
स्वैः स्वैर् एवं क्वाथैर् भाव्यं वारान् भवेत् सप्त ॥ १३५ ॥

अथ स्निग्धस्य शुद्धस्य घृतं तिक्तक-साधितम् ।
त्र्य्-अहं युञ्जीत गिरिजम् एकैकेन तथा त्र्य्-अहम् ॥ १३६ ॥

३९.१३६av अथ स्निग्ध-विशुद्धस्य फल-त्रयस्य यूषेण पटोल्या मधुकस्य च ।
योगं योग्यं ततस् तस्य कालापेक्षं प्रयोजयेत् ॥ १३७ ॥

३९.१३७cv योग-योग्यं ततस् तस्य ३९.१३७cv योगे योज्यं ततस् तस्य ३९.१३७dv कालापेक्षं तु योजयेत् शिला-जम् एवं देहस्य भवत्य् अत्य्-उपकारकम् ।
गुणान् समग्रान् कुरुते सहसा व्यापदं न च ॥ १३८ ॥

एक-त्रि-सप्त-सप्ताहं कर्षम् अर्ध-पलं पलम् ।
हीन-मध्योत्तमो योगः शिला-जस्य क्रमान् मतः ॥ १३९ ॥

संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम् ।
युक्तं व्यस्तैः समस्तैर् वा ताम्रायो-रूप्य-हेमभिः ॥ १४० ॥

क्षीरेणालोडितं कुर्याच् छीघ्रं रासायनं फलम् ।
कुलत्थान् काकमाचीं च कपोतांश् च सदा त्यजेत् ॥ १४१ ॥

न सो ऽस्ति रोगो भुवि साध्य-रूपो जत्व् अश्म-जं यं न जयेत् प्रसह्य ।
तत्-काल-योगैर् विधि-वत् प्रयुक्तं स्वस्थस्य चोर्जां विपुलां दधाति ॥ १४२ ॥

३९.१४२bv जत्व् अश्म-जं यं न हरेत् प्रसह्य ३९.१४२dv स्वस्थस्य चोर्जां विपुलां ददाति कुटी-प्रवेशः क्षणिनां परिच्छद-वतां हितः ।
अतो ऽन्य-था तु ये तेषां सौर्य-मारुतिको विधिः ॥ १४३ ॥

३९.१४३av कुटी-प्रवेशः क्षमिणां ३९.१४३av कुटी-प्रवेशः क्षीणानां ३९.१४३dv सूर्य-मारुतिको विधिः वातातप-सहा योगा वक्ष्यन्ते ऽतो विशेषतः ।
सुखोपचारा भ्रंशे ऽपि ये न देहस्य बाधकाः ॥ १४४ ॥

शीतोदकं पयः क्षौद्रं घृतम् एकैक-शो द्वि-शः ।
त्रि-शः समस्तम् अथ-वा प्राक् पीतं स्थापयेद् वयः ॥ १४५ ॥

गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद् वर्ष-शतं सुखी ॥ १४६ ॥

हरीतकीं सर्पिषि संप्रताप्य समश्नतस् तत् पिबतो घृतं च ।
भवेच् चिर-स्थायि बलं शरीरे सकृत् कृतं साधु यथा कृत-ज्ञे ॥ १४७ ॥

३९.१४७bv समश्नुते चेत् पिबतो घृतं च ३९.१४७cv भवेच् चिर-स्थायि-बलं शरीरं ३९.१४७dv सकृत् कृतं साधु यथा कृत-ज्ञाः धात्री-रस-क्षौद्र-सिता-घृतानि हिताशनानां लिहतां नराणाम् ।
प्रणाशम् आयान्ति जरा-विकारा ग्रन्था विशाला इव दुर्-गृहीताः ॥ १४८ ॥

३९.१४८bv हिताशिनां वै लिहतां नराणाम् धात्री-कृमिघ्नासन-सार-चूर्णं स-तैल-सर्पिर्-मधु-लोह-रेणु ।
निषेवमाणस्य भवेन् नरस्य तारुण्य-लावण्यम् अ-विप्रणष्टम् ॥ १४९ ॥

३९.१४९dv तारुण्य-लावण्यम् अति-प्रतिष्ठम् ३९.१४९dv तारुण्य-लावण्यम् अपि प्रणष्टम् लौहं रजो वेल्ल-भवं च सर्पिः-क्षौद्र-द्रुतं स्थापितम् अब्द-मात्रम् ।
समुद्गके बीजक-सार-क्लृप्ते लिहन् बली जीवति कृष्ण-केशः ॥ १५० ॥

३९.१५०av लोहं रजो वेल्ल-भवं च सर्पिः- ३९.१५०av लोहाद् रजो वेल्ल-भवं च सर्पिः- ३९.१५०cv समुद्गके बीजक-सार-लिप्ते ३९.१५०cv सामुद्गके बीजक-क्षार-क्लृप्ते विडङ्ग-भल्लातक-नागराणि ये ऽश्नन्ति सर्पिर्-मधु-संयुतानि ।
जरा-नदीं रोग-तरङ्गिणीं ते लावण्य-युक्ताः पुरुषास् तरन्ति ॥ १५१ ॥

खदिरासन-यूष-भावितायास् त्रि-फलाया घृत-माक्षिक-प्लुतायाः ।
नियमेन नरा निषेवितारो यदि जीवन्त्य् अ-रुजः किम् अत्र चित्रम् ॥ १५२ ॥

३९.१५२bv त्रि-फलाया घृत-माक्षिकान्वितायाः ३९.१५२dv यदि जीवन्त्य् अ-जराः किम् अत्र चित्रम् बीजकस्य रसम् अङ्गुलि-हार्यं शर्करां मधु घृतं त्रि-फलां च ।
शीलयत्सु पुरुषेषु जरत्-ता स्व्-आगतापि विनिवर्तत एव ॥ १५३ ॥

३९.१५३bv शर्करा-मधु-घृतं त्रि-फलां च ३९.१५३bv शर्करा-मधु-युतं त्रि-फलां च पुनर्नवस्यार्ध-पलं नवस्य पिष्टं पिबेद् यः पयसार्ध-मासम् ।
मास-द्वयं तत्-त्रि-गुणं समां वा जीर्णो ऽपि भूयः स पुनर्-नवः स्यात् ॥ १५४ ॥

मूर्वा-बृहत्य्-अंशुमती-बलानाम् उशीर-पाठासन-शारिवाणाम् ।
कालानुसार्यागुरु-चन्दनानां वदन्ति पौनर्नवम् एव कल्पम् ॥ १५५ ॥

शतावरी-कल्क-कषाय-सिद्धं ये सर्पिर् अश्नन्ति सिता-द्वितीयम् ।
तान् जीविताध्वानम् अभिप्रपन्नान् न विप्रलुम्पन्ति विकार-चौराः ॥ १५६ ॥

पीताश्वगन्धा पयसार्ध-मासं घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथा सु-वृष्टिः ॥ १५७ ॥

३९.१५७bv घृतेन तैलेन सु-सूक्ष्म-पिष्टा ३९.१५७dv बालस्य वृक्षस्य यथाम्बु-वृष्टिः दिने दिने कृष्ण-तिल-प्रकुञ्चं समश्नतां शीत-जलानु-पानम् ।
पोषः शरीरस्य भवत्य् अन्-अल्पो दृढी-भवन्त्य् आ-मरणाच् च दन्ताः ॥ १५८ ॥

३९.१५८bv समश्नतः शीत-जलानु-पानम् चूर्णं श्वदंष्ट्रामलकामृतानां लिहन् स-सर्पिर् मधु-भाग-मिश्रम् ।
वृषः स्थिरः शान्त-विकार-दुःखः समाः शतं जीवति कृष्ण-केशः ॥ १५९ ॥

३९.१५९bv लिहन् स-सर्पिर् मधुना प्रयुक्तम् ३९.१५९bv लिहन् स-सर्पिर् मधु-भाग-युक्तम् सार्धं तिलैर् आमलकानि कृष्णैर् अक्षाणि संक्षुद्य हरीतकीर् वा ।
ये ऽद्युर् मयूरा इव ते मनुष्या रम्यं परीणामम् अवाप्नुवन्ति ॥ १६० ॥

शिला-जतु-क्षौद्र-विडङ्ग-सर्पिर्-लोहाभया-पारद-ताप्य-भक्षः ।
आपूर्यते दुर्-बल-देह-धातुस् त्रि-पञ्च-रात्रेण यथा शशाङ्कः ॥ १६१ ॥

ये मासम् एकं स्व-रसं पिबन्ति दिने दिने भृङ्गरजः-समुत्थम् ।
क्षीराशिनस् ते बल-वीर्य-युक्ताः समाः शतं जीवितम् आप्नुवन्ति ॥ १६२ ॥

३९.१६२dv समा-शतं जीवितम् आप्नुवन्ति मासं वचाम् अप्य् उपसेवमानाः क्षीरेण तैलेन घृतेन वापि ।
भवन्ति रक्षोभिर् अ-धृष्य-रूपा मेधाविनो निर्-मल-मृष्ट-वाक्याः ॥ १६३ ॥

मण्डूकपर्णीम् अपि भक्षयन्तो भृष्टां घृते मासम् अन्-अन्न-भक्षाः ।
जीवन्ति कालं विपुलं प्रगल्भास् तारुण्य-लावण्य-गुणोदय-स्थाः ॥ १६४ ॥

३९.१६४av मण्डूकपर्णीं परिभक्षयन्तो ३९.१६४bv भृष्टां घृते मासम् अन्-अन्न-भक्ष्याः लाङ्गली-त्रि-फला-लोह-पल-पञ्चाशता कृतम् ।
मार्कव-स्व-रसे षष्ट्या गुटिकानां शत-त्रयम् ॥ १६५ ॥

३९.१६५bv -पल-पञ्चाशतः कृतात् ३९.१६५bv -पल-पञ्चाशती-कृतम् ३९.१६५cv मार्कव-स्व-रसे पिष्टाद् ३९.१६५cv मार्कव-स्व-रसे पिष्ट्वा ३९.१६५dv गुटिकानां शत-त्रयात् छाया-विशुष्कं गुटिकार्धम् अद्यात् पूर्वं समस्ताम् अपि तां क्रमेण ।
भजेद् विरिक्तः क्रम-शश् च मण्डं पेयां विलेपीं रसकौदनं च ॥ १६६ ॥

३९.१६६av छाया-विशुष्काद् गुटिकार्धम् अद्यात् सर्पिः-स्निग्धं मासम् एकं यतात्मा मासाद् ऊर्ध्वं सर्व-था स्वैर-वृत्तिः ।
वर्ज्यं यत्नात् सर्व-कालं त्व् अ-जीर्णं वर्षेणैवं योगम् एवोपयुञ्ज्यात् ॥ १६७ ॥

३९.१६७bv मासाद् ऊर्ध्वं सर्व-शः स्वैर-वृत्तिः ३९.१६७dv वर्षेणैवं योगम् एवोपयुञ्ज्य भवति विगत-रोगो यो ऽप्य् अ-साध्यामयार्तः प्रबल-पुरुष-कारः शोभते यो ऽपि वृद्धः । उपचित-पृथु-गात्र-श्रोत्र-नेत्रादि-युक्तस् तरुण इव समानां पञ्च जीवेच् छतानि ॥ १६८ ॥

गायत्री-शिखि-शिंशिपासन-शिवा-वेल्लाक्षकारुष्करान् ॥ १६९अ ॥
३९.१६९av गायत्री-शिखि-शिंशिपासन-शिवा-वेल्लाक्षकारुष्करं पिष्ट्वाष्टा-दश-संगुणे ऽम्भसि धृतान् खण्डैः सहायो-मयैः ॥ १६९ब् ॥
३९.१६९bv पिष्ट्वाष्टा-दश-संगुणे ऽम्भसि धृतान् खण्डैः सहायो-मलैः ३९.१६९bv पिष्ट्वाष्टा-दश-संगुणे ऽम्भसि धृतं खण्डैः सहायो-मयैः ३९.१६९bv पिष्ट्वाष्टौ दश-षड्-गुणे ऽम्भसि धृतं खण्डैः सहायो-मयैः पात्रे लोह-मये त्र्य्-अहं रवि-करैर् आलोडयन् पाचयेद् ॥ १६९च् ॥
३९.१६९cv पात्रे लोह-कृते त्र्य्-अहं रवि-करैर् आलोडयन् पाचयेद् अग्नौ चानु मृदौ स-लोह-शकलं पाद-स्थितं तत् पचेत् ॥ १६९द् ॥
पूतस्यांशः क्षीरतो ऽंशस् तथांशौ भार्गान् निर्यासाद् द्वौ वरायास् त्रयो ऽंशाः ।
अंशाश् चत्वारश् चेह हैयङ्गवीनाद् एकी-कृत्यैतत् साधयेत् कृष्ण-लौहे ॥ १७० ॥

३९.१७०bv भार्गी-निर्यासाद् द्वौ वरायास् त्रयो ऽंशाः ३९.१७०cv अंशाश् चत्वारश् चैव हैयङ्गवीनाद् वि-मल-खण्ड-सिता-मधुभिः पृथग् युतम् अ-युक्तम् इदं यदि वा घृतम् ।
स्व-रुचि-भोजन-पान-विचेष्टितो भवति ना पल-शः परिशीलयन् ॥ १७१ ॥

३९.१७१av वि-मलया सितया मधुनाथ-वा ३९.१७१dv भवति ना पल-शः परिशीलयेत् श्री-मान् निर्धूत-पाप्मा वन-महिष-बलो वाजि-वेगः स्थिराङ्गः ॥ १७२अ ॥
केशैर् भृङ्गाङ्ग-नीलैर् मधु-सुरभि-मुखो नैक-योषिन्-निषेवी ॥ १७२ब् ॥
३९.१७२bv केशैर् भृङ्गाति-नीलैर् मधु-सुरभि-मुखो नैक-योषिन्-निषेवी वाङ्-मेधा-धी-समृद्धः सु-पटु-हुत-वहो मास-मात्रोपयोगाद् ॥ १७२च् ॥
३९.१७२cv वाङ्-मेधावी समृद्धः सु-पटु-हुत-वहो मास-मात्रोपयोगाद् धत्ते ऽसौ नारसिंहं वपुर् अनल-शिखा-तप्त-चामीकराभम् ॥ १७२द् ॥
अत्तारं नारसिंहस्य व्याधयो न स्पृशन्त्य् अपि ।
चक्रोज्ज्वल-भुजं भीता नारसिंहम् इवासुराः ॥ १७३ ॥

३९.१७३cv चक्रोज्ज्वल-भुजा भीता भृङ्ग-प्रवालान् अमुनैव भृष्टान् घृतेन यः खादति यन्त्रितात्मा ।
विशुद्ध-कोष्ठो ऽसन-सार-सिद्ध-दुग्धानुपस् तत्-कृत-भोजनार्थः ॥ १७४ ॥

मासोपयोगात् स सुखी जीवत्य् अब्द-शत-त्रयम् ।
गृह्णाति सकृद् अप्य् उक्तम् अ-विलुप्त-स्मृतीन्द्रियः ॥ १७५ ॥

३९.१७५bv जीवत्य् अब्द-शत-द्वयम् अनेनैव च कल्पेन यस् तैलम् उपयोजयेत् ।
तान् एवाप्नोति स गुणान् कृष्ण-केशश् च जायते ॥ १७६ ॥

उक्तानि शक्यानि फलान्वितानि युगानुरूपाणि रसायनानि ।
महानुशंसान्य् अपि चापराणि प्राप्त्य्-आदि-कष्टानि न कीर्तितानि ॥ १७७ ॥

३९.१७७cv महानुभावान्य् अपि चापराणि ३९.१७७cv महानुशंस्यान्य् अपि चापराणि रसायन-विधि-भ्रंशाज् जायेरन् व्याधयो यदि ।
यथा-स्वम् औषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ १७८ ॥

सत्य-वादिनम् अ-क्रोधम् अध्य्-आत्म-प्रवणेन्द्रियम् ।
शान्तं सद्-वृत्त-निरतं विद्यान् नित्य-रसायनम् ॥ १७९ ॥

गुणैर् एभिः समुदितः सेवते यो रसायनम् ।
स निवृत्तात्मा दीर्घायुः पर-त्रेह च मोदते ॥ १८० ॥

३९.१८०av गुणैर् एतैः समुदितैः ३९.१८०cv स निर्वृतात्मा दीर्घायुः शास्त्रानुसारिणी चर्या चित्त-ज्ञाः पार्श्व-वर्तिनः ।
बुद्धिर् अ-स्खलितार्थेषु परिपूर्णं रसायनम् ॥ १८१ ॥

# अध्याय 40

वाजी-करणम् अन्विच्छेत् सततं विषयी पुमान् ।
तुष्टिः पुष्टिर् अपत्यं च गुण-वत् तत्र संश्रितम् ॥ १ ॥

अपत्य-संतान-करं यत् सद्यः संप्रहर्षणम् ।
वाजीवाति-बलो येन यात्य् अ-प्रतिहतो ऽङ्गनाः ॥ २ ॥

भवत्य् अति-प्रियः स्त्रीणां येन येनोपचीयते ।
तद् वाजी-करणं तद् धि देहस्योर्जस्-करं परम् ॥ ३ ॥

४०.३dv देहस्यौजस्-करं परम् धर्म्यं यशस्यम् आयुष्यं लोक-द्वय-रसायनम् ।
अनुमोदामहे ब्रह्म-चर्यम् एकान्त-निर्मलम् ॥ ४ ॥

४०.४av धन्यं यशस्यम् आयुष्यं ४०.४bv लोक-द्वय-सुखावहम् ४०.४bv लोक-द्वय-हितावहम् अल्प-सत्-त्वस्य तु क्लेशैर् बाध्यमानस्य रागिणः ।
शरीर-क्षय-रक्षार्थं वाजी-करणम् उच्यते ॥ ५ ॥

४०.५av अल्प-सत्-त्वस्य च क्लेशैर् ४०.५av अल्प-सत्-त्वस्य चोत्क्लेशैर् ४०.५bv बाध्यमानस्य रोगिणः कल्यस्योदग्र-वयसो वाजी-करण-सेविनः ।
सर्वेष्व् ऋतुष्व् अहर् अहर् व्यवायो न निवार्यते ॥ ६ ॥

४०.६av कल्पस्योदग्र-वयसो अथ स्निग्ध-विशुद्धानां निरूहान् सानुवासनान् ।
घृत-तैल-रस-क्षीर-शर्करा-क्षौद्र-संयुतान् ॥ ७ ॥

योग-विद् योजयेत् पूर्वं क्षीर-मांस-रसाशिनाम् ।
ततो वाजी-करान् योगान् शुक्रापत्य-बल-प्रदान् ॥ ८ ॥

४०.८dv शुक्रापत्य-विवर्धनान् अ-च्छायः पूति-कुसुमः फलेन रहितो द्रुमः ।
यथैकश् चैक-शाखश् च निर्-अपत्यस् तथा नरः ॥ ९ ॥

स्खलद्-गमनम् अ-व्यक्त-वचनं धूलि-धूसरम् ।
अपि लालाविल-मुखं हृदयाह्लाद-कारकम् ॥ १० ॥

४०.१०dv हृदयाह्लाद-कारिणम् अपत्यं तुल्य-तां केन दर्शन-स्पर्शनादिषु ।
किं पुनर् यद् यशो-धर्म-मान-श्री-कुल-वर्धनम् ॥ ११ ॥

४०.११av अपत्यं तुल्य-ता केन ४०.११cv किं पुनर् यो यशो-धर्म- ४०.११dv -मान-श्री-कुल-वर्धनः ४०.११dv -मान-श्री-कुल-वर्धनात् शुद्ध-काये यथा-शक्ति वृष्य-योगान् प्रयोजयेत् ।
शरेक्षु-कुश-काशानां विदार्या वीरणस्य च ॥ १२ ॥

४०.१२av शुद्धे काये यथा-शक्ति मूलानि कण्टकार्याश् च जीवकर्षभकौ बलाम् ।
मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीम् ॥ १३ ॥

अश्वगन्धाम् अतिबलां आत्मगुप्तां पुनर्नवाम् ।
वीरां पयस्यां जीवन्तीम् ऋद्धिं रास्नां त्रिकण्टकम् ॥ १४ ॥

मधुकं शालिपर्णीं च भागांस् त्रि-पलिकान् पृथक् ।
माषाणाम् आढकं चैतद् द्वि-द्रोणे साधयेद् अपाम् ॥ १५ ॥

रसेनाढक-शेषेण पचेत् तेन घृताढकम् ।
दत्त्वा विदारी-धात्रीक्षु-रसानाम् आढकाढकम् ॥ १६ ॥

घृताच् चतुर्-गुणं क्षीरं पेष्याणीमानि चावपेत् ।
वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गूनि पिप्पलीम् ॥ १७ ॥

४०.१७dv यष्टिकं गज-पिप्पलीम् द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम् ।
तत् सिद्ध-पूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥ १८ ॥

शर्करायास् तुगायाश् च पिप्पल्याः कुडवेन च ।
मरिचस्य प्रकुञ्चेन पृथग् अर्ध-पलोन्मितैः ॥ १९ ॥

त्वग्-एला-केसरैः श्लक्ष्णैः क्षौद्र-द्वि-कुडवेन च ।
पल-मात्रं ततः खादेत् प्रत्य्-अहं रस-दुग्ध-भुक् ॥ २० ॥

४०.२०bv क्षौद्राद् द्वि-कुडवेन च ४०.२०dv प्रत्य्-अहं मधु-दुग्ध-भुक् तेनारोहति वाजीव कुलिङ्ग इव हृष्यति ।
विदारी-पिप्पली-शालि-प्रियालेक्षुरकाद् रजः ॥ २१ ॥

पृथक् स्वगुप्ता-मूलाच् च कुडवांशं तथा मधु ।
तुलार्धं शर्करा-चूर्णात् प्रस्थार्धं नव-सर्पिषः ॥ २२ ॥

सो ऽक्ष-मात्रम् अतः खादेत् यस्य रामा-शतं गृहे ।
सात्मगुप्ता-फलान् क्षीरे गोधूमान् साधितान् हिमान् ॥ २३ ॥

४०.२३bv यस्य कान्ता-शतं गृहे माषान् वा स-घृत-क्षौद्रान् खादन् गृष्टि-पयो-ऽनुपः ।
जागर्ति रात्रिं सकलाम् अ-खिन्नः खेदयन् स्त्रियः ॥ २४ ॥

बस्ताण्ड-सिद्धे पयसि भावितान् अ-सकृत् तिलान् ।
यः खादेत् स-सितान् गच्छेत् स स्त्री-शतम् अ-पूर्व-वत् ॥ २५ ॥

४०.२५bv भावितान् बहु-शस् तिलान् चूर्णं विदार्या बहु-शः स्व-रसेनैव भावितम् ।
क्षौद्र-सर्पिर्-युतं लीढ्वा प्रमदा-शतम् ऋच्छति ॥ २६ ॥

४०.२६dv प्रमदा दश गच्छति कृष्णा-धात्री-फल-रजः स्व-रसेन सु-भावितम् ।
शर्करा-मधु-सर्पिर्भिर् लीढ्वा यो ऽनु पयः पिबेत् ॥ २७ ॥

४०.२७av कृष्ण-धात्री-फल-रजः स नरो ऽशीति-वर्षो ऽपि युवेव परिहृष्यति ।
कर्षं मधुक-चूर्णस्य घृत-क्षौद्र-समन्वितम् ॥ २८ ॥

४०.२८dv घृत-क्षौद्र-समांशकम् पयो-ऽनु-पानं यो लिह्यान् नित्य-वेगः स ना भवेत् ।
कुलीरशृङ्ग्या यः कल्कम् आलोड्य पयसा पिबेत् ॥ २९ ॥

सिता-घृत-पयो-ऽन्नाशी स नारीषु वृषायते ।
यः पयस्यां पयः-सिद्धां खादेन् मधु-घृतान्विताम् ॥ ३० ॥

पिबेद् बाष्कयणं चानु क्षीरं न क्षयम् एति सः ।
स्वयङ्गुप्तेक्षुरकयोर् बीज-चूर्णं स-शर्करम् ॥ ३१ ॥

४०.३१av पिबेद् बाष्कयिणं चानु धारोष्णेन नरः पीत्वा पयसा रासभायते ।
उच्चटा-चूर्णम् अप्य् एवं शतावर्याश् च योजयेत् ॥ ३२ ॥

चन्द्र-शुभ्रं दधि-सरं स-सिता-षष्टिकौदनम् ।
पटे सु-मार्जितं भुक्त्वा वृद्धो ऽपि तरुणायते ॥ ३३ ॥

४०.३३च्च् पटे सु-भावितं भुक्त्वा श्वदंष्ट्रेक्षुर-माषात्मगुप्ता-बीज-शतावरीः ।
पिबन् क्षीरेण जीर्णो ऽपि गच्छति प्रमदा-शतम् ॥ ३४ ॥

४०.३४cv पिबेत् क्षीरेण जीर्णो ऽपि यत् किञ्-चिन् मधुरं स्निग्धं बृंहणं बल-वर्धनम् ।
मनसो हर्षणं यच् च तत् सर्वं वृष्यम् उच्यते ॥ ३५ ॥

द्रव्यैर् एवं-विधैस् तस्माद् दर्पितः प्रमदां व्रजेत् ।
आत्म-वेगेन चोदीर्णः स्त्री-गुणैश् च प्रहर्षितः ॥ ३६ ॥

४०.३६bv भावितः प्रमदां व्रजेत् सेव्याः सर्वेन्द्रिय-सुखा धर्म-कल्प-द्रुमाङ्कुराः ।
विषयातिशयाः पञ्च शराः कुसुम-धन्वनः ॥ ३७ ॥

४०.३७dv शराः कुसुम-धन्विनः इष्टा ह्य् एकैक-शो ऽप्य् अर्था हर्ष-प्रीति-कराः परम् ।
किं पुनः स्त्री-शरीरे ये संघातेन प्रतिष्ठिताः ॥ ३८ ॥

४०.३८cv किं पुनः स्त्री-शरीरेषु नामापि यस्या हृदयोत्सवाय यां पश्यतां तृप्तिर् अन्-आप्त-पूर्वा ।
सर्वेन्द्रियाकर्षण-पाश-भूता कान्तानुवृत्ति-व्रत-दीक्षिता या ॥ ३९ ॥

४०.३९bv यां पश्यतस् तृप्तिर् अन्-आप्त-पूर्वा कला-विलासाङ्ग-वयो-विभूषा शुचिः स-लज्जा रहसि प्रगल्भा ।
प्रियं-वदा तुल्य-मनः-शया या सा स्त्री वृष्य-त्वाय परं नरस्य ॥ ४० ॥

४०.४०cv प्रियं-वदा तुल्य-मनः-स्व-भावा आचरेच् च सकलां रति-चर्यां काम-सूत्र-विहिताम् अन्-अ-वद्याम् ।
देश-काल-बल-शक्त्य्-अनुरोधाद् वैद्य-तन्त्र-समयोक्त्य्-अ-विरुद्धाम् ॥ ४१ ॥

४०.४१bv काम-शास्त्र-विहिताम् अन्-अ-वद्याम् अभ्यञ्जनोद्वर्तन-सेक-गन्ध-स्रक्-चित्र-वस्त्राभरण-प्रकाराः ।
गान्धर्व-काव्यादि-कथा-प्रवीणाः सम-स्व-भावा वश-गा वयस्याः ॥ ४२ ॥

४०.४२bv -स्रग्-अन्न-वस्त्राभरण-प्रकाराः ४०.४२cv गन्धर्व-कन्यादि-कथा-प्रवीणाः दीर्घिका स्व-भवनान्त-निविष्टा पद्म-रेणु-मधु-मत्त-विहङ्गा ।
नील-सानु-गिरि-कूट-नितम्बे काननानि पुर-कण्ठ-गतानि ॥ ४३ ॥

४०.४३av दीर्घिकाः स्व-भवनान्त-निविष्टाः ४०.४३bv पद्म-रेणु-मधु-मत्त-विहङ्गाः ४०.४३cv नील-सानु-गिरि-कूट-नितम्बाः दृष्टि-सुखा विविधा तरु-जातिः श्रोत्र-सुखः कल-कोकिल-नादः ।
अङ्ग-सुखर्तु-वशेन विभूषा चित्त-सुखः सकलः परिवारः ॥ ४४ ॥

४०.४४bv श्रोत्र-सुखाः कल-कोकिल-नादाः ४०.४४cv अङ्ग-सुखर्तु विशेष-विभूषा ताम्बूलम् अच्छ-मदिरा कान्ता कान्ता निशा शशाङ्काङ्का ।
यद् यच् च किञ्-चिद् इष्टं मनसो वाजी-करं तत् तत् ॥ ४५ ॥

४०.४५bv कान्ताः कान्ता निशाः शशाङ्काङ्काः ४०.४५dv मनसो वाजी-करं हि तत् मधु मुखम् इव सोत्पलं प्रियायाः कल-रणना परिवादिनी प्रियेव ।
कुसुम-चय-मनो-रमा च शय्या किसलयिनी लतिकेव पुष्पिताग्रा ॥ ४६ ॥

४०.४६bv कल-रणना प्रिय-वादिनी प्रियेव ४०.४६cv कुसुम-चय-मनो-हरा च शय्या देशे शरीरे च न का-चिद् अर्तिर् अर्थेषु नाल्पो ऽपि मनो-विधानः ।
वाजी-कराः संनिहिताश् च योगाः कामस्य कामं परिपूरयन्ति ॥ ४७ ॥

४०.४७av देशे शरीरे न कदा-चिद् अर्तिर् ४०.४७bv अर्थेषु नाल्पो ऽपि मनो-ऽभिघातः मुस्ता पर्पटकं ज्वरे तृषि जलं मृद्-भृष्ट-लोष्टोद्भवं ॥ ४८अ ॥
लाजाश् छर्दिषु वस्ति-जेषु गिरिजं मेहेषु धात्री-निशे ॥ ४८ब् ॥
पाण्डौ श्रेष्ठम् अयो ऽभयानिल-कफे प्लीहामये पिप्पली ॥ ४८च् ॥
संधाने कृमिजा विषे शुकतरुर् मेदो-ऽनिले गुग्गुलुः ॥ ४८द् ॥
वृषो ऽस्र-पित्ते कुटजो ऽतिसारे भल्लातको ऽर्शःसु गरेषु हेम ।
स्थूलेषु ताक्ष्र्यं कृमिषु कृमिघ्नं शोषे सुरा छाग-पयो ऽथ मांसम् ॥ ४९ ॥

४०.४९bv भल्लातम् अर्शःसु गरेषु हेम अक्ष्य्-आमयेषु त्रि-फला गुडूची वातास्र-रोगे मथितं ग्रहण्याम् ।
कुष्ठेषु सेव्यः खदिरस्य सारः सर्वेषु रोगेषु शिलाह्वयं च ॥ ५० ॥

उन्मादं घृतम् अ-नवं शोकं मद्यं व्यपस्मृतिं ब्राह्मी ।
निद्रा-नाशं क्षीरं जयति रसाला प्रतिश्यायम् ॥ ५१ ॥

४०.५१bv शोकं मद्यं विसंस्मृतिं ब्राह्मी मांसं कार्श्यं लशुनः प्रभञ्जनं स्तब्ध-गात्र-तां स्वेदः ।
गुडमञ्जर्याः खपुरो नस्यात् स्कन्धांस-बाहु-रुजम् ॥ ५२ ॥

४०.५२dv नस्यं स्कन्धांस-बाहु-रुजम् नव-नीत-खण्ड-मर्दितम् औष्ट्रं मूत्रं पयश् च हन्त्य् उदरम् ।
नस्यं मूर्ध-विकारान् विद्रधिम् अ-चिरोत्थितम् अस्र-विस्रावः ॥ ५३ ॥

४०.५३bv औष्ट्री-मूत्रं पयश् च हन्त्य् उदरम् ४०.५३cv नस्यं चोर्ध्व-विकारान् ४०.५३cv नस्यं मूर्ध्नि विकारान् नस्यं कवडो मुख-जान् नस्याञ्जन-तर्पणानि नेत्र-रुजः ।
वृद्धस्य क्षीर-घृते मूर्छां शीताम्बु-मारुत-च्छायाः ॥ ५४ ॥

४०.५४av नस्यं कवडं मुख-गदान् ४०.५४av नस्यं केवलं मुख-गदान् ४०.५४av नस्यं कवडं मुख-जान् सम-शुक्तार्द्रक-मात्रा मन्दे वह्नौ श्रमे सुरा स्नानम् ।
दुःख-सह-त्वे स्थैर्ये व्यायामो गोक्षुरुर् हितः कृच्छ्रे ॥ ५५ ॥

४०.५५av सम-शुष्कार्द्रक-मात्रा ४०.५५bv मन्दे वह्नौ श्रमे सुरा-पानम् ४०.५५cv दुःख-सह-त्वं स्थैर्ये ४०.५५cv दुःख-सह-त्वं स्थौल्ये कासे निदिग्धिका पार्श्व-शूले पुष्कर-जा जटा ।
वयसः स्थापने धात्री त्रि-फला गुग्गुलुर् व्रणे ॥ ५६ ॥

४०.५६av कासे निदिग्धिका-पानं ४०.५६bv पार्श्व-शूले च पौष्करम् ४०.५६cv वयः-संस्थापने धात्री वस्तिर् वात-विकारान् पैत्तान् रेकः कफोद्भवान् वमनम् ।
क्षौद्रं जयति बलासं सर्पिः पित्तं समीरणं तैलम् ॥ ५७ ॥

इत्य् अग्र्यं यत् प्रोक्तं रोगाणाम् औषधं शमायालम् ।
तद् देश-काल-बलतो विकल्पनीयं यथा-योगम् ॥ ५८ ॥

इत्य् आत्रेयाद् आगमय्यार्थ-सूत्रं तत्-सूक्तानां पेशलानाम् अ-तृप्तः ।
भेडादीनां संमतो भक्ति-नम्रः पप्रच्छेदं संशयानो ऽग्निवेशः ॥ ५९ ॥

४०.५९av इत्य् आत्रेयाद् आगमाद् आर्थ-सूक्ष्मं ४०.५९av इत्य् आत्रेयाद् आगमय्यार्थ-सूक्ष्मं ४०.५९bv तत्-सूक्तीनां पेशलानाम् अ-तृप्तः दृश्यन्ते भग-वन् के-चिद् आत्म-वन्तो ऽपि रोगिणः ।
द्रव्योपस्थातृ-संपन्ना वृद्ध-वैद्य-मतानुगाः ॥ ६० ॥

क्षीयमाणामय-प्राणा विपरीतास् तथा ऽपरे ।
हिता-हित-विभागस्य फलं तस्माद् अ-निश्चितम् ॥ ६१ ॥

किं शास्ति शास्त्रम् अस्मिन् इति कल्पयतो ऽग्निवेश-मुख्यस्य ।
शिष्य-गणस्य पुनर्वसुर् आचख्यौ कात्स्न्र्यतस् तत्-त्वम् ॥ ६२ ॥

४०.६२dv आचक्षे कात्स्न्र्यतस् तत्-त्वम् न चिकित्सा-चिकित्सा च तुल्या भवितुम् अर्हति ।
विनापि क्रियया स्वास्थ्यं गच्छतां षो-डशांशया ॥ ६३ ॥

आतङ्क-पङ्क-मग्नानां हस्तालम्बो भिषग्-जितम् ।
जीवितं म्रियमाणानां सर्वेषाम् एव नौषधात् ॥ ६४ ॥

४०.६४dv सर्वेषाम् एव नौषधम् न ह्य् उपायम् अपेक्षन्ते सर्वे रोगा न चान्य-था ।
उपाय-साध्याः सिध्यन्ति ना-हेतुर् हेतु-मान् यतः ॥ ६५ ॥

४०.६५dv नो ऽ-हेतुर् हेतु-मांस् ततः यद् उक्तं सर्व-संपत्ति-युक्तयापि चिकित्सया ।
मृत्युर् भवति तन् नैवं नोपाये ऽस्त्य् अन्-उपाय-ता ॥ ६६ ॥

४०.६६dv नोपायेष्व् अन्-उपाय-ता अपि चोपाय-युक्तस्य धी-मतो जातु चित् क्रिया ।
न सिध्येद् दैव-वैगुण्यान् न त्व् इयं षो-डशात्मिका ॥ ६७ ॥

४०.६७av अप्य् एवोपाय-युक्तस्य ४०.६७cv न सिद्धिर् दैव-वैगुण्यान् ४०.६७dv न न्व् इयं षो-डशात्मिका कस्या-सिद्धो ऽग्नि-तोयादिः स्वेद-स्तम्भादि-कर्मणि ।
न प्रीणनं कर्षणं वा कस्य क्षीरं गवेधुकम् ॥ ६८ ॥

४०.६८cv न प्रीणनं कर्शनं वा ४०.६८dv कस्य क्षीर-गवेधुकम् कस्य माषात्मगुप्तादौ वृष्य-त्वे नास्ति निश्चयः ।
विण्-मूत्र-करणाक्षेपौ कस्य संशयितौ यवे ॥ ६९ ॥

४०.६९av कस्य माषात्मगुप्ताद्यैर् ४०.६९bv वृष-त्वे नास्ति निश्चयः विषं कस्य जरां याति मन्त्र-तन्त्र-विवर्जितम् ।
कः प्राप्तः कल्य-तां पथ्याद् ऋते रोहिणिकादिषु ॥ ७० ॥

४०.७०cv कः प्राप्तः कल्प-तां पथ्याद् अपि चा-काल-मरणं सर्व-सिद्धान्त-निश्चितम् ।
महतापि प्रयत्नेन वार्यतां कथम् अन्य-था ॥ ७१ ॥

चन्दनाद्य् अपि दाहादौ रूढम् आगम-पूर्वकम् ।
शास्त्राद् एव गतं सिद्धिं ज्वरे लङ्घन-बृंहणम् ॥ ७२ ॥

चतुष्-पाद्-गुण-संपन्ने सम्यग् आलोच्य योजिते ।
मा कृथा व्याधि-निर्घातं विचिकित्सां चिकित्सिते ॥ ७३ ॥

४०.७३av चतुष्-पाद्-गुण-संपूर्णे ४०.७३cv मा कृथा व्याधि-निर्घाते एतद् धि मृत्यु-पाशानाम् अ-काण्डे छेदनं दृढम् ।
रोगोत्त्रासित-भीतानां रक्षा-सूत्रम् अ-सूत्रकम् ॥ ७४ ॥

एतत् तद् अमृतं साक्षाज् जगद्-आयास-वर्जितम् ।
याति हालाहल-त्वं तु सद्यो दुर्-भाजन-स्थितम् ॥ ७५ ॥

४०.७५av एतद् वेदामृतं साक्षाज् ४०.७५bv जगत्य् आयास-वर्जितम् ४०.७५cv याति हालाहल-त्वं च अ-ज्ञात-शास्त्र-सद्-भावाञ् छास्त्र-मात्र-परायणान् ।
त्यजेद् दूराद् भिषक्-पाशान् पाशान् वैवस्वतान् इव ॥ ७६ ॥

४०.७६cv विवर्जयेद् भिषक्-पाशान् भिषजां साधु-वृत्तानां भद्रम् आगम-शालिनाम् ।
अभ्यस्त-कर्मणां भद्रं भद्रं भद्राभिलाषिणाम् ॥ ७७ ॥

४०.७७bv बहु-धागम-शालिनाम् ४०.७७bv भद्रम् आगम-शीलिनाम् ४०.७७cv अभ्यस्त-कर्मणां सिद्धिर् इति तन्त्र-गुणैर् युक्तं तन्त्र-दोषैर् विवर्जितम् ।
चिकित्सा-शास्त्रम् अ-खिलं व्याप्य यत् परितः स्थितम् ॥ ७८ ॥

४०.७८bv तन्त्र-दोष-विवर्जितम् ४०.७८dv व्यापठ्य परितः स्थितम् विपुला-मल-विज्ञान-महा-मुनि-मतानुगम् ।
महा-सागर-गम्भीर-संग्रहार्थोपलक्षणम् ॥ ७९ ॥

४०.७९av विपुला-मल-विज्ञानं ४०.७९cv महा-सागर-गम्भीरं ४०.७९cv महा-मुनि-मतानुगम् ४०.७९dv संग्रहार्थोपलक्षणम् ४०.७९dv संग्रहार्थोपलक्षकम् अष्टाङ्ग-वैद्यक-महोदधि-मन्थनेन यो ऽष्टाङ्ग-संग्रह-महामृत-राशिर् आप्तः ।
तस्माद् अन्-अल्प-फलम् अल्प-समुद्यमानां प्रीत्य्-अर्थम् एतद् उदितं पृथग् एव तन्त्रम् ॥ ८० ॥

४०.८०bv यो ऽष्टाङ्ग-संग्रह-महामृत-सार-तुल्यः ४०.८०dv प्रीत्य्-अर्थम् एवम् उदितं पृथग् एव तन्त्रम् इदम् आगम-सिद्ध-त्वात् प्रत्यक्ष-फल-दर्शनात् ।
मन्त्र-वत् संप्रयोक्तव्यं न मीमांस्यं कथञ्-च-न ॥ ८१ ॥

४०.८१av इदम् आगम-शुद्ध-त्वात् ४०.८१dv न मीमांस्यं कदा-च-न दीर्घ-जीवितम् आरोग्यं धर्मम् अर्थं सुखं यशः ।
पाठावबोधानुष्ठानैर् अधिगच्छत्य् अतो ध्रुवम् ॥ ८२ ॥

४०.८२av दीर्घं जीवितम् आरोग्यं एतत् पठन् संग्रह-बोध-शक्तः स्व्-अभ्यस्त-कर्मा भिषग् अ-प्रकम्प्यः ।
आकम्पयत्य् अन्य-विशाल-तन्त्र-कृताभियोगान् यदि तन् न चित्रम् ॥ ८३ ॥

४०.८३cv यः कम्पयत्य् अन्य-विशाल-तन्त्र- यदि चरकम् अधीते तद् ध्रुवं सुश्रुतादि-प्रणिगदित-गदानां नाम-मात्रे ऽपि बाह्यः ।
अथ चरक-विहीनः प्रक्रियायाम् अ-क्लिन्नः किम् इव खलु करोतु व्याधितानां वराकः ॥
८४ ॥

४०.८४bv -प्रणिगदित-गदानां नाम-मात्रेण बाह्यः ४०.८४bv -प्रतिगदित-गदानां नाम-मात्रे ऽपि बाह्यः ४०.८४dv किम् इह खलु करोतु व्याधितानां वराकः अभिनिवेश-वशाद् अभियुज्यते सु-भणिते ऽपि न यो दृढ-मूढकः ।
पठतु यत्न-परः पुरुषायुषं स खलु वैद्यकम् आद्यम् अ-निर्विदः ॥ ८५ ॥

वाते पित्ते श्लेष्म-शान्तौ च पथ्यं तैलं सर्पिर् माक्षिकं च क्रमेण ।
एतद् ब्रह्मा भाषतां ब्रह्म-जो वा का निर्-मन्त्रे वक्तृ-भेदोक्ति-शक्तिः ॥ ८६ ॥

४०.८६cv एतद् ब्रह्मा भाषते ब्रह्म-जो वा अभिधातृ-वशात् किं वा द्रव्य-शक्तिर् विशिष्यते ।
अतो मत्सरम् उत्सृज्य माध्यस्थ्यम् अवलम्ब्यताम् ॥ ८७ ॥

४०.८७av अभिधातुर् वशात् किञ्-चिद् ऋषि-प्रणीते प्रीतिश् चेन् मुक्त्वा चरक-सुश्रुतौ ।
भेडाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सु-भाषितम् ॥ ८८ ॥

हृदयम् इव हृदयम् एतत् सर्वायुर्-वेद-वाङ्-मय-पयो-धेः ।
कृत्वा यच् छुभम् आप्तं शुभम् अस्तु परं ततो जगतः ॥ ८९ ॥